श्रीमदप्पय्यदीक्षितविरचिता

# चित्रमीमांसा

पण्डितरत्नेन
न्यायालङ्कार-व्याकरणविदुषा
सो. रामस्वामिऐय्यङ्गार्येण
विरचितया तत्वालोक व्याख्यया सहिता
भागौ - २-३
(रूपकादिः - उत्प्रेक्षान्तः)




प्रकाशकाः
१९०, सरस्वतीसदनम्
सीताविलासाग्रहारः मैसूरु - ५७० ०२४
२००१

श्रीमदप्पय्यदीक्षित विरचिता

# चित्रमीमांसा

न्यायालङ्कार- व्याकरण विदुषा
मैसूरु श्रीमन्महाराज संस्कृतपाठशालायां
विश्रान्तालङ्कारशास्त्रप्राध्यापकेन
पण्डितरत्नेन, पण्डितप्रवरेण, शास्त्रविद्यानिधिना
राज्यप्रशस्तिविजेत्रा वैदिकभूषणेन च
**सो. रामस्वामि ऐय्यङ्गार्येण**
विरचितया "तत्वालोक" व्यारव्यया सहिता

**(भागौ - २ - ३)(रूपकादि - उत्प्रेक्षान्तौ)**

प्रकाशका:
एन्. आर्. **श्रीनिवासराघवन्** B.B.M., M.A.,A I C W A., A.C.A
अलङ्कारविदुषी **एन्. आर्. वसन्ता.** M.A., B. Ed.
व्याकरणालङ्कार विद्वान् **एन्. आर्. मुरलीधरः** B.Com., M.A., M.Ed

२९० " सरस्वती सदनम् " सीताविलासाग्रहारः,
कर्णाटकराज्यम् मैसूरु 570024

विक्रम सं - कार्तिक शुक्ल उत्थान द्वादशी शकाब्द श्र १९२३




परमपूज्य मातृश्री संस्मरणार्थं
समर्पितमिदं पुस्तकम्
प्रकाशकाः

**N.R. Srinivasa Raghavan,** B.B.M., M.A., ICWA/ACA
**N.R. Vasantha** M.A., B.Ed., Alankara Vidwath
**N.R. Muralidhara** B.Com., M.A., M.Ed., Vyakarana, Alankara Vidwath

||श्रीः||

# प्रास्ताविकम्

अतिविशाले ऽस्मिन् प्रपञ्चे नानाभाषाः प्रचलन्ति। तत्र अत्यन्तं प्राचीनतमेयं भाषा संस्कृतमिति विदितचरमेतत् । अस्यामेव गीर्वाणवाण्यां नानासाहित्यग्रन्थाः आविरभवन् । तत्र वेदाः षडङ्गानि इत्यादयः ग्रन्थराशयः एकप्रकाराः। अन्ये रामायण- महाभारत- रघुवंशादिग्रन्थराशयश्च । सर्वेषामपि शास्त्राणां सदुद्देशः सुखं भूयात् दुःखं मा भवेत् इति । तदर्थमेव शास्त्राणि प्रवृत्तानि खलु ।

अन्यत्राप्येवमुक्तम् --

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमिति कथ्यते ॥ इति ।

केचन ग्रन्थराशयः साक्षादेव प्रवृत्तिनिवृत्ती उपदिशन्ति । किन्तु केचन ग्रन्थराशयः सुकुमारमतीनां विनेयानां राजपुत्रादीनां इमे एव प्रवृत्तिनिवृत्ती उपदेष्टुं प्रवृत्ताः। त एव काव्यपदव्यपदेश्याः अभवन् । साधारणाः कवयः इह अनेके दृग्गोचरा भवन्ति। तदुक्तं भट्टवाणेन -

सन्ति श्वान इवासंख्या ज्ञातिभाजो गृहे गृहे ।
उत्पादका न बहवः कवयःशरभा इव ॥ इति

अत एवोक्तमग्निपुराणे -

नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा ॥ इति

अतः कवित्वपरिष्कारकं अलङ्कारशास्त्रम् ।

"अलङ्कारः सप्तममङ्गम् " इति यायावरीयेण आलङ्कारिकराजशेखरेण राजशेखरेण सूक्तम् । तत्र अलङ्कारस्य अध्ययनपद्धतौ शास्त्रीयावादसरणिः शताधिकग्रन्थकृद्भिः सकलशास्त्रसञ्चरिष्णुभिः विद्वत्तल्लजैः श्रीमद्भिः अप्पय्यदीक्षितैः प्रारब्धेति विदितचरमेतत् । तत्रभवद्भिः श्रीमदप्पय्यदीक्षितैः नैके ग्रन्थाः विरचिताः । तत्राप्यलङ्कारे चित्रमीमांसा, कुवलयानन्दः वृत्तिवार्तिकञ्चेति त्रयः ग्रन्थाः विश्रुताः। तत्र च चित्रमीमांसा सम्पूर्णतया नोपलब्धेति सहृदयहृदयोद्वेगकारी विषयः। अथापि

तत्रैव सकलशास्त्रपाण्डित्यं, सर्वशास्त्राणां समन्वयभूमिः अलङ्कारशास्त्रमिति असकृदावेदितम्। इयंच चित्रमीमांसा गाढनिगूढविषया च वर्तते। नानाशास्त्र पाण्डित्यं विना वाक्यमेकमपि ज्ञातुं न शक्यते इति पृथक् न वक्तव्यम्। एतादृश चित्रमीमांसायाःसुविस्तरं व्याख्यानं सूक्ष्मातिसूक्ष्मदृशा प्राचीनानामालङ्कारिकाणां मतं सम्यक् अनूद्य तुलनात्मकदृशा च अस्मत्पितृचरणः पण्डितप्रवरेत्यादि बिरुदभाग्भिः श्रीमद्भिः सोमयाजियाण्डान् रामस्वामि अय्यङ्गायः। विरचितमित्येतत् महत्प्रमोदस्थानम्।

चित्रमीमांसायाः तत्वालोकाख्या व्याख्या त्रिंशद्वर्षेभ्यः पूर्वमेव विरचिता। किन्तु- "इयं लक्ष्मीः सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति" इति भट्टबाणोक्तिवत् विद्यावतामस्मत्तातपादानां आर्थिकपरिस्थितिः नोत्तमासीदित्येव अनेक वर्षपर्यन्तं प्राकाश्यं न नीता। किन्तु सम्मान्याः ए. भरत् ऐ.ए.एस्. महोदयाः प्रथमभागस्यास्य तत्वालोकस्य प्रकटनार्थं केन्द्रसर्वकारीय Ministry of Human Resources Development अधिकारिणां सम्पर्कं सम्यक्कारयित्वा बहूपकृतवन्तः इति प्रथमभाग एव निवेदितपूर्वम्।

इदानीं चित्रमीमांसायाः व्याख्यारूपस्य तत्वालोकस्य द्वितीयतृतीयभागौ सहृदयसमक्षं समानीतौ। सव्याख्यायाः चित्रमीमांसायाः प्रकाशे साहाय्यमाचरद्भ्यः सर्वेभ्यः सकार्तज्ञानि भूयांसि नमांसि। एतद्व्याख्या सहृदयमनः प्रीतये कल्पताम् इति शम्।

विद्वज्जनविधेयाः

प्रकाशकाः

1. N.R. Srinivasa Raghavan, B.B.M., M.A., ICWA., ACA.,
2. व्याकरणालङ्कारविद्वान् N.R. Muralidhara, B.Com., M.A., M.Ed.
   अलंकारशास्त्रविभागे सहायकप्राध्यापकः
   श्रीमन्महाराज संस्कृत महापाठशाला मैसूरु - २४
3. विदुषी .N.R. Vasantha., M. A., B.Ed. मुख्योपाध्यायिनी,
   श्री राममिश्रसंस्कृत पाठशाला - मैसूरु -

दिनाङ्कः - ९ - ९ - २०००   स्थलम् - मैसूरु.
विक्रम भाद्र पद शुक्ल द्वादशी श्रवणम्

||श्रीः||

# प्रसीदतु रामचन्द्रः

## मुद्रा

श्रीमत्परमहंसपरिव्राजकाचार्य पदवाक्यप्रमाणपारावारपारीण यम- नियमासन-प्राणायाम- प्रत्याहार- ध्यान- धारण- समाध्यष्टाङ्गयोगानुष्ठाननिष्ठ षड्दर्शनस्थापनाचार्य तपश्चक्रवर्त्यनाद्यविच्छिन्न

श्रीमज्जद्गुरुशङ्कराचार्यशिष्य

सुरेश्वराचार्य ज्येष्ठशिष्य विद्यानन्दचार्य गुरुपराम्पराप्राप्त सकलनिगमागम सारहृदय सांख्यत्रयप्रतिपादक वैदिकमार्गप्रवर्तक सर्वतन्त्रस्वतन्त्रादि बिरुदाङ्कित विद्यानगरमहाराजधानीवैभवसिंहासनाधीश्वरव्याख्यान सिंहासनारूढ श्रीमद्राजाधिराज -

श्रीगुरुगोकर्णमण्डलाचार्य

श्रीच्छतशृङ्गपुरवराधीश्वर श्रीमच्छरावतीतीरवास

श्रीमद्रामचन्द्रापुरमठस्थ श्रीमद्रामचन्द्र- चन्द्रमौलीश्वर पादपद्माराधक श्रीमद्रामचन्द्रभारती गुरुकरकमलसञ्जात

श्रीमद्राघवेन्द्रभारतीस्वामिभिः

श्रीमतां अस्मदत्यन्तप्रियाभिमानिनां महीशूरपुरीस्थ श्रीमन्महाराज संस्कृतमहापाठशालायां विश्रान्त अलङ्कारशास्त्र- प्रधानाध्यापकानां शोभाञ्जन ग्रामाभिजनानां "सरस्वतीसदनम्" नं २९०, सीताविलासाग्रहारः मैसूरु " इत्यत्र निवसतां विदुषां श्रीमज्जनार्दनाचार्य ज्येष्ठपुत्राणाम् अनेकविद्वत्पदवीविलसताम् विद्वद्वराणां असाधारणसदाचारसम्पत्तिमतां स्वयमाचार्यपुरुषाणां सोमयाजियाण्डान्. श्री.रामस्वामि ऐय्यङ्गार्य महाशयानां विषये सन्दिष्टोऽयं सन्देशः।

साम्प्रतं भवद्भिः श्रीमदप्पय्यदीक्षितकृतालङ्कारशास्त्रसम्बन्धिनः चित्रमीमांसाख्यग्रन्थस्य तत्वालोकनाम्नीं व्याख्यां विलिखितां वयमालोकयाम। अस्याः सव्याख्यायाः चित्रमीमांसायाः - स्मरणालङ्कारान्तः

प्रथमो भागः १९८८-८९- तमे ईसवीये समये मुद्रितः इति अत्यन्तं प्रमोदस्थानम् अस्माकमभवत् ।

इदानीम् अनयोः द्वितीय- तृतीय भागयोः रूपक परिणाम ससन्देद - भ्रान्तिमदुल्लेखा- पह्नुत्युत्प्रेक्षालङ्काराणां समानां निरूपणं कृतमस्ति ।

अस्याः तत्वालोकव्यारव्यायाः मूलभूतचित्रमीमांसायाः रचयितारः विश्वविरव्याताः पदवाक्यप्रमाण पारावारपारीणाः श्रीमन्तः अप्पय्यदीक्षिताः द्वैताद्वैत विशिष्टाद्वैतशिवाद्वैतग्रन्थान् व्यलिखन् । एभिः व्याकरणादिशास्त्रेष्वपि व्याकरणवादनक्षत्रमालादयो ऽपि विलिखिताः, एतैः अलङ्कारस्य शास्त्रत्वं नास्तीति मुधा ब्रुवतां वाङ्मुद्रिता।

इयं च चित्रमीमांसा बहुभिर्विचारैः परिपूर्णा दुर्बोधा च । दुर्बोधामपि इमां सुबोधां कर्तुं तत्वालोकारव्यारव्यां कर्तुं प्रयतितम् । ग्रन्थकृदाशयश्च स्फुटीकृतः। जगन्नाथ प्रभृतिभिः उद्भाविताः दोषाः तत्र तत्र उद्धृताः।

१. यथा चित्रमीमांसायां - रूपकनिरूपणे (पुटे ५८-९) प्राचामर्वाचां च मतं समालोचयन्तः उपमानोपमेययोः समासे असत्येव रूपकं, समासे तु उपमैवेति वामनाभिप्रायः। यत्र साधारणधर्म प्रयोगः तत्र कथमुपमा इत्याक्षेपे "उपमानानीति" सूत्रे सामान्यवचनैः इत्यस्य विवक्षितसामान्याप्रयोगे इत्येवार्थः। अन्यथा "भाष्याब्धिः क्वातिगम्भीरः" इत्यादिप्रयोगाणामनुपपद्यमानता स्यादिति समाधानं कृतम् ।

२. रूपके " मयूरव्यंसकादित्वात्समासः" इत्यमुमंशं विस्तरेण विमृश्य- "उपमितमित्यादिना समासः साधितः, रूपको-पमा-तिशयोक्तीनां वैलक्षण्यं किन्निबन्धनमिति सन्देहे - उपमानपदेन गौणसारोपलक्षणया उपमेयविवक्षायाम् उपमेयस्यापि पृथगुपादाने रूपकम्, उपमानपदस्य उपमेये गौणवृत्तिविरहे उपमा । उपमेयस्य पृथगनुपादाने रूपकातिशयोक्तिः इति विषयभेदं प्रदर्श्य सन्देहनिवारणं कृतम् ( पु. ६२ - ६६)

३. रूपके प्राचीनालङ्कारिक सम्मतः लक्षणापक्षः महता सरम्भेण समर्थितः।

४. (पुटे ७८) कठाध्यापकादिवत् इत्यस्य स्थाने काठकाध्यापकादिति पाठमवलम्ब्य विमर्शः कृतः।

५. (पुटे ९८ ) "त्वत्पादनख रत्नानामिति" पद्ये विमर्शिनी रसगङ्गाधरकाराद्यभिमतं रूपकं निरस्य दीक्षितभिमतनिदर्शना साधिता ।

६.द्रव्यस्य धर्मित्वमेव गुणादीनां धर्मत्वमेवेति मनसि निधाय "विशिष्टयोः धर्मिणोः ऐक्यारोपो निदर्शना " इति रसिकरञ्जिनीकारादृतपाठोपरि या अव्याप्तिः चन्द्रिकाचकोरकारै आपादिता सा " धर्माणामपि धर्मित्वं अस्त्येवेति सहेतुकं संसाध्य समीचीनाया अपि चन्द्रिकायाः (कुवलयानन्द्रव्याख्यायाः) खण्डनखण्डनेन निराकृता । ( पुटे १०२ -१०३)

एवमेव प्रतिविषयं विमर्शः कृतः। अतश्च अस्याः अतिगम्भीरायाः चित्रमीमांसायाः महता श्रमेण सततप्रयत्नेन च अध्ययनाध्यापनयोः विमर्शस्य च आनुकूल्यं यथा स्यात् तथा अतिविस्तरां तत्वालोकाख्यां व्याख्यां विरचय्य विदुषां महानुपकारः कृतः ।

अग्रेऽप्येवमेव नानाशास्त्रग्रन्थानां व्याख्यां सुबोधां विधाय विदुषां प्रमोदमुपजनयन्त्विति आशास्महे ।

इति श्रीमन्नारायणस्मृतयः श्रीः

मितिः बहुधान्यसंवत्सरे वैशाख शुक्लपूर्णिमायां इन्दु वासरे दिनाङ्कः : ता. ११--५--१९९८

वसतिः विद्यामन्दिरम् नं 2 A प्रथमकक्ष्यायां जे. पि. मार्ग विश्वभारती समुच्चये गिरिनगरे (बेङ्गलूरु) कल्याणनगरे 560085.

❋ ❋ ❋ ❋ ❋

Vidyasagara
**Prof.M.P.L. Sastry**

91,Sixth Main Road
Malleswaram
Bangalore - 560 055

15th April 1999.

President
Mysore Education Society.

I am asked to write a to forward to the second part of Tatwaloka, a commemtary on Chitra- Mimamsa by Vidvan Sri.S.Ramaswami Iyengaraya and I gladly do so.

I have had the privilege of knowing Vidwan Sri.S.Ramaswami Iyengar for decades and I have admired his scholarship, in Vyakarana Alankara and Nyaya. He has taught classics in Sanskrit for successive batches of students in Sanskrit for more than three decades. He has mastery over Sanskrit language and is eminently suited to write a commentary of the kind on Chitra-Mimamsa a great work relating to Indian poetics.

Chitra-Mimamsa is the best of the three works of Appaiah Dikshitar on Indian poetics. Sri Dikshitars is a landmark in the history of Sanskrit Scholarship in the country, who has authored more than one hundred works.

The author of Tatwaloka is greatly influenced by the style and treatment of Sri Appaiah Dikshitar and has chosen to write this commentary on Chitra Mimamsa. Sri Ramaswami Iyengar's writing is lucid, illuminating and authoratative . He has placed the students of sanskrit under a great debt, by his contribution " Tatwaloka", I am sure the scholarly world will enjoy by going through the book.

Vidyasagara
Prof. M.P.L.Sastry.

# An Appreciation

In the literary tradition of India, Poetics is not only regarded as a science but it is also considered as the sum of all sciences. 'समष्टिः सर्वशास्त्राणाम् साहित्यमिति गीयते'

Sahitya or alankarasastra is the Sanskrit name for poetics. Sahitya emphasizes unity of form and content in literature. The word alankara (what beautifies) is the subject of inquiry. But no two critics agree in their judgement of a literary composition. Generally the method of inquiry is one of formal definition, classification and illustration.

The chitramimamsa is a unique work in this traditional style by Appayya Dixita. He has contributed three works on poetics. Of them the chitramimamsa is a more solid performance. It deals with arthalankara in detail. The author's method is to state a karika first and then discuss the views of others and to refute them wherever necessary. But it is surprising that it has not generated any authentic sanskrit commentary, which is useful in understanding fully a work of its calibre. Due to decline of traditional scholarship it remained a hard nut to crack especially for those trained in modern scholarship. Viewed against this background the publication of chitramimamsa with a full-fledged Sanskrit commentary called Tattvaloka by Pandita pravara. Sri. S.Ramaswamy Iyengar is a monumental effort. He

has shown the courage to take up such a challenge and successfully fulfilled it in two volumes.

Sri S.Ramaswamy Iyengar is a scholar and critique in fine tradition and taste. His scholarly commentary reflects his mastery not only in literature but also in all the sastras. While bringing out the author's view he has traced every concept in it's historical background and, has explained and evaluated with suitable arguments and illustrations drawing from the earlier works and the sastrans. It is a delightful experience to go through these pages. To give a few examples from this second volume-

p.33. Under rupakalankaravichara while discussing the process of understanding different rupakas involving upama, the commentator clearly brings out the concepts आरोप and अध्यवसाय related to them, by quoting a stanza from the author's own work ' varadarajastava' and his commentary on it. The figures involing similarity are most abundant in poetry. Unless the function of upamana and upameya is defined clearly in these alankaras it is difficult to identify each case. Starting आरोपाध्यवसाययोः स्वरूपभेदकं किम्? he writes प्रसिद्धादुपमानात् उपमेयस्य भेदमनूद्य ताद्रूप्यकल्पमनारोपः प्रसिद्धोपमानाभेदकल्पनमध्यवसायः- Further, he takes two examples from kuvalayananda as अयंहि धूर्जटिस्क्षाद्येन दग्धाः, अवतीर्य हरि स्साक्षादिति - ---------------- and shows how one is an example of rupaka and the other of atishayokti. This shows

the shrewdness of the commentator as these are not directly explained in the text,

p.52 वस्तुतस्तु नीलमुत्पलम् - Appaya Dixita attacks Bhoja regarding the necessity of lakshana here. Picqued by the criticism, the commentator. Supporting from vedanta and mimamsa writes that the example mukham chandrah is different from nilo ghatah, nilam utpalam etc. Because in mukhatva and chandratva there is no ekarthasamavaya like nilabhinnoghatah. Hence without saropalakshana it is not possible to get chandradi abhedabodha in mukhadi etc. According to the Mimamsakas, by saropalakshana the words chandra etc. first give sadrishabodha, then by abheda there is anvaya. In this way he upholds prachinamata.

p.58. In the examples मुखंचद्रः and मुखचन्द्र : the process of understanding is very well brought out. By quoting Vamana's example iyam lakshmih (abheda) for metaphor the exclusion of compounds in metaphor is made clear. According to Vamana, upama and rupaka are two different alankaras. In case of a samasa he calls it as upamajanyarupaka because mukham chandra iva is acceptable and mukham eva chandrah has no anushasana. In mukham chandrah, the tatpurusha conveys uttarapadapradhana, but the intention of the rupaka is to bring out the beauty of the face and not chandra. Again in the stanza nirvadhi..., in chaturdashalokavallikandah abandoning the

rupaka as chaturdashaloka eva valliriti he says first it is upama like chaturdashalokavalliriva then it is extended to rupaka as chaturdashalokavalyah kandah iti (Shashtisamasa). This is upamarupakayoh samsrishtih. This is acceptable. Though Panini's rule says samanyaprayoge eva samasah, here the meaning of the word samanya is not specified. Hence doubts arise. In the examples kantiman mukhachandrah etc. the vivakshitasamanyadharma is ahladakava etc. kantiman etc. being avivakshita gives scope for samasa.

p. 72 सदृशाभेदवादिनां प्राचीनानां पक्षः Shows he is unbiased in his criticism. In the example mukham chandrah first he explains the author's view on how the knowledge of identity comes through samsarga and then he gives two examples - sthenam manah, adityoyupah from purvamimamsa and shows how it is advantageous to accept the pracinanata as it explains both vedic and worldly usage.

p.106. In अरण्यरुदितं कृतम् there is an interesting discussion. First he shows the objection of chandrikachakorakara about the problem of avyapti and then shows how if the anvaya is with dharminau and not dharmau the problem of avyapti does not arise.

p.198. In वस्तुतस्तु under parinamalankara he brings out the difference between rupaka and

parinama.रूपकपरिणामयोः वैलक्षण्यं तु यस्य कार्यवाचिपद प्रथमप्रतीत तन्मुख्यार्थ निर्वर्तन सामर्थ्यं तदात्मनोपयोगित्वे परिणामः यथा-

And clears the doubt with illustrations.

p.230. Even in पाठभेदविषय the commentator's stand is commendable. Accepting the reading वैयधिकरण्यं रूपकेऽपि सम्भवति ---- refers to Jagannatha's objection in his work chitramimamsakhandana as -यच्चाप्यप्पय्यदीक्षितैः वैयधिकरण्येन परिणामे उदाहृतम् and brushes aside the objection as due to pathabheda. तदशुद्ध पाठोपलब्धिनिबन्धनमिति ।

He has not spared even Nagesha Bhatta. ग्रन्थकर्तुश्चानवधानतामारोपयेत् । नागेशभट्टैः परिणामतासाधनं प्रयासमात्रेव ।

p.242-46 While discussing about श्लिष्टेषु शब्देषु शक्तिरेका उत अनेका ?- referring to Mammata's view that vyanjana has to be accepted in prakrutaprakrutaslesha, supports the author's view that 'sabdasaktyabhidha alone conveys the aprakrutartha. He gives two examples pushpavantau and haryadi to prove his point. Pushpavantau being एकपर्याय शब्द though it is नानार्थबोधक it is not नानाशक्तिमत् . The word Hari being nanarthabodhaka conveys the aprakrutartha by context. Thus he has upheld the view of Appaya Dixita.

p.301- Under सन्देहप्रकरण quoting the objection raised by Jagannatha " अस्याः सर्गविधौ यः प्रजापतिरभूत् स किंनु चन्द्रः, किंनु मदनः किंनुवसन्तः .... etc Writes तदपि न चारुततरम् ।

According to the commentator the charm lies in avyapti alone as va does the job of elimination and the meaning desired by the poet is gained.

Similar enlightening discussions occupy most of the commentary. I am sure the world of Sanskrit will be indebted to him for his great contribution. Another noteworthy feature of the vol is an elaborate and illuminating introduction by the commentator himself.

I am very much beholden to my esteemed guru Panditapravara. Sri. Ramaswamy Iyengaraya for his affection in providing this opportunity for me to read this work with the help of his illuminating commentary. I wish especially to record my gratitude and debt for sharing his scholarship and thoughts with me while I was reading this book. May Almighty shower his divine blessings and grace on him with health, wealth, strength and long life to make many more such contributions.

प्रमाथिसं अधिक ज्येष्ठ पूर्णिमा
30-5-99.

DR. Vanitha Ramaswamy
Retd. Prof. of Sanskrit
M.E.S. College, Bangalore.

॥श्रीः॥

# आमुखम्

सर्वतन्त्रस्वतन्त्रैः अलंकारशास्त्रमर्मज्ञत्वेन आलंकारिकप्रमुख बहुप्राच्यनव्य विद्वत्संमान्यैः प्रख्यातैः श्रीमदप्पय्यदीक्षितैः विरचितां प्रौढां गभीरां विचारबहुलां चित्रमामांसामधिकृत्य तद्व्याख्यानं तत्त्वालोकं चाधिकृत्य प्रथमभागे प्रास्तौषम्, तदत्राप्यनुसन्धेयं पुनरपि। तदानीमेव द्वितीयभागस्याचिरात् प्रकाशनं प्रतीक्षामह इत्यपि न्यवेदयम्। प्रतीक्षानुसारं द्वितीयभागं प्रकश्यमानं दर्शं दर्शं मोमुद्यते चेतः।

येषाम् अलंकारन्यायव्याकरणमीमांसादिषु शास्त्रेषु तलस्पर्शि पाण्डित्यमस्ति, चिरकालाध्यापनानुभवः समस्ति, विमर्शकुशलमतिर्वरीवृत्यते, अध्यापनग्रन्थैः सह इतरेषां बहुविधानां ग्रन्थानां सावधानं परिशीलनमस्ति त एव ईदृशस्य व्याख्यानस्य रचने समर्थाः।

व्याख्याकाराः श्री उ. वे.विद्वांसः रामस्वामि ऐय्यंगार्य महाभागाः उक्तसकल विशेषसंपन्नाः इत्यत्र तेषां व्याख्यानमेव प्रमाणम्।

चित्रमीमांसास्थानां सर्वासां पङ्क्तीनां प्रत्येकम् अवतरणिकारचनं, पदार्थवर्णनपूर्वकं वाक्यार्थवर्णनम् विशेषार्थप्रतिपादनं, ग्रन्थान्तरैः सह संवादविसंवादयोः प्रदर्शनम् इत्यादयो विशेषाः अत्र प्रतिपृष्ठं दृश्यमानाः विदुषां मनांस्यावर्जयन्ति।

अस्मिन् द्वितीयभागे रूपकं, परिणामः, ससंदेहः भ्रान्तिमान्, उल्लेखः अपह्नुतिः, उत्प्रेक्षा, इत्येमलंकाराणां निरूपणमस्ति।

रूपकप्रकरणे अनेकेषामलंकारग्रन्थानां भट्टकुमारिलवार्तिकस्य गदाधरभट्टाचार्यकृतव्युत्पत्तिवादस्य चोट्टङ्कनपूर्वकं कृतो विचारः शास्त्रान्तर परिचयस्य निदर्शनम्।

मूले संग्रेहण अलंकारग्रन्थान्तराणां शास्त्रान्तर ग्रन्थानां चोद्धरणं यत्र यत्रास्ति, तत्र विस्तरेण तत्तद्ग्रन्थस्थ विषयाणां प्रतिपादनं व्यारव्यायां कृतं निस्संशय विपर्ययं मूलार्थविज्ञानायोपकरोति।

परिणामालंकारप्रकरणे "प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा" इत्यत्र नोपमितसमासः, प्रसन्नतारूपसामान्यधर्मप्रयोगात्, "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति सूत्रेण सामान्यधर्माप्रयोग एव उपमितसमासानुशासनात् इत्युक्त्वा अब्जस्य वीक्षणोपयोगित्वं निबध्यमानं न स्वात्मना संभवति, अतः प्रकृतदृगात्मतापत्त्यपेक्षणात् परिणामालंकार इति चित्रमीमांसायामुक्तम्। तत्त्वालोके तु (पृ. १९८) वस्तुतस्तु इत्यादिना "मुखं चन्द्र " इति व्यासस्थल इव मुखचन्द्र इति समासस्थले ऽपि विषयस्यैव प्राधान्यम् इत्युपपाद्य " प्रसन्नेन दृगब्जेन इत्यत्र उपमितसमास एव, रूपकमेवालंकारः इति सयुक्तिकं सप्रमाणं संभावित सकालाक्षेपनिरासपूर्वकं विस्तरेण स्थापितम् । एतादृशस्थलानि ग्रन्थकर्तुः स्वतन्त्रचिन्तनायाः निदर्शनानि भवन्ति।

स्थालीपुलाकन्यायेनोदाहृतम्। विद्वांसः बहुपुस्थलेषु व्यारव्याकृतां विमर्शधोरणीं स्वयं साक्षात्कुर्वन्तु इति प्रार्थये ।

व्यारव्यारहितस्यास्य चित्रमीमांसाग्रन्थस्य समुचितव्यारव्याननिर्माणे' छात्रा अध्यापका विमर्शकाश्च नितरामुपकृता भवन्ति। चिरकालपरिश्रमस्य परिपक्वफलभूत मिदं व्यारव्यानम् । व्यारव्याकर्तृणां भूयो भूयोऽ भिनन्दनं कुर्वन् तेषामभि मतसकलार्थप्रदो भवतु भगवान् रमाजानिः इति प्रार्थये ।

बेगलूरु
6-12-1998

4, 12th Main
Raghavendra Block,
Srinagar,
Bangalore - 560050.

एन्.एस्. रामानुजताताचार्यः
कुलपतिचरः
तिरुपतिस्थराष्ट्रियसंस्कृत विद्यापीठस्य

# प्रस्तावना

अलङ्कारशास्त्रं संस्कृतसरस्वत्याः मुख्योऽलङ्कारः । भरतमुनावङ्कुरितं, भामहदण्डिवामनादिषु. पल्लवितम्, आनन्दवर्धनाभिनवगुप्तमम्मटरूय्यकादिषु पुष्पितं शास्त्रमिदं विश्वनाथ- अप्पय्यदीक्षित- जगन्नाथेषु फलितम्। एतेषां महात्मनां चिन्तनया मानवलोकामृतस्य काव्यस्य स्वरूपं निष्कृष्टं निरणीयत । प्राचीनानाम् अर्वाचीनानां च रुचिर वचननिचयान् आस्वादगोचरीकर्तुं, चेतश्चमत्कारं साक्षात्कर्तुं चायतनाः प्रभवन्ति चेत्तत्र निदानम् आलङ्कारिक मूर्धन्यानाम् अमीषां विचारलहरी। एतादृशैर्महात्मभिस्सन्दर्शितेनाध्वना मन्दधियोऽपि सुन्दराणां सन्दर्भाणां हृदयोद्धाटने प्रभवन्ति। अन्यथा प्रातिभेन प्रकाशेन प्रोल्लसितेषु काव्येषु निगूहिता अर्थाः वारिधिजल निमग्ना मणय इव साधारणजनानाम् अगोचराएव अवतिष्ठेरन्।

आलङ्कारिकगोष्ठ्याम अपि विशिष्टं स्थानमधितिष्ठत्यप्पय्यदीक्षितः। षोडशशतकस्य द्वितीयार्धे भूमिं भूषितवान् खल्वयम् अपूर्वप्रतिभासम्पन्नः सुध्युपास्यश्च पण्डितल्लजः। ललितानि काव्यानि, कर्कशान् शास्त्रग्रन्थाश्च रचयितुं समर्थ आसीत्। शारदानुग्रहस्य पूर्णा समृद्धिरप्पयदीक्षिते आसीदिति निश्चप्रचं भ्रमः। तस्य शताधिकाः प्रबन्धा एव तत्र साक्षिणः। चिन्नबोम्म- वेङ्कटपतिप्रभृतीनां राज्ञाम् आश्रये अप्पयदीक्षितेन बहवः सप्ततन्तव आचर्यन्त। पुत्रान् पौत्रांश्चा दृष्ट्वा पूर्णो भूत्वा भगवत्सन्निधिं प्राप्तुम् ऐच्छत् अन्तिमे वयसि। अत्र तदीयम् एव पद्यं प्रमाणम्-

चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं
सुताश्च विनयोज्ज्वलाः सुकृतयश्च काश्चित्कृताः।
वयांसि मम सप्तते रुपरि, नैव भोगे स्पृहा
न किञ्चिदहमर्थये, शिवपदं दिदृक्षे परम्॥ इति

सर्वशास्त्रपारावारपारीणः श्रीमान् अप्पयदीक्षितो मीमांसायां वेदान्ते अलङ्कारशास्त्रे च प्रबन्धान् जग्रन्थ । तत्र अलङ्कारशास्त्रे सम्प्रत्युपलभ्यमानाः ग्रन्थाः त्रय एव । कुवलयानन्दः, वृत्तिवार्त्तिकं, चित्रमीमांसा चेति। तेषु च चित्रमीमांसा

अपूर्णापि ग्रन्थकर्तुरपारं शास्त्रपाण्डित्यं साहित्यमर्माभिज्ञत्वं तर्कनैपुण्यं च विद्योतयति। पूर्वेषां विदुषां मतानि निष्पक्षपातं परीक्षाविषयीक्रियन्ते । तत्रत्याः दोषाः सोदाहरणं प्रदर्श्यन्ते। अन्ततः स्वाभिमतं मतं सयुक्ति ग्रन्थकर्त्रा प्रदर्श्यते । स्वमतस्य दार्ढ्याय न्यायशास्त्रप्रसिद्धः परिष्कारमार्गोऽपि आश्रीयते।

एतैः कारणैश्चित्रमीमांसा अतीव दुर्गमा दृश्यते विदुषाम् अपि, अत्रत्यानि कानिचन वाक्यानि अयश्चणकायन्ते। अतोऽस्य ग्रन्थस्य व्याख्यानम् अपेक्षितम् इत्येतदद्वापरम्। तादृशस्य व्याख्यानस्य निर्माता तर्के व्याकरणे अलङ्कारे साहित्ये च परिणतमतिः सुव्युत्पत्तिः प्रतिपादनसामर्थ्यशाली च स्यात्। तथा खलु जिज्ञासूनां प्रयोजनं भविष्यति।

अस्मद्गुरुचरणाः सोमयाजिनां पवित्रे कुले लब्धजन्मानः संस्कृतसरस्वती सपर्यासमासादितसाहित्यसम्पदः न्यायशास्त्राध्वनि मूर्धन्याः, व्याकरणाम्भोधि मथनमन्दराः, अलङ्कारशास्त्राकाशोत्पतन वैनतेयाः श्रीरामस्वामि ऐयङ्गार्यमहाभागाः चित्रमीमांसाया व्याख्याने प्रवृत्ता इति युक्तरूपम् । श्रीरामं विना कोऽन्यः समुद्रस्य सेतोर्निर्माणेऽलङ्कर्मीणः?

बहुवारं बोधितचित्रमीमांसाः अध्यापितकुवलयानन्दाः, विवृतवृत्तिवार्तिका एते विपश्चिद्वरेण्याः परश्शतान् छात्रान् अनुगृहीतवन्तः इदानीं सकलोऽपि संस्कृतसुधीलोक उपकृतो भवत्विति तैर्व्याख्यानरचनायां प्रवृत्तिरादृता। व्याख्यानरचनायां बहवः कीर्तिप्रेप्सवः प्रवर्तन्ते किन्तु न ते शास्त्रग्रन्थ ग्रन्थिविभेदने समर्था भवन्ति यथा भोजेनोक्तं, तथा तादृशाः-

दुर्बोधं यदतीव तद्विजहति स्पष्टार्थमित्युक्तिभिः
स्पष्टार्थेष्वतिविस्तृतिं विदधति व्यर्थैः समासादिकैः । इति ।

तादृशैर्व्याख्याकारैः छात्राणां किं प्रयोजनम् ? चित्रमीमांसा नव्यन्यायप्रक्रियोपेतत्वात् क्लिष्टेत्यत्र न विचिकित्सा । तां क्लिष्टतां परिहरन्ती व्याख्या छात्रसमुदायेनापेक्ष्यते। न्याये व्याकरणे साहित्ये च समानमनीषाप्रसरो येषां, त एव तादृशीं व्याख्यां रचयितुं प्रभवन्तीति स्पष्टम् एव। अस्मद्गुरुचरणाः शास्त्रत्रयेऽपि अप्रतिहतशेमुषीकाः तथा व्याख्याय चित्रमीमांसां सुग्रहां कृतवन्त इति महतः प्रमोदस्य स्थानम् ।

व्यारव्याकारैर्मूलकारस्य हृदयमुद्घाटनीयम्। मूले यत्रास्पष्टता तत्र विवरणेन स्पष्टता ऽऽधेया। किन्तु यत्र मूलकारः प्रौढिवादेन पूर्वग्रहेण वा चिन्त्यं वदति, तत्र दोषा अपि दर्शनीयाः, उदाहरणार्थं चित्रमीमांसाकारस्य रूपकप्रकरणं सूक्ष्मेक्षिकया निरीक्ष्यताम्। रूपके लक्षणा नाभ्युपगन्तव्या, संसर्गमर्यादया तत्राभेदः सिध्यतीति महता आटोपेन प्रतिपादयति अप्पय्यदीक्षितः। वस्तुतो न साधुरयं पन्थाः. सकलसहृदयसम्मता ह्यत्र लक्षणा। अतोऽ त्र गुरुचरणैः गदाधरादीनां न्यायशास्त्रपारावार पारीणानां मतानि मीमांसकभूर्धन्यानाम् अभिप्रायांश्च समुल्लिरव्य रूपके लक्षणा अवश्यम् आश्रयणीयेति सयुक्ति न्यगादि। एवम् अन्येष्वपि स्थलेषु तत्र तत्र मूलग्रन्थकारमतस्य युक्त्यसहता प्रादर्शि। एतादृशेषु सन्दर्भेषु विपश्चिद पश्चिमा निश्चप्रचं व्यारव्याकृतां निष्पक्षपातया दृष्टया प्रबोधिता भविष्यन्तीति भावयामि ।

धनार्जनोन्मुखजनप्रचुरेऽ स्मिन्ननेहसि विरला एव विद्याधना विद्वांसः। सुधीसौभाग्यादेव शास्त्रग्रन्थव्यारव्यातार उत्पद्यन्ते वसुमतीतले । तेषां सुरसरस्वतीसपर्यापर्यायेण परमात्मपरिचर्यैवेति पर्यालोचनीयम्। नैतादृशेनोद्यमेन वित्तलाभः, नचाधिकारप्राप्तिः, तथापि शास्त्रपरम्परारिरक्षिषयैव ग्रन्थरचनायां सूरीणां प्रवृत्तिरिति लोकेनाकलनीयम्। ग्रन्थरचनासक्तिः बहुषूदियात्। किन्तु तत्र साफल्यम् अवाप्तुं शक्यं न सर्वैः। रचितेऽपि ग्रन्थे तस्य प्रकटनं दुष्करम् अस्मिन् काले। पाण्डित्यगुणग्रहणशीलाः खलु दुर्लभाः ।

"कर्तारः सुलभा लोके विज्ञातारस्तु दुर्लभाः

इति भासमहाकविना प्रोक्तं जानन्त्येव विद्वांसः ।

मूलग्रन्थस्य महत्वं ज्ञायते मुरव्यतया उत्प्रेक्षा प्रकरणे। ग्रन्थकर्तुः बहुश्रुतत्वं सूक्ष्मेक्षिका च व्यक्तीभवति एकैकस्मिन्नपि विचारे । बहुभ्यः खलु ग्रन्थेभ्यः श्लोकरत्नानि उद्धृतानि उपलभ्यन्ते ऽत्र ।

एतत्प्रकरणव्यारव्यावसरे व्यारव्यानकारैरपि वैशिष्ट्यं दर्शितम्। येषाम् उत्प्रेक्षाप्रकाराणाम् उदाहरणानि ऊह्यानीति मूलकारैरुक्तानि, तानि व्यारव्याकारैः स्वयं रचयित्वा दर्शितानि। क्षीरशर्करयोरिवात्र व्यारव्याकारेषु पाण्डित्यकवित्वयोः सङ्गमो महते मोदाय जायते। मूलकारस्य तदुदाहृतग्रन्थकाराणां च अक्षरार्थ मात्रं

विवृत्यअतृप्यन्तो व्याख्याकाराः तदीयगूढाशयानाम् उन्मीलनेऽपि सफलं प्रयत्नं कुर्वन्ति। एतादृशसन्दर्भे नानाग्रन्थकाराणां विचार प्रणालीं चोल्लिखन्ति, उल्लसन्ति चेति नूनं प्रशंसास्पदमिदम्।

प्राचीन पण्डित परम्परा दिने दिने कृशतरा भवन्ती दुनोति सहृदयानां हृदयानि। तथापि तत्र तत्र एतादृशाः ग्रन्थकाराः वर्तन्त इति यदा ज्ञायते तदा आश्वसिति चेतः। एषा परम्परा आचन्द्रतारं भरतवर्षे वर्ततां विराजतां चेति आस्माकीना प्रार्थना।

प्रकाशेन लोकानुग्रहं कुर्वन् दिवसकरः, चन्द्रिकया समस्तं जीवराशिम् आह्लादयन् चन्द्रः, सौरभेण सकल प्रपञ्चं वशीकुर्वती मल्लिका वा यथा कस्यापि प्रशंसां विनापि पूज्यतामेति तथात्र प्रस्तुता तत्त्वालोकाख्या व्याख्या। तथापि गुरुचरणकैङ्कर्यविधया उपरिष्टात्कानिचिद् वाक्यानि प्रोक्तानि करुणावरुणालयाः सन्तः स्वीकरिष्यन्तीति विश्वासं प्रकटय्य विरमामि।

अप्पय्यदीक्षिताख्यस्य विख्यातस्य विपश्चितः।
सुकृतिश्चित्रमीमांसा राजते विद्वदर्चिता॥
तस्या व्याख्या भूरिगुणा ग्रन्थग्रन्थिविभञ्जिनी।
भाति तत्त्वालोकनाम्नी विद्वल्लोक,प्रमोदिनी॥

जीयादप्पयदीक्षितो बहुविधै ग्रन्थैर्वितन्वन् यशो
रामस्वामि बुधाग्रणीर्विजयतां छात्रप्रपञ्चार्चितः।
तत्त्वालोक इति स्वभावमहितं सन्नामधेयं दधद्
व्याख्यानं भुवि राजतामिति सदा सम्प्रार्थये श्रीपतिम्॥

मैसूरु,
12-10-98

इति विद्वद्वशंवदः
नागराजः एम्. ए.
विद्वान्, व्याकरणालङ्कार. (एच्. वि. नागराजराव्)
प्राच्यविद्यासंशोधनालयस्य
वरिष्ठ : संशोधकः



**तत्वालोकव्याख्याकारः**

पण्डितरत्नम्, पण्डितप्रवरः, शास्त्रविद्यानिधिः,
वैदिकभूषणम्, राज्यप्रशस्तिविजेता,
न्याय, अलङ्कार, व्याकरण विद्वान्,
सो रामस्वामि ऐय्यङ्गार्यः

॥श्रीः॥

॥श्रीमते रामानुजाय नमः, श्रीमते राममिश्राय नमः॥

अयि मान्याः सहृदयाः इयं चित्रमीमांसा दुरूहा इत्यत्र न संशयलेशः। एतद्विषये वक्तव्यमखिलं १९८८ तमे क्रिस्ताब्दे मुद्रितायाः चित्रमीमांसायाः प्रथमभागीयकृतज्ञतानिवेदनावसरे निवेदितम् । अवशिष्यते परं द्वितीयतृतीयभागयोर्विषये किञ्चिद्वक्तव्यम् ॥

यद्यपि अस्याः प्रथमभागमुद्रणस्य द्वितीयतृतीयभागयोः मुद्रणस्यचान्तरं दशवर्षपर्यन्तं सह्यमभवत् यतः समीचीनतया मुद्रकानां न्यूनता, सकाले मुद्रयित्वा प्रदातॄणामभावः, द्रविणसाहाय्यराहित्यमित्यनेकानि कारणानि समापतितानि अथापि अभिमानिनां केषाञ्चित् साहाय्येन ऋणकरणेन च इदानीं मुद्रणपदं नीता ॥

अस्याः चित्रमीमांसायाः सतत्वालोकौ द्वितीयतृतीयभागौ अवलोक्य निरतिशयेन अनुगहेण सुविस्तरं सन्देशं सम्प्रेष्य सुवर्णपुष्पप्रदानेन च सम्भाव्य औदार्यं गुणपक्षपातित्वं च प्रकाशितवतां श्रीसंस्थानगोकर्णमण्डलाधीश्वराणां, शिवमोग्गाजिल्ला होसनगरस्थित - श्रीमद्राम चन्द्रापुरमठाधीश्वराणां पद- वाक्य- प्रमाण- पारावारीण श्रीमत्परमहंस परिव्राजकाचार्य श्रीजगद्गुरुशंकराचार्यपरमपूज्य श्रीराघवेन्द्रभारती महास्वामिनां चरणारविन्दयोः भक्तिकृतज्ञतापुरस्सरान् धन्यवादान् नमांसिचोपहरामि ॥

तथैव पाण्डिचेरीस्थ फ्रेञ्च इन्स्टट्यूट् डिपार्ई मेण्ट कलाशालायां गौरव प्राध्यापक पदवीमलंकुर्वाणाः तिरूपतीस्थ राष्ट्रिय- संस्कृत- विद्यापीठस्य कुलपतिचराः पण्डितरत्नेत्यादि बिरुदमेदुराः श्रीमन्तः डा ॥ एन्. एस्. रामानुजताताचार्यमहोदयाः मदीयं चित्रमीमांसातत्वालोकं सम्यगवलोक्य त्रयाणामपि भागानां आमुखमनुगृहीतवन्तः गुणपक्षपातिनः, विद्यासागरा अपि गम्भीराः इति महान् प्रमोदः। एषाम् उपकारः कदापि न विस्मर्तुं शक्यः । अतः एभ्यः सप्रश्रयान् सधन्यवादान् प्रणामान् अर्पयामि ।

## ॥श्रीः॥

# चित्रमीमांसाग्रन्थस्य द्वितीयभागेः विषयानुक्रमणिका

||श्रीः||

श्रीमदप्पय्यदीक्षितविरचिता

# - चित्रमीमांसा -

तत्त्वालोक व्याख्यासहिता

द्वितीयोभागः

## अथ रूपकप्रकरणम्

---

**अथ अभेदप्रधानेषु प्रथमं रूपकं निरूप्यते ।**

सोमयाजियाण्डान् सो.रामस्वामिऐय्यङ्गार्यशर्मणाविरचितः ।

# *तत्त्वालोकः*

द्वितीयो भागः

## अथ रूपकप्रकरणम्

श्रुत्यश्वलैकवेद्यं चिदचित्कायं हयशिरःपुरुषम् ।
वन्देय लोकवन्द्यं निखिलजनाज्ञाननाशनं श्रीशम्॥

यो वामां कमलालयामुदवहत्संप्रार्थितस्सिन्धुना
यो ज्येष्ठं परमेष्ठिनं ह्यजनयन्नाभीसरोजे पुरा ।
यश्चादावुपदिष्टवान् विधिमुखान् वेदान् विधात्रे पुनः
तं वन्देऽखिलनिर्जरादिवपुषं पीताम्बरं शार्ङ्गिणम् ॥

भेदाभेदसाधारणसादृश्यमूलानलंकारान् उपमोपमेयेपमानन्वयस्मर णाख्यान् निरूप्य अभेदप्रधानेषु आद्यं रूपकं निष्क्रष्टुमवतारयति **-अथेति**। अथ भेदाभेदप्रधानोपमाद्यलंकारनिरूपणानन्तरम् अभेदप्रधानेषु रूपकपरिणाम-

## -चित्रमीमांसा-

**आरोपविषयस्य स्यादतिरोहितरूपिणः ।**
**उपरञ्जकमारोप्यमाणं तद्रूपकं मतम् ।।**

## - तत्त्वालोकः-

भ्रान्तिमदादिषु, प्रथमं-आदौ, रूपकं तन्नामकोऽलंकारः, निरूप्यतेप्रतिपाद्यत इत्यर्थः।

अत्र अभेदप्रधानसाधर्म्यमूलेषु इत्यनुक्त्वा अभेदप्रधानेषु इत्येतावन्मा त्रोक्तेरयमभिसन्धिः । रूपकविषये द्वयी रीतिः । साधर्म्यमूलकाभेदे रूपकमित्येका। तदितरकार्यकारणभावादिमूलकेऽभेदेच रूपकमित्यपरा । तयोराद्यः **-भामह-दण्डिवामनाद्यभिमतः** । द्वितीयस्तु पक्षः **एकावली-रत्नाकरकाराद्यभिमतः** । अतः उभयसाधारण्येन लक्षणं वक्ष्यते' बिम्बाविशिष्टे इत्यादिनेति ।

तत्रतावत् दूष्यं हि पक्षं प्रथमभिधाय तद्दूषणपुरस्सरं सिद्धान्तलक्षणाभिधानं समुचितमिति **विद्यानाथाभिमतं** रूपकलक्षणमनुवदति- **आरोपेति** ।

वस्तुयाथात्म्यजिज्ञासवः सर्वेऽपि लक्षणमुखेनैव तद्याथात्म्यं निश्चिन्वन्ति इति पूर्वमेवोक्तम् । अतएव "मानाधीना मेयसिद्धिः मानसिद्धिश्च लक्षणात्"इति कथयन्ति ।

अन्यत्र अन्यज्ञानमारोपः । विषयविषयिणोरभिहितयोः सामानाधिकरण्येन निर्दिष्टयोः अभेदप्रतिपत्तिरारोप इति यावत् । तादृशज्ञानविषयस्य मुखादेः अतिरोहितरूपिणः अनिगीर्णस्वरूपस्य "सर्वादेश्च "इति वार्तिकात् नित्यमिनिप्रत्ययः। "सर्वधनी"इत्यादिवत् । अतएव उत्प्रेक्षाव्यावृत्तिः तस्यां विषयस्य उपदानेऽनुपदाने वा अधःकरणमस्तीति प्राचीनैरभिहितमेव -

विषयस्यानुपादानेप्युपादानेऽपि सूरयः ।
अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते ।।इति।।

आरोप्यमाणम् आरोपयोग्यं चन्द्रादि उपरञ्जकं ताद्रूप्यप्रतीतिमात्रजनकं यदेवंविधं तद्रूपकम् । प्रकृतमुपमेयमप्रकृतेनोपमानेन रूपवत्क्रियते इति तन्निर्वचनम् । उक्तंच **चक्रवर्तिना-**

**-चित्रमीमांसा-**

**अत्र आरोपविषयस्येत्यनेनोत्प्रेक्षातिशयोक्त्योः व्यावृत्तिः।**

- तत्त्वालोकः-

ततो विषयिरूपेण रूपवान् विषयो यतः।
आरोपणेन क्रियते तेनैतद्रूपकं मतम् ॥इति॥

पूर्वेक्तलक्षणघटकदलप्रयोजनं प्रदर्शयति - **अत्रेति**। अत्र=रूपक लक्षणे, आरोपविषयस्येत्यनेन विषयविषयिणोरभिहितयोरभेदप्रतिपत्तिरारोपः तद्विषयस्येत्यर्थः। आरोपाधिकरणस्य शब्दतःप्रतिपादने सतीति यावत्। एतदुपादानात्-

कीर्तिः काकतिवीररुद्रनृपतेस्सिंह्मासनाध्यासिनः
प्राचां भूमिभुजां यशःपिदधती कोटीन्दुतुल्यद्युतिः।
रक्षादक्षिणराजलाभजनितामन्द्प्रमोदोत्थिता
त्रैलोक्याट्टहसप्रभेव ककुभां प्रान्तेषु विद्योतते ॥इति॥

उत्प्रेक्षोदाहरणे कीर्तौ त्रैलोक्याट्टहासप्रभातादात्म्यमध्यवसीयते इति कीर्तेः आरोपविषयत्वं नास्तिइति नातिव्याप्तिः।

**ननु**- उक्तप्रत्युदाहरणे आरोपविषयत्वमेव कीर्तेः न तदविषयत्वम्। यतश्च **विद्यानाथेनैव**- विषय-विषयिणोरभिहितयोरभेदप्रतिपत्तिः **आरोपः**। विषयनिगरणेनाभेदप्रतिपत्तिः **अध्यवसाय**ःइति काव्यप्रकरणे आरोपाध्यवसाययोर्भेदस्य स्फुटमभिधानात् (प्र,रु,३७पु) इति अत्र विषयस्योपादानमेवास्तीत्यारोपस्यैव युक्तत्वादतिव्याप्तिरेवेति न शंक्यम्।

कीर्तिः काकतीतिपद्यस्य तेनैव उपात्तगुणनिमितजातिभावस्वरूपोत्प्रेक्षायामुदाहरणात्। अतश्च **अलंकारसर्वस्वकारवत्** अस्यापि इवाद्युपादानात् निगीर्यमाणतायाः प्राधान्याश्रयणेन संभावनाप्रत्ययस्यै वोद्रेकात् अध्यवसाय एव नारोपः इति वादिनां पक्ष एव नैर्भर्यम्। एवंच अध्यवसयो द्विधा। निगीर्यमाणत्वेन निगीर्णत्वेन चेति। तयोराद्ये विषयस्योपादानमपि। तदोत्प्रेक्षैव। यदा विषयस्य

**-चित्रमीमांसा-**

**समासोक्तौ व्यवहारमात्रसमारोपेण ताद्रूप्यप्रतितेरेवाभावात्।**

- तत्त्वालोक :-

तथा रमणादन्यत्रापि ''रञ्जयति मृगान्'' तृणादिदानेन वशीकरोतीत्यर्थः इति **धातुवृत्तौ माधवाचार्येण** उक्तं संगच्छते। ताद्रूप्यं च तद्धृत्यसाधारणगुणवत्वमेव **प्रकाशका**रादीनामप्यभिमतम्।

इत्थं च **समासोक्तौ नातिव्याप्तिः**- तदुदाहरणं यथा-

भृतात्मा गुणरत्नौघैः पूर्णः सौजन्यवारिणा ।
प्रतापरुद्रनृपतिर्धत्ते विश्वम्भराश्रियम् ॥

अत्र प्रतापरुद्रे गुणरत्नौघसंभृतत्व सौजन्यवारिपूर्णत्वादिविशेषणानां वाच्यव्यङ्ग्योभयानुगामित्वं वर्तते तत्सामर्थ्यात् प्रतापरुद्रे समुद्रव्यवहारः प्रतीयत इति समासोक्तिः संक्षेपेणार्थद्वयस्य प्रत्यायनात्। एव चास्यां विषये विषयिताद्रूप्यापादकत्वात्मकमुपरंजकत्वं नास्ति। अत्र हेतुमाह- **समासोक्ताविति।**

**अयं भावः** -अस्यामप्रस्तुतवृत्तान्तप्रत्यययायनानुगुण्येन विशेषणानां साम्यं कल्प्यते। अथापि न प्रस्तुते अप्रस्तुतरूपसमारोपः कर्तुं शक्यः तद्धेतोरप्रस्तुतविशेष्यस्य, तद्गमकस्य वा अभावात्। अत एव विशेषणसाम्यादप्रस्तुतं प्रस्तुतविशेष्यत्वेन प्रतीयते (व्यञ्जनया) नतु प्रयुज्यते तदा निष्प्रतियोगिकत्वेन अजहत्स्वरूपस्य प्रस्तुतस्य राजादेः विशेषणसाम्यावगमितेन अप्रस्तुतसमुद्रत्वादिधर्मेण विशिष्ट तया. प्रतीतेः अप्रस्तुतव्यवहारसमारोपः। यदा तु अप्रस्तुतमपि विशेष्यं प्रयुज्यते तदा तत् प्रस्तुतमर्थं स्वेन रूपेण रूपवन्तं कृत्वा न्यग्भवति। प्रस्तुतमपि स्वरूपं परित्यज्य अप्रस्तुतताद्रूप्यमुपगृह्णाति अतोऽत्र रूपके रूपसमारोप एव। समासोक्तौ व्यवहारसमारोप एव चारुताहेतुः।अतश्च समासोक्तौ नातिव्याप्ति :। रूपकसमासोक्त्योः विषयभेदोऽन्यत्र प्रदर्शित एव।तद्यथोक्तम्

अप्रस्तुतं प्रतीतं चेत् भेदकांशैक्यसाम्यतः ।
व्यवहारं समारोप्य प्रस्तुते न्यग्भवत्यथ ॥

## -चित्रमीमांसा-

**परिणामे आरोप्यमाणस्यैव विषयताद्रूप्यापत्त्या विषयस्यारोप्य माणताद्रूप्यप्रतिपत्यभावात् ।।इत्याहुः।।**

## - तत्त्वालोकः -

तेनाप्रस्तुतवृतान्तारोपेण प्रस्तुतं स्वयम् ।
संक्षेपेणोच्यते यस्मात् समासोक्तिरियं तदा ।।
स्याद्विशेष्यांशसाम्यंचेत्प्रस्तुताकाररूपितम् ।
भवेदप्रस्तुतंवेद्यं रूपकालंकृतिस्तदा ।।इति ।।

**यद्यपि-विद्यानाथेन-** उपरञ्जकपदप्रयोजनप्रतिपादनावसरे परिणामव्यावृत्ति रित्येतावन्मात्रमुक्तम् अथापि तेनैव समासोक्तिप्रकरणे अत्र समासोक्तौ सर्वत्र व्यवहारसमारोप एव जीवितम् इत्युक्तत्वेन पारिशेष्यत् समासोक्तौ रूपसमारोपो नास्तीति तदभिप्रायानुरोधेन ग्रन्थकृता समासोक्तिपरिणामव्यावृत्तिरिति क्रोडीकरणं कृतमुचितमेव। परिणामे ताद्रूप्यापादकत्वसद्भावेऽपि विषये विषयिताद्रूप्यपादकत्वलक्षणमुपरञ्जकत्वं नास्ति प्रत्युत विषयिणि विषयताद्रूप्यापादकत्वमेवेति नातिव्याप्ति रित्युपपादयति- **परिणामे इति** । तद्यथा-

शश्वत्प्रसाधनविधानकृताभिलाषाः
नम्रैर्भजन्ति मुकुटैरवनीपवर्गाः ।
श्रीवीररुद्रनृपतेः ककुभां विजेतुः
आज्ञामयीं स्रजममन्दविलासक्ष्मीम् ।।

इत्यत्र अप्रकृता स्रक् प्रकृताज्ञातादात्म्यमापन्ना सती मुकुटधारणात्मक प्रकृतकार्येपयोगिनी इति विषयिभूतायाः स्रजः विषयभूताज्ञाताद्रूप्यापत्तिरिति वैपरीत्यमेवेति परिणामोदाहरणे नातिव्याप्तिरिति भावः।। आहुः इत्यस्वरसाभिप्रायेणोक्तम् । अस्वरस श्चायम् ।

आरोपविषयस्येत्युपादानेऽपि अतिव्याप्तितादवस्थ्यमुत्प्रेक्षातिशयोक्त्योः । अतिरोहितरूपिण इत्यनेनैव उत्प्रेक्षातिशयोक्त्योर्व्यावृत्तिसिद्धौ आरोपविषयस्येति विशेषणवैयर्थ्यंच । अतिरोहितरूपिण इत्युपादानेऽपि अपन्हवेऽतिव्याप्तेरवारणम् ।

## -चित्रमीमांसा-

**अत्रेदं विचार्यते-**

**आरोपाध्यवसाययोः कीदृशं भेदमभिसंधाय आरोपविषयस्येत्यनेनोत्प्रेक्षाव्यावृत्तिरुच्यते?**

**यदि विषयविषयिणोरभिहितयोरभेद प्रतिपत्तिरारोपः। विषयनिगरणेन विषयिणस्तदभेदप्रतिपत्तिरध्यवसायः इति भेदमभिन्धाय, तदा उत्प्रेक्षा आरोपमूलैव स्यात्**

## - तत्त्वालोकः -

निदर्शनायामतिव्याप्तिः रूपकविशेषेऽव्याप्तिर्वा अनिवार्यैवेति लक्षणान्तरप्रणयनमनिवार्यमेवेति ॥ अमुमेवास्वरसं मनसि निधाय दूषणामभिधातुं प्रस्तौति- **अत्रेदमिति।**

विद्यानाथाभिहितं लक्षणं युक्तं नवेति परिशोध्यते इत्यर्थः । परिशोधनस्य अयमवसरः यदारोपाध्यवसाययोर्लक्षणस्य द्विप्रकारस्यप्युपगन्तुमशक्यत्वादिति । तदेवशङ्कते- **आरोपेति।**

मतभेदेन आरोपाध्यवसाययोर्भेदः परिदृश्यते । तत्र केषांचिन्मते-विषय-वियिणोरभिहितयोरभेदप्रतिपत्ति : **आरोपः** । विषयनिगरणेन विषयिणः तदभेदप्रतिपत्तिः **अध्यवसायः इति** । **अन्येषां मते**-ताद्रूप्यप्रतिपत्ति **रारोपः** तदभेदप्रतिपतिर**ध्यवसायः** इति। अनयोः कतरन्मतमवलम्ब्य अरोपविषयस्येति लक्षणे निवेशेन उत्प्रेक्षा व्यावृत्तिरभिहितेति विप्रतिपत्तिरारोपेत्यादिना प्रदर्शिता भवति ।

अनयोः प्रथममतरीत्या भेदोपगमे उक्त रूपकलक्षणस्यातिव्याप्तिरपरिहार्या। यत उत्प्रेक्षायाअपि आरोपमूलताप्रसक्तेरित्युपपादयति- **यदिविषयेति** ।

इमावारोपाध्यवसायौ **प्रकाशकाराद्यभिमतौ** । **विद्यानाथेनापि** काव्याप्रकरणे उल्लिखितौ। "मुखं चन्द्रः "इत्यत्र विषयविषयिवाचकयोः मुखचन्द्रपदयोः उपादाने

## -चित्रमीमांसा-

**तत्र "नूनं मुखं चन्द्रः" इति विषयस्य मुखस्याप्यभिधानेन तन्निगरणाभावात्। ततश्च तत्रातिव्याप्तिरनिवारितैव स्यात्॥**

## - तत्त्वालोकः-

सति तदर्थयोः अभेदप्रतिपत्तिः चन्द्राऽभिन्नं मुखमिति अभेदावगाहीबोधः आरोपः। यत्र आरोपविषयं मुखादिकं निगीर्य (आत्मपरिशेषीकृत्य) स्थितः विषयि चन्द्रादिः तस्य अभेदावगाही बोधः अध्यवसायः। यथा "चन्द्रोऽयमि"त्यत्र उपमेयस्य मुखादेः उपमानरूपत्वेन विवक्षया विशिष्य उपमेयवाचकमनुपादाय तस्मिन् आरोप्यमाणेन चन्द्रेण तादात्म्यविवक्षा अध्यवसायः इत्युक्तं भवति।

इत्थंच मुखादीनां चन्द्राभिन्नत्वेनोपस्थितौ **रूपकम्** तेषामेव चन्द्रत्वेनोपस्थितौउत्प्रेक्षाअतिशयोक्तिर्वाभवतीति पर्यवस्यति।उक्तरीत्या आरोपाध्यवसाययोर्भेदेऽभ्युपगते उत्प्रेक्षाया आरोपमूलतैव स्यात्। तदेतदुपपादयति - **तत्रनूनमिति**। तत्र "नूनं मुखं चन्द्रः" इति उत्प्रेक्षोदाहरणे आरोपविषयस्यापि शब्दत उपादानेन न मुखदीनां चन्द्रत्वेनोपस्थितिः। अपितु मुखादीनां चन्द्राभिन्नत्वेनेति अतिव्याप्तिः अनिवारितैव भवेत्। एतेन उत्प्रेक्षाव्यावृत्यर्थमुपात्तम् आरोपविषयस्येति विशेषणं अप्रयोजकमेवेतिभावः।

**यद्यपि -विद्यानाथेन-** काव्यप्रकरणे अरोपाध्यवसाययोर्भेदः काव्यप्रकाशरीत्या प्रतिपादितः। तथापि उत्प्रेक्षानिरूपणावसरे विषयविषयिणोरन्यतरनिगरणेना भेदप्रतिपत्तिरध्यवसायः इति विशिष्य तमेवाध्यवसायं निगीर्यमाणविषयत्वेन निगीर्णविषयित्वेन चेति विभक्तः। "नूनं मुखं चन्द्रः" इत्यादौ विषयस्योपादानात्तस्य सत्यता। विषयिण असत्यता। इयमेव विषयिनिगरणमित्युच्यते। "चन्द्रोऽयमिति" प्रयोगेतु विषय्यसत्यताप्रतिपादकस्य अभावात्सत्यता विषयस्यापलापादसत्यतेति अतिशयोक्तौ उत्प्रेक्षायां चाध्यवसायएव। परंतु उत्प्रेक्षायां साध्याध्यवसायः। अतिशयोक्तौ सिद्धाध्यवसाय इत्येवं विशेषः। रूपकेतु न कस्यापि निगरणमित्यारोप एव नाध्यवसाय इति वदतः **सर्वस्व-तद्व्यारव्यानुसारिणो विद्यानाथस्य** मते नातिव्याप्तेः प्रसक्तिरिति ग्रन्थकृदभिहितं दूषणं न तदभिप्रायानुगुणम्।

**-चित्रमीमांसा-**

**तादृूप्यप्रतिपत्तिरारोपः । तदभेदप्रतिपत्तिरध्यवसायः इति तयोर्भेदः । ''मुखं चन्द्रः'' इत्यादिरूपके चन्द्रस्य यद्रूपं चन्द्रत्वं तेन रूपवत्तामात्रं मुखस्य प्रतीयते, नतु प्रसिद्धचन्द्राभेदः । मुखविषयायां चन्द्रः इत्याद्यतिशयोक्तौ तु तदभेदएव प्रतीयते**

- तत्त्वालोकः-

**तथापि**- साध्याध्यवसायसद्भावस्याप्रामाणिकत्वात् । प्रामाणिकत्वेवा विषयविषयिणोरुद्देश्यविधेयभावेनावस्थानाद्विधेयांशलक्षणाया अनुपगमात् अध्यवसायस्य लक्षणाप्रभेदतायाः प्रकाशकारादिरभ्युपगमाच्च उत्प्रेक्षाया (अध्यवसायगर्भता) साध्याध्यवसायगर्भतोक्तिस्समीचीनैवेति अतिव्याप्तिताद वस्थ्योक्तिः कथंचित्समर्थयितुं शक्या ।

यदितु तादृूप्यप्रतिपत्तिरारोपः तदभेदप्रतिपत्तिरध्यवसायः इति द्वितीयमतमाश्रित्य अतिशयोक्तौ, उत्प्रेक्षायांच तादृूप्यप्रतिपत्तिसद्भावेऽपि रूपके निश्चयात्मिका अस्यां तु संभवनात्मिकानुभूयत इति अतिव्याप्तिः परिह्रियत इत्युच्यते तदापि -

अनाकाशे कोऽयं गलितहरिणश्शीतकिरणः

इत्यादिलक्ष्यानुसारेण अतिशयोक्त्यादौ तादृूप्यप्रतिपत्तिर्नास्तीति वक्तुं न शक्यम्। व्यतिरेकप्रतीतिस्थलेऽभेदप्रतीतेरसंभवात्अतिशयोक्तौ सर्वत्र अभेद एवेत्यत्र विनिगमकाभावाद्वैपरित्यस्यापि सुवचत्वादित्याह- **तादृूप्येति** ।

भेदाविमौ **एकावलीकारादिभिः** सारोप-साध्यवसानलक्षणाफलत्वेन कथितौ। एवंरीत्या "मुखंचन्द्रः" इत्यादिरूपकोदाहरणे मुखे चन्द्रतादृूप्यप्रतीतेरनुभवसिद्ध त्वेन चन्द्रपदस्य चन्द्रतादृूप्ये लक्षणा । सादृश्यप्रतीतिः फलम् । एवचात्र मुखे चन्द्राऽभेदो न भासते अपितु तादृूप्यमिति लक्षणसमन्वयः । नाप्यतिशयोक्तौ "चन्द्रः" इत्यत्र चन्द्रपदे प्रकृतमेव मुखं प्रतिपादयितुं प्राधान्येन प्रवृत्तं सत् मुखनिगरणपूर्वकं स्वाभेदमेव मुखे प्रत्याययति । साध्यावसानलक्षणाया स्साम्राज्यात्।

**-चित्रमीमांसा-**

**इति चेन्न, वैपरीत्यस्यापि वक्तुं शक्यत्वात् ॥**

**नच वाच्यम्-**

**इन्दोरपि मृगाक्षीणां मुखेन्दुरतिरिच्यते ।**

- तत्त्वालोकः -

एवंच रूपके ताद्रूप्यप्रतिपत्तिः। अतिशयोक्तौ अभेदप्रतिपत्तिरिति नातिव्याप्तिरित्यपि न वक्तुं शक्यम् विनिगमकाभावादित्याह - **इतिचेन्नेत्यादिना** ।

**नच**-चन्द्रत्वं नाम चन्द्रासाधारणधर्मः । तस्य मुखेऽभावात् कथं तद्वत्ताप्रतीतिः अन्यधर्मस्य अन्यप्रवृत्तिनिमित्तत्वायोगात् इति वाच्यम् ।

प्रथमतः चन्द्रपदेन सारोपलक्षणया चन्द्रताद्रूप्ये लक्षिते "मुखंचन्द्रः" इति शाब्दसामानाधिकरण्यबलात् मुखे चन्द्रताद्रूप्यं प्रतीयत इत्यविरोधात् ।

**नचैवं**- "मुखंचन्द्रः" इत्यादौ चन्द्रपदे ताद्रूप्ये लक्षणां विनैव संसर्गविधया तत्प्रतीतिस्यादिति वाच्यम् ।

मुखे चन्द्रताद्रूप्यप्रत्ययः लक्षणां विनोपपादयितुं न शक्यः ।

**किंच**-"नीलमुत्पलम्" इत्यादाविव शाब्दसामानाधिकरण्येन अभेदस्य संसर्गविधया भाने सत्यपि ताद्रूप्यस्य संसर्गविधया भानायोगात् इत्येतन्मताशयात् । अतएव "मुखं चन्द्रः" इत्यत्र नतु प्रसिद्धचन्द्राभेदः इत्युक्तम् ॥ **वैपरित्येति** । रूपकेऽभेदप्रत्ययः । अतिशयोक्तौ ताद्रूप्यप्रत्यय इत्यपि वक्तुं शक्यं विनिगमकाभावादिति भावः ।

विनिगमकसद्भावं अनुपपत्तिमूलकतया प्रदर्शयन् रूपके ताद्रूप्यप्रतिपत्तिरेव इत्याशंकते - **नचवाच्यामिति । इन्दोरपीति** । मृगाक्षीणां मुखेन्दुः इन्दोरपि अतिरिच्यते । हि यः निर्जरैः पीयमानोऽपि कदाचिन्नहीयते इत्यन्वयक्रमः ।

मृगाक्षीणाम् हरिणेक्षणानाम् । मृगस्य अक्षिणी इव अक्षिणी यासां तासामिति विग्रहे "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वाचोत्तरपदलोपश्चे" तिवार्तिकात्-

## -चित्रमीमांसा-

**निर्जरै : पीयमानोऽपि यः कदाचिन्नहीयते ।।**

**इति मुखचन्द्रस्य प्रसिद्धचन्द्राद्व्यतिरेकवर्णनं तदभेदप्रतिपत्तौ न संभवतीति रूपके ताद्रूप्यप्रतिपत्तिरेवेति ।।**

**तथा सति हि**

**सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां**
**किरन् ज्योत्स्नामच्छां लवलिफलपाकप्रणयिनीम् ।**

## - तत्त्वालोकः-

बहुव्रीहिः उत्तरपदलोपश्च । तत्र प्रथमं षष्ठीसमासः ततः अनेकमन्यपदार्थे (पा,सू , २-२-२४) इति उत्तराक्षिशब्देन सह बहुव्रीहिः । ततः पूर्वोक्तषष्ठीसमासोत्तरपदस्य पूर्वाक्षिशब्दस्य लोप इति विवेकः । मुखेन्दुः मुखचन्द्रः इन्दोरपि प्रसिद्धचन्द्रादपि अतिरिच्यते समाधिको भवति । तत्र हेतुमाह - **निर्जरैरिति** । निर्जरैः दैवैः युवभिश्च, पीयमानोऽपि आस्वाद्यमानोऽपि , यः मुखेन्दुः कदाचित् न हीयते न न्यूनो भवति इत्यर्थः ।

अत्र देववर्गास्वाद्यमानगगनगतचन्द्रापेक्षया नारीणां मुखं विशिष्टम् यत स्सः मासि मासि क्षीयते, अयंतु कदाचिदपि न क्षीयते इति व्यतिरेकः । एवंच लोकप्रसिद्ध चन्द्राद्भेदवर्णनं मुखे चन्द्राभेदज्ञाने सति न संभवतीति, तादृशभेदवर्णनान्यथा-नुपपत्या रूपके ताद्रूप्यप्रत्यय इत्येव उचित इति भाति । **तेनैतदुक्तं भवति**-विषयविषयिणोः भेदज्ञानप्रयोजक धर्मभाने आहार्यस्याप्यभेदज्ञानस्य उत्पत्तावनौचित्यादिति रूपके ताद्रूप्यप्रतिपत्तिरेवेति । तदेतदपि निराचष्टे **तथाहि सतीति**। तथासति व्यतिरेकघटितरूपकस्थलानुगुण्येन रुपके ताद्रूप्यप्रतिपत्तिरेवेत्यभ्युपगमे सतीत्यर्थः। व्यतिरेकघटितातिशयोक्तौ व्यतिरेकघटितोप्रेक्षायांच अभेदप्रतिपत्तेरभावेन ताद्रूप्यप्रतिपत्तिरेवस्यादित्यस्य उदाहरणंप्रदर्शयति - **सुधाबद्धेत्यादि।**

## -चित्रमीमांसा-

**उपप्राकाराग्रं प्रहिणु नयने तर्कयमनाग**

**नाकाशे कोऽयं गलितहरिणश्शीतकिरणः ।।**

**"अपरः पाकशासनः" इत्याद्यतिशयोक्तौ "अपर इव पाकशासनः"**

## - तत्त्वालोकः-

भो वयस्य उपप्राकाराग्रं नयने प्रहिणु मनाक् तर्कय अनाकाशे सुधाबद्धग्रासैः उपवनचकोरैरनुसृतां लवलिफलपाकप्रणयिनीं अच्छां ज्योत्स्नां · किरन् अयं गलितहरिणः शीतकिरणः क इत्यन्वयक्रमः।।

**विद्धसालभञ्जिकायां** स्फटिकशिलानिर्मितप्राकाराग्रगतां मृगाङ्कलेखामवलोक्य राजा वयस्यं विदूषकं प्रत्याह - भो वयस्य त्वम् उपप्राकाराग्रं प्राकारशिखरसमीपे नयने प्रहिणु पश्येतियावत् । मनाक् ईषत् तर्कय संभावय किमिति? अनाकाशे अनन्तरिक्षे परिदृश्यमानः अथ च सुधायां अमृते बद्धः दृढमुत्पन्नः ग्रासः अभिलाषः यैस्तैः उपवनचकोरैः कृत्रिमवनविहारैः चन्द्रिकापानचतुरैः पक्षिविशेषैः अनुसृताम् अनुगताम् लवल्याः श्यामलाख्यामलकप्रभेदस्य यत्फलं तस्य पाकः कन्तिविशेषः तेनसह प्रणयिनीम् तत्सदृशीं अच्छाम् अनाविलाम् ज्योत्स्नाम् तत्वेनाध्यवसितां प्रभाम् किरन् प्रसारयन् अयं पुरःपरिदृश्यमानः गलितहरिणः परिस्रस्तमृगः शीतकिरणः चन्द्रः कः? अस्य तर्कय इत्यनेन एकान्वयः।

अत्र विषये हरिणगलितत्वोक्त्या विषयिभूतलोकसिद्धचन्द्रापेक्षया उत्कर्षः प्रतीयते। सच भेदज्ञानप्रयोजकः । अतश्चात्र विषये मुखे विषयितादूप्यमात्रं प्रतीयते नाभेदः तथा" कोऽयं गलितहरिणः" इति अनिर्ज्ञातत्वाविष्करणात् निर्ज्ञातगगनगतचन्द्राद्वैलक्षण्यप्रतीतेश्चेति तादूप्यातिशयोक्तिः। अतश्च रूपकएव तादूप्यप्रतिपत्तिलक्षणः आरोपः न अतिशयक्तौ इति पक्षोऽगरीयान् । इत्थं "अपरःपाकशासनः" इत्यादावपि ।

एवमुत्प्रेक्षायामपि क्वचिल्लक्ष्ये तादूप्यप्रतिपत्तिरेवोपगन्तव्या न अभेदप्रतिपत्तिः बाधकसद्भावादिति तदपि प्रदर्शयति - **अपरइवेति**। उक्तोदाहरणे

## -चित्रमीमांसा-

**अथ तत्र प्रसिद्धचन्द्राद्यभेदप्रतिपत्त्यभावेऽपि उपात्तकल्पितापरचन्द्राद्यभेदप्रतिपत्तिस्संभवतीति चेत् रूपकेऽप्येवं वक्तुं शक्यमित्यसंभव एव लक्षणस्य स्यात् ॥**

## -तत्त्वालोकः-

प्रसज्यत इत्याशंकते - **अथतत्रेति** । तत्र सुधाबद्धग्रासैरित्याद्यतिशयोक्त्यादौ, प्रसिद्धचन्द्राद्यभेदप्रतिपत्यभावेऽपि प्रसिद्धचन्द्रापेक्षया भेदभासकसामग्र्या गलितहरिणत्वादिना निमित्तेन तद्विरुद्धाभेदज्ञानानुत्पादेऽपि उपात्तः शीतकिरणादिपदोपादानपूर्वकं प्रतीतिगोचरतां गमितः अथच कल्पितः यः अपरचन्द्रः आहार्य इति यावत् तेन साकमभेदप्रतिपत्तिः अभेदज्ञानं संभवतीत्यर्थः ।

**शङ्कितुरयमाशयः** -" सुधाबद्धेत्याद्युदाहरणे" कोऽयं गलितहरिणः शीतकिरणः इत्यादौ प्रसिद्धचन्द्रभेदभासकसामग्रीसमवधानदशायां तद्विरुद्धाभेदभानमाहार्यं नोत्पद्यते उक्तभेदभासकसामग्र्याः तदभेदज्ञानोत्पत्तिप्रतिबन्धकत्वात् । आहार्याभेदज्ञानं प्रति तादृशभेदभासकसामग्र्याःज्ञानस्य वा न प्रतिबन्धकत्वम् इति उदाहृतातिशयोक्त्युत्प्रेक्षादिषु नातिव्याप्तिः तदभेदप्रतिपत्तिरूपाध्यवसयस्य सत्वादिति।

सत्यम् । उक्तरीत्या अभेदप्रतिपत्तिं सम्पाद्य आरोपविषयत्वं नास्तीत्युच्यतेचेत् रूपकेऽपि उक्तरीत्या कल्पितापरचन्द्राद्यभेदप्रतिपत्तिः संभवतीति कल्पित रूपके ताद्रूप्यप्रतीतेरभावात् आरोपघटितस्य तल्लक्षणस्य क्वापि समन्वयाऽभावादसम्भव एव स्यात् । अतश्च आरोपविषयस्येति विशेषणोपादानं दुष्टमेवेति समाधत्ते - **रूपकेऽपीति** ।

सर्वत्रापि रूपके एवंविधाभेदप्रतिपत्तेरेव संभवे आरोपस्य ताद्रूप्यघटितस्य क्वापि आवश्यकता नास्तीति असंभव एव प्राप्नोतीति तदुपादानमव्यावर्तकमिति भावः ॥

## -तत्त्वालोकः-

**अत्रेदमवधेयम्**- ग्रन्थकृता आरोपध्यवसाययोः द्विप्रकारोऽपि भेदोऽभ्युपगन्तुं न शक्यः उत्प्रेक्षाया आरोपमूलताप्रसंगात् । अतिशयोक्तेरध्यवसायमूलत्वाभाव-प्रसंगाच्च। तथाच रूपकविशेषेऽव्याप्तेरसंभवस्य वा प्रसंगादिति एतावता प्रपंचेन प्रतिपादितं भवति । तर्हि आरोपध्यवसाययोः स्वरूपभेदकं किमिति चेत् -

**उच्यते**- ग्रन्थकृतैव स्वकीय**वरदराजस्तवव्याख्यायाम्** -

आरोपमध्यवसितिंच विना तवास्यां
नाभौ सरःपदमुपैतु कथं न वृत्तिम् ।
साक्षादियं सरसिजस्य समुद्रशायिन्
उत्पत्तिभूरितिहि नायक नायमूहः ॥

इत्येतद्व्याख्यानसमये- प्रसिद्धादुपमानात् उपमेयस्य भेदमनूद्य ताद्रूप्यकल्पनमारोपः । यथा - "अचतुर्वदनोब्रह्माः द्विबाहुरपरोहरिः" इति । तस्य प्रसिद्धोपमानाभेदकल्पनमध्यवसायः "यथा-" अवतीर्य हरिस्साक्षादेष रक्षति मेदिनीम्" इत्युक्तत्वेन विषयविषयिणोरभिहितयोः उपमेये आहार्योपमान-ताद्रूप्यप्रतिपत्तिरारोपः इत्यभ्युपगतं भवति ।

**सत्यम्**- तथासति-

"अयं हि धूर्जटिस्साक्षात् येन दग्धाः पुरः क्षणात् ।"

इति पद्यभागः **कुवलयानन्दे**ऽनुभयाभेदरूपकोदाहरणतया प्रदर्शितः । "अवतीर्य हरिस्सक्षादिति" पद्यभागस्तु **वरदराजस्तवव्याख्याने**- अध्यवसायोदाहरणत्व प्रदर्शनद्वारा अतिशयोक्त्युदाहरणतया प्रदर्शितः ।

इत्थं सति- "अयं हि धूर्जटिस्साक्षाद्येनदग्धाः" इत्यस्मात् "अवतीर्य हरिस्साक्षादिति"पद्यार्धस्य च को विशेषः ।उभयत्रापि साक्षात्पदस्य इदमेतदोः प्रकृतपरामर्शिनोश्चाभिधानात् । अतः पूर्वत्र रूपकमिति अपरत्र अतिशयोक्तिरिति व्याहताभिधानं नघटत इति नच शङ्क्यम्-

अयं हि धुर्जटिरितिपद्ये राज्ञःस्वशब्देनोल्लेखनेऽसत्यपि आरोपाधिकरण-

## -तत्त्वालोकः-

विशेषणतया इदं शब्दार्थस्य विवक्षणात् विषयस्य निगरणं नास्तीति रूपकोदाहरणत्वम् ॥

"अवतीर्य हरिस्साक्षादि"ति पद्येतु राज्ञः स्वशब्देनोल्लेखनं नास्ति ।एतदर्थस्यच उपमानविशेषत्वेन विवक्षास्ति । अतश्चातिशयोक्तित्वमित्यभिप्रायेण तथोदाहरणप्रदर्शनम् ।

**किंच-** विषयविषयिणोः पृथङ्निर्देशे सति सामानाधिकरण्यमात्रेण आरोप इति न वक्तुं शक्यम् । साक्षा"चन्द्रएवेदं मुखं "इत्यत्र विषयविषयिणोः मुखचन्द्रयोः पृथगभिधानेऽपि न ताद्रूप्यकल्पनात्मक आरोपः तस्याप्रतीतेः । यतश्चात्र एवकारसाक्षात्पदयोरूपादानबलान्मुखे चन्द्राभेद एव भासते न चन्द्रताद्रूप्यमित्यनुभवात्। तत्र तु परं ताद्रूप्यं यत्र" अचतुर्वदनो ब्रह्मा द्विबाहुरपरोहरिः" इत्यादौ चतुर्वदनत्वादि वैकल्यस्य भेदप्रतिपादकस्योपादानम् । तथा चात्र नताद्रूप्यं किन्त्वभेदएव। नैतावता एवमादौ अध्यवसायमूलातिशयोक्तिरापाद्या अध्यवसाये विषयनिगरणस्य सर्वसम्मतत्वात्। अतएव ग्रन्थकृता- "देवी गिरामपि तव स्तवमातनोति" इत्यत्र **वरदराजस्तवविवरणे**— देवी गिरामितिपदद्वयेन वागधिष्ठातृत्वं प्रतीयते तावतैव तस्य विश्रान्तिः। पश्चात्तु अध्यवसायबलात् सरस्वतीरूपार्थ प्रतीतिरित्यभिप्रायेण— अधिष्ठानस्य स्वशब्देन ग्रहणं विना तस्मिन् आरोप्यस्य वाचकेनैव ग्रहणंनिगरणं तत्पूर्वकमधिष्ठानस्यारोप्यरूपतयाध्यवसानमहार्यनिश्चय इत्युक्तम् ॥

**एतेन-** विषय विषयिणोरभिहितयोरभेदप्रतिपत्तिर्नारोपः किंतु विषयविषयिणोरभिहितयोः पदान्तरेण भेदे प्रतिपादिते यत्र ताद्रूप्यप्रत्ययः तत्र **आरोपः**— विषयनिगरणपूर्वकविषय्यभेदप्रत्यय आहार्य रूपोऽ-**ध्यावसानम्** इति ग्रन्थकृदभिमतः आरोपाध्यवसाययोर्भेदः इति प्रतिभाति ।

एवंच रूपकलक्षणे आरोपविषयस्येत्युपादानमनुचितमेव । उत्प्रेक्षायामारोपोऽध्यावसायो वा उभयं वा भवतु तत्तत्सिद्धान्तानुरोधात्। परंतु

-चित्रमीमांसा-

**किंच अतिरोहितरूपिणः इत्यनेन ससन्देहभ्रान्तिमतोरति व्याप्तिवारणेऽपि नापह्नवेऽतिव्याप्तिवारणम्। "नेदं मुखं किन्तु चन्द्रः" इत्यत्र मुखे मुखत्वाभावारोपस्य चन्द्रत्वारोपस्यच आहार्यत्वेन विषयतरोधायकत्वाभावात् । आहार्यारोपस्यापि तिरोधाथकत्वे रूपकेऽपि लक्षणस्य असंभवः स्यात् ॥**

-तत्त्वालोकः-

तद्व्यावृत्तये निश्चयघटितलक्षणकरणमावश्यकम् । अतिशयोक्तौ अतिव्याप्तिपरिहाराय विषयनिर्देशनैयत्यविवक्षायाश्च लक्षणे निवेशनीयत्वात् इति रूपकसिद्धान्ते स्फुटं प्रतिपादयिष्यते ग्रन्थकृतैव ।

**अतएव**- "नूनं मुखं चन्द्रः" इत्यादौ मुखेऽभेदेन चन्द्रतादात्म्यसंभावना-दुत्प्रेक्षा। "पिनष्टीव तरङ्गाग्रैः" इत्यादौ भेदेनाप्युत्प्रेक्षोपगता । एवं चोत्प्रेक्षायां क्वचिद्विषयस्योपादानं क्वचित्तदनुपादानंच संगच्छते । अतिशयोक्तौ तु विषयस्यानुपादानं नियतम् ।

इत्थंच **विद्यानाथेन** रूपकलक्षणे आरोपविषयस्येति विशेषण मव्यापकमतिव्यापकं चेत्यनुपादेयम् । पक्षद्वयेऽपि अनुपपत्तेरपरिहारात्। आरोपविषयस्येति प्रथमविशेषणस्यानुपादेयतां प्रतिपाद्य तस्यैवान्यथासिद्धत्वं प्रतिपादयितुं च अतिरोहितरूपिणः इति विषेशणन्तरमपि अपन्हुतौ अतिव्याप्तिवारकं न भवतीति अपन्हुतावतिव्याप्तिवारणाय अतिरोहितरूपिणःइति उपात्तमिति यदुक्तं तदयुक्तमिति प्रतिपादयति- **किंचेति** ।

किंचेत्युक्तिः पूर्वोक्तदूषणापेक्षया दूषणान्तरसमुच्चयद्योतनाय

**ससन्देहेति** ।" किमेष नवमो हरित्पतिः' काकतीयविभोः, इति प्रागुदाहृतससन्देह भ्रान्तिमदुदाहरणयोः सन्देहभ्रान्तिभ्यां विषयस्य तिरोधानात् रूपकलक्षणस्यातिव्याप्तिर्नास्ति अथापि

## -चित्रमीमांसा-

## आहार्यारोपस्यापि तिरोधायकत्वे रूपकेऽपि

### तत्त्वालोकः

"उद्वेलच्चतुरर्णवीकलकलो नायं चमूडम्बरः"

इत्यपह्नुतौ अतिव्याप्तिरेव। एवं"नेदं मुखं किन्तु चन्द्रः" इत्यत्रापि। यतश्चात्र मुखादिकं तत्वेन जानन्नपि चमत्कारविशेषाधानाय मुखत्वादीनु पमेयतावच्छेदकधर्मान् अपलपति। अपलापश्च आहार्य एव न वास्तव इति मुखादौ मुखत्वाभावाद्यारोपस्य चन्द्रत्वाद्यारोपस्य च आहार्यत्वेन विषयतिरोधानाभावात्। अतिरोहितरूपिण इत्यनेन कथमपन्हुतिवारणं शक्यम्?

**नन्वेवं तर्हि**—" आनीय द्विषतां धनानि विपिने राजन्यचूडामणे" इति ससन्देहोदाहरणे करण्डमालोक्य पुलिन्दा अनिश्चितधियो जाताः इत्युक्त्या करण्डे करण्डत्वप्रकारकज्ञाने सत्यपि वाद्यत्वादिप्रकारकं करण्डविशेष्यकज्ञानमाहार्यमेवेति कथं तत्राप्यतिव्याप्तिपरिहार इति चेन्न -

अत्र करण्डस्य करण्डत्वेन प्रतीतिः कवेरेव न पुनःपुलिन्दानां तथासति एकतरधर्मप्रकारकनिश्चयसद्भावात् धर्मान्तराभावप्रकारकनिश्चयसद्भावाद्वा सन्देहस्यैवानुदयप्रसंगात्। एवं चात्र करण्डे वाद्यत्वादिप्रकारकः सन्देहः पुलिन्दसंबद्धत्वेन कविना चमत्काराय उपनिबद्धः। सच अनाहार्य एव। तस्मात्ससन्देहे सन्देग्धॄणां सन्देहस्य विषयतिरोधायकत्वमस्त्येवेति तत्रातिव्याप्तिर्नभवत्येव। एवं कविनिबद्धभ्रान्तिस्थलेऽपि नातिव्याप्तिः तत्रापि भ्रान्तेरनाहार्यत्वात्। अपन्हवस्तु सर्वत्र आहार्यएव इत्यतिव्याप्तिर्दुष्परिहरेति भावः॥

**यदितु-** बाधकालिकेच्छाजन्यज्ञानरूपाहार्यबुद्धेरपि विषयतिरोधायकत्व मभ्युपगम्येत तदा" **वृश्चिकभिया पलायमानस्य आशीविषमुखे पतनमिव**"**इति न्यायेन** अपन्हुतौ अतिव्याप्तिं परिहरतस्तव लक्षणस्यासंभव एवापतिष्यतीत्याह **आहार्येति**। अयंभावः - मुखं चन्द्रो न इत्याकारकबाधज्ञाने जागरूकेऽपि

## चित्रमीमांसा

**लक्षणस्य असंभवःस्यात् ।। उत्प्रेक्षाया अप्याहार्यसंभावना-रूपायाः अतिरोहितरूपिणः इत्यनेनैव व्यावृत्तिसिद्धौ आरोपविषयस्येति विशेषण वैयर्थ्यं च स्यात् ।।**

### तत्त्वालोकः

"मुखं चन्द्रः" इत्याकारकमाहार्यमभेदज्ञानं जायत इत्यनुभवसिद्धम् । एवं सति मुखे जायमानस्य चन्द्राभेदज्ञानस्य मुखतिरोधायकत्वे "अतिरोहितरूपिणः" इत्यंशस्य क्वापिरूपके समन्वयो न भवत्येवेति असंभव एव आपद्येते । यदितु असंभवपरिहाराय आहार्यारोपस्य विषयतिरोधायकत्वं नास्तीत्युपगम्यते तदा अपन्हुतावतिव्याप्तिर्वज्रलेपायत इति ।।

**वस्तुतस्तु**- रूपकेस्थले आहार्यरोपमभ्युपगम्य असंभवाभिधानं **प्रचीनालंकारिकाणां जैमिन्यादिदार्शनिकानां** च अननुगुणमेव ।

तथाहि- "सिह्मो देवदत्तः" गौर्वाहीकः" इत्यादौ सत्यामेव भेदप्रतीतौ अतिसादृश्यवशात् उपमेये उपमानाभेदप्रतीतिरनाहार्या प्रतीयते। परंतु सारोपलक्षणयेति प्रतिपादयतां **जैमिनि भट्टकुमारिल-शंकराचार्य-वाचस्पतिमिश्रप्रभृतीनां** दार्शनिकानां तदनुयायिनां **प्राचीनालंकारिकाणां** मतानुरोधेन रूपके आहार्यारोपापेक्षा अनपेक्षितेति लक्षणस्यासंभवाभिधानं स्वमतिपरिकल्पितमेवेति चिन्त्यमेतत् । विस्तरस्तूत्तत्र वक्ष्यते ।

इत्थं अतिरोहितरूपिणः इत्यस्योपादानेऽतिव्याप्त्यसंभवयोर न्यतरस्यापरिहार्यतामुक्त्वा किंचेत्यनेन सूचितं आरोपविषयस्येत्येतद्विशेषणवैयर्थ्यं एतद्विशेषणेनैव तद्व्यावृत्तिसिद्धेरित्याचष्टे **उत्प्रेक्षाया** इति। विषयिनिष्ठ-धर्मसम्बन्धप्रयुक्तं विषययधर्मिकं तादात्म्यसंसर्गेण विषयिविधेयक-माहार्यसंभावनमुत्प्रेक्षा इतिहि उत्प्रेलक्षणमभिमतं **विद्यानाथस्यापि**। रूपकेअसंभवं परिहर्तुं आहार्यरोपस्य विषयतिरोधायकत्वमवश्य-मेष्टव्यम्। इत्थं सति तेनैव

**-चित्रमीमांसा-**

**अपिच- त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।**
**इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ।।इति**

**निदर्शनायामतिव्याप्तिः ।**

-तत्त्वालोकः-

अधःकरणमसत्यत्वप्रतिपादनमिति व्यारव्यातम्। अतएव- **नव्यैरपि कैश्चित्** -मुखस्य मुखत्वेन वा इदंत्वेनवोपस्थितौ सारोपत्वमेवोचितम् । इदंत्वस्य आरोप्यविशेषणतयोपस्थितौ विषयनिगरणरूपमध्यवसानं युक्तमित्युच्यते । न तावता विषयस्यापुरस्कारः इति अतिरोहितरूपिणः इत्यनेन न तयोः व्यावृत्तिसिद्धि रिति आरोपविषयस्येत्युपादेयमेव । **अथापि** -नसर्वविधोदाहरणसंग्रहः सर्वविधप्रत्युदाहरणपरिहारोवा "इन्दोरपि मृगाक्षीणाम्" , "अनाकाशे कोऽयं गलितहरिणः शीतकिरणः" इत्यादिरूपकातिशयोक्त्युत्प्रेक्षासु अव्याप्त्यतिव्याप्ती अपरिहार्ये इति नच वाच्यम्। सर्वत्र रूपकेऽभेद एव, सर्वत्र अतिशयोक्तौ उत्प्रेक्षायां चाभेद एवेति मम्मटादिनां मताश्रयेण दोषोद्धारात् ।

परन्तु नव्यमतरीत्या ताद्रूप्यरूपके , ताद्रूप्योत्प्रेक्षातिशयोक्त्योः अव्याप्त्यतिव्याप्ती अपरिहार्ये एवेति दूषणाभिधानं कृतं भवेदिति भाति ।। "तुष्यतु दुर्जनः" इति न्यायेन प्रागुक्तोदाहरण-प्रत्युदाहरणेषु कथंचिदव्याप्त्यादिपरिहारेण विशेषणानां सार्थक्यसंभवेऽपि निदर्शनायामतिव्याप्तिर्दुष्परिहरेत्यभिप्रायेण दूषणान्तरमभिधत्ते- **अपिचेति** ।

त्वत्पादयोः नखान्येव रत्नानि तेषां, रत्नशब्देन कोकनच्छवेः पद्मरागस्य ग्रहणम् तस्यैवारूणवर्णत्वात् त्वत्पादनखकर्मकम् अलक्तककरणकं मार्जनमिति यत् तदिदं श्रीखण्डलेपकरणक विधुकर्मकपाण्डुरीकरणमित्यर्थः। अत्र नखकर्म-कालक्तककरणकमार्जनरूपे उपमेयवाक्यार्थे श्रीखणडलेपकरणकविधु कर्मकपाण्डुरीकरणरूपोपमनवाक्यार्थस्यैक्यारोपः क्रियते । ऐक्यारोपश्च यदिदंशब्दयोरेकविषयत्वेन सामानाधिकरण्यप्रतीतेर्निदर्शना । प्रकृते च तादृश-

## -चित्रमीमांसा-

**तत्र उपमानवाक्यार्थ उपमानवाक्यार्थताद्रूप्यारोपसद्भावात् ॥**

## -तत्त्वालोकः-

मार्जनरूपविषयस्य अतिरोहितस्वरूपस्य श्रीखण्डलेपकरणं पाण्डुरीकरणं ताद्रूप्योपरक्तबुद्धिविषयीकारकं भवतीत्यतिव्याप्तिः । तदेतदाह-**तत्रेत्यादिना** ।

**अत्रेदंचिन्त्यते**- ग्रन्थकृता "त्वत्पादनखरत्नामि"तिपद्ये रूपकलक्षणातिव्याप्तिप्रतिपादनावसरे तत्र उपमेयवाक्यार्थे उपमानवाक्यार्थताद्रू प्यारोपसद्भावादिति, तत्किं **विद्यानाथाभिम**तनिदर्शनालक्षणानुरोधेन ? आहोस्वित् मतान्तरानुरोधेन-

न तावत् **विद्यानाथानु**रोधेन- तेन पदार्थनिदर्शनाया एवलक्षितत्वात्।

असंभवद्धर्मयोगादुपमानोपमेययोः ।
प्रतिबिम्बक्रिया यत्र गम्या सा स्यान्निदर्शना ॥इति॥

उपपादिताचैवम्-यत्रोपमानधर्मस्योपमेयगतत्वेन निबद्धस्यान्वयासंभवात् तत्सम्बन्धार्थं बिम्बप्रतिबिम्बकरणमाक्षिप्यते सेति । उदाहृता च तथैव-

रिपुतिमिरमुदस्यन् रत्नसिंहासनस्थः
त्रिभुवनमहनीयः काकतीयक्षितीशः ।
वहति महितविश्वोल्लासलीलीलामभिरव्या
मुदयशिखरिचूडाचुम्बिनस्तीव्रभानोः ॥इति॥

अत्रच सवितृशोभायाः राज्ञि असंभवात् सवितृशोभासदृशीं शोभां वहतीति उपमेये राज्ञि वर्तमाना या शोभा सवितरि वर्तमानाच या शोभा तयोर्भेदेऽपि सादृश्यमूलकतया अभेदः परिकल्प्यते। एवंचात्र उपमानगतधर्मस्योपमेयगतत्वेनानिबन्धात्कथं निदर्शनात्रेति समालोचनीयंम् । इत्थंसति कथमतिव्याप्तिरापादितेति ।

**नन्वेवंतर्हि**- "त्वत्पादनखरत्नानाम्" इति पद्ये **विद्यानाथ**रीत्या-कोऽलंकारः ? न तावन्निदर्शना तस्या-प्रागेव निराकरणात् । तर्हि रूपकमस्तु । तथाहि-मार्जने उपमेये पाण्डुरीकरणताद्रूप्यमारोप्यते । तथाच मार्जनं पाण्डुरीकरणाभिन्नमिति पत्तद्भ्यां अवगतेः इतिचेत्सत्यम् ।

-चित्रमीमांसा-

**यदिच आरोपविषयस्य पदार्थस्य इतिविशेषणम् तथापि अलक्तक कृतत्वत्पादनखमार्जनं श्रीखण्डलेपकृतविधुपाण्डुरी करणमिति निदर्शनायामतिव्याप्तिः।**

-तत्त्वालोकः-

"बिम्बाविशिष्टे" इत्यादिसिद्धान्तलक्षणस्यानुसारेणाऽपि न वाक्यार्थरूपकस्य उच्छित्तिरिति तत्रैव स्फुटमुपपादयिष्यते।इत्थंच "त्वत्पादनखरत्नानाम्" इति पद्ये निदर्शनैवेति **विद्यानाथा**भिमतस्य रूपकलक्षणस्य अतिव्याप्तिरेव ॥ **रसगङ्गाधरा**भिहितनिदर्शनालक्षणेआर्थाभेदइति यदुक्तं **तत्कुवलयानन्दोन्मेषव्याख्यायां** निदर्शनाप्रकरणे चिन्तयिष्यते।

**एवं तर्हि**- आरोपविषयस्येत्यस्य पदार्थस्येति शेषपूरणंकृत्वा "त्वत्पादनखरत्नानाम्" इति वाक्यार्थे वाक्यार्थान्तरारोपात्मकनिदर्शनोदाहरणे अतिव्याप्तिः परिहर्तुं शक्येत्याशंक्य निराकरोति- **यदिचेति**। "मुखं चन्द्रः" इत्यत्र यथा मुखरूपपदार्थे चन्द्रपदार्थस्याभेद आरोप्यते तथात्र न केवलं मार्जनरूपे पदार्थे पाण्डुरीकरणरूपपदार्थाभेद आरोप्यते किन्तु अनेकपदार्थात्मके पादनखानां अलक्तकमार्जनरूपे वाक्यार्थे विधोः श्रीखण्डलेपेन पाण्डुरीकरणात्मकानेकपदार्थरूप वाक्यार्थाभेद आरोप्यते इति नातिव्याप्तिरिति शङ्कितुरभिप्रायः।

तन्निराकरिष्णोस्तु -यद्येतत्पद्यावगतानामप्यनेकेषां पदार्थानां एकैकपदलभ्यरूपतां सम्पाद्य पदार्थे पदार्थान्तराभेदः परिकल्प्येत तदा उक्तपद्यार्थेऽतिव्याप्तिस्स्यादेव। अनेकपदार्थानामेकपदार्थीकरणंच तदर्थ बोधकपदानां कृतसमासेन निर्देशे सति समस्तत्वादानुशासनिकतया लभ्यते तद्यथेति प्रदर्शयति - **अलक्तककृतेति** अलक्तककृतत्वत्पादनखमार्जन शब्दानां, श्रीखण्डलेप - कृत- विधु - पाण्डुरीकरणशब्दानां च समासं परिकल्प्य कृत्तद्धितेति प्रातिपदिकत्वे पदसंज्ञायामेकपदत्वं तज्जन्यार्थस्य च पदार्थरूपत्वमिति भावः।

## -चित्रमीमांसा-

**अङ्घ्रिदण्डोहरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे।**

**विधिविष्टरपद्मस्य नालदण्डो मुदेऽस्तु वः ॥**

**इति रूपकेऽव्याप्तिश्च।**

## -तत्त्वालोकः-

**यदितु** - "त्वत्पादनखेति" पद्ये तथानिर्देशाभावान्नातिव्याप्तिः रूपकलक्षणे न पदार्थस्येति विशेषितमिति समाधीयते तदा विशिष्टरूपके ऽव्याप्तिरित्याह - **अङ्घ्रिदण्डइति ।**

बलेः- दैत्यविशेषस्य, निग्रहे बन्धने धर्मसंस्थापनविरोधिदै त्याधिकारनिवर्तनानुगुणे बन्धने वा, हरेः वामनस्य त्रिविक्रमतामुपेयुष : (द्वितीयविक्रमे) ऊर्ध्वं उपरि उत्क्षिप्तः :प्रेरित : अङ्घ्रिदण्डः दण्डपाद : " ऋजुरूर्ध्वीकृत : पादो दण्डपादो ऽ भिधीयते" इत्युक्तेः।विधे : चतुर्मुखस्य यो विष्टरः आसनम् "वृक्षासनयोः विष्टरः" (पासू. (३-१ ३) इति निपातनात् तदात्मकस्य पद्मस्य नालदण्ड दण्डाकारो मृणाल : वः युष्माकं मुदेऽस्तु प्रमोदाय भवतात् इत्यर्थः।

अत्र बलिबन्धनसमयोर्ध्वीकृतभगवद ङ्घ्रिदण्डे, विधिविष्टर पद्मानुषक्तनाल दण्डाभेदः प्रतीयते अतश्चात्र रूपकेण भाव्यम् तच्च न सिध्येत् उपमानोपमेयग्रोर्विशिष्टरीत्या प्रतीतेः साच नएकैकपदावगता। किंतु नानापदावगता । आरोप्यमाणारो- पविषयरणयोरेकैकपदज्ञानजन्योपस्थितिविषयत्वे सति रूप कतोपगता। अतश्चात्राव्याप्तिरित्यभिप्रायः।

**नच** - "अङ्घ्रिदण्डो हरेरूर्ध्वम्" इत्यत्रापि अङ्घ्रिदण्डरूपे विषये नालदण्डरूप विषयिणोऽभेदे परिकल्पिते पदार्थे पदार्थाभेदः आरोपितो भवतीति नातिव्याप्तिरिति वाच्यम् ।

उपमायामिव सहृदयाह्लादजनकसाधारणधर्मानुपस्थितौ रूपकालंकारस्या प्राप्तिरेवेति अव्याप्तिरेव। अयमर्थः रूपकसिद्धान्ते विधातृविष्टर

## तत्त्वालोकः

कमलश्लिष्टत्वरूप साधारणधर्मवत्तासम्पत्तये विशेषणविशिष्टतामात्रमुपमेयस्य इति वक्ष्यते।

**नन्वेवं तर्हि** - "मुखं चन्द्र :" इत्यत्र कथं रूपकालंकार : ? साधारणधर्मानुपस्थानात् इति चेन्न, मुखं चन्द्र : इत्यत्र आह्लादकत्वादेः प्रसिद्धतरत्वात्तद्बोधकश्रुतेर्नापेक्षा, अङ्घ्रिदण्ड इत्यादौ तु साधारणधर्मोपस्थापक श्रुतेर्नियमेन अपेक्षा इत्येतावान् विशेषः इति अनुपदोद्धृतरूपकसिद्धान्तग्रन्थाकलनेन अवगम्यत एव।

एवंच "अङ्घ्रिदण्ड" इत्यत्र बलिबन्धनसमयो र्ध्वीकृतत्वविशेषण युक्तेऽङ्घ्रिदण्डे, विधातृविष्टर कमलश्लिष्टत्वरूपविशेषणयुक्तस्य नालदण्डस्याभेदः अवबुध्यत इति अनयोस्सविशेषणत्व एव रूपकोत्थानमित्यनेक पदार्थरूपवाक्यार्थेऽनेकपदर्थात्मक वाक्यार्थान्तराभेदारोपः क्रियते। एवं चात्र रूपकमेवालंकारः। आरोपविषयस्य पदार्थस्येति विशेषणोपादाने तु अव्याप्तिरिति भावोऽ वगन्तव्यः॥

**नचात्र** - वाक्यार्थनिदर्शनोपगम्यतां निरस्यतां रूपकमिति वाच्यम् यतो निदर्शनायाम् उपमानोपमेय धर्मयो : बिम्बप्रतिबिम्बभावो नियत इति -

असंभवद्धर्मयोगादुपमानोपमेययोः।
प्रतिबिम्बक्रियागम्या यत्र सास्यान्निदर्शना॥

इति लक्षयता पदार्थवाक्यार्थनिदर्शनासाधारण्येन दर्शित एव **विद्यानाथेनाऽपि।** नह्यत्र अङ्घ्रिदण्डनालदण्डविशेषणयोः ऊर्ध्वोत्क्षिप्तत्व- विधातृविष्टर कमलश्लिष्टत्वयोः बिम्बप्रतिबिम्बभावोऽस्ति। तस्य च यथाकथंचित् साधर्म्यप्रतीतिं विना अनुत्थानात्। अतश्चात्र निदर्शनागन्धोऽपि कलपयितुं नशक्यः। अत्रकेचित् - "अङ्घ्रिदण्डो हरेरूर्ध्वम्" इत्यत्र येन केनापि नालदण्डेन सादृश्ये प्रतीतेऽपि रूपकनिर्वाहे सति रूपकानुपयुक्त विधिविष्टरपद्मसंबन्ध रूपविशेषणबलात् उत्प्रेक्षैवास्तु न रूपकमिति न तत्राव्याप्तिरित्याहु : ।

तन्मन्दम् - चमत्कारि साधारणधर्मानुपस्थितिदशायां रूपकस्यैवानिष्पत्तेः।

## चित्रमीमांसा

**यत्तु सरस्वतीकण्ठाभरणोक्तं लक्षणम्-**

**यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात्।**
**उपमेये भवेद्वृत्तिः तदा तद्रूपकं विदु :।। इति**

तत्वालोकः-

विधिविष्टरेत्यादि विशेषणस्य रूपकानुपयुक्तत्वाभावात् प्रत्युत रूपकोपयुक्तत्वाच्च उत्प्रेक्षाया वक्तुमयुक्तत्वात् अतएव चात्र रूपक सिद्धान्ते रूपकत्वमेव वक्ष्यते। स्वकीये **कुवलयानन्दे** च उक्तोदाहरणे विशिष्टरूपकत्वमेवाभिहितम्।

इत्थंच रूपकलक्षणे आरोपविषयस्य पदार्थस्येति वाचोयुक्तिरपि नोपयुज्यते विशिष्टरूपकस्थले ऽ व्याप्तेरिति **विद्यानाथेन** लक्षितं रूपकम् अव्याप्त्यादि ग्रस्तमिन्यथैव लक्षणं विधातव्यमिति दिक् ॥

इत्थं विद्यानाथाभिहित लक्षणे दूषणान्यभिधाय रूपके प्रथमतस्सदृशाभेदप्रतीतिः (गौणीलक्षणया) गौणसारोपलक्षणया पश्चात्ताद्रूप्यप्रतीतिर्व्यञ्जनाव्यापारेणेति प्रतिपादयतां प्राचीनालंकारिकाणां जैमिन्यादीननुसरतां मतं निरस्य रूपकस्थले विषयविषयिणोरभेद प्रतिपत्ति : आहार्यरूपा संसर्गमर्यादयैव भासत इति स्वसिद्धान्तस्थापनार्थ **सरस्वतीकण्ठाभरणे भोजदेवेन** अभिहितं लक्षणमनुवदति - **यत्त्वित्यादिना**।

यदा उपमानशब्दानां उपमानवाचिनां चन्द्रादिपदानां, गौणवृत्ते गौणसादृश्यविशिष्टलक्षणायाः, व्यापाश्रयात् समाश्रयणं निमित्तीकृत्य, उपमेये विषयभूते मुखादौ, वृत्ति : प्रतिपादकत्वं भवेत् तदा तत् तादृशलक्षणाप्रयोज्य चन्द्रादिपदजन्य प्रतीतिविषय भूतोपमेयरूपं रूपकम् रूपकालंकारं विदु : वदन्ति इत्यर्थः।

सरस्वतीकण्ठाभरणोक्तमुदाहरणं यथा-

पाणिपद्मानि भूपानां संकोचयितुमीशते।
त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः। इति।

### चित्रमीमांसा-

## तदपि अतिशयोक्तावतिव्याप्तम् ।

### तत्त्वालोकः -

उपपादितं च तेनैव - अत्र उपमितं व्याघ्रादिभिः सामान्याप्रयोगे पा. सू. २-१-५६ इति समासे पद्मानीव पद्मानि, चन्द्रा इव चन्द्राः इत्यभेदोपचारेण उत्पन्नसादृश्यात् पाणीनां नखानां च पद्मचन्द्राद्यभिधाने सामान्येवादिशब्दाप्रयोगादुपमानार्थः तिरोभूत इति सोऽयं गौणशब्दव्यपाश्रयः समासहेतुकः समस्तरूपकं नाम प्रकृतरूपकेषु शब्दभूयिष्ठरूपकभेद इति ॥

व्यस्तं यथा-

अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः।
बाहूलते, वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी॥

इत्युदाहृत्य अत्रापि पूर्ववत् पल्लवकुसुमलतावसन्तश्रीशब्दानां गुणवृत्त्याश्रयेण अङ्गुलीनखार्चिर्बाहुवर्णनीयनायिकाभिः सह सामानाधिकरण्यात् सामान्येवादि शब्दाप्रयोगाच्च तिरोभूतेऽप्युपमानार्थे समासो न कृत इत्यसमस्तरूपकभेदः। इदमुदाहरणं दण्डिनः काव्यादर्शे (का. द.२.६७) दत्तम् ॥

उक्तलक्षणमतिशयोक्तावतिव्याप्तमित्याह **-तदपीति**। अयं भावः रूपके गुणवृत्त्याश्रयेण विषयवाचिभिः पदैः यथा उपमेयविवक्षा " मुखं चन्द्रः" इत्यादौ सारोपलक्षणमूलकेतथा'चन्द्र' इत्याद्यतिशयोक्तावपीति साध्यवसानलक्षणा मूलातिशयोक्तौ अतिव्याप्तिरिति ।

यद्यपि- **सरस्वतीकण्ठाभरणोक्तस्य** गुणक्रियाजात्यतिशयपर्यवसन्नस्य-

विवक्षा या विशेषस्य लोकसीमातिवर्तिनी ।
असावतिशयोक्तिस्स्यादलङ्कारोत्तमा यथा ॥

इत्यस्य 'चन्द्र' इत्याद्यतिशयोक्तौ नातिव्याप्तिः । तथापि-

रूपकातिशयोक्तिस्स्यान्निगीर्याध्यवसानतः ।

## -चित्रमीमांसा-

**मुखं चन्द्रः" इति रूपके चन्द्रशब्दस्य मुखे गौणसारोप लक्षणा। "चन्द्र" इत्यतिशयोक्तौ साध्यवसानलक्षणा इत्यलंकारिक सिान्तात्॥**

## -तत्त्वालोकः-

इति स्वा (जयदेवाद्य) भिमतातिशयोक्तौ अतिव्याप्तिरित्यत्र तात्पर्यात् ।

यद्वा-;

यत्रोपमानादेवैतदुपमेयं प्रतीयते ।
अतिप्रसिद्धे स्तामाहुः समासोक्तिं मनीषिणः ॥ इति

या समासोक्तिः**कण्ठाभरणकृता** लक्षिता यैव जयदेवादिभिः अतिशयोक्तिविशेषत्वेनाभिहिता तस्यामतिव्याप्तिरित्यत्र तात्पर्यात् ।

**वस्तुतस्तु**- पाणिपद्मानि "अङ्गुल्यःपल्लवानि"इत्यादि तत्प्रदर्शितोदाहरणपरामर्शे कृते यत्र उपमानपदेन गौणवृत्त्या उपमेयविवक्षा उपमेयस्य पृथगुपादानंच तत्र रूपकम् तदनुपादानेऽतिशयोक्तिः उपमानपदस्य उपमेये गौणवृत्तिविरहे उपमेत्येवं विविक्तविषयतास्त्येव। **कण्ठाभरणो**क्तलक्षणे गौणवृत्तिपदस्य गौणसारोपलक्षणेत्यर्थविवक्षां तदुदाहरणपरामर्शानुरोधेन आश्रित्य अतिशयोक्तौ साध्यवसानलक्षणामूलायामतिव्याप्तेरभावात् तदपित्यादि चिन्त्यमेव ॥

अत एव नव्याः**कौस्तुभकारादयः** - 'यदेति' कारिकाम् उपादाय सारोपलक्षणालभ्यं सारूप्यमेव रूपकमित्याहुः इत्यभिहितं संगच्छते ॥ सत्यम् अथापि- सरस्वतीकणठाभरणोक्तलक्षणे प्रातिस्विकरूपेण गौणसारोपलक्षणाया अनुपादानाद्गौणवृत्तिपदं साध्यवसानलक्षणामूलाया अपि सङ्ग्राहकमिति अतिशयोक्तौ अतिव्याप्तिप्रसङ्ग इत्युपपादयति- **मुखं चन्द्र इत्यादिना** ।

"मुखं चन्द्र" इत्यत्र मुखत्व-चन्द्रत्वयोः एकस्मिन्नर्थे समवायाभावात् सामानाधिकरण्यं नोपपद्यत इति चन्द्रशब्दः स्वशक्यगताह्लादकत्वादिगुणसादृश्येन मुखे वर्तते इति चन्द्रशब्दस्य मुखे गौणसारोपलक्षणा ।

।

## -तत्त्वालोकः-

तथाच उपमानवाचकपदेन उपमानवृत्तिगुणसदृशगुणवतो लक्षणयोपस्थितौ तस्य उपमेयेऽभेदेनान्वयः। एवंच "मुखंचन्द्र" इत्यत्र चन्द्रवृत्तिगुण-सदृशगुणवदभिन्नं मुखमिति बोधः ।

नन्वत्र- विषयस्य प्राधान्यम् ? अथवा विषयिणः? विषयप्रधान्यमेव प्राचां प्रायेणाभिमतम्। अतएवच 'मुखचन्द्र' इत्यादिरूपकस्थलेऽपि **कण्ठाभरणकारादयः** उपमितसमासमेव आद्रियन्ते । युक्तं चैतत् - "मुखंचन्द्रः" "मुखचन्द्र" इति व्याससमासयोः विषयप्राधान्ये सति अत्यन्तमानुगुण्यमपि सम्पद्यते॥

व्यासे विषयप्राधान्यं, समासे (रूपकसमासे) विषयिप्राधान्यम् इत्यभ्युपगमे समासव्यासयोः वैरूप्यमापद्यत इति व्यास-समासयोः अनानुगुण्यं नव्यानामिति तन्मतमनादरणीयमेव ॥ प्रकारान्तरेण नव्यमतेऽपि आनुगुण्यमिति वक्ष्यते ।

किञ्च- नव्यैरपि रूपकसामान्ये विषयिप्राधान्यमाश्रितमित्यपि न वक्तुं शक्यम्-ग्रन्थकृतैव स्वकीये **कुवलयानन्दाख्यसन्दर्भे-** प्रतीयमानसाधारणधर्म कानुभयाभेदरूपकमुदाहरता-

चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वाः
वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित् ।
एको वक्ति प्रथमनिहतं कैटभं कंसमन्यः
तत्वं स त्वं कथय भगवन् को हतस्तत्र पूर्वम् ॥

इत्यत्र विषयप्राधान्यमेव व्यासस्थले आश्रितमिति प्रतिभाति । अन्यथा-' सत्वं कथय ' इति मध्यमपुरुषप्रयोगोऽसाधुतां प्रतिपद्येत । एतेन व्यासे विषयप्राधान्यमस्यापीष्टमिति विभाव्यते । समासे कथमित्यंशस्य परिणामप्रकरणव्याव्यासमये प्रसन्नेन दृगब्जेन इत्यत्र उत्तरं दास्यते ।

**चन्द्र इति**-मुखादेर्विषयस्य मुखादिशब्देनोल्लेखनं विनापि चन्द्रादिविषयिवाचकेनैव शब्देन ग्रहणपूर्वकं विषयबोधनं यत्र तत्र अतिशयोक्तौ साध्यवसानलक्षणा - यथा "चन्द्रः" इत्यादौ अत्र च उपमानतावच्छेदक

## -चित्रमीमांसा-

**वस्तुतस्तु अतिशयोक्तावेव लक्षणा न तु रूपके इति शक्यं व्यवस्थापयितुम्।**

**तथाहि-अतिशयोक्तौ विषयाभिधायिमुखादिपदाऽप्रयोगात् चन्द्रादिपदेनैव तत्प्रत्यायनं कार्यमिति तस्य तत्रलक्षणा वश्यमास्थेया।**

## -तत्त्वालोकः-

धर्मावच्छिन्नप्रकारतानिरूपितोपमेयतावच्छेदकाच्छिन्नोपमेयनिष्ठविशेष्यताशाली बोधः। सारोपलक्षणास्थले तु "मुखं चन्द्रः" इत्यादौ-उपमेयतावच्छेदक-धर्मावच्छिन्नप्रकारताशाली बोधः। इत्थं च अतिश्ोक्तौ नाभेदभानम् रूपकेतु अभेदभानमित्येवं वैलक्षण्यं यद्यपि विद्यते, अथापि गौणवृत्त्याश्रयणमुभयत्रापि तुल्यमित्यतिव्याप्त्युद्भावनम् इत्याभिमानः। वस्तुरीत्या तदीयोदाहरणदर्शन अतिशयोक्तावतिव्याप्ति प्रसक्तेः अभावत्।

इत्थम् अतिव्याप्तिमापाद्य तत्परिहाराय गौणवृत्तिपदानुपादानमेव अपेक्षितमिति आपाततः वक्तुं शक्यम्।

न च तदनुपादानेऽपि अतिशयोक्तावतिव्याप्तिरस्त्येव। उपमानशब्दैरेव उपमेयबोधनादिति वाच्यम्। उक्तलक्षणं परित्यज्य बिम्बाविशिष्ट इत्यादिस्वकीयलक्षणे विषयनिर्देशस्यापि अन्तर्भावितत्वान्न दोष इत्यभिप्रायात्।

इत्थं प्राचामनुरोधेन रूपके लक्षणाया आवश्यकत्वे सत्यपि वास्तवरीत्या तत्र लक्षणानावश्यकीति व्यवस्थायाः कर्तुं शक्यत्वादित्याह-**वस्तुतस्तु इति।**

अतिशयोक्तौ लक्षणाश्रयणं विना विषयप्रतीतिर्नास्त्येवेति, तत्र लक्षणा अवश्यमाश्रयणीया संकलतान्त्रिकसंमता चेत्याचष्टे -**तथाहीति।**

अयं भावः- मुखे निरतिशयताप्रत्यायनाय मुखपदमप्रयुज्यैव 'चन्द्र' पदेन मुखमपि कविर्विवक्षति। नहि मुखपदशक्यमुखस्य विना व्यापारान्तरयोगं चन्द्रपदात्प्रत्यायनं शक्यम् अशक्यस्य लक्षणां विना तत्प्रतीत्यननुभवात्। अन्यथा

**-चित्रमीमांसा-**

**रूपके विषयविषयिणोः स्वस्ववाचकाभिहितयोः रभेदप्रतिपत्तिः संसर्गमर्याद यैव संभवतीति किमर्थं तत्र लक्षण।**

**-तत्त्वालोकः-**

घटपदेन पटोऽपि प्रतीयात्। अतश्च चन्द्रपदं लक्षणया शक्यतावच्छेदकातिरिक्त रूपेण, शक्यतावच्छेदकरूपेण वा शक्यान्यमुखादेर्बोधोजायते ।

- स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा।

इत्यभियुक्ताश्च ब्रुवत इति अतिशयोक्तौ लक्षणावश्यकी।

रूपके तु न तथेति वैलक्षण्यमाह-**रूपके इति** 'मुखं चन्द्रः' इत्यत्र मुखचन्द्रयोः उपमेयोपमानयोः मुखचन्द्रपदाभ्याम‌भिहितयोः ''नीलमुत्पलम्'' इत्यादाविव शाब्दसामानाधिकरण्यादभेदप्रतिपत्तिः संसर्गमर्यादयैव संभवतीति लक्षणा अन्यथासिद्धैव ॥

किंच प्राचीनैरपि सदृशाभेदबोधो लक्षणया पश्चात् ताद्रूप्यप्रतीतिः व्यञ्जनयेत्यभ्युपगम्यत एव। इत्थं मुख्यतयैव अभेदबोधसम्भवे गौणवृत्त्या तदभेदबोधो नाभ्युपेय इति लक्षणा निष्प्रयोजनेति भावः।

**वस्तुतस्तु** - 'नीलमुत्पलम् ''नीलोघटः'' इत्याद्युदाहरणापेक्षया' 'मुखं चन्द्रः' इत्यादि प्रयोगो भिन्नः। तथाहि-वेदान्तिभिः शाब्दबुद्धित्वावच्छिन्नं प्रति योग्यताज्ञानस्य कारणताभ्युगम्यत इति योग्यताज्ञानविरहे शाब्दबोधो न जायत एव। 'नीलम् उत्पलम्' इत्यादौ नीलादिपदानां

'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति।
गुणोपसर्जनद्रव्यवाचकं गुणवाचकम्'

इत्यभियुक्तोक्तेश्च गुणविशिष्टपदार्थाभिधायित्वमस्तीति तदर्थानाम् अभेदसंसर्गेणान्वययोग्यतास्तीति नाभेदबोधस्य 'नीलाभिन्नोघटः' इत्येवमादेर्बोधः। अत एव अभ्रान्ताः भ्रान्तिज्ञाश्च 'नीलमुत्पलम्' इत्यादि प्रयुञ्जते।'' मुखं चन्द्रः'' सिंहो देवदत्तः ''अग्निर्माणवकः'' इत्यादौमुखत्वचन्द्रत्वयोः नीलत्वोत्पल

## -तत्त्वालोकः-

त्वादिवदेकार्थसमवायो नास्तीति अयोग्यताग्रहस्य सत्वान्मुखादौ चन्द्रद्यभेदबोधो लक्षणामन्तरा प्रत्याययितुं न शक्यः। अत एव **आगमप्रामाण्ये** -

तस्मादाकांक्षितासन्नयोग्यार्थान्तरसङ्गते ।

स्वार्थे पदानां व्युत्पत्तिरास्थेया सर्ववादिभिः।

इति **भगवद्यामुनमुनिभिरभिहितम्।**

किंच-**अन्यथाख्यातिवादि**भिरपि शाब्दबोधे योग्यता प्रमायाः तात्पर्यप्रमायाश्च गुणत्वमभ्युपगतम् । उक्तं च **विश्वनाथन्यायपञ्चाननेन-**

'शाब्दबोधे योग्यतायास्तात्पर्यस्याथवा प्रमा ।

गुणस्स्यादिति' (सि.मुक्ता ४३.पु.)

**नव्यास्तु** यद्यपि योग्यताज्ञानस्य शाब्दबोधे कारणतां नाभ्युपयन्ति अथापि अयोग्यताग्रहस्य दोषविशेषाजन्यतद्वत्ताबुद्धिं प्रति प्रतिबन्धकत्वमङ्गीकुर्वत एव।

अत एव च **गदाधरभट्टाचार्या अपि** 'शाब्दबोधे चैकपदार्थेऽपरपदार्थसंसर्गः संसर्गमर्यादया भासते' इतयुपक्रम्य ''नीलो घट'' इत्यादौ अभेदभानमभ्युपगम्यापि **राजपुरूषवादे** प्रसङ्गतः एवं ''मुखं चन्द्रः'' इत्यादि रूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशलक्षणया चन्द्रादिसदृशाभेदान्वयबोध एव न तु सादृश्यदिसम्बन्धेन चन्द्रादेः मुखादवन्वयः इति लक्षणां रूपकेभ्युपगम्य सदृशाभेद शाब्दबोधं

अभ्युधुः। यदि तु नीलमुत्पलमित्यादिवदभेदस्यैव संसर्गविधया भानमिष्येत तदा राजपुरूषवादोक्ति भट्टाचार्याणां न संगच्छेत। अतश्च रूपके सारोपलक्षणया चन्द्रादिपदाच्चन्द्रसदृशबोधः। पश्चाच्च अभेदेनान्वय इति प्राचामेव पक्षस्सर्वसम्मतः।

तर्हि ग्रन्थकृता 'अभेदप्रतिपत्तिः' संसर्गमर्यादयेत्युक्तं कथं युक्तिमद्भवेदिति चेत् यथाकथंचित्स्यादिति अभिदध्महे। तथाहि-

**केचित्**-रूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशे न लक्षणा किन्तु तत्र [illegible]ार्थचन्द्रादेरभेदभ्रमे मुखादौ, 'मुखं न चन्द्रः' इत्यादिविशेषदर्शनदशायां च न [illegible] शाब्दः अभेदप्रत्ययः अपितु शब्दजन्यविशकलितपदार्थोपस्थितिमूलकःमानस

## -तत्त्वालोकः-

एवाहार्यभेदभ्रमः इत्याहुः तद्रीत्या आहार्यभेदभ्रममङ्गीकृत्य लक्षणानिराकरणं स्यात्।

**अथवा-** तादात्म्यातिरिक्तसंबधेन नामार्थयोः नान्वयः तादात्म्यं च प्रकृते तद्वृत्तिधर्मवत्वम्। एवंच 'नीलोघटः' इत्यादौ यथा नीलादिपदार्थस्य स्ववृत्तिनील-त्वादिमत्वसंबन्धेन घटाद्यंशे अन्वयबोधः तद्वदेव "मुखंचन्द्रः" इत्यत्रापि स्ववृत्त्याह्लादकत्वादिमत्वसंबन्धेन चन्द्रादेर्मुखादन्वयबोधः इत्यभ्युपगतरीत्या वा लक्षणानिराकरणं स्यात्।

**वस्तुगत्यनुरोधेतु-** पूर्वोक्तं युक्तिद्वयमपि अयुक्तमेव। तत्रद्या तावदयुक्ता-तथाहि-'मुखं चन्द्रः' "सिह्मो देवदत्तः" अग्निर्माणवकः, "यजमानः प्रस्तरः" इत्यादिप्रयोगाः न केवलं भ्रान्तैव प्रयुज्यंते किन्तु अभ्रान्तैः भ्रन्तिज्ञैः पुरूषैरपि प्रयुज्यंते, तथासति कथमाहार्यभेदभ्रमस्यानयनं संभवेत्। अत एव च- **तन्त्रवार्तिके कुमारिलभट्टपादैः-** गौणीं वृत्तिं विना शक्यार्थभ्रमरूपः आहार्यारोपो निराकृतः-

असङ्कीर्णस्वभावं सद्वस्तु वस्त्वन्तरात्मना।
आरोप्यतेऽभिधानार्थं कथं नु भ्रान्तिवर्जितैः ॥
द्वावपि प्रतिपद्येते सिह्मपुंसोर्विवक्तताम् ।
नाध्यारोपयितुं शक्तिस्तेनैकस्यापि विद्यते ॥ इत्यादिना (जै.सू-१-४२२)

द्वितीयाप्ययुक्तैव यदि 'मुखंचन्द्रः' इत्यादौ स्ववृत्त्याह्लादकत्वरूपाभेदस्य संसर्गत्वं तदा 'मुखं न चन्द्रः' इत्यादौ नञ्निपातेन स्ववृत्त्याह्लादकत्वरूपाभेदसंबन्धावच्छिन्नप्रतियोगिताकाभाव एव बोधनीयः **प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति न्यायात्** । तथाच सति -

'न पद्मं मुखमेवेदं नभृङ्गौ चक्षुषी इमे '।

इत्यादि **दण्ड्याद्यभिमतत्वाख्यानोपमास्थले** स्ववृत्त्याह्लादकत्वादि संबंधेन पद्मादेर्मुखादौ सत्वात् पद्मादिवृत्त्याह्लादकत्वस्य पद्मादिभ्यो भेदस्यच बोधः अप्रामाणिकः स्यात्' इति। अत एव यथाकथंचिदित्यभिहितं वेदितव्यम्।।

**-चित्रमीमांसा-**

**अशक्या च तत्र लक्षणाभ्युपगन्तुम् कथम्?**

**'मुखं चन्द्रः' इत्यत्र लक्षणया मुखे प्रवर्तमानं चन्द्रत्वं केन निमित्तेन प्रवर्तेत? ६. मुखत्वेन वा,मुखासाधारण कान्तिविशेषेण वा,चन्द्रत्वेन वा,चन्द्रासाधारणकान्तिविशेषेण वा मुखचन्द्रोभयानुगत कान्तिसामान्येन वा मुखगतचन्दसादृश्येन वा?**

**नाद्यः मुखपदेन पौनरूक्त्यापत्तेः मुखत्वस्य शक्यासंबन्धित्वेन तेन निमित्तेन लक्षणायोगाच्च।**

-तत्त्वालोकः-

अथ'मुखं चन्द्रः' इति रूपके लक्षणाश्रयणमपि न कर्तुं शक्यम् । मुखे चन्द्रत्वस्य केनापि निमित्तेनाप्रवृत्तेः इति प्रतिपादयितुमुपक्रमते - **अशक्ये त्यादिना** । मुखे चन्द्रशब्दप्रवृत्तौ निमित्तानि विकल्पयितुंपृच्छति - **मुखमिति**। तानेवविकल्पनाह- **मुखत्वेनेत्यादिना** ।

'मुखं चन्द्र': इत्यादौ चन्द्रादिपदस्य मुखादौ लक्षणा इत्यभ्युपगन्तव्ये निमित्तं किञ्चिद्वक्तव्यं भवति। तत्र मुखत्वमेव प्रवृत्तौ निमित्तीकृत्य चन्द्रपदं मुखं लक्षयतीति चेत्तन्नयुज्यते। चन्द्रपदादेकवारं मुखस्य प्रतीतिः मुखपदादभिधया च प्रथममेव प्रतीतिरिति मुखस्य द्विवारमुपस्थितिरिति पौनरुक्त्यं प्रसज्यते अतश्च चन्द्रपदं मुखत्वप्रकारकं बोधं न जनयति। तदेतदाह **-नाद्य इत्यादिना** ।

मुखत्वप्रकारकबोधस्य चन्द्रपदलक्षणाज्ञानजन्यतावच्छेदकत्वोपगमे मुखपदेन मुखत्वप्रकारक बोधजननात् पौनरुक्त्यमिति भावः ।

अत्रैव मुखत्वस्य लक्षणानिमित्तत्वमपि न संभवतीत्याह - **मुखत्वस्येति**। मुखत्वस्य शक्यासंबन्धित्वेन चन्द्रसंबन्धाभाववत्तया मुख्यार्थस्य बाधे सत्यपि तद्योगरूपलक्षणानिमित्तांशाभावात् कथं लक्षणा कर्तुं शक्या। मुख्यार्थबाध-

## -चित्रमीमांसा-

**अतएव न द्वितीयः। न तृतीयचतुर्थौ। मुखावृत्तिधर्मयोः तत्र प्रवृत्तिनिमित्तत्वायोगात्॥**

## -तत्त्वालोकः-

तद्योगरूढिप्रयोजनान्यतरवत्त्वं हि लक्षणानिमित्तमित्यभिमतं प्राचीनानाम्।

'गङ्गायां घोषः' इत्यादौ तु तीरपदाप्रयोगात् बाधः। लक्ष्येण तीरेण प्रवाहरूपशक्यार्थस्य समीपसमीपिभावरूपो योगोऽस्ति। प्रयोजनमपीति तत्र लक्षणा कर्तुं शक्या नचेह तथेति भावः।

तर्हि मुखासाधारणं कान्तिविशेषं निमित्तीकृत्य चन्द्रपदं मुखं लक्षयत्विति चेत् तदापि मुखपदेन एकवारं मुखबोधः। मुखासाधारणकान्तिविशेषविशिष्टतया चन्द्रादिपदादपि द्वितीयवारं मुखबोध इति पौनरुक्त्यम्। मुखासाधारण कान्तिविशेषस्य मुखमात्रवृत्तित्वेन शक्यसम्बन्धित्वं तस्य नास्तीति तं निमित्तीकृत्य लक्षणा कल्पयितुं न शक्या तदेतदाह- **अतएवेति**।

तर्हि विषयितावच्छेदकधर्मं विषयितावच्छेदविशेषधर्मं वा निमित्तीकृत्य मुखे चन्द्रपदस्य लक्षणा आश्रीयतामित्यम् विकल्पौ निराचष्टे - **न तृतीयचतुर्थौ इति।**

पूर्वोक्तधर्मयोर्मुखेऽवर्तमानतया तौ निमित्तीकृत्य मुखे चन्द्र पदप्रयोगासंभवादिति हेतुमाह- **मुखेत्यादिना**। अयंभावः- यो यत्पदशक्यः शक्यवृत्तिः स्वभिन्नशक्यानाधिकरणं च स एव प्रवृत्तिनिमित्तम्। उक्तं च **प्रदीपकृता**-। "शक्यत्वे शक्यवृत्तित्वे स्वभिन्नशक्यानधिकरणत्वस्य तत्वात्" इति। भवति हि गोशब्दस्य गोत्वं गोपदशक्यं गोपदशक्यगोवृत्ति स्वभिन्नगोपदशक्या नधिकरणं चेति लक्षणसमन्वयः।

'मुख चन्द्र' इत्यत्र चन्द्रत्वस्य चन्द्रगतलावण्यादिगुणस्य वा न मुखपदशक्यत्वम् शक्यवृत्तित्वमथ च स्वभिन्नचन्द्रत्वाधिकरणं चेति तयोर्धर्मयोः मुखावृत्तित्वात् प्रवृत्तिनिमित्तत्वं न युज्यत इति।

## -चित्रमीमांसा-

**न पञ्चमः। 'कान्तिमान् मुखचन्द्रः इत्यत्र' कान्तिमत्पदेन पौनरूक्त्यापत्तेः ॥**

## -तत्त्वालोकः-

तर्हि मुखचन्द्रोभयानुगतलावण्यसामान्यादिकं निमित्तीकृत्य मुखे चन्द्रपदं प्रवर्ततइत्युतां तदा पौनरुक्त्यस्य प्रवृत्तिनिमित्तत्वा योगप्रयुक्तलक्षणायोगस्य चाप्रसक्तेः। अतएवच **तन्त्रवार्तिके कुमारिलभट्टपादैः**- "अथवा गौण्याः वृत्तेः इह निमित्तमभिधीयते नलक्षणायाः। किं चानयोर्भेदोऽप्यस्ति?बाढमस्ति। कुतः-

अभिधेयाविनाभूतप्रतीतिः लक्षणोच्यते।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥ (तन्त्र-१-४-पा)

'अग्निर्माणवकः' इतितु नाग्नित्वाविनाभावेन माणवकः प्रतीयते। किं तर्हि

वह्नित्वलक्षितादर्थात् यत्पैङ्गल्यादि गम्यते।
तेन माणवके बुद्धिः सादृश्यादुपजायते

इति। अत्रैवार्थे **प्रकाशकारादीनामपि** नैर्भर्यम्- अत एव च **प्रकाशकृता द्वितीयोल्लसे**-साधारणगुणाश्रयणेन परार्थ एव लक्ष्यत इत्यपरे इति स्वमतमाविष्कृतम्।

**प्रदीपकृताच**- "इदं पुनरत्र तत्वम् साधारणंजाड्य-मान्यादि लक्ष्यतावच्छेदकमाश्रित्य बाहीकादिर्लक्ष्यते। तेन" जडो वाहीक" इत्यादिवाक्यार्थो भवति इति व्याख्यातम् (का.प्रदी-३९ पु) इति चेत्सत्यम्। अथापि यत्र साधारणधर्म स्यापि पदान्तरेणोपादानं तत्र पौनरुक्त्यप्रसङ्गादित्यभिप्रायेणे त्याह- **न पञ्चम इत्यादिना।**

पञ्चमः मुखचन्द्रोभयानुगतकान्तिसामान्येन निमित्तेन चन्द्रत्वं मुखे प्रवर्तत इत्यपि न वक्तुं शक्यमितिशेषः। तत्र हेतूक्तिः **कान्तिमानित्यादिना**।

अत्र मुखचन्द्रयोःसाधारणःकान्तिमत्वरूपो धर्मोऽपि पृथगुपात्त एवेति पौनरुक्त्यम्।

नच उपात्तधर्मातिरिक्तधर्ममुखेन लक्षणास्त्विववति वाच्यम्। उपात्तकान्तिमत्वादिव्यतिरिक्ताह्लादकत्वादिधर्मस्फूर्त्यभावेऽपि सहृदयानां

## -तत्वालोकः-

परिपूर्णवाक्यार्थदर्शनात्। अचमत्कारिणो द्रव्यत्वादेश्च कवितात्पर्याविषयत्वाच्च।

**अत्रेदं चिन्त्यते-**

प्राचीनैरालङ्कारिकैः" मुखंचन्द्रः" इति व्यासस्थल एव रूपकमकमभ्युपगतं न तु मुखचन्द्र इति समासेऽपि। अतएव काव्यालंकारसूत्रकृता **वामनेन** -

इयं गेहे लक्ष्मीः इयममृतवर्तिर्नयनयोः
असावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥

इत्युदाहृतम्। समासे व्यावृत्तिश्च प्रदर्शिता- मुखचन्द्रादीनां तु उपमासमासात् न रूपकत्वं युक्तमिति। (वा.का. ४-३-६)

एवमनेनैव संसृष्टिनिरूपणावसरे 'उपमाजन्यं रूपकं उपमारूपकम्' इत्युक्त्वा-

निरवधि च निराश्रयं च यस्य स्थितमनिवर्तित कौतुकप्रपञ्चम्।
प्रथममिह भवान् स कूर्ममूर्तिः जयति चतुर्दशलोकवल्लिकन्दः ॥

एवं- 'रजनिपुरन्ध्रिलोध्रतिलकः शशी'। इतिचोदाहृतम्।(वा.का. ४-३-३२)

एवंवदतो वामनस्य हृदि स्थितः आशयः कः? इतिचेत्- **उच्यते-**

"मुखचन्द्रः" इत्यादौ मुखमेव चन्द्रः इति रूपणे विवक्षिते सति समासो नोपपद्यते अनुशासनभावात्। उपमाङ्गीकारेतु (मुखंचन्द्रइवेति) "उपमितं व्याघ्रादिभिः" इत्यनुशासनसद्भावात् समास उपपद्यत इति। अत एव - निरवधि इतिपद्ये "चतुर्दशलोकवल्लिकन्दः" इत्यत्र चतुर्दशलोका एव वल्लिरिति रूपकं परित्यज्य चतुर्दशलोका वल्लिरिव इत्युपमितसमासे उपमालंकारस्य प्रसरात्प्रथममुपमा। ततश्च चतुर्दशलोकवल्ल्याःकन्दःइति षष्ठीसमासः इति कूर्ममूर्तौ वल्लिसदृशलोककन्दत्वारोपसम्बन्धस्य विवक्षितस्य दुरुपपादतया वल्लीतुलित लोकसम्बन्धविशिष्टकन्दरूपकं वल्ल्युपमाजनितमिति अत्र उपमारूपकयोः संसृष्टिरेवेति।

## -तत्त्वालोकः-

**ननु**- 'चतुर्दशलोकवल्लिकन्दः' इत्यत्र कथञ्चित् उपमितसमाससिद्धावपि 'कान्तिमान् मुखचन्द्रः' इत्यादौ (साधारणधर्मप्रयोगात् उपमितसमासो नोपपद्यते) कान्तिमत्वादिसमान्यधर्मस्य शब्दोपात्ततया उपमितसस्यासंभवात् ''उपमितं व्याघ्रादिभिः'' सामान्याप्रयोगे पा.सू.२.१.५६ इति सामान्याप्रयोग एव तत्समासानुशासनात् इति शंक्यम् ।

''सुन्दरो मुखचन्द्रः, ''भष्याब्धिः क्वाति गम्भीरः' इत्यादि प्रयोगप्रामाण्यानुरोधेन तादृशशब्दानां व्याघ्रादिगणे पाठः परिकल्प्यते। इहोपयुक्तस्य कान्तिमत्वस्य न साधारणधर्मत्वं विवक्षितम् अपि तु आह्लादकत्वादेरेव । स चाप्रयुक्त एव । अत एव नव्येनापि **प्रकाशकारेण**- ''राजते राजकुञ्जरः'' इति धर्मवाचकलुमोपमा प्रदर्शिता अन्यथा राजतेः सामान्यधर्मस्य प्रयोगादेकलुमात्वं प्रदर्शितं भवेत् । नच तथा प्रदर्शितं प्रकाशकृता । अत एव च **श्रीमन्निगमान्तगुरुभिः तत्वटीकायां** - ''पाराशर्यवचस्सुधामिति'' शारीरकद्वितीयमङ्गलपद्यव्यारव्यायां 'ननु श्लेषोपस्कृतनिजाक्षरानीतत्वादि सामान्यप्रयोगे कथमिह'उपमितम् 'इत्यादिना' समासः? इत्थं समाससूच्यं स्वादुत्वमिह्राप्रयुक्तम् तदन्यस्य प्रयोगेऽपि न दोषः।'' भाष्याब्धिः क्वातिगम्भीरः'' इत्यादिवत् । इत्युपपाद्य

साधर्म्यात्स्वादुतासिद्धिः तया स्वादुतमत्वधीः ।
वैधर्म्यादिति वैषम्यं भाव्यमत्र मनीषिभिः ॥

यद्विवक्षितसामान्यं तत्प्रयोगो निषिध्यते ।
उक्तिस्तदन्यसामान्यविषया न विरुध्यते ॥

विवक्षितं तु सामान्यं स्वादुत्वादिकमिष्यते ।
तत्पुनर्नोच्यते साक्षात्समासस्तेन सिध्यति ॥

अविवक्षितसामान्यप्रयोगः शास्त्रकाव्ययोः ।
दृश्यते बहुशस्तस्मात् न समासोऽत्र दुष्यति ॥

इति महता संरम्भेण सामान्यधर्मप्रयोगेऽपि' उपमितम्' इत्यनेन समासः साधितः।

## -तत्त्वालोकः-

(तत्व. टी. १६ पु)

एतेन- साधारणधर्मोपादानस्थलेऽपि अनुपात्तधर्मेण साम्यविवक्षया 'उपमितमिति समासोपपादनमसत्। धर्मोपादान वैयर्थ्यापत्तेः। उपात्तधर्मसत्वे तेनैव साम्यप्रतीतेः अनुभवात् 'सकलकलः पुरचन्द्रो राजते' इत्यादौ - उपात्तधर्मातिरिक्तधर्मस्य साम्यप्रयोजकस्याभावाच्च 'इति **शेखरकारोक्तिः काव्यप्रकाशकारादिविशिष्टप्रयोक्तृवर्गाभिमतार्थविरुद्धेति** अनादरणीयैव। अतएव अभियुक्तैः **तत्वटीकायां-**

नानाव्याकरणाभिज्ञबहुविद्वत्परिग्रहे।
शब्दासाधुत्वमाहुर्ये शाब्दिकाः तान् नमन्महे।
विशिष्टोक्त्यनुसारेण व्युत्पत्तिः स्मर्यते बुधैः।

इत्यभिहितम् (तत्वटीका. ७ पु)

**किञ्च-** "काष्ठपाषाणसन्निभम्" इत्यादौ एकदृष्टान्तोपादेनेनैव पर्याप्तौ सत्यमपि अनेकदृष्टान्तोपादानं साधर्म्येऽतिशयप्रतिपादनाय यथोपदीयते तथात्रपि उपात्तानामनुपात्तानांच धर्माणाम् उपस्थितौ कस्यचिदुपादानमनुपात्तविवक्षितधर्मपरिपोषकतया उपात्तधर्मसाफल्यसद्भावात् न **नागेशोपपादित-**वैफल्यप्रसक्तिः। प्रकाशादिग्रन्थानुरोधश्च तस्मात् मुखचन्द्रादौ उपमितसमासस्य सामान्य धर्मप्रयोगेऽपि न किञ्चिद्बाधकम्।

एतेन- **वृत्तिवार्तिके** ग्रन्थकृता

"तापिच्छमेचकमुरः शरदन्तरिक्षम्"

इत्यत्र मेचकत्वादिसामान्यधर्मप्रयोगादुपमितसमासासम्भवमुपपाद्य आलंकारिकैरपीत्युपक्रम्य- सामान्यप्रयोगे सत्युपमाबाधकसत्वात् सारोपलक्षणामूलको रूपकालंकारः न तूपमालंकारः इत्यभ्युपगमात्। उपमितसमासे धर्मवाचकलुप्तोपमालंकारस्यैव तैरुदाहरणाच्च इत्यादिना यदुक्तं तदपि "राजते राजकुञ्जरः" इत्याद्यालंकारिकोक्तिविरोधात् चिन्त्यमेव॥

## -तत्त्वालोकः-

**अथ**- 'मुखचन्द्र' इत्यादौ **वामनाद्यैः** मयूरव्यंसकादिसमासः कुतः परित्यक्त इति विचार्यते-

'मुखचन्द्र' इत्यत्र मुखमेव चन्द्र इति रूपकसमासः। 'मयूरव्यंसकादयश्च '(पा.सू.२-१-७२) इति अनुशासनसद्भावात् इति नच वाच्यम्।

मयूरव्यंसकदिगणे मुखचन्द्रादिशब्दसजातीयशब्दस्य कस्याप्यपाठात्। तर्हि 'मयूरव्यंसकः' इत्यादौ कथंविग्रहः ?मयूरः इव व्यंसकः इति। धूर्तः इत्यर्थः

न चैवमादौ "उपमानानि सामान्यवचनैः" (पा.सू.२-१-५५) इति समासः सिद्धयतीति वाच्यम्। तथासति " तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानेति " (पा.सू ६-२-२)

उपमानपूर्वपदप्रकृतिस्वरत्वं प्राप्नोति । समासस्य (पा.सू.६-१-१२३) इत्यन्तोदात्तत्वमिष्यते । तन्न सिध्येत्। अतश्च ' उपमानानि' इति प्राप्तस्य समासस्यापवादोऽयम्। तेन समासस्येत्यन्तोदात्तत्वंच सिध्यति।

यद्वा- व्यंसकशब्दस्य विशेषणत्वेन विशेषणं विशेष्येण बहुलम् (पा.सू.२-२-५७) इति समासे कृते विशेषणस्य व्यंसकशब्दस्य पूर्वनिपातः प्रसज्यते। किन्तु परनिपातइष्यते तदर्थं 'मयूरव्यंसकादयश्च' इति पठ्यते। तर्हि इदानीं कथंविग्रहः करिष्यते "मयूरो व्यसकः मयूरव्यंसकः" इति।

नच 'मुखचन्द्र' इत्यादौ चन्द्राद्युपमानस्य मुखादौ विशेषणत्वविवक्षास्तीति 'विशेषणं विशेष्येण बहुलम्' इत्यनेनैव समासः क्रियतां इति वाच्यम्। तथासति उपसर्जनं पूर्वम् (पा.सू.२-२-३०) इति विशेषणस्य चन्द्रपदस्य पूर्वनिपातः प्रसज्येत।

नैष दोषः-"विशेषणं विशेष्येणेति" सूत्रे बहुलग्रहणं कृतम् तस्मादेव चन्द्रशब्दस्य पूर्वनिपातवारणं कर्तुं शक्यम्।

सत्यम् बहुलग्रहणात् तद्वारणमगतिकस्थलीयमित्ययमेव दोषः, तस्मात् मयूरव्यंसकादयश्च (पा.सू.२-१-७२) इत्यनेन समास इष्यते इति चेत्

काममिष्यताम् अथापि त्वन्मते मयूरव्यंसकादिषु अपठितजातीयानां

## -तत्त्वालोकः-

पाठकल्पनकृतमस्वारस्यमस्त्येवेति' **यश्चोभयोः समोदोषः परिहारोऽपि तत्समः'** इतिन्यायप्रसरात्।

अपरंच 'मयूरव्यंसकशब्दस्य इहपाठः "मयूर इव व्यसकः" इत्युपमित समासपरतया प्रतिपदविहितोपमानसमासविषयकपूर्वपदप्रकृतिस्वरबाधनार्थः। मयूरो व्यंसकः इति विग्रहपरतया विशेषणवाचिव्यंसकपदस्य परनिपातार्थोवेति **कैयटादौ** वर्णितत्वात् सर्वेऽपि चोपमानोपमेयवाचकपदावयकसमासाः 'उपमितम्' इत्याद्यनुशासनेनैवसिद्धाइतिअनन्यथासिद्धप्रयोगविरहात् मुखचन्द्रादि-पदानामाकृतिगणरूपेऽपि तद्गणे पाठानुमाने न किञ्चित्प्रमाणमुपलभामहे। तस्मात् मुखचन्द्रादिशब्दे उपमितसमास एव उपमैव चालंकारः इति **वामनस्याभिप्रायः**।

**भामहस्तु**- स्वकीये काव्यालङ्कारे द्वितीयपरिच्छेदे-

उपमानेन यत्तत्वमुपमेयस्य रूप्यते।
गुणानां समतां दृष्ट्वा रूपकं नाम तद्विदुः॥

इति लक्षयित्वा-

शीकराम्भोमदसृजस्तुङ्गा जलददन्तिनः।
निर्यान्तो मदयन्तीमे शक्रकार्मुकवारणाः॥

इत्युदाजहार।

अत्र शीकराम्भोमदसृजः जलददन्तिनः शक्रकार्मुकवारणाः इत्यत्र शीकराम्भ एव मदः जलदा एव दन्तिनः शक्रकार्मुकमेव वारणः इति मयूरव्यंसकादि-समासाश्रयणेन रूपकं यथा तथा शीकराम्भः मद इव, जलदाः दन्तिन इव, शक्रकार्मुकं वारण इव, इत्युपमितसमासाश्रयणेन उपमापि वक्तुं शक्या। सत्यम् अथापि उपमितसमासाश्रयणे उपमेये उपमानसाम्यमात्रं प्रतीयते नचैतदिष्टं **भामहस्य**। किन्तु अतिसाम्यमिष्टम्। तदातु रूपकानुगुण मयूरव्यंसकादिसमासःएव युक्तइति।

**नच**- मयूरव्यंसकादिषु एवंजातीयकानां पाठाभावात् कथं तेन समास इति शंक्यम्। "अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्य" इति **काशिकावृत्तौ**

## -तत्त्वालोकः-

**वामनेन** अभिहितत्वात् इह तेन समासोपपत्तेः।

**नच**- उपमितं व्याघ्रादिभिः (पा.सू.२-१-५६) इत्यनुशासनमस्त्येवेति वाच्यम्। "जलददन्तिन" इति प्रधानरूपके शीकरराम्भोदसृक्व-तुङ्गतादीनां सामान्यधर्मवाचिनां प्रयोगात् उपमितसमासासंभवात्। अतश्च नोपमितसमासेन मयूरव्यंसकादिसमासस्यान्यासिद्धत्वम्।

उपात्तधर्मातिरिक्तधर्मेण उपमितसमासोपपादनं नातीवस्वरसम्। अतश्च मयूरव्यंसकादिगणे 'भाष्याब्धिः कातिगम्भीरः' इत्यादिप्रयोगप्रमाण्यानुरोधेन तादृशशब्दानां पाठकल्पनं ज्यायः।

अतएव- उपमारूपकमतिरिक्तमलंकारं लक्षयता सामान्यधर्मप्रयोगरहितं-

समग्रगगनाभोगमानदण्डो रथाङ्गिणः।
पादो जयति सिद्धस्त्रीमुखेन्दुनवदर्पणः॥

इत्युदाहृतम् (भा.का.३-३६)। **भामहेन**। अत्रापाततोऽभेदप्रतितावापि पूर्वपदार्थभूतमुखस्यैव दर्पणापेक्षेति कवेस्तात्पर्यमित्यनुमानात् 'मुखचन्द्रं चुम्बति' इत्यादिवत् उपमेये साधार्म्यस्य मुख्यतया स्थितत्वादुपमितसमास एवाभ्युपगम्यते। उपमायां पर्यवसितं रूपकमुपमारूपकमितिविग्रहकरणेन अन्वर्थताया अपि वक्तुं युक्तत्वात्।

भामहात् अर्वाचीनो **दण्डयपि** - साधारणधर्मप्रयोगशून्यमेव लक्ष्यं प्रदर्शितवान्-

उपमैव तिरोभूतभेदा रूपकमिष्यते। यथा बाहुलता पाणिपद्मं चरणपल्लवः॥

इति समासे (काव्याद २-६६)

अङ्गुल्यः पल्लवान्यासन् कुसुमानि नखार्चिषः।

इति (काव्याद २-६७)

व्यासेच रूपकममनुत। इत्थंच **वामनाभिमतः** समासे उपमालंकार एवेति पक्षः प्राच्यभिमतार्थविसंवादीति सिद्धयति।

## तत्त्वालोकः

**भामह- दण्डि-वामनादिभ्योऽर्वाचीनेन भोजदेवेनापि सरस्वतीकण्ठाभरणे-**

पाणिपद्मानि भूपानां सङ्कोचयितुमीशते ।
त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः ॥

इत्यादिसमासस्थले, 'अङ्गुल्यः पल्लवान्यासन्निति (दण्डयुक्तमेव व्यस्तरूपकं) व्यासरस्थलेच रूपकमभ्युपगम्य समस्ते 'उपमितं व्याघ्रादिभिः' इत्यनेनैव समासः प्रदर्शितः । नतु "मयूरव्यंसकादयश्च" इत्यनेनेति । एवं प्रतिपादयतो **भोजदेवस्या**यमभिसन्धिः ।

'पाणिपद्मानि' इत्यादिरूपकोदाहरणे "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्युपमितसमास एव । नतु 'पाणय एव पद्मानि' इतिरूपकसमासः। तादृशसमासेऽनुशासनविरहः काव्यालंकारसूत्रकृतो वामस्येव अस्याप्यभिमतः इति।

**परन्तु-** "मुखचन्द्र" इत्यादिसमासे उपमेति वामनस्य, तत्रापि गौणसारोपलक्षणया चन्द्रपदाच्चन्द्रसदृशप्रतीतौ पद्मानीव पद्मानि इत्यादिवदभेदोपचाराच्चन्द्रादिपदैः मुखादेः अभिधाने सदृशाभेदबोधे जाते मुखादावपि चन्द्रतादात्म्यं प्रतीयत एवेति पार्यन्तिकप्रतीतिप्राधान्याश्रयणेन उपमितसमासेऽपि रूपकालंकारः इति **भोजदेवस्येति** वैषम्यम् ।

**नचैवं सति** रूपकोपमयोः अतिशयोक्तेश्च वैलक्षण्यं न स्यात् इति वाच्यम्। उपमानपदेन गौणसारोपलक्षणया **उपमेयविवक्षायाम्** उपमेयस्यापि पृथगुपादाने रूपकम् । उपमेयस्य पृथगनुपादने रूपकातिशयोक्तिः । उपमानपदस्य उपमेये गौणवृत्तिविरहे उपमेति विविक्तविषयस्य सद्भावादित्यस्माभिः प्रागेव प्रतिपादनात्।

नन्वेवमपि- कुत्र गौणसारोपलक्षणा कुत्र तदभावः इति विनिगमकं किमित्याशंका समुत्पद्यत एव- सत्यम् अथापि 'पादाम्बुजम्' इत्यादौ व्याघ्रादेःसमासेनोपमायाः, मयूरव्यंसकादिसमासेन रूपकस्यच सम्भवेन सर्वत्र अनवधारणेप्राप्ते यत्र

"पादाम्बुजं भवतु वो विजयाय मञ्जु मञ्जीरशिञ्जितमनोहरमम्बिकायाः।

## -तत्त्वालोकः-

इत्यादौ पादे संभवन्मञ्जीरादियोगस्योपनिबन्धः तत्र व्याघ्रादि समासेनोपमालंकारः । यत्रतु-

"यस्यानिशं दिविषदश्चरणारविन्दम् उत्तंसन्त्यमितभक्तिभरावनम्राः ।"

इत्यादौ (अमितभक्तिभरावनम्रतया उत्तंसनं चरणे एव स्वारसिकम्) अरविन्दकार्यमुत्तंसनादिकं निबध्यते तत्रोत्तरपदार्थप्रधानेन मयूरव्यंसकादिसमासेन रूपकालंकारः इति व्यवस्था क्रियते तद्वदत्रापि अतिसाम्य-साम्ययोर्विवक्षायां गौणसारोपलक्षणातदभावाविति ताभ्यामेव रूपकोपमयोर्भेदः तथा-सारोपलक्षणास्थले चन्द्रादिपदेन चन्द्रसदृशप्रतीतिबलात् चन्द्रताद्रूप्यप्रत्ययो व्यञ्जनया । अतश्च तत्र रूपकता, यत्र तु न लक्षणा तत्र उपमायां सादृश्यप्रतिपत्तिमात्रं नपुनस्ताद्रूप्यप्रतिपत्तिः । अतएव **नैयायिकाः** 'मुखंचन्द्रः' इत्यादिरूपकस्थले चन्द्रादिसदृशे लक्षणामुपगम्य तस्य अभेदेनान्वय-बोधमभ्युपगच्छन्ति । व्यङ्ग्यस्य (ताद्रूप्यस्य) प्रतीतिस्तु मानसी आहार्यरूपा च इत्येव विशेषमाहुः ।

उपमितसमासे सर्वत्र उपमैवेति नियमोऽपि न वक्तुं शक्यः । यतश्च अभियुक्तैः **निगमान्तगुरुभिः- तत्वटीकायाम्-** 'रूपक प्रकरणानुरूप्येण वा पचश्शब्दलक्षितः तदर्थःसुधात्वेनरूप्यते'इतिप्रतिपाद्य ननु श्लेषोपस्कृतनि-गाक्षरानीतत्वादिसमान्यप्रयोगे कथमिह उपमितिसमास इत्याशङ्क्य इत्थंम् समासमूच्यं स्वादुत्वसामान्यम् इहाप्रयुक्तमित्युक्तत्वेन रूपकेऽप्युपमितसमासः लक्षणाच अभ्युपगतेति सम्प्रतिपन्न एव गौणसारोपलक्षणापक्षो **भोजराजाद्यभिमतः**। अन्यथा 'मयूरव्यंसकादयश्च 'इत्यनेन समास इत्येव **निरूपितं** स्यात्। नच तथा प्रतिपादितं तैः। इत्थं चाधुनिकस्यग्रन्थकृतः **'मयूरव्यंसकादयश्च'** इत्यनेन रूपकसमासाधनमुत्तरपदार्थप्राधान्यसंपादनमात्रप्रयास**कृतमेव** ।

**वस्तुतो**-विचार्यमाणे-मुखंचन्द्रःइव "[illegible]उपमायां मुखं चन्द्र" इत्यादि समासरूपकेच उपमेयस्य मुखस्य प्राधान्यं **सर्वालंकारिक** सम्मतम् ।तथासति "मुखचन्द्रः"इत्यादिसमासेऽपिविषयस्यैव **प्राधान्यम् उपमित**समासेसतिभवतीति

## -तत्त्वलोकः-

व्यासवैरूप्यावहस्य उत्तरपदार्थप्रधानमयूरव्यंसकादिसमासस्याश्रयणं नव्यैरपि **दीक्षितप्रभृतिभिः** क्रियते । तत्रायं हेतुः स्यात् । "पायंपायं वचस्सुधाम्" इत्यादौ उपमितसमासे सति तस्य पूर्वपदार्थप्रधानत्वात् वचसः प्राधान्यंभवेत् । तत्रच पायं पायमित्यनेनावगतस्य पानकर्मत्वस्य मुख्यतया अन्वयो न भवेदिति ।

स्यादेवं यदि पूर्वपदार्थप्रधानोऽव्ययीभावः इत्यादीनामव्यभिचरितत्वम् । तदेव न सम्भवति-" उन्मत्तगङ्गमि"त्याद्यव्ययीभावे "अतिमालादौ" तत्पुरुषे "अर्धपिप्पली" इत्यादौ वैपरीत्यस्यापि दृष्टत्वात् पूर्वोक्तपूर्वपदार्थादिप्राधान्यवादः प्रायिकइति **वैयाकरणभूषणसारादौ** निर्णीतत्वेन उत्तरपदार्थप्रधान्यस्यापि सुसंपादतया उपमितसमासस्यैव युक्ततया लक्षणकृतास्वारस्यादपि लक्ष्यकृता-स्वारस्या स्वीकरणमेव गरीयः ।

मयूरव्यंसकादिषु मुखचन्द्रादिशब्दानां तत्रापठितजातीयानामपि पाठपरिकल्पने सामान्यधर्मेपादानेऽपि समासस्य नानुपपत्तिरित्येव विशेषः प्रतीयते। अथापि तथापाठकल्पनं नयुक्तमिति पर्यालोच्य **सरस्वतीकण्ठाभरणकृता** रूपकस्थलेऽपि उपमितसमासपक्ष एव समाश्रितः ।

**रसगङ्गाधरकृता** तु- रूपकस्थले- उपमितसमासपक्षं मयूरव्यंसकादिना समासपक्षंच परित्यज्य "विशेषणं विशेष्येण बहुलम् "(पा.सू.२-२-५७) इत्यनेनैव समासोऽभ्युपगत इति तदीयग्रन्थसंवादादगम्यते।

तथाहि- **गौणीलक्षणानिरूपणावसरे-** "राजनारायणम्" इत्यादौ विशेषणसमासायत्तस्य रूपकस्य स्वीकारे प्रधानीभूतोत्तरपदार्थस्य नारायणसदृशस्यापि नारायणत्वेनैव प्रतीतेः लक्ष्मीकर्तृकालिङ्गनकर्मताया अनुपपत्तेः अभावात् । उपमाया उपमितिसमासायत्तायाः स्वीकरे तु प्रधानीभूतपूर्वपदार्थस्य राज्ञो राजत्वेनैव प्रत्ययात् तादृशकर्मताया अनुपपत्तेः (रस.१५३पु) इति । एवं **रूपकनिरूपणावसरे-** प्राच्यनव्यमतभेदेन बोधमभिधाय एवं "मुखचन्द्र "इत्यादौ उपमितसमासे तावदुपमैव । विशेषणसमासेतु रूपकम् (रस.२४२पु) इति प्रतिपादनात् ।

## -तत्त्वालोकः-

**नच** मुखचन्द्रइत्यादौ "विशेषणं विशेष्येणेति" समासाभ्युपगमे उपमानस्य चन्द्रादेः विशेषणत्वविवक्षायां" चन्द्रमुखमिति" प्रयोगापत्तिरिति वाच्यम्- विशेषणं विशेष्येण बहुलम् इति बहुलग्रहणात् समासे विषयिप्राधान्यस्वीकारेण वा मुखस्यैव विशेषणत्वात् पूर्वनिपातप्रसक्तिः परिहर्तुं शक्या । यद्यपि अस्मिंन् कल्पे अपठितजातीयानां मयूरव्यंसकादिगणे पाठकल्पनाप्रयुक्तगौरवस्य सामान्यधर्मप्रयोगे उपमितसमासाश्रयणस्य अनुपात्तधर्माक्षेपस्यच प्रसक्तिर्नास्ति ।

**तथापि**- रसगंगाधरनुरोधेन रूपकस्थले विशेषणसमासाश्रयणे बहुलग्रहणात्पूर्वनिपातापत्तिवारणं कार्यमित्यस्वरसः दुर्वारः । दीक्षितमते- गणपाठकल्पनाप्रयुक्तोऽस्वरसः दुर्वारः ।

**मर्मप्रकाशे-नागेशभट्टस्तु**- उपमितसमासे उपमां मयूरव्यंसकादिसमासे रूपकं विशेषणसमासे परिणामंचाभ्यधत्त ।

**यद्वा**- 'सह सुपा' इति सूत्रे भगवता **पतञ्जलिना**- 'सुपा' इति योगं विभज्य सुपाच सह सुप् समस्यते । अधिकारो लक्षणं च। यस्य समासस्य अन्यत् लक्षणं नस्ति इदं तस्य लक्षणं भविष्यति ।"पुनरुत्स्यूतं वासोदेयम्" इति भाषितम्। तेन च"मुखचन्द्रः"इत्यादावपि समासस्सेत्स्यति इति न रूपकत्वस्य हानिः ।

अथापि प्रकृते- कान्तिमत्पदोपादाने सति "मुखचन्द्रः" इत्येवमादिकण्ठा-भरणाद्यनुरोधेन मुखचन्द्रोभयसाधारणगुणाश्रयणेन तद्वति लक्षणाभ्युपगमे पौनरूक्त्यं दुर्वारमिति भावः ।

**यदितु**- उपात्तकान्तिमत्वापेक्षया 'राजते राजकुञ्जरः' इत्यादिवत् अनुपात्त-आह्लादकत्वादिकं साधारणधर्ममुपादाय लक्षणा आश्रीयते तदा आह्लादकत्वादेरनुपात्तत्वात् न पौनरूक्त्यप्रसक्तिः इतिबोध्यम् ।

यदितु उपात्तस्यैव धर्मस्योभयसाधारण्ये संभवति सति पौनरूक्त्यपरिहाराय गुणान्तरस्यानुपात्तस्याश्रयणेन सारोपत्वकथनमनुचितमिति विभाव्यते तदा मुखगतं चन्द्रसादृश्यं निमित्तीकृत्य लक्षणाश्रीयते । तथासति चन्द्रसादृश्यमात्रस्यैव लक्षणालभ्यत्वात् । सादृश्यस्य च साधारणधर्मापेक्षया भिन्नत्वात् साधारणधर्मस्य

## -चित्रमीमांसा-

**नापि षष्ठः । सादृश्यस्य शब्दप्रतिपाद्यत्वेन अव्यङ्ग्यत्वेन रूपकस्योपमापृथग्भावानुपपत्तेः॥ अभेदप्रधानं रूपकमिति सिद्धान्तविरोधाच्च।**

## -तत्त्वालोकः-

कान्तिमत्वादेःप्रयोगेऽपि सादृश्यवाचकयथेवादिपदाप्रयोगेण पौनरूक्त्याप्रसङ्गादित्यपि न वक्तुं शक्यमित्याह- **नापि षष्ठ इत्यादिना**

षष्ठः मुखगतचन्द्रसादृश्येन निमित्तेन चन्द्रशब्दःलक्षणया मुखे प्रवर्तते इत्ययमंशःइत्यर्थः नापि नैवेत्यर्थः । तत्रहेतुमुपादत्ते**सादृश्यस्येति**। सादृशयस्य वाच्यत्व एवोपमेति न नियमः।''कमलसुहृन्मुखम्''इत्यत्र यथा लक्षणायामप्युपमा सम्प्रतिपत्तिः तथात्रापि लक्षणाभ्युपगमे सादृश्यस्य शब्दप्रतिपाद्यत्वमपरिहृतमेवेति रूपकस्य उपमातः पृथक्त्वं नोपपन्नं स्यात् । उपमातो रूपके सादृश्यस्य व्यङ्ग्यत्व कृतं हि वैलक्षण्यमालंकारिकसंमतम् अतएवचरूपकादिषु उपमा व्यङ्ग्येति आलंकारिकसमयः । सच लक्षणाश्रयणे सति भज्येत । अतश्च रूपके लक्षणा अभ्युपगन्तुं न शक्येति भावः ।

**अत्रापरे प्रत्यवतिष्ठन्ते-** सादृश्यस्य शब्दप्रतिपाद्यमात्रेणोपमेति न वक्तुं शक्यम्। किन्तु उपमानवाचकपदात् अन्येन पदेन सादृश्यप्रतिपादन एवोपमाङ्गीकारात्। अतएव ''पद्माक्षी'' इत्यादौ उपमानवाचकपदादन्येन समासशास्त्रवशेन लुप्तस्य इवादेरेव सादृश्यवाचकत्वमिति नोमानवाचक-पद्मादिपदात्सादृश्यप्रतीतिः । अत एव एवमादौ लुप्तोपमात्वम् । नपुनारूपकत्वमिति। एवं चैतदनुसारेण रूपके लक्षणा निराबाधा । उपमातो रूपकस्य पृथग्भावनुपपत्तिपरिहारश्च सुकर इति भाति।

षष्ठरीत्या रूपके लक्षणाप्रवृत्तिनिमित्ततां परिहृत्य तत्रैव सिद्धान्तविरोधमुप्युद्भावयति- **अभेदेति** ।

अयंभावः- ''तद्रूपकमभेदो य उपमानोपमेययोः'' इति रूपकं लक्षयता

-तत्त्वालोकः-

**प्रकाशकृता** । अभेदप्राधान्ये आरोपे आरोपविषयानपह्नवे रूपकम् 'इति रूपकं लक्षयता **सर्वस्वकृता** । उपमानेन उपमेये गुणसाम्यात्तत्वारोपो रूपकम् 'इति रूपकं लक्षयता **वामनेन** । "उपमैव तिरोभूतभेदा रूपकमुच्यते" । इति रूपकं लक्षयता **दण्डिना** । "उपमानेन यत्तत्वमुपमेयस्य रूप्यते" इति रूपकं लक्षयता **भामहेन** च रूपकेऽभेदस्य प्राधान्यं सिद्धान्तितम्। तेन सह विरोधः प्रसज्येत सादृश्यस्य शब्दप्रतिपाद्यत्वादिति।

**यदितु-**

यदोपमानशब्दानां गौणवृत्तिव्यापाश्रयात् ।

उपमेये भवद्वित्तिः.............॥

इत्युक्त्यनुसारेण उपमानपदस्य उपमानसदृशे (भेदे) लक्षणा इत्याश्रीयते तदा सादृश्यस्य न प्राधान्येन प्रतीतिः अपितु अभेदस्यैवेति अभेदप्रधानं रूपकमिति सिद्धान्तविरोधोऽपि नापतति ।

**अपरंच-** उपमानपदस्य तत्सदृशे लक्षणा तस्याश्च मुखचन्द्रोभयानुगतसाधारणधर्मवत्तया, मुखचन्द्रोभयानुगतधर्मवत्तया वाभ्युपगमे पौनरुक्त्यादीनामभावात् । **कण्ठाभरणाद्यभिमत**गौणसारोपलक्षणापक्ष उचित इति प्रतिभाति ।

नच- "मुखं चन्द्र" इत्यादौ चन्द्रादिसदृशे लक्षणाभ्युपगमे" चन्द्र ,इव मुखम् इत्युपमातः रूपकस्थलेऽनुभूयमानस्य चमत्कारवैलक्षण्यस्यानुपपत्तिरिति पञ्चकल्पदूषणावसर एव अभिहितमिति वाच्यम् ।

यथा हि 'गंगायांघोषः' इत्यादौ "गंगातीरे घोषः" इति वाक्यात् जायमानायाः गंगातीरवृत्तिर्घोषः इति प्रतीतेः 'गंगायां घोष' इत्यतो लक्षणया जायमानायाः गंगातीरवृत्तिः घोषः इति प्रतीतेः साम्येऽपि गंगापदजन्यतीरोपस्थितिमहिम्ना निरूढिव्यतिरिक्त (लक्षणा) स्थले प्रयोजनमनुद्दिश्य लक्षणया अर्थप्रतिपादनस्यानुचितत्वादालंकारिकसमयविरोधप्रसङ्गाच्च शैत्यपावनत्वादिविशेषः तीरे प्रतीयते तथा प्रकृते सादृश्यप्रतीतेरुभयत्राविशिष्टत्वेत्वेऽपि अभेदान्वयबोधप्रयोजक-

## चित्रमीमांसा-

### तस्माद्रूपके स्वस्वपदाभिहितयोः विषयविषयिणोरभेद प्रतिपत्तिः संसर्गमर्यादयेत्येव वक्तव्यमिति लक्षणस्यासंभवोऽपिदोषः

## तत्त्वालोकः-

समानविभक्तिकत्वरूपाकांक्षाज्ञान चन्द्रपदाधीन- चन्द्रसदृशोपस्थित्यादिघटितसामग्रीप्रयोज्यत्वकृतं रूपकस्थले चमत्कार वैलक्षण्यं प्रतीयत एवेति रूपकस्य उपमापृथग्भावः उपपद्यत एव। अत एवच **काव्यप्रकाशकृतापि** - द्वितीयोल्लासे" तटादीनां गंगादिशब्दैः प्रतिपादने तत्वप्रतिपत्तौ हि प्रतिपिपादयिषित- प्रयोजनसंप्रत्ययः गंगासम्ब न्धमात्रप्रतीतौ तु गंगातटे घोष इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः" इत्यभिहितं संगच्छते। यद्यपि विषयिवाचकपदानां सारोपलक्षणया विषयिनिष्ठ गुणसदृशगुणवत उपस्थितौ तस्य अभेदेन संसर्गेण विषये ऽ न्वय इति **कण्ठाभरणकृन्मतं** नानुपपन्नं भवति।

अथापि - 'मुखं चन्द्रः' इत्यादौ विषये विषय्यभेदारोपस्य आहार्यस्य लक्षणां विनैव संसर्गविधयाशाब्दबोधे भानसंभवेन रूपकस्थले गौणसारोप- लक्षणायाः अन्यथासिद्धत्वात् सा अनावश्यकी इति तदेतदाविष्कृत्य कण्ठाभरणोक्तलक्षणेऽसंभवमप्यापादयति । **तस्मादिति** । तस्मात्- पूर्वोक्तेषु कस्यापि लक्षणाप्रवृत्तौ निमित्तत्वासम्भवात्, 'अभेदप्रधानं रूपकमिति सिद्धान्तविरोधाच्च, लक्षणया तत्सदृशाभेदबोधस्याप्रत्यायनात् रूपके 'मुखंचन्द्रः' इत्यादौ, स्वस्वपदाभिहितयोः- मुखचन्द्रादिपदाभ्यामुक्तयोः विषयविषयिणोः: उपमेयोपमानयोः, अभेदप्रतिपत्तिः विषये विषयितादात्म्यप्रतिपत्तिः (स्ववृत्त्यसाधारणधर्मप्रतिपत्तिरित्यर्थः), संसर्गमर्यादया संसर्गतारव्यविषयतयैवेत्येव, एवकारेण प्रकारान्तरव्यवच्छेदः वक्तव्यः- गत्यन्तराभावात् इतिशेषः।, इति अतो हेतोः लक्षणस्य सरस्वतीकण्ठाभरणोक्त रूपकलक्षणस्य, असम्भवोऽपि- असम्भवरूपोऽपि दोषः प्रसज्यते, अपिशब्दादतिव्याप्त्यादेः परिग्रहः।

## तत्त्वालोकः-

ननु- "मुखं चन्द्र" इत्यादौ लक्षणां विना चन्द्रप्रकारकाभेदसंसर्गकमुखविशेष्यकबोधः, चन्द्रप्रतियोगिकाभेदानुयोगि मुखम्, इति वा योऽयमभेदबोधः स कथं संभवति ? अभ्रान्तानां भ्रान्तिज्ञानां च मुखं चन्द्रो न, चन्द्रः मुखं नेत्यादि बाधज्ञानं यदा जातं तदा शाब्दबोधप्रयोजक योग्यताज्ञानस्याभावात्, प्रत्युत प्रतिबन्धज्ञानस्यैव जागरूकत्वात् इति चेत् नैयायिकैकदेशिमतावलम्बनेन बाधज्ञाने सत्यपि तादृशाभेदसंसर्गकशाब्दबोधस्य वक्तुं शक्यत्वात् ।

तथाहि- "एष वन्ध्यासुतो याति" इत्यादौ अन्यथाख्यातिवादिभिः असति बाधज्ञाने योग्यता भ्रमाच्छाब्दबोधः अङ्गीक्रियते सति तु बाधज्ञाने न भवतीति।क्वचित्तु - आहार्ययोग्यताज्ञानबलात् जायमानोबोधः दोषविशेषजन्यत्वाद्बाधज्ञानप्रतिबध्यो न भवत्येवेति, तद्वदत्रापि आहार्ययोग्यताज्ञानबलात् अभेदसंसर्गको बोधो जायत इत्यभिधीयते ।

केचित्तु- सत्यामपि बाधबुद्धौ शब्दादभेदान्वयबोध उत्पद्यते।

"अत्यन्ता सत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि "

इति न्यायादिति वदन्ति। एषामनुरोधेन वा रूपके आहार्यः मुख्यार्थभेदारोपरूपबोधो जायत इति अदोषादिति ग्रन्थकाराभिप्रायः। अयं च आहार्याभेदारोपरूपबोधः शारीरकमीमांसाशांकर- भाष्योक्तम् - आरोपपक्षं प्राधान्येनावलम्ब्य परिमले ग्रन्थकृतैव समार्थितः तथाच तत्रत्योऽयं ग्रन्थभागः

"भाष्योक्त आरोप एव हि प्रकृतोपयोगी प्रसिद्धश्च, तथाहि अध्यासपक्षे नाम्नि ब्रह्मत्वादेःओङ्कारेउद्गीथत्वादेः आरोप्योपासना वर्णिता, तथा उपासना च नाम्नि ब्रह्मशब्दस्य ब्रह्मत्वारोपेणाओङ्कारे उद्गीथशब्दस्य उद्गीथत्वारोपेण च वृत्तावेव घटते। तस्मादारोपपक्ष एव प्रकृतोपयोगी प्रसिद्धश्च सएव लोके वेदे च। लोके तावत्

किमसुभिर्ग्लपितैं र्जड मन्यसे मयि निमज्जतु भीमसुतामनः ।
मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः।। इति।

## तत्त्वालोकः-

अत्र नलविरहातुरया दमयन्त्या चन्द्रं प्रत्युपालंभः क्रियते मृतानां मनः चन्द्रे लगतीति प्रतिपादयन्ती 'यत्रास्य पुरूषस्य अग्निं वागप्येति वातं प्राणः चक्षुरादित्यं मनश्चन्द्रम्' इत्यादिश्रुतिं दृष्ट्वा खलु दमयन्ती मृता चेदस्या मनः स्वस्मिन् लग्नं भवेत् इति प्रत्याशया मां मारयितुमिच्छसि सा जडस्य तव प्रत्याशा निष्फला यतस्साश्रुतिः नलमुखचन्द्रविषयेति विबुधः मन्मथो मह्यमुपदिष्टवानिति ।

एवं श्रुते चन्द्रान्तरविषयत्ववर्णनं नलमुखे चन्द्रत्वारोप एव संगच्छते। एवम्

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः।

अफाललोचनश्शम्भु र्भगवान् बादरायणः इति ।

अत्रापि बादरायणे ब्रह्म त्वाद्यारोपएव क्रियते ब्रह्मादि दिगत चतुर्वदनत्वादि प्रसिद्धौ ब्रह्माद्येकैक गुण वैकल्यवर्णन कृतं स्वारस्यमश्नुते ।अत्यलपमिदमुदाहृतम् सर्वत्रारोप प्रमाणा एव कार्यसरणयः ।एवंभूतेषु आरोपेषु सादृश्यं व्यङ्ग्यविषयतया कविभिः विवक्ष्यते न तु गौणवृत्तिविषयतया। अतएव रूपकेणोपमा व्यज्यतइत्यालंकारिकसमयः इति ।

वस्तुतस्तु

'उपमैव तिरोभूतभेदा रूपकमुच्यते ।'

उपमानेन उपमेयस्य गुणसाम्यात्तत्वरोपो रूपकम्' इत्याद्यानुगुण्येन

**तद्रूपकमभेदो यः उपमानोपमेययोः ।**

इत्यत्रापि अभेदशब्दः सदृशाभेदपरः। अतएव सारोपलक्षणाया रूपकाद्यलंकारबीजत्वमुपन्यस्तं **विद्याधरादिभिः**।

युक्तश्चायं सदृशाभेदवादिनां प्राचीनानां पक्षः। यतो वैदिकलौकिकोभयप्रयोगसाधारणः । तथाहि-

"स्तेनं मनः" इत्यत्र मनसि स्तेनत्वोक्तिः स्तेनो यथा प्रच्छन्नं चरति तद्वन्मनोऽपीति स्तेनसादृश्यात्, यथैवच "आदित्यो यूप" इत्यादौ यूपे आदित्याभेदरूपमुख्यार्थस्य प्रत्यक्षप्रमाणविरुद्धत्वात् आदित्यवृत्तिगुण-

## तत्त्वालोकः-

सजातीयगुणवत्तारूपगौणार्थविवक्षया सामानाधिकरण्यम् । अतएवच

**पूर्वमीमांसादर्शने-**

"तत्सिद्धिजाति-सारूप्य-प्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयः" । (पू..मी.२-४-२३) इति गौणवृत्तिप्रवृत्तिनिमित्तभूतान् तात्सिध्ध्यादीनुपाददता **जैमिनिना** तद्विवृण्वता **खण्डदेवेनच भाट्टदीपिकायाम्-** "सिंह्मो देवदत्तः" इत्यादौ सिह्मत्वस्य देवदत्ते आहार्यारोपम् आशङ्क्य आहार्यारोपपक्षं निराकृत्य- विनाप्यारोपं सिह्मशब्दस्य सादृश्यमात्रविवक्षया देवदत्ते काव्यलोकयोः प्रयोगदर्शनात् स्वशक्यगुणसमानजातीयगुणयोगनिमित्तं गौणत्वम् । सिह्मनिष्ठक्रूरत्वसमान जातीयक्रूरत्वयोगाच्च सिह्मपदस्य देवदत्ते प्रवृत्तेः सिह्मोदेवदत्तः इत्यत्र लक्षणसमन्वयः इत्यभिहितम् '॥

एवम् "आदित्यो यूप" इत्यत्रापि सारूप्यमेव लक्षणानिमित्तम् । सारूप्यं च शक्यनिष्ठगुणसजातीयगुणवत्त्वमिति तत्सिद्धिसूत्रघटक सारूप्यसमन्वयं विदधता **खण्डदेवेनेवोक्तम्** (भा.दी.७१पु)

तत्सिद्धिश्च तत्कार्यकारित्वम् । एतद्द्वयमंशं **जैमिन्यभिमत**मुपादायैव **जयदेवेन चन्द्रालोके-** अभेदरूपकंताद्रूप्यरूपकमिति द्वेधा विभागः कृतो भवेत्- यत्र तत्सिद्धिमूलकः उपमेये उपमानपदप्रयोगो गौणः तत्रताद्रूप्यरूपकमिति, यत्रतु सारूप्यमूलकोगौणस्तत्प्रयोगःतत्राभेदरूपकमिति ।

किञ्च- आहार्यारोपनिश्चयविषयाऽभेदस्य रूपकत्वे 'मुखं चन्द्र' इति वाक्यीयतात्पर्यविषयीभूतसंसर्गः प्रत्यक्षप्रमाणेन बाध्यत इति तादृशस्य वाक्यस्याप्रमाणता स्यात् । अतःसदृशाभेदलक्षणया तादृशवाक्यस्य प्रमाण्योपपादनं युक्ततरम् ।

अपरंच- 'मुखंचन्द्रः' इत्यादिभिर्वाक्यैः अभिधीयमानस्य शाब्दबोधरूपत्वेन शाब्दसामान्यएवारव्यातिवादिभिरिव अनाहार्ययोग्यताज्ञानस्य अनिर्वचनीयख्याति वादिभिरपि कारणत्वभ्युपगमेन रूपकस्थलेऽतिशयोक्तिस्थलेच शाब्दबोधसिद्ध्यर्थं लक्षणाआश्रयणीयैव ।

## -तत्त्वालोकः-

नैतावता रूपकरूपकातिशयोक्त्योर्मूलोच्छेदप्रसङ्गः । यत्र उपमानपदेन गौणवृत्या उपमेयविवक्षा उपमेयस्यापि पृथगुपादानं तत्ररूपकत्वम्, यत्रउपमेयस्यानुपादाने सति लक्षणाबलादुपमानवाचकेनैव तस्य प्रतीतिः तत्रातिशयोक्तिः । उपमानपदस्य उपमेये गौणवृत्तिविरहःतत्र उपमेत्येवं व्यवस्थायाः प्रागेव प्रदर्शितत्वात् उपमया रूपक-रूपकतिशयोक्त्योः मूलोच्छेदप्रसक्त्यभावात्।

नचैतावता- यत्किञ्चिद्वैषम्यमात्रेण उपमातः रूपक-रूपकातिशयोक्त्योरलंकारत्ववाचोयुक्तिरयुक्तेति वाच्यम्।

भवद्भिरपि प्रकृताप्रकृतयोः एकधर्मान्वये दीपकं, प्रकृतयो रेव अप्रकृतयोरेव वा तदन्वये तुल्ययोगितेति वाचोयुक्तेरपि अयुक्तता प्रसङ्गात् ।

किञ्च- भवद्भिरेव विद्यानाथीयलक्षणदूषणावसरे'ज्योत्स्नेव नयनानन्दः' इत्यत्र नच बहूपमामेलनमेव नैका मालोपमा । तासुच प्रत्येकं लक्षणमस्त्येवेति वाच्यम् इत्याशङ्क्य प्रतीपस्येव संसृष्टिसंकरात्पृथक् ग्रन्थकृतां लेखनमुभयत्रापि तुल्यमित्यभिधानात् ।

एवं च "चन्द्रइव मुखं" मुखमिव चन्द्रः" इत्यत्र तृतीय सदृशव्यवच्छेदरूप-फलभेदेनोपमेयोपमा उपमाप्रतीपमेलनरूपतोभिन्ना तद्वदेव उपमानवाचकेन पदेन लक्षणया सादृश्यविशिष्टप्रतिपादने रूपकम्, उपमानवाचकपदादन्येन सादृश्यप्रतिपादने लक्षणाया अभावेचोपमा । उपमेयवाचकपदमनुपादाय उपमानपदेनैव लक्षणया उपमेयस्यापि प्रतीतौ रूपकातिशयोक्तिः' इत्यभ्युपगमे न कापि हानिः ।

इत्थं सति जैमिनि व्यास वाचस्पति प्रभृतिदार्शनिकानुरोधः प्राचीनालंकारिकानुरोधः वैदिकलौकिकोभयविधवाक्यप्रमाण्यं चेत्यनेके गुणाः सम्पद्यन्ते ।

एतावतैव अभेदप्रधानं रूपकमित्यालंकारिकासिद्धान्तस्यापिसिद्धौ जैमिन्याद्याशयाननुगुणः आहार्यारोपाभ्युपगमश्चिन्त्य एव ।

**-चित्रमीमांसा-**

**यदा तु-**

**"वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते"**

**"द्वौ चन्द्रौ जगतो राजन् स दिवि त्वं महीतले"-**

तत्त्वालोकः-

किञ्च ग्रन्थकर्तुः स्यालकेन **राजचूडामणिदीक्षितेनापि काव्यदर्पणे-** प्राचीनालंकारिकानुगुण्येन लक्षणापक्षएव समर्थितः। अथच रूपकेऽभेदप्राधान्यं निरस्य ताद्रूप्यप्रतीतिपक्षएव अनुभवानुरूद्धइति प्रतिपादितः। तथाहि" वस्तुतस्तु-मुखं चन्द्रः" इत्यत्र चन्द्रताद्रूप्य प्रतीतिः मुखे इति सर्वानुभवसिद्धम् ततश्च चन्द्रपदस्य चन्द्रताद्रूप्ये एव लक्षणा। सादृश्यप्रतीतिः फलम् अतएव रूपकादिषु उपमा व्यङ्ग्येति साम्प्रदायिकाः। निरतिशयसौन्दर्यवत्वं वा व्यङ्ग्यम्। "साक्षाचन्द्र एवेदं मुखम् " इत्यादौ क्वचित् चन्द्राभेद प्रतीतौ सत्यामपि उत्सर्गतः विषयविषयिवाचकपदद्वयोपादाने ताद्रूप्यप्रतीतेरेवानुभवसिद्धत्वादिति यः प्राचामुपरि असम्भवः आपादितः सः कथञ्चित्परिहर्तुं शक्यः। यतः **भोजदेवादपि** नव्येन **चन्द्रालोककृता जयदेवेन-**अभेदरूपकं ताद्रूप्यरूपकमिति रूपकं द्विधा विभक्तम्। तयोराद्यं तत्रैव यत्र उपमेये उपमानतावच्छेदकावच्छिन्नाभेदभानं यथा

"अयं हि धूर्जटिस्साक्षात् "इत्यादौ।

द्वितीयं तु यत्र उपमेये उपमानाद्भेदमाविष्कृत्य उपमानकार्यकारित्वादीनां प्रतिपादने तात्पर्यं तत्र यथा "साध्वीयमपरा लक्ष्मीः" इत्यादौ। एवं च भेदस्य यत्र स्फुटं प्रतीतिस्तत्र कथंचित् विषयिवाचकस्च विषये लक्षणा कल्पयितुं शक्येत्यसंभवो लक्षणस्य. न संभवतीत्याह- **यदात्वित्यादिना।**

**वक्त्रेन्दाविति** । अत्र वक्त्रेन्दाविति सामानाधिकरण्येन अभेदादभेदप्रतीतावपि "अपरः शीतांशुः" इति प्रसिद्धचन्द्रभेदोऽपि मुखरूपे चन्द्रे प्रतिभासत इति भेदाभेदयोः विरोधात् इन्दुपदस्य अभेदोपचारोत्पन्नपद्मकान्ति-हारकत्वादिरूप गुणसादृश्याद्गौणीलक्षणया मुखदिलक्षकत्वम्।

## -चित्रमीमांसा-

**इत्यादौ विषये प्रसिद्धचन्द्राभेदप्रतिपत्तिः न संभवतीति यथा कथंचित् इन्द्वादिपदस्य विषये लक्षणा।**

**तथापि "कान्तिमान् मुखचन्द्रः" इत्यादौ कठाध्यापकादिवत् संसर्गमर्यादयैवाभेदप्रतिपत्तिसम्भवेन अतिक्लिष्टलक्षणाश्रयणा योगात् तत्राव्याप्तिः वज्रलेपायते।**

## -तत्त्वालोकः-

एवं "द्वौचन्द्रौ जगतः" इत्यत्र भूम्यन्तरिक्षरूपाधिकरणभेदेनावस्थानाभिधानात् लोकप्रसिद्धचन्द्रभेद प्रतिपत्तिर्नसंभवतीत्यन्यथानुपपत्त्याचन्द्रपदे आह्लादक-त्वादिरूपगुणनिमत्तिका लक्षणाआश्रीयतइतिउभयत्रापि लक्षणा कल्प्यते इति सरस्वतीकण्ठाभरणोक्तलक्षणस्य नासंभव इति भावः।

अत्र **यथाकथञ्चित्** इत्युक्तेरयमभिप्रायः- यदत्र **जयदेवादिभिः** ताद्रूप्यरूपकमतिरिक्तमभ्युपगतं तत्प्राचां **मम्मटादीनां** नाभिमतं परन्तु तत्राप्यभेदरूपकमित्येवाशयात्। तथाहि-अपरादिपदस्येदृशस्थले स्वार्थान्वयि तावच्छेदकाश्रययत्किञ्चिद्व्यक्तिप्रतियोगिक भेदमात्रबोधक त्वव्युत्पत्त्यनुरोधेन प्रसिद्धचन्द्रव्यक्तिभेदभानेऽपि चन्द्रसामान्यभेदभानाच्च चन्द्रद्वित्वभ्रममूलकस्य मुखादौ चन्द्रत्वावच्छिन्नाभेदभानस्य सम्भवात्।

अन्यथा-चन्द्रदिपदस्यात्र चन्द्रकार्यकारिपरत्वेऽपि चन्द्रकार्यकारित्वेन प्रसिद्ध चन्द्रासाधारणेन रूपेण प्रसिद्धचन्द्रव्यक्त्यभेदभानस्यैवाभ्युपेयतया अनुपपत्तेरपरिहार्यत्वात्। चन्द्रकार्यकारितायाः प्रसिद्धचन्द्रेतरसाधारणत्वे च मुखे तदारोपस्य अनावश्यकतया रूपकस्यैव अप्ररोहात् इति।

नैतावता कण्ठाभरणोक्तलक्षणस्य निर्दुष्टता लक्षणामन्तरा यत्र रूपणस्य निर्वाहः तत्राव्याप्तिरिति सोदाहरणंप्रदर्शयति **तथापीत्यादिना**।

**कान्तिमानिति**-'मुखमेव चन्द्रः'-मुखचन्द्रः इतिविग्रहवृत्ती।

## -तत्त्वालोकः-

मयूरव्यंसकादित्वात्समासः । यद्वा विशेषणंविशेष्येणेतिसमासः । बहुलग्रहणाच्च चन्द्रशब्दस्य परनिपातः । ततश्च कान्तिमत्पदार्थस्य उत्तरपदार्थेऽन्वयः स च अभेदेन। एवंरीत्या अन्वयश्च शाब्दप्राधान्यमाश्रित्य ।

'कान्तिमान्' इत्यत्र कान्तिः अस्मिन्नस्तीति विग्रहे रसादिभ्यश्च(पा.सू.५-२-९५) इति मतुप् । नच कान्त्याः गुणत्वात् "गुणवचनेभ्योमतुपोलुगिष्टः" इति वार्तिकानुसारात् मतुपो लुका भाव्यमिति वाच्यम् । रसादिभ्यश्चेतिसूत्रे 'गुणात्' इति पठ्यते । तेन गुणवाचिभ्यः शुक्लादिशब्देभ्यः एवोत्पन्नस्य मतुपो लुक् नान्येभ्यः अत्रच कान्तिशब्दो न गुणमभिधत्ते अपितु सौन्दर्यम् तच्चनगुणः, अत एवंभ्यो मतुपः न लुक् इति **तत्वबोधिनीकारादीना** मभिमतमिति ज्ञायते ।

अथवा गुणे गुणवतिच प्रसिद्धाः ये शुक्लादयः तेभ्यः परस्यैव मतुपो लुग्भवति नान्येभ्यो रूपादिशब्देभ्यः तथा प्रयोगस्यादृष्टेः । अत एव कान्तिःमुखमित्यादिप्रयोगो न भवति ।

यद्यपि-'कान्तिमान् मुखचन्द्रः' इत्यत्र कान्तिमत्वस्य विशेषणत्वात् तदुत्तरविभक्तेः लोपेनापहारात् 'शिष्यमाणो लुप्यमानार्थाभिधायी' इतिन्यायेन अभेदस्य संसर्गमर्यादया भानमिति ग्रन्थकृता अभ्युपगम्यते । तथाभ्युपगमश्च न युज्यते ।

यतश्च-अभेदस्य संसर्गमर्यादया भानं समासस्थल एवेति **व्युत्पत्तिवादे गदाधरभट्टाचार्येण** अभिहितम्, न चात्र कान्तिमन्मुखचन्द्रपदयोः समासः कृतः इति।

तथापि **तत्रैव व्युत्पत्तिवादे गदाधरभट्टाचार्येणैव**

"इदंतु तत्वम् इत्युपक्रम्य नीलोघटः इत्याद्यसमासस्थलेऽभेदस्य संसर्गतया भानोपगमेऽपि गौरवविरहात् तत्र विशेषणविभक्तेः वृत्तिकल्पनमनुचितमिति" असमासेऽपि अभेदस्य संसर्गतोपगमान्नात्र गौणवृत्या सदृशाभेदबोध पर्यन्ताश्रयणक्लेशस्य प्रसक्तिः ।

## -तत्त्वालोकः-

अत्र दृष्टान्तमुपादत्ते **कठाध्यापकादिवदिति** । अत्र कठश्चासावध्यापकश्चेति कर्मधारयः कठपदार्थस्य अभेदेन संसर्गेण अध्यापकपदार्थेऽन्वयः तथाच कठाभिन्नाध्यापकः इति बोधः । तद्वदेवात्रापि इति भावः ।

अत्र 'काशीमद्रनगरीमुद्रितकोशयोः' कठाध्यापकादिवत् इति पाठः, मुम्बापुरीमुद्रितकोशे परं काठकाध्यापकादिवत् इतिपाठः आदृतः । तयोः आद्यः पाठोऽस्माभिः परिगृहीतः ।

यतश्च-व्यासशिष्येषु एको वैशम्पायननामा ऋषिः, "वैशम्पायनशिष्येषु" आलम्बिप्रभृतिषु नवसु कठनामा ऋषिरप्येकः शिष्यः । तेन कठेन प्रोक्ताः मन्त्राः इत्यर्थे विवक्षिते कठशब्दात् "कलापिवैशम्पायनांतेवासिभ्यश्च" (पा.सू.४-३-१०४) इति इनिप्रत्यये,तस्य "प्रोक्ताल्लुक्" (पा.सू.४-२-६४) इतिलुकि कठ इति स्थिते तदधीते.....इति (पा.सू.४-२-१०१) अध्येत्रर्थेऽणि,तस्यापि "कठचरकाल्लुक्" इति (पा.सू.४-३-१०७) लुकि कठ इत्येवरूपम्, अर्थस्तु कठनामकेन मुनिना प्रोक्तस्य मन्त्रभागस्याध्येता इति वक्तव्यः ।

यदा च सः कठः अन्यानध्यापयति तदा कठाध्यापकःइति व्यपदिश्यते । तदाच कठपदम् अध्यापकपदेन सार्कं-पोटायुवतिस्तोककविपयगृष्टिधेनु-वशावेहद्वष्कयणी प्रवक्तृश्रोत्रियाध्यापक धूर्तेर्जातिः (पा.सू.२-१-६५) इति समासं लभते । ततश्च कठाध्यापक इति रूपसिद्धिः भवति । एवं सति कठपदार्थस्य अध्यापकपदार्थेन सह अभेदेन संसर्गेण अन्वयः,कठाभिन्नोऽध्यापक इति च बोधः। सति चैवं लक्षणां विनैव अभेदबोधस्य भानमिति एतस्मिन्नुदाहरणे "कान्तिमान्मुखचन्द्रः" इति दार्ष्टान्तिके च न लक्षणापेक्षेत्यव्याप्तिः वज्रलेपायतइत्युपपादितं संगच्छते ।

यदा तु काठकाध्यापकादिवदिति पाठः परिगृह्येत तदा दृष्टान्ते-अध्येया-ध्यापकभावः सम्बन्धः,दार्ष्टान्तिके तु अभेद इति न तयोरेकरूपता, तथाहि-

कठशब्देन कठशाखाध्येता अभिधीयते तेन 'अध्येयः आम्नायः' 'इत्यर्थे' गोत्रचरणाद्वुञ् इति (पा.सू.४-३-१२६) सूत्रस्थेन "चरणाद्धर्माम्नाययोः"

## -तत्त्वालोकः-

इति(वा.२९१३) वार्तिकानुरोधेन वुञ् प्रत्यये अकादेशे च काठकमितिरूपम्।तदर्थश्च कठशाखिभिरध्येयः आम्नाय इति।

एवंच काठकपदेन कठाम्नायस्य,अध्यापकपदेन तदध्यापयितुर्ग्रहणे, उभयोः पदार्थयोः असामानाधिकरण्यात् अभेदेन अन्वयबोधो न स्यादिति वैषम्यं प्रसजेत् अतः काठकाध्यापकादिवत् इति पाठं परित्यज्य प्रकृतानुगुणः "कठाध्यापकादिवत्"इति पाठः परिगृहीतः।

**किञ्च-** 'कान्तिमान् मुखचन्द्रः' इत्यत्र मुखचन्द्रोभयानुगतं कान्तिमत्वादिसाधारणधर्मं लक्षयित्वा तन्मुखेन कान्तिमन्मुखं प्रात्याययतीति उपगमे उक्तप्रयोक्तानुपपत्तिः चन्द्रपदस्य कान्तिमत्पदेन पौनरुक्त्यं स्यादिति।

तदपि न-"कान्तिमान् मुखचन्द्र "इत्यत्र चन्द्रपदं सादृश्यसामान्यं पुरस्कृत्य मुखे लक्षणया प्रवर्तते,तत्सामान्यं च समासशास्त्रबलात् प्रतीयते, यदा कान्तिमत्पदोपादानात् तदुभयान्वयिनो विशेषधर्मस्यप्रतीतिरिति पौनरुक्त्याभावात्। अभेदस्य व्यज्यमानत्वेन वाच्यत्वाभावात् वाच्यरूपकताभङ्गः रूपकादिषु उपमा व्यज्यते इत्यालंकारिकसिद्धान्तभङ्गः,वैदिकलौकिकोभयसाधारण्येन, आहार्यारोपं विना रूपणाभ्युपगमे अलंकारशास्त्रस्य वेदाङ्गत्वोक्तिः निर्व्यूढाभवति।

वेदेऽपि-

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि,मनः प्रग्रहमेन च॥
इन्द्रियाणि हयानाहुः विषयास्तेषुगोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥

इति मन्त्रयोः यत्आत्म शरीरबुद्धि मनइन्द्रियविषयेषु रथि-रथ सारथिप्रग्रहहयत्वेन रूपणमनाहार्यमेव, आहार्यत्वे तुसंसराध्वपारभूतवैष्णवपदप्राप्तौ परिकरत्वं न स्यात्। अतश्च रूपके आहार्यभेदारोपापेक्षया गौणसारोपलक्षणा गरीयसीति उभयमीमांसक सम्मतोऽयं पन्थाः इति भोजदेवादिभि। प्राचीनैः वेदमार्गानुसारिभिः अङ्गीकृतः

## -चित्रमीमांसा-

**अपि च-**

**सेतुः शैलैस्त्वया बद्धः पूर्वंजेतुं दशाननम्।**
**कं जेतुमद्य बध्नासि यशश्चन्द्रोपलैः प्रभो ॥**

## -तत्त्वालोकः-

लक्षणापक्षः अप्पय्यदीक्षितसमकालिकैः **राजचूडामणिदीक्षितैरपि** अभ्युपगतः इति ग्रन्थकाराभिमतः आहार्याभेदपक्षः चिन्त्य एवेति पूर्वमेव विशदीकृतमस्माभिः इति तत्रैव विशेषांशः अवलोकनीयः ॥

इत्थं वाच्यरूपकेऽव्याप्तिमापाद्य क्वचिद्रूपकध्वनौ उपमानानुपादानात् क्वचिच्च तदुपादानेऽपि विषयलक्षकत्वाप्रसिद्धेश्च उपमानपदस्य गौणसारोपयोरुपमेये वृत्तेरभावादव्याप्तिः। तयोराद्यमुदाहरति **सेतुरिति**।

हे प्रभो राजन् पूर्वं त्रेतायाम् दशाननम् रावणम्, जेतुम् अभिभवितुमुद्दिश्य, त्वया रामेण प्रयोजककर्त्रा, सेतुः संवरः "सेतुरालौ स्त्रियां पुमान् इत्यमरः" स्त्रियां वर्तमानायामालौ सेतुशब्दः पुल्लिङ्गे वर्तते इति कोशार्थः। सिनोति जलं सीयते वा मृत्पाषाणादिभि इति सेतुः "षिञ्बन्धने" इति धातोः रूपम्। शैलैः पर्वतैः बद्धः नलादिद्वारा निर्मापितः। अत्रान्तर्भावितण्यर्थः बधिः। अद्य राजभावावस्थायाम् कम् अस्माभिरप्यपरिज्ञातं यशसा समधिकत्वाभिमानिनम् जेतुम् ,यशोरूपैः चन्द्रोपलैः चन्द्रकान्तशिलाभिः बध्नासि ?

रामावतारे लोककण्टकस्य रामप्रतिस्पर्धिनो रावणस्य निबर्हणाय शतयोजनविस्तीर्णे मकरालये (समुद्रे) सेतुबन्धनप्रयासः सफलः शत्रोः प्रज्ञातत्वात्। अद्यतु भवतः समधिकं नकोऽपि अभिमन्यत इति सेतुबन्धनापेक्षा न विद्यतइति भावः।

अत्र त्वमेव रामः इति विषयभूते राज्ञि विषयिभूतरामाभेदोऽभिव्यज्यते। न चात्रोपमानपदमुपादीयते इदंच वस्तुना रूपकालंकारध्वनेरुदाहरणम् अत्राव्याप्तिरिति भावः ॥

## -चित्रमीमांसा-

**चिराद्यत्कौतुकाविष्टं कल्पवृक्षमुदीक्षितुम्।**

**तन्मे सफलमद्यासीत् नेत्रं त्वय्यवलोकिते॥**

## -तत्त्वालोकः-

द्वितायेऽलंकारेण यत्र रूपकं ध्वन्यते तत्रोपमानवाचकस्योपादानेऽपि न तस्योपमेयलक्षकत्वमिति तत्राप्यव्याप्तिरित्युदाहरति**चिरादिति**।

चिरात् बहोः कालादारभ्य, कल्पवृक्षम् देवतरुम् उदीक्षितुम् द्रष्टुम्, यत् मे मम नेत्रम्, कौतुकाविष्टम् दुर्निवारकुतूहलम् अभवत् तत् नेत्रम् त्वयि भवति अद्य अवलोकिते दृष्टे सति सफलं निष्पन्नप्रयोजनतया उपशान्तकुतुकम् आसीत् अभवत् इत्यर्थः।

अत्र कल्पवृक्षोदीक्षणप्रोत्कण्ठावता नेत्रेण द्रष्टुमशक्यस्यापि राज्ञो दर्शनरूपासंभाव्यवस्त्वन्तरकरणरूपो विशेषालंकारप्रभेदः सच न वाच्यः यो व्यापारः यदर्थमुपक्रान्तः तेनैव व्यापारेण अशक्यवस्त्वन्तरकरणे तत्र विशेषालंकारविशेषस्य वाच्यत्वम्। उक्तपद्ये तु कल्पवृक्षोदीक्षणे इच्छामात्रं राज्ञि तु दर्शनमिति भेदात्।

एवं चात्र -

त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम्।

इतिवत् एकेनैव दर्शनानुकूलव्यापारेण प्रकृतस्य राज्ञो दर्शने प्रस्तुतेऽपि लोकोत्तरकल्पवृक्षदर्शनं नोपनिबद्धं किन्तु कल्पवृक्षनिरीक्षणे उत्कण्ठा राज्ञो दर्शनमिति लोकोत्तरकल्पवृक्षनिरीक्षणांशे न कोऽपि व्यापार इति तदंशस्यावाच्यत्वात् विशेषालंकारस्य प्रतीयमानत्वमिति ग्रन्थकृतः आशयः प्रतिपादनावसरे स्पष्टो भवति।

**यद्वा**-प्रकृतस्य राज्ञो दर्शनेन अत्यन्तासंभावितं चिरकांक्षितं कल्पवृक्षदर्शनं जातमित्यशक्यवस्तुकरणरूपो विशेषभेदः। तल्लक्षणं चोक्तं **विद्याधरणैकावल्याम्-**

"यदसंभावितवस्त्वन्तरकरणम्" इति (एका.८ ३ ४१ श्लो)

## -तत्त्वालोकः-

नचात्र करणं परिदृश्यते,अपितु अवलोकनमिति वाच्यम् ।' करणस्य क्रियासामान्यात्मनः दर्शनेऽपि संभवात् नदोष इति समाधातुं शक्यत्वात्।

**वस्तुतस्त्वत्र**-कल्पवृक्षोदीक्षणोद्देशेन कृतस्य इच्छाविशेषरूपस्य कौतुकस्य प्रयत्नरूपत्वाभावात् प्रयत्नस्य च कार्यमात्रं प्रति करणतया इष्टार्थगोचरप्रयत्नाभावेऽपि कल्पवृक्षावलोकनरूपकार्योत्पत्ति वर्णनेन विभावनालंकारोऽभ्युपेयते। तस्य च प्रयोजकः राज्ञि कल्पवृक्षाभेदग्रहः इति रूपकस्य व्यज्यमानता युक्ता ।

**यद्वा-**

"उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् "

इति **स्वकीयकुवलयानन्दोक्तरीत्या** वा प्रहर्षणालंकारो युक्तः । यतश्चात्र कल्पवृक्षोदीक्षणे कौतुकमात्रं नतु प्रयत्नः तं विनापि कल्पवृक्षोदिक्षणसिद्धि रभूदित्युक्त्या प्रकृते राज्ञि कल्पवृक्षाभेदो व्यज्यत एव। अन्यथा कल्पवृक्षनिरीक्षणसंकल्पवतो नेत्रस्य तन्निरीक्षणमन्तरा राज्ञो दर्शनमात्रेण साफल्यवर्णनमनुचितं भवेत्। नह्यन्येच्छावतः अन्यनिरीक्षणेन साफल्यं सम्पद्यते। अतश्च त्वमेवकल्पवृक्ष इत्यभेदज्ञानं साफल्यप्रयोजकमिति ।

नन्वत्र- कथं विशेषालंकारविशेषरूपता, यतः" किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च सः" । इति **कुवलयानन्दोक्त**रीत्यापि तस्य वक्तुमशक्यत्वात्। क्रियाकूटात्मकपाकादिक्रियायां प्राथमिकव्यापरोपक्रमस्य आरम्भपदार्थत्वात् । अत एव च- "आरम्भे कर्मणां विप्र पुण्डरीकं स्मरेद्धरिम्"। इति स्मृतिरपि प्राथमिकव्यापारोपक्रमं प्रारम्भमभिप्रैति ।

अत एव

त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम् ।

इत्युदाहृतम् । तत्रच प्रकृतस्य राज्ञो दर्शनार्थमुपक्रमः 'पश्यता' इति वर्तमानार्थेन शतृप्रत्ययेनपरिज्ञायते। तेनच उपक्रान्तेन व्यापारेण कल्पपादपस्याशक्यस्यावलोकनं जातमिति युज्यते विशेषालंकाररूपता।

**चित्रमीमांसा-**

**इत्यादौ व्यङ्ग्यरूपके चाव्याप्तिः ।**

**अत्रह्याद्ये वर्ण्यं प्रभुं प्रति रावणवधाय त्वया सेतुर्बद्धः इति निर्दिश्यमानेन वस्तुना त्वमेव रामः इति रूपकं व्यज्यते । नचतत्र विषये गौणं रामपदमस्ति ।**

-तत्त्वालोकः-

अत्रतु राज्ञो दर्शनारम्भस्य अशक्यवस्त्वन्तररूपकल्पवृक्षनिरीक्षणस्य वा अनभिधानात् कथं विशेषालङ्कारता इतिचेत्-उच्यते नचात्र वयं वाच्यो विशेषालंकार इत्यभिदध्मः । अपितु प्रतीयमान इति । विशेषालंकारस्यचास्त्यंशद्वयम् कस्यचिदारम्भः अन्यस्य कृतिः इति,अत्र चिरादिति पद्ये-राज्ञो दर्शनारम्भो नोपात्तः अपितु त्वय्यवलोकिते इति भूतेक्तेन अवलोकनस्य भूतत्वेनाभिधानात् व्यक्तः । अशक्यकल्पवृक्षनिरीक्षणकरणमुपात्तम् । अपितु कल्पवृक्षनिरीक्षणमनभिधाय तदीक्षणेच्छावतः नेत्रस्य साफल्यमात्रवर्णनाद्व्यक्तम्।

अतएवच विशेषलंकारस्य प्रतीयमानता द्वयोरप्यवाच्यत्वात् । एवंसति विभावना पर्यायोक्त-विशेषणां सङ्करः। इत्थं सति विशेषमात्रस्य प्रतीयमानत्वाभिधानमुत्तरत्र वक्ष्यमाणमुपलक्षणपरतया नेयम् ।

उक्तोदाहरणयोः व्यङ्ग्यरूपकेऽव्याप्तिरित्याह- **इत्यादाविति** । अव्याप्ति-मुपपादयति **अत्रेति** आद्ये सेतुरिति अनुपात्तोपमानके पद्येइत्यर्थः।

अयं भावः- वाच्यरूपके विषय्युपादानस्य आद्यातिशयोक्ताविव नैयत्ये सत्यपि व्यङ्ग्यरूपके तदभावात् -

निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः।
धारानिपातैः सह किंनु वान्तः चन्द्रोऽयमित्यार्ततरं ररासे ॥

इ यत्रेवात्रापि अप्रस्तुतसमारोपगमकस्य रावणवधोद्देशेन सेतुबन्धनरूप व्यापारस्योपादानात् युष्मदर्थे राज्ञि रामाभेदोगम्यते । नचात्रोपमानपदं विषयलक्षकं प्रयुक्तं यमालम्ब्य रूपकत्वमुदियादिति अव्याप्तिरिति ।

-चित्रमीमांसा-

**द्वितीये त्वामवलोकयता मम नेत्रेण चिरकांक्षितं कल्पवृक्षावलोकनं लब्धमिति प्रतियमानेन विशेषालंकारेण 'त्वमेवकल्पवृक्षः' इतिरूपकं व्यज्यते।**

-तत्त्वालोकः-

अन्यथा निरीक्ष्येत्यादिपद्येऽपि आरोप्यमाणपुरुषाऽसाधारण निरीक्षणधर्मोक्तिमात्रेण आरोपविषये आरोप्यमाणतादात्म्याभिव्यक्तिमभ्युपगम्य एकदेशविवर्ति-रूपकोदाहरणत्वोक्तिः प्राचाम् असंगता स्यात् । उक्तंच **सर्वस्वकृता** निरीक्ष्य....ररासे।। अत्र निरीक्षणानुगुण्याद्विद्युन्नयनैरिति रूपके पयोदस्य द्रष्टृपुरुषत्वरूपकमिति (अ.स.११३पु) अन्यथा रूपकध्वनेरुच्छेदापत्तेः । अतश्च **कण्ठाभरणोक्तं** रूपकलक्षणमव्याप्तिग्रस्तम् ।

एवं प्रतीयमानेन अलंकारेण यत्र रूपकध्वनिः तत्राप्यव्याप्तिः। यथा पूर्वोदाहृते चिरादिति पद्ये इत्युपपादयति **द्वितीय इति** ।

द्वितीये विषयालक्षकोपात्तोपमानके व्यङ्ग्यरूपके 'चिरात्' इतिपद्ये त्वां प्रकृतं राजानम् अवलोकयता अवेक्षमाणेन । **प्रतीयमानेनेति** । राज्ञो दर्शनारम्भस्य अदृश्यकल्पवृक्षदर्शनरूपवस्त्वन्तरकरणस्यच विशेषलंकारशरीरस्य स्फुटम् अनुपादानाद्विशेषालंकारस्य प्रतीयमानता। **रूपकमिति** । उक्तोदाहरणे विरोधमूलो विशेषालंकारः प्रतीयते । विरोधश्च राज्ञो दर्शने कल्पवृक्षावलोकनलाभ इति अयमंशोऽसंभावितः एवंविधस्योपनिबन्धो विरुद्धः । तथा सति-"विनायकं प्रकुर्वाणो रचयामास वानरम् " इतिवदसाङ्गत्यमेव (विरोधः) सच त्वमेवकल्पवृक्षइति रूपकेण निवर्तते ।

## -चित्रमीमांसा-

**तत्र कल्पवृक्षपदं प्रसिद्धकल्पवृक्षपरमेव, न विषयलक्षकमिति स्पष्टम् ।.**

## - तत्त्वालोकः-

नन्वत्र कल्पवृक्षपदमुपात्तमिति "यदोपमानेति" कण्ठाभरणोक्तलक्षणस्य रूपकध्वनौ नाव्याप्तिरित्यापाततः शङ्क्यमानं प्रत्याह- **तत्रेति।**

चिरादिति पद्ये इच्छामात्रगोचरत्वेनोपात्तं यत्कल्पवृक्षपदं तत् लक्षणया कल्पवृक्षसदृशाभिन्नं राजानं नाह । परंतु विषयिमात्रमेव। यतश्चात्र न कल्पवृक्षवृत्तिगुणवदभिन्नो राजेति बोधः । तथासति कल्पवृक्षावलोकनप्रयुक्तं साफल्यं नेत्रे वर्ण्यमानमसंगतं स्यात्।

नच- उक्तरीत्या कल्पवृक्षस्य राज्ञश्च तत्तद्रूपेणैव भाने कथं रूपकस्यापि व्यज्यमानता ? उपमेये उपमानाऽभेदादिभानाऽभावात् तद्भाने खलु रूपकतेति शङ्क्यम्, वाच्यतादशायां तथा अभानेऽपि दारिद्र्यमनुभवता विदुषा राज्ञस्समीपमागत्य तं प्रति स्वाभीप्सितकल्पवृक्षालोकनप्रयुक्तसाफल्यवर्णनरूपो यः प्रस्तावः तद्वैशिष्ट्यात् अद्येति राजभावावस्थाप्रतिपादककालवैशिष्ट्याच्च रूपकध्वनिर्निरुह्यत इति न तदर्थं कल्पवृक्षपदे लक्षणाश्रयणमावश्यकम् अशक्याच लक्षणाश्रयितुम् मुख्यार्थबाधाद्यभावात् इतिभावः।

इत्थंच उपात्तोपमानके अनुपात्तोपमानकेच व्यङ्ग्यरूपके अव्याप्तेरपरिहारात् **सरस्वतीकण्ठाभरणो**क्तमयुक्तमिति निरूपितम् । सम्प्रति सादृश्यप्रयुक्तः सम्बन्धान्तरप्रयुक्तो वा यावान् भिन्नयोः सामानाधिकरण्येन निर्देशः स सर्वोऽपि रूपकम् । सारोपलक्षणामूलकत्वस्य तुल्यत्वेन सादृश्यप्रयुक्त तादात्म्यस्येव सादृश्येतरकार्यकारणभावादिमूलकस्यापि तादत्म्यस्य रूपकत्वेन संगृहीतुम् औचित्यादिति अभिप्रयतां **विद्याधर-रत्नाकारादीनामनुरोधेन** शुद्ध

**चित्रमीमांसा-**

**ततः कुमुदनाथेन कामिनीगण्डपाण्डुना।**
**नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता॥**

**इति शुद्धसारोपलक्षणामूलरूपके चाव्याप्तिः। तत्र हि आनन्दहेतुत्वादानन्दत्वरूपणं नत्वौपम्यात्।**

**तत्त्वालोकः-**

सारोपलक्षणामूलकरूपकस्थले "यदोपमानेति" पूर्णलक्षणस्यैवाऽप्रसरात्तत्रापि अव्याप्तिरित्युपपादयितुमुदाहरति। ततइति।

महाभारतीयद्रोणपर्वस्थमिदं पद्यम् (द्रोण. द्रोणवध. पर्व १८४-४६)। ततः घटोत्कचवधानन्तरं द्रोणाभियाने सति रात्रियुद्धे प्राप्तेऽर्धरात्रसमये निद्राव्याकुलयोस्सैन्ययोरुभयोः चन्द्रोदयपर्यन्तं विश्रम्य पश्चात् संग्रामं साधयामः इत्यर्जुनवाक्यानुरोधेन निद्रामुपगतयोः सतोः कामिनीगण्डपाण्डुना कामिनीनां कपोलाइव श्वेतपीतेन, अत्र कामिनीगण्ड इव पाण्डुः इति विगृहीते "उपमानानि सामान्यवचनैः" (पा.सू.२-२-५५) इति समासः। नैत्रानन्देन नयनानन्ददायिना कुमुदनाथेन कुमुदानाम् अमृतकिरणप्रसारणद्वाराप्रीणयता चन्द्रेण चन्द्रमसा, माहेन्द्री पूर्वादिक् अलंकृता प्रसाधिता। "महेन्द्रो देवता अस्याः" इत्यर्थे "सास्य देवता" इत्यण्। अण्णन्तात् "टिड्ढाणञिति" (पा.सू.४-१-९५) ङीप्।

**शुद्धसारोपेति**- सदृश्येतरकार्यकारणभावादिसम्बन्धनिमित्ता सारोपलक्षणा शुद्धसारोपलक्षणेत्युच्यते। उक्तपद्ये च चन्द्रे नेत्रानन्दजनकत्वात् आनन्दत्वरूपणं क्रियते। तस्यच फलम् इतरवैलक्षण्यद्योतनम्। एवंचात्र न सादृश्य-मूलकमानन्दत्वरूपणं चन्द्रे क्रियत इति न चन्द्रानन्दयोः उपमानोपमेयभावः, इत्थं सति

"यदोपमानशब्दानां गौणवृत्तिव्यपाश्रयात्
उपमेयेभवेद्वृत्तिरिति" त्रयाणामप्यभावात् अव्याप्तिरिति अभिप्रायेणाह **तत्रहीति**।

## -चित्रमीमांसा-

**यत्तु आयुर्घृतम् इत्यादौ विच्छित्तिविशेषादर्शनात् शुद्दसारोपलक्षणास्थले न कश्चिदलंकारः इति। तदयुक्तम्।**

### तत्त्वालोकः-

तत्र हि 'ततः कुमुदनाथेनेति' पद्ये, हिः प्रसिद्धिं द्योतयति।

यद्वा तत्र हि चन्द्रे आनन्दहेतुत्वात्, हियत आनन्दजनकत्वं लोकसिद्धम् अतएव (चन्द्रे) कारणे आनन्दत्वरूपणं कार्यतादात्म्यं नतु औपम्यात् नतु सादृश्यमूलकात्। दृष्टश्चान्यत्र तादात्म्यारोपः" राजकीयः पुरुषः राजा" इन्द्रार्थास्थूणा इन्द्रः " अतक्षा तक्षा" इत्यत्र क्रमात् स्वस्वामिभाव- तादर्थ्य तात्कर्म्यैः तथा 'अग्रहस्तः' इत्यत्र अवयवावयविभावसंबन्धमूलकतया हस्ताग्रएव लक्षणया हस्तशब्दप्रयोगात् अग्र श्चासौ हस्तश्चेति समानाधिकरणसमासश्च। अतएव "हस्ताग्राग्रहस्तादयः गुणगुणिनो र्भेदाभेदात्" इति **वामनश्चाह** (का.सू. ७अ.२सू)

शुद्धसारोपलक्षणास्थले 'आयुर्घृतम्' इत्यादौ अन्यवैलक्षण्ये नाव्यभिचारेणायुष्करत्वाभिव्यक्तये आयुष्कारणमपि घृतं कार्यकारण-भावसम्बन्धसम्ब न्ध्यायुस्तादात्म्येन प्रतीयते अथापि न रूपकालंकारत्वम् चमत्कारविशेषाप्रतीतेः

इति **मम्मटादीनां** मतमपाकर्तुं तन्मतमनुवदति **यत्त्विति**। **इत्यादविति-**

आयुर्घृतं यशस्त्यागः भयं चोरः सुखं प्रिया।
वैरं द्यूतं गुरुर्ज्ञानं श्रेयः सत्तीर्थसेवनम् ॥

इतिपूर्णपद्यम्।

**नकश्चिदिति**। चिन्त्यमिदम् नेत्रानन्देनेत्यत्र**काव्यप्रकाशकृता** ...चकलुमोपमाया अभ्युपगमात् न निरलंकाराता किन्तुसादृश्या मूलक-...द्रूपकत्वाभावः।

एवंवादिनां मतमयुक्तमिति प्रतिपादयितुमुपक्रमते **तदयुक्तमिति**।

**-चित्रमीमांसा-**

**''गौर्वाहीकः'' इत्यादौ विच्छित्तिविशेषादर्शनेन गौणसारोपलक्षणा स्थलेऽप्यलंकारत्वाभावप्रसङ्गात्।**

**कचिद्वैचित्र्यादर्शनेऽपि अन्यत्र वैचित्र्यवति स्थले अलंकारत्वमिहापि वक्तुं युक्तम् नेत्रानन्देन चन्द्रेणेति।**

तत्त्वालोकः-

अयुक्ततायां हेतुमाह **गौर्वाहीक इत्यादाविति** । अयंभावः शुद्ध सारोपलक्षणास्थले विच्छित्तिविशेषादर्शनात् न कश्चिदलंकारः इत्युक्तम् तत्सत्यम्। 'आयुर्घृतम्'। इत्यादौ तथा दर्शनात् । तथैव भवदभिमते 'गौर्वाहीक' इत्यादिगौणसारोपलक्षणास्थलेऽपि विच्छित्तिविशेषादर्शनात् तत्राप्यलंकारता नस्यात्,

**यश्चोभयोः समोदोषः इतिन्यायात् ।**

यदितु 'गौर्वाहीकः' इत्यादिषु क्वचित् विच्छित्तिविशेषादर्शनेऽपि

'नाथ त्वदीयमकलङ्कमिदं मुखेन्दुम्'

इत्यादौ विच्छित्तिविशेषदर्शनाद्रूपकालंकारत्वमभ्युपेयत इत्युच्यते तदा क्वचिदन्यत्र वैचित्र्यवति अलंकारत्वस्य वक्तुं युक्तत्वात् यथा 'नेत्रानन्देन चन्द्रेण' इत्यादावपि **परिहरोऽपि तत्समः इतिन्यायादित्याह- क्वचिदित्यादिना**

अयं भावः- भवद्भिरिव अस्माभिरपि यत्र चमत्काराधिक्यं तत्रैव रूपकालंकारत्वमभ्युपगम्यते यत्रतु तन्नास्ति तत्र रूपकमेव नालंकारतेति ।

क्वचिच्छुद्धसारोपलक्षणास्थले विच्छित्तिविशेषदर्शनेऽपि नरूपकालंकारतेति कण्ठाभरणोक्तलक्षणस्य नाव्याप्तिरित्युच्यते चेत्तदपि नयुज्यते यतः शुद्ध सारोपलक्षणस्थलेऽपि रूपकालंकारत्वमभ्युपेत्य **एकावलीकृता** उदाहरणस्य उपन्यासादित्यभिप्रायेण उदाहरणान्तरमाह **आयुर्दानेति ।**

## -चित्रमीमांसा-

**आयुर्दानमहोत्सवस्य विनतक्षोणीभृतां मूर्तिमान्**
**विश्वासः नयनोत्सवो मृगदृशां कीर्तेः प्रकाशः परः ।**
**आनन्दः कलिताकृतिः सुमनसां वीरश्रियो जीवितं**
**धर्मस्यैष निकेतनं विजयते वीरः कलिङ्गेश्वरः ॥**
**इत्यादौ शुद्धसारोपलक्षणास्थलेऽपि वैचित्र्यदर्शनात् ।**

### तत्त्वालोकः

वीरः कलिङ्गेश्वरः कलिङ्गदेशाधिपतिः विजयते सर्वोत्कर्षेण वर्तते। पूर्वाज्जयतेः "विपूराभ्यांजेः" इत्यात्मनेपदत्वम् ।कीदृशः कलिङ्गेश्वर इत्याह **दानेत्यादिना ।** दानरूपमहोत्सवस्य आयुः जीवितहेतुःइत्यर्थः । विनताः करणत्रयसारूप्येण प्रह्वाः ये क्षोणीभृतः सामन्ताः तेषां मूर्तिमान् आकारविशेषतां प्राप्तः विश्वासः विस्रम्भहेतुः, मृगदृशां हरिणाक्षीणां नयनोत्सवः नेत्रानन्दकरः ,कीर्तेः यशसः परः श्रेष्ठः प्रकाशः प्रकाशनहेतुः, सुमनसां कलिताकृतिः आनन्दः, देवानां विदुषांच क्रोडीकृताकारेण आनन्दहेतुः । वीरश्रियः वीरलक्ष्म्याः जीवितं स्थितिमूलम्, धर्मस्य निकेतनमाश्रयः। अस्य कलिङ्गेश्वरः इत्यनेनान्वयः ।

अत्र आयुरादिशब्दानां तद्धेतौ राज्ञि विषयनिगरणं विना-सादृश्येतरकार्यकारणभावादिसम्बन्धं निमित्तीकृत्य प्रवृत्त्या सामानाधिकरण्यस्य विवक्षितत्वेन च शुद्धसारोपलक्षणामूलकः रूपकमलंकारः ।

इत्थंच शुद्धसारोपलक्षणास्थलेऽलंकारताप्रयोजकस्य वैचित्र्यस्य दर्शनात्, तत्स्थलेतुऽलंकारत्वाभावसाधकहेतोः (क्वचित्) पक्षैकदेशावृत्तितया स्वरूपासिद्धता बाधितत्वंच। प्रकृतोदाहरणेऽलंकारशून्यत्वस्याभावात् इत्युक्तं भवति।

पूर्वोक्तरीतिश्च हेत्वलंकारमनभ्युपगच्छतां **रत्नाकरादीनां** मतमनुरूध्येति बोध्यम्।

**यदितु-** सादृश्यमूलकाभेदइव कार्यकारणभावादिमूलकाभेदे ...मभ्युपगम्येत तदा चिन्तादिमूलकस्य स्मरणस्यापि अलंकारता अभ्युपेया

**चित्रमीमांसा-**

**यदितु ''हेतुमता सह हेतोरभिधानमभेदतो हेतुः''**

**इति मतान्तराश्रयेण तत्र हेत्वलंकारः नरूपकमिति अभ्युपगम्येत तदा 'आरोपविषयस्य स्यात्' इति पूर्वोदाहृतलक्षणस्य तत्राव्याप्तिः॥**

-तत्त्वालोकः-

भवेत्। तथा सति स्मृतिः सादृश्यमूलेति स्मरणे विशेषणोपादानप्रयासो विफलः स्यात्। अतः **रुद्रटाद्यनुरोधेन**-हेत्वलंकारताभ्युपेयते, तदा **कण्ठाभरणोक्त**लक्षणस्य शुद्धसारोपलक्षणास्थले अव्याप्तेरभावेऽपि **विद्यानाथोक्त** लक्षणस्याव्याप्तिरित्याह- **यदित्विति।** तुशब्दः शुद्धसारोपलक्षणास्थले रूपकव्यावृत्तिं दर्शयति। यत्तुकारोक्तशुद्ध सारोपलक्षणास्थलीयालंकारत्वाभाववादिमतमपि निराकरोति। **हेतुमतेति**।

**तदुक्तं रुद्रटेन**

हेतुमता सह हेतोरभिधानमभेदकृद्भवेद्यत्र।

सोऽलंकारो हेतुः स्यादन्येभ्यः पृथग्भूतः॥ (रु.७-८२ श्लो) इति।

**अस्यार्थश्च** हेतोः कारणस्य हेतुमता सह कार्येण सह अभेदतः अभिधानं सामानाधिकरण्येन निर्देशः हेतुः काव्यलिङ्गादिभ्यः अन्येभ्यः अलंकारेभ्यः पृथग्भूतः अतिरिक्तः हेतुर्नाम अलंकार इति। अयमेवालंकारः हेतुहेतुमतोरैक्यं हेतुं केचित्प्रक्षते"। इति **जयदेवेन-चन्द्रैलोके** लक्षितम्। **उद्भटस्तु** काव्यलिङ्गापेक्षया हेत्वलंकारस्य पार्थक्यं न प्रदर्शितवान्। अतश्च- **चन्द्रिकाकारेण** हेतुहेतमतोरिति प्रतीकमुपादाय केचित् भट्टोद्भटप्रभृतय इति व्याख्यातं चिन्त्यमेव।

**तत्रेति** नेत्रानन्देन "आयुर्दानमहोत्सवस्य" इत्युदाहरणयोरित्यर्थः **तदेति** अयं भाव"तद्रूपकमभेदो य उपमानोपमेययोः "।इति रूपकं लक्षयतः **प्रकाशकारस्य** लक्षणं परित्यज्य "आरोपविषयस्य स्यादिति" गौणशुद्धोभयविधसारोप-लक्षणामूलकलक्ष्यसंग्राहकतया लक्षणपरिष्कारेऽपि नाव्याप्तेः परिहारः। **नहि** रुद्रटादिवत् **विद्यानाथेन** हेत्वलंकारः अतिरिक्तः अभ्युपगतः इत्थं सति रूपकेणैव

## तत्त्वालोकः-

भाव्यम् स न स्यात् आरोपाभावात् ।

नच "नेत्रानन्देन" आयुर्दानेत्युभयत्रापि आरोपविषयस्य आरोप्यमाणस्य चोपादानादारोपविषयत्वमस्त्येवेति वाच्यम् सादृश्यातिरिक्तेन सम्बन्धेन यत्रान्यस्मिन् अन्यतादात्म्यारोपः तत्र शुद्धसाध्यवसानत्वमित्यभिप्रायात् । अत एव **कुवलयानन्दे** ग्रन्थकृतैव आयुर्दानमहोत्सवस्येत्युदाहृत्य अत्र दानमहोत्सवायुष्करत्वादिनाध्यवसिते राज्ञि तदायुष्ट्वादिव्यपदेशः इत्युपपादितः (कु.१६८ पु)

**यद्वा**-तदभेदप्रतिपत्तिरध्यवसायः इति मतेन अव्याप्त्यापादनम् ।

**वस्तुतस्तु**- 'आरोपविषयस्य स्यात्' इति **विद्यानाथीय**लक्षणस्य नाव्याप्तिः। यतः नेत्रानन्देनेत्यत्रआरोपविषयस्य चन्द्रस्य,आरोप्यमाणस्य आनन्दस्य चोपादानात्। तथा आयुरित्यत्रच राज्ञो विषयस्य आयुरादेर्विषयिणश्च उपादानात् आरोपस्य न कापि हानिः विषयविषयिणोरभिहितयोः अभेदप्रतिपत्तिः आरोपः इति यत् **विद्यानाथेन** काव्यप्रकरणे अभिहितम् । इत्थं सति क्वाव्याप्तेरवकाशः?। एवं ग्रन्थकृता च **कुवलयानन्दे**- 'आयुर्दानेति पद्ये' दानमहोत्सवायुष्करत्वादिना अध्यवसिते राज्ञि तदायुष्ट्वादिव्यपदेशः इत्युक्तः इति कथमनयोः सांगत्यमिति विवेचनीयम् ॥

**एतेन**-यत्कौस्तुभकृता-

भेदाविमौच सादृश्यात्सम्बन्धान्तरास्तथा ।
गौणौ शुद्धौ च विज्ञेयौ.........॥

इति **काव्यप्रकाशमुपादाय** सादृश्यातिरिक्तेन सम्बन्धेन यत्रान्यस्मिन् अन्यतादात्म्यारोपः सा शुद्धसाध्यवसानेति विवरणं **काव्यप्रदीप काव्यदर्पणादिग्रन्थाननुगुणम्** । यतश्च **काव्यदर्पणकृता-**

सारोपा तत्र यत्रोक्तौ विषयी विषयस्तथा ।
सारोपा द्विविधा ज्ञेया गौणी शुद्धेति भेदतः ॥

## -चित्रमीमांसा-

एवम्-

**"उपमैव तिरोभूतभेदा रूपकमुच्यते" ।**

**तद्रूपकमभेदो य उपमानोपमेययोः ॥ इत्यादि**

**लक्षणेष्वप्यातिव्याप्त्यादिदोषाः यथासंभवमुन्नेयाः ॥**

तत्त्वालोकः-

साद्दश्यात्मकसम्बन्धरूपा सा गौणीत्युदीर्यते ।
शुद्धा तदन्यसम्बन्धरूपा सातु निगद्यते ॥
मुखेन्दुर्नयनानन्दः तन्व्या विजयतेतराम् ।
निगीर्यविषयं यत्र विषय्येव निबध्यते ॥
तत्र साध्यवसाना स्यात् गौणी शुद्धेति साद्विधा ।
सरोजकाहलीरम्भा सैकताकाशभूधरैः ।
शङ्खेन्दुतिमिरैः सृष्टा वल्ली कामिजनोत्सवः ॥

इति स्पष्टं सारोपाध्यवसानयोः भेदस्य प्रदर्शितत्वात् ॥ शुद्धसाध्यवसानलक्षणा मूलकेन अतिशयोक्त्यलंकारेण शुद्धसारोपलक्षणामूलकस्य हेत्वलंकारस्य गतार्थत्वं यत्प्रतिपादितं तदप्यनादरणीयम् ॥

इत्थं -**विद्यानाथभोजराजकृत** रूपकलक्षणं दूषयित्वा ततोऽपि प्राचीनानां लक्षणं दूषयन् (स्थालीपुलाकन्यायेन) उपलक्षणविधया **दण्डिमम्मटयोः लक्षणेऽपि दोषाः** यथायथं उन्नेयाः इत्याह **एवमिति** ।

**उपमैवेति**-इदं लक्षणं दण्डिनः- । अस्यार्थश्च-सत्यामेव भेदप्रतीतौ साद्दश्यवशेन यत्र भेदांशविनिर्मुक्तं साद्दश्यं प्रतीयते तत्र रूपकमिति । "मुखं चन्द्रइव प्रकाशते" इत्यादौ भेदघटितसाद्दश्यं तदपेक्षया 'मुखंचन्द्रः' इत्यादौ तदघटितसाद्दश्यस्य चमत्कारातिशयाधायकत्वादिति तदभिप्रायात् ॥

**सत्यम्**-अथाप्युक्त लक्षणं "नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्"

## तत्त्वालोकः-

इति पर्यस्तापह्नुतौ अतिव्याप्तम् तत्र सुधांशौ सुधांशुत्वाभावारोपात् प्रेयसीमुखत्वारोपाच्च भेदः तिरोहितइति तादृशसादृश्यस्यैव चमत्कारित्वात्।

**यदितु**- आहार्यारोपस्य न भेदतिरोधायकत्वमित्युच्यते तदा बाहुलता पाणिपद्मम् इत्यादौ क्वापि रूपके लक्षणं नप्रसजतीत्यसम्भवः उत्प्रेक्षायामतिव्याप्तिश्चेति भावः।

एवं-"तद्रूपकमभेदो यः उपमानोपमेययोः" इति **काव्यप्रकाशकारोक्तं** लक्षणमपि अपह्नुत्युल्लेखादौ अतिव्याप्तम् तत्र उपमानोपमेययोः अभेदस्य अनुभव गोचरत्वात्। यथा "नेदं मुखं किन्तु चन्द्रः" गुरुर्वचसि अर्जुनोयं कीर्तौ,भीष्मः शरासने,इत्यादौ। तथा "नूनं मुखं चन्द्रः" इत्याद्युत्प्रेक्षायामतिव्याप्तं तत्रापि अभेदस्य भानात्, तादृशाभेदप्रतीतेश्च आहार्यत्वमेव मुखत्वादि धर्मोपस्थितेः।

**नच**-उत्प्रेक्षायां उपमेयेउपमानाभेद सम्भावनामात्रमिति नातिव्याप्तिरिति वाच्यम्। उपमेये उपमानभेदसंभावनायाः संभाव्यमानाभेदस्य वा उत्प्रेक्षायां वक्तुं शक्यत्वेन अतिव्याप्ति तादवस्थ्यात्।

परन्तु इदं लक्षणं "पश्य नीलोत्पलद्वन्द्वात् निरसरान्ति शिताश्शराः" इत्याद्यतिशयोक्त्युदाहरणे नेत्रद्वयस्य तेनपदेनोपादान मकृत्वा विषयि वाचकेनैव तेन ग्रहणात् विषयिण अपेक्षया भेदस्य सत्वेपि स भेदः निगीर्ण इति भेदतिरोधानम्नेत्रयोः नीलोत्पलसादृश्यंच प्रतीयत इति अतिशयौक्तावतिव्याप्तिः।

एवं "तद्रूपकमभेदोयउपमानोपमेययो " इति यत् **प्रकाशकृदुक्तं** तदपि अतिशयोक्तौ अतिव्याप्तम् -यथा-

कमलमनम्भसि कमले कुवलयम्, एतानि कनकलतिकायम्
साच सुकुमार सुभगेत्युत्पातपरम्परा केयम्"

अत्र कमल-कुवलय- कनकलतानां मुख-नेत्र नायिकापेक्षया भेदस्य अनुभवसिद्ध-त्वेपि अभेदे वर्ण्यमाने भेदः तिरोभवतीति।

एतेन "ततः कुमुदनाथेन कामिनीगण्ड पाण्डुना।
नेत्रानन्देन चन्द्रेण माहेनन्द्री दिगलंकृता॥

इत्यत्र केनचित् हेत्वलंकारे अतिव्याप्तेरापादनं नयुज्यते । यतस्तत्र सादृश्यमूलको नाभेदारोपः अपितु हेतुहेतुमद्भावमूलकः तत्र हेत्वलंकरस्य जागरुकत्वात् ः अस्मिंश्च काव्यप्रकाशीये लक्षणे उपमानोपमेययोः इतिनिवेशात् सादृश्यमूलकाभेद प्रतीतिस्थल एव तत्प्रसरात्।।

इति रूपकपूर्वपक्षः

## -चित्रमीमांसा-

## अथ रूपकसिद्धान्तः

**अत्र वदामः-**

**बिम्बाविशिष्टे निर्दिष्टे विषये यद्यनिह्नुते।**
**उपरञ्जकतामेति विषयी रूपकं तदा॥**

## -तत्वालोकः-

## -अथ रूपकसिद्धान्तः-

...द्धान्तंक्षयति **अत्रवदाम** इति बिम्बाविशिष्टे निर्दिष्टे अनिह्नुते च सति विषये ...षयी उपरञ्जकतां यदा एति तदा रूपकमिति योजना।

बिम्बाविशिष्टे साक्षात् विम्बप्रतिबिम्बभावापन्नधर्माघटिते सति, निर्दिष्टे ...मेयतावच्छेदरूपेण धर्मितावच्छेदकरूपेण वा अभिहिते सति,अनिह्नुते ...ह्नुतः निषेधविषयः अनिह्नुतः निषेधाविषयः तस्मिन् सति,विषये उपमेये धर्मिणि वा, ...षयी उपमानं, धर्म्यन्तरं वा उपरञ्जकताम् आहार्यताद्रूप्यनिश्चयगोचरताम् एति ...प्नोति तदा रूपकम्। रूपयति स्वस्वरूपेण रूपवन्तं करोति इत्यर्थे रूपवच्छब्दात् ...करोति तदाचष्टे" इति णिचि णौ इष्टवद्भावेन मतुब्लोपे टिलोपे रूपीत्यतो धातोः ...र ण्वुलि णेरनिटि (पा.सू. ६-४-५१) इति णिलोपे च सति रूपकशब्दनिष्पत्तिः। ...था लोके महारञ्जनरागेण पटः स्वस्वरूपेण रूपवत् क्रियते। तद्वत् विषयिरूपेण ...षयः रूपवान् क्रियते, परंतु अत्र रूपवत्करणं न वास्तवं, अपि तु आहार्यमिति ...शेषः। तथा च इदं निष्कृष्टलक्षणं-साक्षाद्बिम्बाविशिष्टोपात्तविषयधर्मिकनिषेधा ...आहार्य (आरोप) निश्चयविषयीभूतविषयभेदताद्रूप्या(न्यतरद्) रूपकम् इति। ...मिति "कारकम्" इति वन्नापुसंकोनिर्देशः। अस्मिल्लक्षणे बिम्बाविशिष्टत्वांशं ...इतरत्सर्वं प्राचीनैरुक्तमेव। उक्तं च -

अनपह्नुतरूपस्य विषयस्योपरञ्जनम्।
भवेत् विषयिणा यत्र रूपकं तत्प्रकीर्त्यते॥ इति

## -चित्रमीमांसा-

**बिम्बाविशिष्ट इति विशेषणात् "त्वत्पादनखरत्नानाम्" इति निदर्शनायां नातिव्याप्तिः।**

**तत्र हि चन्द्रो यथा स्वतश्शुभ्रत्वादनासञ्जनीयधावल्यः, तथा नखाः स्वतोऽरुणत्वादनासञ्जनीयारुण्याः इति सादृश्येन नखानां चन्द्रस्य च बिम्बप्रतिबिम्बभावः। अलक्तकचन्दनयोः अन्यत्र स्ववर्णासञ्जकत्वेन। ततश्च तत्र बिम्बभावापन्ननखालक्तकविशिष्ट एव रञ्जने तत्प्रतिबिम्बभूतचन्द्रचन्दनविशिष्टपाण्डुरीकरणमुपरञ्जकम्॥**

## -तत्त्वालोकः-

अथ प्राचीनानां लक्षणेषु येये दोषाः ते सर्वे उक्तलक्षणकरणेन निवारिता इति प्रदर्शयितुं लक्षणघटकं बिम्बाविशिष्टत्वविशेषणं सार्थकयति- **बिम्बाविशिष्टे इतीति।**

उक्तप्रत्युदाहरणे बिम्बभावापन्नधर्मविशिष्ट एव विषये तत्प्रतिबिम्बभूत धर्मविशिष्टस्यैवोपरञ्जकत्वं नकेवलस्येति अतिव्याप्तिपरिहारप्रकारमुपपादयति **तत्रहीति।**

अयं भावः प्रायशः सर्वेषामलंकाराणां न्यूनपदार्थेषु अन्यूनतामभिधातुम् उत्कर्षमभिधातुं वा प्रवृत्तिः। नच-

त्वत्पादनखरत्नानां यदलक्तकमार्जनम्।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः॥

इति पद्ये नखालक्तकविशिष्टरञ्जने चन्द्रचन्दनविशिष्टपाण्डुरीकरणाभेदवर्णनेन पूर्वोक्तरञ्जनरूपे उपमेये कश्चिदुत्कर्षः प्रतीयते। प्रत्युत तादृशमार्जनेऽपकर्षएव। यतश्च नखानां स्वत एव निर्मलत्वात् तत्र अलक्तकमार्जनं पिष्टपेषणवद् वृथैव इत्यत्र तात्पर्यात्, यथैव स्वतः पाण्डुरस्य चन्द्रस्य श्रीखण्डलेपेन धावल्यसंपादनव्यापारो वृथा तथेति।

## -तत्त्वालोकः-

**यद्यपि**-नखकर्मकमार्जनधर्मिकपाण्डुरीकरणाभेदबोधस्य मार्जन-विशेषणीभूतनखोत्कर्षपर्यवसायित्वमस्त्येव **अथापि**-नखानामुपमेयत्वमत्र न विवक्षितम् अपितु मार्जनस्यैवेति तत्र कस्याप्युत्कर्षस्याप्रतीत्या रूपकालंकारस्यैवाप्रसक्तेः। तथा चात्र यथोक्तमार्जनेयथोक्तपाण्डुरीकरणाभेदमभिहितं सत् उपमेयस्याप्रयोजकत्वपर्यवसायिनीमुपमां परिकल्पयति। अत एव-'

अभवन् वस्तुसंबन्ध उपमापरिकल्पकः निदर्शना।

इति **प्रकाशकारः**। यथा वा **प्रकाशकृदुदाहृते**

क्व सूर्यप्रभवो वंशः क्वचाल्पविषया मतिः।
तितीर्षुः दुस्तरं मोहादुडुपेनास्मि सागरम्॥

इत्यत्र व्याख्यास्यता **प्रदीपकृता**-अत्र,अहं सागरं तितीर्षुः अस्मि इत्यस्या सम्बद्धार्थकतया उडुपेन सागरतरणवत् मदीयमत्या सूर्यवंशवर्णनमसंभावितमित्यु-पमायाः कल्पनम् इति, तद्वदेवात्रापि चन्द्रो यथा स्वतश्शुभ्रत्वादना-सञ्जनीयधावल्यः तथा नखाः इत्याद्युपपादनानुरोधेन अलक्तकसंबन्धे नैरर्थक्यप्रतिपादन एव तात्पर्यम्। अतश्च नात्र वाक्यार्थरूपकस्य प्रसक्तिः उपमेयवाक्यार्थे उपमानवाक्यार्थे-समारोपकृतोपमेयोत्कर्षाविभावनात् इति तात्पर्यमुन्नेतुं शक्यम्।

**अतएव-सर्वस्वकारादयः**-'त्वत्पादनखरत्नानां यदलक्तकमार्जनम्' इति निदर्शनामुदाहृतवन्तः। उपपादितश्च **सर्वस्वकृता** यत्र च प्रकृते वाक्यार्थे वाक्यार्थान्तरमारोप्यते सामानाधिकरण्येन तत्र सम्बन्धानुपपत्तिमूला निदर्शनैव युक्ता न दृष्टान्तः इति। (अ.स.९९ पु)

एवं स्थितेऽपि यत् **विमर्शिनीकारेण**-'त्वत्पादनखरत्नानाम्' इति व्याख्यावसरे प्रकृतवाक्यार्थे वाक्यार्थान्तरस्य सामानाधिकरण्येना-रोप्यमाणत्वात् इत्युक्त्वा अन्यैः वाक्यार्थयोः सामानाधिकरण्यनिर्देशात् समारोपसद्भावेन वाक्यार्थरूपकं यदुक्तं तत्तावदास्ताम् इति परमतानुरोधेन वाक्यार्थरूपकत्वमिष्टमिति सूचितम्।

## -तत्त्वालोकः-

तदपि मन्दम् । यत उपमेये उपमानाभेदारोपमात्रस्य प्रकृतवाक्यार्थे वाक्यार्थान्तरारोपस्यवा नरूपकालङ्कारताप्रयोजकत्वम्, अपितु उपमेयोत्कर्षप्रयोजकोपमानाभेदारोपस्य, त्वत्पादनखेत्यत्र वाक्यार्थाभेदारोपमात्रस्य चमत्काराजनकत्वात् मार्जनादिवैयर्थ्ये पर्यवसानम् । एतेन-'यद्यत्र मुखंचन्द्रः' इत्यादिरूपकान्तर'इव सत्यपि श्रौतारोपे नेदंरूपकम् अपि तु निदर्शनेत्युच्यते तदा "मुखंचन्द्र" इत्यपि निदर्शनेत्युच्यतां निरस्यतां च रूपकदाक्षिण्यकौपीनम् इति **विमर्शिनीकारानुयायिना चित्रमीमांसाखण्डनकृता** यद्‌दूषितंतदयुक्तमित्यवधेयम्।

**किञ्च-** दृष्टान्तदर्ष्टान्तिकयोः वैजात्यात्। दृष्टान्ते" मुखंचन्द्रः" इत्यादौ मुखे चन्द्रतादात्म्यारोपस्य उपमेयोत्कर्षकत्वं यथा प्रतीयते तथा न त्वत्पादनखेति पद्ये उपमेये मार्जने तत्प्रतीयते। अतश्च खण्डनकृता उपात्तो दृष्टान्तः दार्ष्टान्तिकश्चाननुगुण इति बोध्यम्।

यदपि **रसगंगाधरे** वाक्यार्थे विषये वाक्यार्थान्तरस्यारोपं वाक्यार्थरूपकमिति लक्षयित्वा-

आत्मनोऽस्य तपोदानैर्निर्मलीकरणं हि यत्।
क्षालनं भास्करस्येदं सारसैस्सलिलोत्करैः ॥

इत्युदाहृतं तत्रापि न वाक्यार्थरूपकंभवितुमर्हति , अपि तु "त्वत्पादनखरत्नानाम्" इत्यादाविव तपोदानकरणकात्मकर्मकनिर्मलीकरणरूपे उपमेयवाक्यार्थे सारससलिलव्रातकरणकभास्करकर्मकक्षालनरूपोपमानवाक्यार्थारोपेण अभेदप्रतीतावपि तावन्मात्रस्य चमत्कारातिशयाधायकत्वाभावात् न रूपकताप्रसक्तिः। अतएव भास्करस्य यथा स्वतोनिर्मलत्वात् सारससलिलैः क्षालनं व्यर्थं, तथा स्वतो जीवस्य निर्मलस्य तपोदानादिभिर्निर्मलीकरणं व्यर्थमिति सादृश्यं परिकल्प्य अन्वयबोधः पर्यवस्यतीति निदर्शनैव युक्ता ॥

अत्र शोधकत्वरूपसामान्यधर्मसंबन्धेन तपोदानानां सारससलिलोत्कराणां च बिम्बप्रतिबिम्बभावः। ततश्च बिम्बभावापन्नतपोदानविशिष्टात्मविशिष्टे निर्मलीकरणे तत्प्रतिबिम्बभूतसलिलोत्करविशिष्टभास्करविशिष्टक्षालनमुपरञ्जकम्। आत्मनि

## -तत्त्वालोकः-

तपोदानयोर्वैशिष्ट्यं करणतासंबन्धेन, निर्मलीकरणेचात्मनः कर्मतासंबन्धेन, तथा भास्करे सलिलोत्करवैशिष्ट्यं करणतासंबन्धेन निर्मलीकरेणचात्मनः कर्मतासंबंन्धेन, तथा भास्करे सलिलोत्करवैशिष्ट्यं करणतासंबंन्धेन, भास्करस्य क्षालने कर्मतासंबन्धेनेति बोध्यम्।

'बिम्बाविशिष्टे इत्यनेन शुद्धबिम्बप्रतिबिम्बभावापन्नधर्माघटिते इत्यर्थस्य ग्रन्थकृदभिमतत्वात्' "त्वत्पादनखरत्नानाम्" इत्यादिवस्तुप्रतिवस्तुभावापन्न धर्माघटितबिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टनिदर्शनाव्यावृत्तिः।**नचैतावता वाक्यार्थरूपकाव्याप्तिः** वस्तुप्रतिवस्तुभावापन्नधर्मविशिष्टयोर्धर्मयोर्यत्र बिम्बप्रतिबिम्बभावः तादृशधर्मविशिष्टयोः ऐक्यरोपे (अभेदारोपे) वाक्यार्थरूपकत्वस्य इष्टत्वात्। यथा वा **विमर्शिन्यां-**

कन्दर्पद्विपकर्णकम्बु मलिनैर्दानाम्बुभिर्लाञ्छितं
संलग्नाञ्जनपुञ्जकालिमकलं गण्डोपधानं रतेः।
व्योमानोकहपुष्पगुच्छमलिभिः संछाद्यमानोदरं
पश्यैतत् शशिनस्सुधासहचरं बिम्बं कलङ्काङ्कितम्॥

चन्द्रोदयसमये नायको नायिकामामन्त्र्य उदीयमानं चन्द्रबिम्बं विशिंषन्नाह- कन्दर्पेति।

मलिनदानोदकांकितकामदेवध्वजस्तम्बेरमकर्णालङ्कारशंखरूपताम्, नेत्र [illegible]मकज्जलमलिनकामदेवप्रियाकपोलविन्यसनीयलघूपबर्हरूपताम्, द्विरेफ [illegible]वृतान्तरालान्तरिक्षतरुकुसुमस्तबकरूपतां चोपगतं सुधाधवलं [illegible]श्यमानमालिन्यम् इन्दुबिम्बमवलोकयेत्यर्थः॥

अत्र इन्दुबिम्बरूपेउपमेये कम्बु-गण्डोपधान-पुष्पगुच्छ -रूपोपमान [illegible]समारोप्यते। तत्र उपमेयविशेषणकलंकादीनाम् उपमान-विशेषणदानाम्ब्वादिभिः [illegible] बिम्बप्रतिबिम्बभावः। सच अङ्कितत्वलाञ्छितत्वरूपवस्तुप्रतिवस्तु-[illegible]पन्नधर्मविशिष्टयोरिति वस्तुप्रतिवस्तुभावापन्नधर्मविशिष्टबिम्बप्रतिबिम्ब-[illegible]पन्नधर्मविशिष्टयोरेकत्र अन्यस्य आरोपे (विशिष्टरूपकस्य) वाक्यार्थरूपकस्य [illegible]त्वात् इत्यभिप्रायात्। अत एव-

## -तत्त्वालोकः-

ग्रन्थकृता वाक्यार्थरूपकं न निराकृतम्। **"अप्रतिषिद्धमनुमतं भवतीति" न्यायात्** एतादृशोदाहरणानां संग्राह्यत्वेन वाक्यार्थरूपकोच्छेदप्रसक्त्यभावात् । यद्वा मालानिरवयवस्येदमिदमुदाहरणं भवितुम् अर्हत्येवेति वाक्यार्थरूपकाभावेऽप्यदोषात्।

**एतेन**-'त्वत्पादनखरत्नानाम् 'इत्यत्र पदार्थनिदर्शनां निरस्य वाक्यार्थ-निदर्शनाभ्युपगमे वाक्यार्थरूपकोच्छेदापत्तेः इति भीतिप्रदर्शनं **रसगंगाधरकृता** कृतं नातीव समञ्जसम्।

**किञ्च- पण्डितराजेन** वाक्यार्थरूपकस्य "आत्मनोऽस्यतपोदानैः" इति यदुदाहृतं तदपि न युक्तम्। ' मुखं चन्द्र' इतिवत्उपमानोपमेययोः वास्तविकोभेदः अपेक्षितः। अन्यथा "चन्द्रः चन्द्रः" इत्यादीनामपि रूपकतापत्तेः।तथा च "आत्मनोऽस्य तपोदानैः" इति पद्ये निर्मलीकरणे क्षालनतादात्म्यारोपेऽपि न रूपकत्वं घटः कलशः इतिवत् निर्मलीकरणक्षालनयोः भिन्नपदत्वेऽपि अर्थभेदाभावात्।

**नच** आत्मकर्मकं तपोदानजन्यनिर्मलीकरणमन्यत् भास्करकर्मकसलिलजन्य-क्षालनमितरदितिवाच्यम्, विशेष्यस्य अभिन्नत्वेऽपि विशिष्टभेदस्य विशेषणभेद एव पर्यवसानम् न पुनः विशेष्यभेदेसति इति रूपकताया एवाभावे कुतः पुनर्वाक्यार्थरूपकतायाः प्रसक्तिरित्यन्यदेतत्।

**एतेनैतदुक्तंभवति**-यत्र शुद्धबिम्बप्रतिबिम्बभावापन्न धर्मविशिष्टयोः ऐक्यारोपे निदर्शना। वस्तुप्रतिवस्तुभावापन्नधर्मघटितबिम्बप्रतिबिम्ब भावापन्नवस्तु-विशिष्टयोरैक्यारोपे रूपकमिति।

**कौस्तुभकृता** तु वाक्यर्थरूपकं निराकृतमेव। "त्वत्पादनखरत्नानाम्" इति पद्ये **काव्यदर्पणकृतापि** निदर्शनैवाभ्युपगता।

**यद्यपि**-विशिष्टयोर्धर्मिणोरैक्यारोपः वाक्यार्थवृत्तिनिदर्शनेतिमुद्रित **कुवलयानन्दानुरोधेन** आपाततः-"त्वत्पादेति" पद्येऽलक्तकचन्दनयोः नखादिधर्मि-गतत्वेन धर्मत्वं, स्ववर्णासञ्जकत्वेन सादृश्यं च संभवतीति बिम्बप्रति-

## -तत्त्वालोकः-

बिम्बभावस्वरूपयोग्यतासत्त्वेऽपि नतयोर्बिम्बप्रतिबिम्बभावः। "वस्तुतोभिन्नयोरप्युपमानोपमेयधर्मयोः परस्परसादृश्यादभिन्नयोः पृथगुपादानं हि बिम्बप्रतिबिम्बभावः"। प्रकृते च मार्जनपाण्डुरीकरणयोः खलु ऐक्यमारोप्यते तद्वृत्तित्वं च नालक्तकचन्दनयोः अपि तु नखचन्द्रयोरिति प्रकृतलक्षणमव्याप्तम्।

**किञ्च-** अत्र धर्मयोरैक्यारोपः नतुधर्मिणोः यतश्च रंजनपाण्डुरीकरणे धर्मत्वेनाभिमते तयोः नखचन्द्रवृत्तित्वसंभावनात् इति प्रतीयते।

**यदितु-** विशिष्टयोः धर्मयोः ऐक्यारोपो वाक्यार्थवृत्तिनिदर्शनेति पाठोऽनुरुध्यते तदापि रञ्जन-पाण्डुरीकरणयोः धर्मत्वेऽपिविशिष्टधर्मत्वं न संभवतीति अव्याप्ति तादवस्थ्यम्, **इतिचेन्न-** धर्मशब्देन प्रकारभूतस्य, धर्मिशब्देन विशेष्यस्य चाभिधानात्। तथाच"त्वत्पादेति-पद्ये"(रञ्जन )मार्जन-पाण्डुरीकरणयोरेव धर्मित्वं विशेष्यतया भानात् तयोश्च प्रकारतया नखानां चन्द्रस्य,अलक्तस्य श्रीखण्डचन्दनस्य च भानामित्यदोषात्। विशिष्टयोरुपमानोपमेयभावे तद्विशेषाणाम् **अरुणाधिकरणन्यायेन** उपमानोपमेयभावः विद्यत एव अन्यथा नखचन्द्रयोः अलक्तकचन्दनयोश्च बिम्बप्रतिम्बभावोऽपि नोपपद्येत बिम्बप्रतिबिम्बभावे यथाकथंचित्साधर्म्यप्रतीतेः अपेक्षितत्वादिति ग्रन्थकृतैव उपमाप्रकरणे स्फुटमभिधानेनअव्याप्तेरभावात्।

**किञ्च-**द्रव्यस्य धर्मित्वमेव गुणादीनां धर्मत्वमेवेति, किमस्ति निर्बन्धः? तथाहि-"दण्डी देवदत्तः" इत्यादौ दण्डस्य प्रकारत्वेऽपि द्रव्यत्वात् धर्मत्वं न ...तः विशेषणानां धर्मत्वं, विशेष्यस्य धर्मित्वमित्येवः इति वक्तव्यम्।

**अपरंच-** धर्माणामपि कदाचिद्धर्मित्वमस्त्येव शब्दवाच्यत्वात्।धर्मरहितस्य ...तगोचरत्वायोगात् सर्वधीशब्दानां विशिष्टविषयत्वं बाह्यानामपि सम्मतमेव। ...व्यादीनां पक्षवृत्तित्वेऽपि पक्षधर्मतारूपधर्मवत्त्वं हेत्वादीनां स्वीकार्यमेव अन्यथा ...नासिद्धिप्रसङ्गात्, इत्थंच रञ्जन-पाण्डुरीकरणयोः धर्मित्वेन विवक्षायां ...न्द्रादीनां धर्मत्वं नापोहितुं शक्यम्।

## -तत्त्वालोकः-

एतेन- 'विशिष्टयोः धर्मिणोरैक्यारोपो वाक्यार्थनिदर्शनेति **रसिकरञ्जनी-कारादृतपाठे** -

'यद्दातुः सौम्यता सेयं पूर्णेन्दोरकलंकता।

इत्यत्र विशिष्टयोरिति पदेन बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टयोः इति मूलानुरोधे बिम्बप्रतिबिम्बभावापन्नौ यौ धर्मौ सौम्यताकलंकतारूपौ तद्विशिष्टौ यौ धर्मिणौ दातृपूर्णेन्दुरूपौ तयोरैक्यारोपो नास्ति किन्तु धर्मयोः ''इत्यव्याप्तिः इति **चन्द्रिकाचकोरकारैः**(कु.च.च.८३पु)अभ्यधायि तच्चिन्त्यम्।

यतश्चात्र ''दातृपुरुषसौम्यत्वस्योपमेयवाक्यार्थत्वेन, पूर्णेन्द्वकलंकत्वरूप वाक्यार्थस्योपमानवाक्यार्थत्वेन, तयोः यत्तद्भ्याम् ऐक्यारोपस्य स्फुटं ग्रन्थकृतैवोपपादनाच्च दातृपुरुषस्य, पूर्णेन्दोश्च एकरूपत्वेनावस्थानादिरूपसमान धर्मसम्बन्धेन बिम्बप्रतिबिम्बभावः। न पुनस्सौम्यत्वाकलंकत्वयोः। तयोः खलु अत्रैक्यारोपमात्रं क्रियते, तथा च विशिष्टयोः बिम्बप्रतिबिम्बभावापन्न दातृपुरुष-पूर्णेन्दुरूपधर्मविशिष्टयोः धर्मिणोः विशेष्यतया भासमानयोः सौम्यत्वाकलंकत्वयोः मध्ये दातृपुरुषसौम्यतायां पूर्णेन्द्वकलंकतायाः ऐक्यारोपान्निदर्शनेति अव्याप्तेः गर्भस्रावेण गलितत्वात्।

**एवं-रसिकरञ्जनीपाठानुरोधेन-**

राजसेवा मनुष्याणामसिधारावलेहनम्।

पञ्चाननपरिष्वङ्गःव्यालीवदनचुम्बनम्॥

इत्यत्रापि नाव्याप्तिः तथा हि- विशिष्टयोः इत्यनेन राज्ञः उपमेयकोटि प्रविष्टस्य असिधारा-पञ्चानन-व्यालीवदनानाम् उपमानकोटिप्रविष्टानां च अशक्यत्व-बलवदनिष्टजनकत्वरूपसाधारणधर्मेण प्रतीतेन बिम्बप्रतिबिम्बभावः। तद्विशिष्टौ यौ धर्मिणौ सेवा-वलेहने, सेवा-परिष्वङ्गे, सेवा-चुम्बने, तयोर्मध्ये राजसेवायाम-सिधारावलेहनादीनामैक्यारोपोऽस्त्येवेति वाक्यार्थनिदर्शनात्वम् अक्षतमेव॥

## -तत्त्वालोकः-

एवम्-

त्वयि सति शिव दातर्यस्मदभ्यर्थितानां
इतरमनुसरन्तो दर्शयन्तोऽर्थिमुद्राम्।
चरमचरणपातैर्दुग्रहं दोग्धुकामाः
करभमनुसरामः कामधेनौ स्थितायाम्।

इतिपद्ये,

"दोर्भ्यामब्धिं तितीर्षन्तः" "तुष्टुवुस्ते गुणार्णवम्"

इति पद्ये च नाव्याप्तिः।

आद्ये- शिवस्थितिकालिकेतरानुसरणकर्तरि, कामधेनुस्थिति कालिककरभानु-सरणकर्तुः ऐक्यं प्रतिपाद्यम्, तत्र कामधेनुःयथा इष्टार्थप्रदा तथा ईश्वरोऽपि इष्टार्थप्रदः इति सादृश्येन कामधेनोः ईश्वरस्य च बिम्बप्रतिबिम्बभावः, इतरस्य करभस्य च इष्टार्थप्रदत्वाभाववत्त्वेन सादृश्यात् बिम्बप्रतिबिम्बभावः ततश्च बिम्बभावापन्नेश्वरसत्तासमानकालिकेतरविशिष्टानुसरणकर्तरि, तत्प्रतिबिम्ब-भूतकामधेनुसत्तासमानकलिककरभविशिष्टानुसरणकर्तृत्वमारोप्यत इति वाक्यार्थनिदर्शना अक्षतैव।

एवं द्वितीये-त्वद्गुणस्तोतारः दोर्भ्यामब्धिं तितीर्षवः इति स्तोतॄणां तरणेप्सूनां साम्यं प्रतिपिपादयिषितम्। तत्र स्तोत्र-तरणयोः, गुणार्णवाब्ध्योः प्रकारभूतयोः बिम्बप्रति बिम्बभावः, एकजातीयप्रयत्नजन्यत्वम् अशक्यत्वं च साधारणधर्मः। एवं च न क्वाप्यव्याप्तिरिति **चन्द्रिकाचकोरकारैः** समीचीनाया अपि चन्द्रि कायाः खण्डनार्थमुद्यमः किमर्थ ? इति न जानीमः।

## चित्रमीमांसा

**एवमन्यत्रापि ''अरण्यरुदितं कृतम्'' इत्यादि ताद्रूप्यारोपवन्निदर्शनोदाहरणे सर्वत्र बिम्बविशिष्ट मुपमानमुपरञ्जकमिति न क्वाप्यतिव्याप्तिः।**

### तत्वालोक :-

अत एव- पदार्थवृत्तिनिदर्शनां लक्षयित्वा'' वियोगे गौडनारीणाम् ''इत्यत्र मूलोक्तोदाहरणापेक्षया वैलक्षण्यं प्रदर्श्य, स्वप्रदर्शिते( वियोगे गौडनारीणाम्) इतिपद्ये- ''यद्यपि वियोगे गौडनारीणामिति इतिश्लोकः प्राचीनैः वाक्यार्थवृत्तिनिदर्शनायामुदाहृतः तथापि'' विशिष्टयोः धर्मिणोरैक्यारोपो वाक्यार्थनिदर्शनेति ग्रन्थकृतैवाभिहित : अत्र च विशिष्टयोः धर्मिणोः इत्यत्र धर्मिपदं धर्मस्याप्युपलक्षणमिति **रसिकरञ्जनीकारेण** न व्याख्यातम्, अथापि उत्तरत्र 'वाक्यार्थयोः सदृशयोरिति लक्षणवाक्ये' वाक्यार्थशब्देन विम्बप्रतिबिम्बबावापन्नवस्तुविशिष्टस्वरूपयोः प्रस्तुताप्रस्तुतधर्मयोः विवक्षितत्वादिति **कुवलयानन्दव्याख्यासमये** परं प्रस्तुताप्रस्तुतधर्मयोरित्यत्र धर्मत्वमविवक्षितम्। धर्मिणोः ऐक्यारोपेऽपि समनन्तरोदाहरणद्वये निदर्शनाभ्युपगमात् इत्युक्तत्वज्ज्ञायते (रसि ९२ पु)। एवं व्याख्याया अकरणेऽपि प्रस्तुताप्रस्तुतधर्मयोरित्यस्य प्रस्तुताप्रस्तुतौ धर्मौ ययोः ताविति बहुव्रीह्याश्रयणेन प्रस्तुताप्रस्तुतधर्मिणोरपि ग्रहणसंभवेन उभयोस्सङ्ग्रहादित्यलम्।

एवं शुद्धायां निदर्शनायामतिव्याप्तिं परिहृत्य मालानिदर्शनायामपि नातिव्याप्तिरित्युपलक्षणमिदमित्याह **एवमन्यत्रापीति**। एवं '-त्वपादनखेत्यत्र' यथा अलक्तक करणकनखकर्मकमार्जनरूपे बिम्बभावापन्नवस्तु विशिष्ट एवोपमेये वाक्यार्थे, श्रीखण्डलेपकरणकविधुकर्मकपाण्डुरीकरणरूपतत्प्रतिबिम्बविशिष्ट : उपमानवाक्यार्थः उपरञ्जकः तथेत्यर्थः । अन्यत्रापि अस्य निदर्शनोदाहरणे इत्यनेनान्वयः। क्वान्यत्रेत्याशङ्कायामाह- **अरण्येति**।

अरण्यरुदितं कृतं, शवशरीरमुद्वर्तितम्
स्थलेऽब्जमवरोपितं, सुचिरमूषरे वर्षितम्।

## तत्त्वालोकः-

श्वपुच्छमवनामितं, बधिरकर्णजापः कृतः

धृतोऽन्धमुखदर्पण : यदबुधो जनः सेवितः।

अबुधः अविद्वान् जनः सेवितः उपासितः इति यत् अबुधजनसेवेति यत् तत् अरण्यरुदितं कृतं कृतारण्य रोदनाभिन्नम्, अरण्ये रोदने कृतेऽपि तस्य यथाऽसमाधायकत्वं तदिव इयं सेवाऽपि रोदनहेतुदुःखपरिहारद्वारा समाधानाय न प्रभवेत् रोदने श्रुते खलु जनः समाधत्ते। अरण्ये कृतं रोदनं यथा जनो न श्रृणोति तद्वत् अबुधोऽपि जनः सेवोद्देशं न जानातीत्यर्थः।

एवमबुधो जनः सेवितः इति यत् तत् शवस्य जीवापेतस्य शरीरम् उद्वर्तितं यव-गोधूमादि चूर्णेन मलापकर्षणं कृतम्, अथापि कृतमलापकर्षणं मृतशरीरं किञ्चित्कर्तुं न हि प्रभवति, यद्वा मृतशरीरे उद्वर्तितेऽपि जीवापनयनात्पूयत्येवेति तस्योद्वर्तनमप्रयोजकमेव तथा उक्तसेवापि।

एवमबुधो जनः सेवित इति यत् तत् स्थले- निर्जलप्रदेशे, अप्सु जायते अब्जम्-कमलम् अवरोपितम् अवरोपणकर्मतांगतं, जलजस्य कमलस्य स्थलेऽवरोपणे कृतेऽपि तस्य अनुत्थानवत् तत्सेवया सेवकस्योत्थानं नास्ति इति अबुधजनसेवायाः निर्जलप्रदेशे अब्जावरोपणस्य च एकरुपत्वमिति यावत्।

एवमबुधोजनः सेवितः इति यत् तत् सुचिरं-चिरकालं ऊषरे-क्षारप्रदेशे वर्षितम्-अंकुरायोग्यक्षारप्रदेशेमुक्तंजलम् वृष्टौसत्यामपि यथा न केवलमनुत्थितिः किन्तु स्वरूपनाशः,तद्वदेव अबुधजनसेवया सेवकस्य न अनुत्थानमेव परं स्वरूपनाशोऽपि इति तदुभयमेकमेवेति यावत्।

एवमबुधो जनः सेवित इति यत् तत् श्वपुच्छावनामनमेव यतः स्वभावत एव कुटिलः श्वपुच्छस्य अवनामने पुनरपि कौटिल्यं न सः परित्यजति तथा अबुधोजनः सेवकस्य सत्सेवया स्वकीयमनार्जवं नत्यजति अतश्च तत्सेवा न कस्मा अपि फलायेति तादृशसेवा श्वपुच्छावनामनं चैकमेव।

एवमबुधो जनः सेवितः इति यत् तत् बधिरस्य श्रोत्रन्द्रियरहितस्य कर्णयोः

## तत्त्वालोकः-

समीपे जापः प्रलापः कृतइत्यर्थः। यथा बधिरकर्णजापे कृतेऽपि सदुत्तरं नोपलभ्यते तथा। अबुधजने सेविते सेवकस्य सदुत्तरं नोपलभ्यते।

एवमबुधजनसेवा अन्धस्य मुखदर्पणं धृतमपि यथा स्वमुखगतसौन्दर्या-सौन्दर्यज्ञानाय न भवति तद्वत् इयमपि (सेवा) तस्य स्वरूपपरामर्शाय न भवति इति भावः। एवं चात्र यथा अरण्यरोदनादीनां स्वतः रोदितृप्रभृति चित्तसमाधानादि प्रयोजकत्वं न भवति तथा अबुधजनसेवापि सेवकजनचित्ताराधनाय न भवतीति अरण्य-शवशरीर स्थलकमलोषर-श्वपुच्छ- बधिरान्धानाम् अबुधस्य च बिम्बप्रतिबिम्बभावः ततश्च बिम्बभावापन्नारण्यादिविशिष्ट एव रोदने उपमेये तत्प्रतिबिम्बभूताबुधजनविशिष्ट सेवारूपोपमानमुपरञ्जकम्।

**विशेषस्तु** - अबुधजनसेवारूपे एकस्मिन् वाक्यार्थे अरण्यरोदनादीनां वाक्यार्थानां बहूनामध्यारोपः क्रियत इति मालानिदर्शनात्वमस्त्येवेति न रूपकलक्षणस्यातिव्याप्तिः।

**उक्तरीत्या** - कुवलयानन्दोक्तस्यापि'' विशिष्टयोर्धर्मिणो रैक्यारोपो वाक्यार्थनिदर्शना''इत्यत्र सेवायामुपमेये, अबुधजनस्य रोदनादिरूपमानेषु अरण्यादेश्च विशेषणत्वात् तयोः बिम्बप्रतिबिम्बभावः। तद्विशिष्टौ यौ धर्मिणौ अबुधजनसेवाऽरण्यरोदनादी तयोरैक्यारोपः इति समन्वयात्।

**एतेन-कुवलयानन्दचन्द्रिकाचकोरकृता** - एवम् अरण्यरुदितं कृतमित्यादावपि बिम्बप्रतिबिम्बभावापन्नौ यौ धर्मौ अरण्यरोदनादिः अबुधजनसेवा च तद्विशिष्टौ यौ धर्मिणौ अरण्यादि : अबुधजनश्च तयोरैक्यारोपो नास्ति किन्तु धर्मयोरेव इत्यव्याप्त्यापादनं कृतं चिन्त्यम्।

नह्यत्र अरण्यरोदनादीनां बिम्बप्रतिबिम्बभावः, अपितु अरण्यादेः अबुधजनस्य च तद्विशिष्टौ यौ धर्मिणौ इत्युक्ते रोदनादिः सेवा च तयोः सेवायां रोदनाद्यैक्यारोपो-ऽस्त्येवेति। न हि रोदनादीनां क्रियात्वेन सर्वदा तेषां धर्मत्वमेवेति नियमोऽस्ति। गोत्वस्य गौः यथा धर्मी, तथा रोदनत्वादीनां रोदनादिकमेव धर्मीति काव्याप्तिरिति।

**चित्रमीमांसा-**

**रूपके तु न क्वचिदपि बिम्बप्रतिबिम्ब भावापन्नधर्म विशिष्टतया विषयविषयिणोरुपादानम्, ७ सावयवरूपकेऽपि विशेष्यरूपणात्पृथगेवा वयवेषु रूपणं नत्ववयव विशिष्टरूपेण विशेष्ये।**

**तत्त्वालोकः -**

अतएव- 'कश्चिद्धर्मोऽपि धर्मी स्कुटमतिमथने' इति **अभियुक्तैः** अभिहितं संगच्छते।

इत्थं निदर्शनायां सर्वत्र शुद्धबिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टतयैवोपादानमिति प्रदर्श्य रूपके तदव्यतिरेकं प्रदर्शयति- **रूपकेत्विति**।

रूपके तु सावयवनिरवयवभेदेन विभिन्नेऽष्टविधेऽपि रूपकालंकारे क्वचिदपि, यत्रापि शुद्धबिम्बभावापन्नधर्मविशिष्टाकारेण विषयविषयिणोरुपादानसम्भवना तत्रापि, बिम्बप्रतिबिम्बभावापन्नधर्म विशिष्टतया शुद्धबिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टा कारेण विषयविषयिणोः उपमानोपमेययोः उपादानं-ग्रहणं नास्तीत्यर्थः।

तथा चोक्तरीत्या यत्र विशिष्ट रूपकमिति व्यपदेशस्तत्र विशिष्टशब्देन बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टवस्तुनो र्न ग्रहणम् अपि तु विशेषणांशयुक्तत्वमित्येवार्थो ग्राह्यः। तादृशोदाहरणे परिभाषिकस्य बिम्ब प्रतिबिम्बभावस्यैवाभावादित्यभिप्रायम् आविष्कर्तुमाह **सावयवरूपकेऽपीति।**

१) इतर रूपणसापेक्षनिष्पत्तिमतां रूपकाणां संघातस्सावयव रूपकम्, (२) यत्र प्रकारान्तरेण सादृश्यनिर्वाहसंभवेऽपि चमत्कारविशेषजननार्थं रूपकान्तरमुपन्यस्यते तदपि सावयवम् तत्राद्यस्य-

ज्योत्स्ना भस्मच्छुरणधवला बिभ्रती तारकास्थीनि

अन्तर्धानव्यसनरसिका रात्रि कापालिकीयम्।

द्वीपात् द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले,

न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य छलेन।

**चित्रमीमांसा -**

**अङ्घ्रिदण्डो हरेरुर्ध्वमुत्क्षिप्तो बलिनिग्रहे।**
**विधिविष्टरपद्मस्य नालदण्डो मुदेऽस्तु वः। इति।**

**तत्त्वालोकः-**

इत्युदाहरणम्। अत्र रात्रौ कापालिकीत्वरूपणं प्रति भस्मास्थि मुद्राकपालाना-मावश्यकता अस्यां च रात्रौ ज्योत्स्ना-तारका चन्द्रेषु भस्मास्थिमुद्राकपालत्वानि रूप्यन्त इति एतद्रूपण-सापेक्षतया रात्रौ कापालिकीत्वं रूप्यते इति रूपणसापेक्ष-रूपकत्वम्।

द्वितीयस्य-

शोभते विशुद्धकिरणः गगनसमुद्रे रजनिवेलालग्नः।
तारामुक्ताप्रकरः स्फुटविघटितमेघशुक्तिसम्पुटमुक्तः।

इत्युदाहरणम्, अत्र तारासु मुक्तात्वरूपणं प्रधानं तस्योपकारकं गगने समुद्रत्वस्य, रजन्यां वेलात्वस्य, मेघेषु शुक्तिसम्पुटत्वस्य च रूपणम्, अथापि तारासु मुक्तात्वरूपणं न गगनोदरे समुद्रत्वादिरूपणसापेक्षं, शुभ्रत्वादिनाऽपि तत्सम्भवात् इति चमत्कारविशेषनिर्वाहाय रूपकान्तरपरिकल्पनमिति तद्यथा विशेष्यरूपणात् प्रधानरूपणात् पृथगेव अवयवेषु-विशेषणेषु रूपणम्, नतु-नपुनः अवयवविशिष्टरूपेण- विशेषणविशिष्टाकारेण, विशेष्ये-प्रधानेरूपणं क्रियत इत्यर्थः।

तादृशमुदाहरति- **अंघ्रिदण्ड इति।**

अत्र यद्यपि बलिनिग्रहकालिकोर्ध्वदेशप्रसृतभगवदंघ्रिदण्डे ब्रह्मासन-कमलानुपक्तनालदण्डयोर्विशिष्टयोरैक्यं वर्ण्यते, नैतावता विशिष्टरूपकत्वम्, यतश्चात्र अंघ्रिदण्डनालदण्डयोः विषयविषयिभावे तद्विशेषणयोः ऊर्ध्वोत्क्षिप्तत्व-विधातृविष्टर-कमलश्लिष्टत्वयोः बिम्बप्रतिबिम्बभावो वाच्यः बिम्बप्रतिबिम्बभावे च उभयसाधारणधर्मोऽपेक्षितः सचात्र न प्रतीयते। तत्प्रतीतिमन्तरा न बिम्बप्रतिबिम्ब-भावः। अयं चांशः उपमानिरूपणावसरे एव- 'बिम्बप्रतिबिम्बभावे यथाकथंचित् साधर्म्य प्रतीतेः अपेक्षितत्वात् 'इत्युक्तः।

## चित्रमीमांसा-

**अत्रापि अंघ्रिदण्डनालदण्डयोर्नबिम्बप्रतिबिम्बविशिष्टता तयोः प्रतीयमानेन श्यामलत्वविधातृविष्टर कमल श्लिष्टत्वाद्यनुगामि धर्मेणैवोपमानोपमेयभावात्।**

**किन्तु विधातृविष्टरकमलश्लिष्टत्वरूपसाधारण धर्म-यत्तासंपादनार्थं विशेषण विशिष्टतामात्रमुपमेयस्य।**

## तत्त्वाालोक

तथा चात्र विशिष्टे न विशिष्टारोपः, अपितु पृथगेव अंघ्रिदण्डे नालदण्डतादात्म्यारोपः। एवं तर्हि अङ्घ्रिदण्डे नालदण्डरूपणं क्रियतचेत् साधारण धर्मानुपादानात् रूपकत्वमपि वा कथं वक्तुं शक्यमिति चेत्तत्राह **तयोरिति**।

तयोः अङ्घ्रिदण्डनालदण्डयोः ,प्रतीयमानेन-गम्यमानेन नतुवाच्येन श्यामलत्वेन, विधिविष्टर कमलश्लिष्टत्वेन च प्रतीयमानेन अनुगामिधर्मेणैव उपमानोपमेयभावात्। अनुगामिधर्मेणैवोपमानोपमेयभावस्य रूपकप्रयोजकस्यपरिनिष्पत्त्या अनुपपत्तेरभावादिति भावः।एवं च भगवदङ्घ्रिदण्डे विधिविष्टर कमलनालदण्डे च श्यामलत्वं विधिविष्टरकमलश्लिष्टत्व चं वर्त त एवेत्यदोषात्।

नन्वेवं तर्हि अङ्घ्रिदण्डरूपे उपमेये ऊर्ध्वोत्क्षिप्तत्वविशेषणमनर्थकं तदभावेऽपि साधारणधर्ममुपादायोपमाया निर्वाहसंभवादिति चेदत्राह - **किन्त्विति**।

अयंभावः- श्यामलत्वमङ्घ्रिदण्डनालदण्डयोस्सममपि तादृशकमलश्लिष्टत्वं नोभयान्वयि कमलनालस्य ऊर्ध्वमुखत्वात् अङ्घ्रिदण्डस्यत्वधोमुखत्वमिति दोषपरिहारार्थत्वात्। ऊर्ध्वोत्क्षिप्तत्वोपादाने तु श्लिष्टत्वमुभयान्वयि भवतीत्यनुगामित्वं [illegible]तद्दृत्युभयविधानुगामिधर्ममूलकः उपमानोपमेयभावः सिद्धोभवतीति रूपकं [illegible] भवतीति।

एवं च तादृशप्रतीयमानश्लिष्टतायां साधारण्यसम्पादनार्थमेव विशेषणोपादानमिति ग्रन्थकाराभिप्रायः।

## तत्त्वालोकः -

केचित्तु - "बालेन्दुवक्राणी"त्यादौ उपमानुपयुक्त विशेषणबलाद्यथा उत्प्रेक्षा तद्वद्रूपकानुपयुक्तविधिविष्टर पद्मसंबन्धरूपविशेषणबलादुत्प्रेक्षैवास्तु न रूपकमिति वदन्ति।

यत्तूक्तं - (रसगंगाधरकृताः) खण्डनकृता" रूपके बिम्बप्रतिबिम्बभावो नास्तीति तु भ्रान्तिमात्रम् इति तच्चिन्त्यम्- अत्रैव पूर्वं रूपके तु न क्वचिदपि बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टतया विषयविषयिणोर्ग्रहणम् इति यदुक्तं ग्रन्थकृता तत्र शुद्धबिम्बप्रतिबिम्बभावपन्न धर्मविशिष्टयो र्विषयविषयिणोरुपादानं नास्तीत्येतावन्मात्रे तात्पर्यात् - तेन **विमर्शिनीकारोदाहृते** -

कन्दर्पद्विपकर्णकम्बु मलिनैर्दानाम्बुभिर्लाञ्छितं
संलग्नाञ्जनपुञ्जकालिमकलं गण्डोपधानं रतेः।
व्योमानोकहपुष्पगुच्छमलिभिः संच्छाद्यमानोदरं
पश्यैतच्छशिनः सुधासहचरं बिम्बं कलङ्काङ्कितम् (अ.स.वि. ४४ पु)

चन्द्रोदयमधिकृत्य नायकः नायिकां प्रति वर्णयति कन्दर्पेति-इदं शशिनः बिम्बं परिदृश्यते तत्पश्य, बिम्बमेव कीदृशमिति विशिनष्टि **कन्दर्पद्विपेत्यादिना**-मलिनैः दानाम्बुभिः लाञ्छितं कन्दर्पद्विपकर्णकम्बु मलिनमदोदकाङ्कितमन्मथध्वजमातङ्ग कर्णालङ्कारशङ्खरूपं, संलग्नाञ्जनपुञ्जकालिमकलं संसक्तकज्जलपुञ्जकालिमसुन्दर कामदेवसहचरीकपोलोपधानम् भ्रमद्भ्रमरसंघातपिहितान्तरालगगनपादप पुष्पस्तबकम्, अमृतोपमं च एतत् शशिनः बिम्बं पश्येत्यनेन सम्बन्धः।

अत्र यद्यपि शशिबिम्बरूपे उपमेये कम्बुगण्डोपधान पुष्पगुच्छरूपोपमानानां ताद्रूप्यस्य शब्दत आरोपाद्रूपकम् तत्रापि उपमेयविशेषणस्य कलंकस्य उपमानविशेषणैः दानाम्बु-कज्जल-भ्रमरैः बिम्बप्रतिबिम्बभावो विद्यते तत्रच कालिमा साधारणधर्मः प्रतीयमानः चन्द्रबिम्बविशेषणतया कलङ्कादीनां, कम्बुप्रभृति-विशेषणतया दानजलादीनां च शाब्दबोधे भानात् विषयविषयिणोः मध्ये विषयस्य वैशिष्टयमपरिहार्यमेव।

**चित्रमीमांसा-**

**निर्दिष्ट इति विशेषणात् न निगीर्णविषयायामतिशयोक्त्याम् अतिव्याप्ति : ।**

तत्त्वालोकः-

**नच-** "ज्योत्स्ना भस्म" इत्यत्र यथा सावयवरूपकोदाहरणे ज्योत्स्नादिविशिष्टरात्रिरूपविषये भस्मादिविशिष्टकापालिकीररूपविषयिणः विशिष्टरूपेणैक्यारोपस्य आपाततः प्रतीतिगोचरत्वेसत्यपि ज्योत्स्नादीनां भस्मादीनां च परस्परारोपवशात्केवलानां तेषां रात्रिविशेषणतया कापालिकीविशेषणतया च शाब्दबोधाभावात् विषयविषयिणोः बिम्बप्रतिबिम्बभावापन्न वस्तुविशिष्टत्वाभावः तद्वत् 'कन्दर्पद्विप' इत्यत्रापि शशिमण्डले कम्ब्वादि तादात्म्यस्यैवारोपः कलङ्कदानाजलादीनां च प्रत्येकमेवैक्यारोप इति बिम्बवैशिष्ट्यं नास्तीति वाच्यम्।

चन्द्रादिविशेषणत्वेन प्रतीयमानानां कलंकादीनां विषयतावच्छेदकत्वं नास्तीति अभ्युपगमे प्रमाणाभावात् अवश्यं बिम्बप्रतिबिम्बभावापन्नधर्मवैशिष्ट्यं न निराकर्तुं शक्यम् ।

अथापि- बिम्बप्रतिबिम्बभावापन्न धर्मविशेष्यतया अङ्कितत्वलाञ्छितत्वयोः वस्तुप्रतिवस्तुभावः इति न शुद्धबिम्बप्रतिबिम्ब भावापन्नधर्मविशिष्टत्वं विषयस्येति बिम्बविशिष्टत्वमस्त्येवेति न अव्याप्तेरवकाशः।

अतएव **मर्मप्रकाशे- नागेशभट्टैः** -अनयोः वस्तुप्रतिवस्तुबावापन्नत्वादिदं चिन्त्यम् (चि.मी.ख.म. १५९ पु)इत्यभिहितं संगच्छते।

लक्षणघटकंनिर्दिष्ट इति विषयविशेषणमतिशयोक्ति वारकतया सार्थकमित्याह- **निर्दिष्ट इतीति** रूपके विषयस्य निर्देशश्च द्वेधा संभवति उपमेयतावच्छेदकभिन्नधर्म-पुरस्कारेण, उपमेयतावच्छेदक धर्मपुरस्कारेण च, यद्वा- धर्मितावच्छेदकधर्म भिन्न पुरस्कारेण, धर्मितावच्छेदक धर्मपुरस्कारेण च । आद्ये -

'नीलमिन्दीवरं भाति लतायामिदमद्भुतम्।'

## तत्त्वालोकः -

इत्याद्यतिशयोक्तिस्थले नीलपदेन नीलत्वेन रूपेण इदमिति सर्वनाम्ना वा लोचनस्य प्रतिपादनात्।

**नच**-' नीलमिन्दीवरम्' इत्यत्र नीलपदार्थस्य विषयिण्येवा (रोप्यमाणे) न्वयः नतु लोचनरूपविषयान्वयः इति वाच्यम् इन्दीवरपदस्य इन्दीवरताद्रूप्यवतो लोचनस्यैव लक्षणयोपरस्थापनात् "पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति" न्यायात् लक्षणयोपस्थापिते लोचन एव नीलादिपदार्थान्वयस्य कर्तुं युक्तत्वात् विषयो निदिष्ट एव भवतीत्युक्तातिशयोक्तावतिव्याप्तिरेव।

**यदि तु**- रूपके विषयविषयिणोरुद्देश्यविधेयभावस्य प्रतीत्या अत्रापि निर्देशस्य उद्देश्यतया अभिधानरूपत्वम् इत्यभ्युपेत्य- 'नीलमिन्दीवरं भातीत्यादावतिव्याप्तिः वार्यते तदा

नीलोत्पलमिदं भाति लतायामतिसुन्दरम्'

इति समस्तप्रयोगे उद्देश्यविधेयभावस्य अविमर्शादव्याप्तिः स्यात्।

अतश्च - निर्दिष्टे इत्यस्य उपमेयतावच्छेदकधर्मपुरस्कारेण साक्षाद्धर्मिता-वच्छेदकधर्मपुरस्कारेण वा निर्दिष्ट इत्यर्थकरणे उक्तातिशयोक्तवति-व्याप्तेरभावात्।

**नचैवं सति** - 'अनिह्नुते' इत्यपन्हुतिवारकविशेषणं व्यर्थं स्यात् -

'नायं सुधांशुः किं तर्हि व्योमगंगासरोरुहम्'

इत्यपह्नुतौ उपमेयतावच्छेदकस्य निषेध्यतया तेनाकारेण विषयनिर्देशा-भावादेवातिव्याप्तेरभावात् इति शङ्क्यं (नेदं मुखं किन्तु चन्द्रः इत्यादौ मुखे' नायं सुधांशुः' इत्यादौ सुधांशौ सुधांशुत्वाभावारोपस्य, व्योमगंगासरोरुहत्वस्य च इच्छापरिकल्पितत्वेनाहार्यत्वात्' निषेधप्रतियोगितावच्छेदकधर्मपुरस्करेण विषयनिर्देशः कृतो भवत्येवेति निर्देशविवक्षामात्रेण नापह्नुतिवारक-विशेषणवैयर्थ्यमापतति।

**चित्रमीमांसा -**

**व्यङ्ग्यरूपकोदाहरणेषु विषयिवाचकाप्रयोगसंभवेऽपि विषयनिर्देशः सार्वत्रिक इति नातिव्याप्तिः, नेत्रान्देन इत्यादौ हेत्वलंकार इति मते विषये इत्यनेन उपमेये इत्येतदर्थकेन व्यावृत्तिः।**

**तत्त्वालोकः -**

**यदितु** - 'त्वदुक्तरीत्या आहार्यारोपेऽपि अनिर्दिष्टत्वम् इष्यते तदा "मुखं चन्द्र" इत्यत्रापि मुखे चन्द्रत्वारोपः क्रियत इति विषयस्यानिर्देशः प्रसज्यते तदा असंभव एव लक्षणस्यापाद्यः नतु उक्तविशेषणवैयर्थ्यम्।

**एतेन** - द्वितीयं तु 'अनिह्नुते' इति विशेषणवैयर्थ्यम् अपह्नुता वुपमेयतावच्छेदकस्य निषिध्यमानतया तेन रूपेण विषयस्यानिर्दिष्टत्वादेव लक्षणस्या प्रसक्तेः 'इति निर्दिष्टपद दूषणावसरे **चित्रमीमांसाखण्डनकृता** यदभिहितं तदयुक्तं वेदितव्यम्। (चि.मी.ख.१५२ पु)

नन्वत्र निर्दिष्ट इति विषयमात्रे विशेषणमुपात्तं नपुनर्विषयिणि तत्कुत इत्याशङ्कां मनासि निधाय व्यङ्ग्यरूपके विषयिणोऽनुपादानस्यापि संभवोऽस्ति यथा- (मदीये)

राजन् भवत्प्रतापोऽसौ भासयत्यखिला दिशः<br>
दैन्यं लुम्पति कोकानां विकासयति पङ्कजम्।

इत्यादौ विषयिणोऽनिर्दिष्टत्वेन अव्याप्तिः प्रसज्येत। सा माभूदिति विषयमात्रे निर्दिष्ट इति विशेषणमुपात्तमित्याह **व्यङ्ग्येति।**

ननु- " नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता"

" इत्यादौ हेतुमता सह हेतो रभिधानमभेदतो हेतुः" । इति कारणे कार्यताद्रूप्यारोपवति हेत्वलंकार इति वदतां रुद्रटादीनाम् अनुरोधेन हेत्वलंकार विषयेऽपि उक्तलक्षणमतिव्याप्तमिति चेत् तत्र समाधानमाह **नेत्रानन्देनेति।**

विषयविषयिशब्दौ भूयसा आलंकारिकैः उपमेयोपमानयोः प्रयुक्ताविति विषय पदेनात्रत्येन उपमेयस्य ग्रहणे कारणस्य ग्रहणं न प्रसज्यत इति नातिव्याप्तिरिति भावः।

॥

## चित्रमीमांसा-

**तत्रापि रूपकमिति एकावलीकारादिमते विषयपदं धर्मिमात्रपरं स्पष्टार्थम्। अनिह्नुते निषेधास्पृष्टे इति विशेषणादपह्नुतौ नातिव्याप्तिः।**

## तत्त्वालोकः

**यदि तु-** सादृश्येतरकार्यकारणभावादि संबन्धमूलकोऽप्यारोपो रूपकमित्यभिप्रयताम्,अत एव "लक्षणापरमार्थं यावता रूपकस्वरूपम् इत्युपक्रम्य सारोपान्याच सादृश्याद्वा संबन्धान्तराद्वा इत्यादि वदताम् अलङ्कारभाष्यकारानुयायिनामेकावलीकारदीनां मते हेत्वलंकारस्य अतिरिक्तस्यानुल्लेखात्तत्राव्याप्तिः प्रसज्येत इत्याशंकां विषयपदस्य धर्मिमात्रपरतामाश्रित्य अपनयति - **तत्रापीति** ।

विषयविशेषणमनिह्नुते इतिदलं सविवरणं सार्थकयति **अनिह्नुतइति**। "नेदं मुखं किन्तु चन्द्रः" इत्यत्र मुखे चन्द्रताद्रूप्यमारोप्यते अथापि विषयस्य मुखस्य निषेधविषयत्वमपि अपह्नुतेरवयवद्वयगर्भत्वात्। तदवयवद्वयं च उपमेयनिषेधः उपमानताद्रूप्यं चेति। उक्तविशेषणदाने तु अपह्नुतौ विषयस्य निषेधविषयत्व मस्त्येवेति न रूपकलक्षणातिव्याप्तिः।

**नच-**" नेदं मुखं किन्तु चन्द्रः" इत्यत्र मुखे चन्द्रताद्रूप्यप्रत्ययस्य निष्प्रत्यूहतया भानात् मुखनिषेधस्य चन्द्रारोपदार्ढ्यसम्पादकत्वस्य वक्तुं शक्यत्वाच्च दृढारोपं रूपकमेव स्यादिति वाच्यम्।

**विमर्शिनीकृता** - "क्वचिच्चाभेदमेव द्रढयितुं विषयिणो निषेधपूर्वमारोप्यमाणत्वेन, तदीयस्य वा अभेदहेतोः धर्मस्य हानिकल्पनेनाधिक्येन वा दृढारोपत्वेनापीदं दृश्यते इति लक्षयित्वा।

कलिप्रिया शश्वदपालिताज्ञावज्ञां गुरुज्ञातिषु दर्शयन्ती।
जाया निजा या ननु सैव कृत्या कृत्या न कृत्या सरलस्यधार्मेः।

इत्युदाहृत्य अत्र कृत्यानिषेधपूर्वकं कृत्यात्वं जायायामारोपितम्। तन्निषेधेन हि

## -चित्रमीमांसा-

**उपरञ्जकताम् आहार्य-ताद्रूप्यनिश्चयगोचरतामेतीत्यनेन ससन्देहोत्प्रेक्षा-समासोक्ति-परिणामभ्रान्तिमत्सु अतिव्याप्तिनिरासः।**

## -तत्वालोकः-

जायाया कृत्यया दार्ढ्येन साम्यं प्रतीयते। कृत्या तथा न स्वकर्मणिव्याप्रियते, यथेयं तत्कर्मणीति ह्यत्र वाक्यार्थः''इत्युपपादितम्। अतश्च विषयिणो निषेधपूर्वकं यत्र विषये विषय्यभेदः प्रतिपाद्यते तत्रैव दृढारोपरूपकस्य प्रसक्तिः नान्यत्र। अतश्च 'नेदं मुखं किन्तु चन्द्रः' इत्यत्र विषयनिषेधपूर्वकं विषयिताद्रूप्यं प्रतिपाद्यत इति न दृढारोपरूपकस्य प्रसक्तिः कार्या।

**एतेन**-अपह्नुतिप्रकरणस्थ **रसगंगाधरमर्मप्रकाशे नागेशभट्टैः**-''न विषम्इति रसगंगाधरप्रतीकमुपादाय अत्रेदं चिन्त्यम् -' नेदं मुखं किन्तु चन्द्रः'इति प्रसिद्धा-पह्नुत्युदाहरणेऽपि मुखनिषेधस्य चन्द्रारोपदार्ढ्यसंपादकत्वस्य वक्तुं शक्यत्वात् अनुभवसिद्धत्वाच्च अपह्नुतिमात्रस्यैव विलोपप्रसंगात् इति यदभिहितम् तत् विमर्शिन्यनवलोकननिबन्धनम्। विषयनिषेधपूर्वकं विषय्यारोपस्थलेऽपह्नुतेः सावकाशत्वेन तदुच्छेदप्रसक्तेरभावात् इति बोध्यम्।

ससन्देहादिषु अतिव्याप्तिवारकतया विषयिणि उपरंजकत्वविशेषणं सार्थकमिति प्रतिपादयन् उपरञ्जकपदार्थमप्याह **उपरञ्जकतामिति**।

अत्रापि-

अनपह्नुतरूपस्य विषयस्योपरञ्जनम्।
भवेद्विषयिणा यत्र रूपकं तत्प्रकीर्त्यते॥

एवं रूपकस्य लक्षणं वदद्भिरपि उपरञ्जकत्वं कीदृशमिति नाभिहितम्। अथापि **प्रतापरुद्रयशोभूषणव्याख्यात्रा कुमारस्वामिना रत्नापणव्याख्यायाम्**-उपरंजकं ताद्रूप्यप्रतीतिमात्रजनकमिति विवृतं तदुत्प्रेक्षायां ससन्देहादौ चातिव्याप्तम्। ''मुखस्तोमं तमश्शङ्के'' इत्याद्युत्प्रेक्षायाम्''पङ्कजं वा सुधांशुर्वा''इत्यादौ ससन्देहेच

-चित्रमीमांसा-

**ससन्देहोत्प्रेक्षयोः निश्चयस्यैवाभावात्।**

-तत्वालोकः-

उपमेये उपमानताद्रूप्यप्रतीतेः । अतः ताद्रूप्यप्रतीतिगोचरत्वम् इत्यपहाय ताद्रूप्यनिश्चयगोचरत्वनिवेशः तथापि-''कपोले मार्जारः '' इत्यादौ इन्दुकिरणादिषु पयस्त्वनिश्चयमन्तरा प्रवृत्त्यनुपपत्तेस्तत्रापि उपमेये उपमानताद्रूप्यनिश्चयोऽस्तीति भ्रान्तिमति अतिव्याप्तिः तद्वारणाय निश्चये आहार्यत्वविशेषणनिवेशः । तथा च भ्रान्तिमति तादृशनिश्चयस्यानाहार्यत्वात् नातिव्याप्तिरिति भावः। तथाचोपरञ्जकपदार्थे निश्चये आहार्यत्वविवक्षणात् भ्रान्तिमति, विषयिताद्रूप्यस्य विवक्षणात्परिणामे, तादृशताद्रूप्यनिश्चयविवक्षणात्ससन्देहोत्प्रेक्षयोः, ताद्रूप्यविवक्षणात् समासोक्तौ च नातिव्याप्तिरित्युक्तं भवति ॥

उपरञ्जकतापदार्थघटकनिश्चययांशेन ससन्देहोत्प्रेक्षयोः व्यावृत्तिरित्याह- **ससन्देहेति** ।

किं पङ्कजं किमु सुधाकरबिम्बमेतत्
किं वा मुखं क्लमहरं मदिरेक्षणायाः ।
यत् दृश्यते मधुकराभकुरङ्गकान्ति-
नेत्रद्वयानुकृतिकार्ष्ण्यममुष्य मध्ये ॥

इत्यत्र एकस्मिन् धर्मिणि क्लमहरत्वाद्यनुगामिसाधारणधर्मक पङ्कजत्वाद्याहार्य ताद्रूप्यज्ञानस्य निश्चयात्मकत्वाभावात् नातिव्याप्तिः । एककोटिकनानाधर्मिक संशयरूपत्वादुक्तज्ञानस्येतिभावः ।

एवम्-

स वः पायादिन्दुः नवबिसलताकोटिकुटिलः
स्मरारेर्यो मूर्ध्नि ज्वलनकपिशो भाति निहितः ।

## -चित्रमीमांसा-

**समासोक्तौ परिणामे च तस्य तादूप्यागोचरत्वात् ।**

**समासोक्तौ व्यवहारमात्रसमारोपात् । परिणामे तु [illegible]आरोप्यमाणस्यैव विषयतादूप्यगोचरत्वात् ॥**

-तत्वालोकः-

स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा
कपोलेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ॥

[illegible] वक्ष्यमाणोत्प्रेक्षोदाहरणे इन्दुकलायां कपालोद्भिन्नाङ्कुरतादात्म्यं संभाव्यते नतु [illegible] एवेति निश्चीयते । साधारणधर्मदर्शननिमित्तकप्रकृतविशेष्यकतादात्म्यसं[illegible]प्रकृतप्रकारकनिश्चयानात्मकज्ञानस्यैव संभावनारूपत्वात् इति नातिव्याप्तिः।

निश्चयस्य तादूप्यगोचरत्वोक्त्या समासोक्तिपरिणामयोः व्यावृत्तिरित्याह- **[illegible]सोक्ताविति।**

समासोक्तौ व्यवहारमात्रसमारोपप्रयुक्तं तादूप्यगोचरत्वम् परिणामे [illegible]गोचरत्वसत्वेऽपि विषयतादूप्यगोचरत्वमेव विषयिणि, न पुनर्विषये विषय[illegible]गोचरत्वमिति भेद इति उपपादयितुं पृथग्व्यावृत्तिप्रकारमाह- **[illegible]ोक्ताविति।**

[illegible]

उपोढरागेण विलोलतारकं
तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया
पुरोऽपि रागाद्गलितं न लक्षितम् ॥

[illegible]शशिनोः श्रृङ्गारविभावयोः आहार्यः योऽयं नायिकायाः नायके यो व्यवहारः [illegible] समारोपितः । नायिकायां नायकस्य यो व्यवहारः सः शशिनि समारोपितः [illegible]यां नायिकातादूप्यं, शशिनि नायकतादूप्यं चेति नातिव्याप्तिः । **[illegible]त्विति।**

**-चित्रमीमांसा-**

**भ्रान्तिमति सतः कल्पितस्य वा प्रकृत्यादिपर्यन्तस्य स्वारसिकस्यैव निबन्धने (न) तस्यानाहार्यत्वात् ॥**

यथा-

विनम्रशालिप्रसवौघशालिनीः
अपेतपङ्कास्सरसीरुहश्रियः ।
ननन्द पश्यन्नुपसीम सस्थली-
रुपायनीभूतशरद्गुणश्रियः ॥

अत्र शरद्गुणेषु उपमानेषु ताद्रूप्येणारोप्यमाणस्योपायनस्य प्रकृतनन्दनक्रियोपयोगित्वात् शरद्गुणश्रीरूपेविषयिणिविषयभूतोपायनताद्रूप्यमेव न तूपायने शरद्गुणश्रीताद्रूप्यमारोप्यत इति नातिव्याप्तिः ।

ताद्रूप्यनिश्चये आहार्यत्वविशेषणात् अनाहार्यताद्रूप्यनिश्चयवति भ्रान्तिमति नातिव्याप्तिरित्याह- **भ्रान्तिमतीति** ।

यथा-

नीलोत्पलमिति भ्रान्त्या विकासितविलोचनम् ।
अनुधावति मुग्धाक्षि पश्य मुग्धो मधुव्रतः ॥

इत्यत्र मधुव्रतस्य अनुधावनपर्यन्ततयोपनिबन्धात् उन्निद्रविलीने नीलोत्पलताद्रूप्यप्रतिपत्तिर्भ्रमात्मिका । अथापि प्रवृत्तिपर्यन्तत्वेन स्वारसिकीति अनाहार्यैवेयम् ।

एवम्-

वाणीकण्ठाभरण भवतो रूद्रचन्द्रक्षितीन्दो
कुन्दस्फीते यशसि नभसो बिम्बमालोकयन्त्यः ।
तद्वैरिण्यो विरहविकलाः वक्षसि न्यस्तकामाः
वारं वारं नवकमलिनीपत्रबुध्या विशन्ति ॥

## -तत्वालोकः-

इत्यत्र यद्यपि नभसः कल्पिततत्वं नास्ति तथापि यशः प्रतिविम्बितत्वांशस्य कल्पिततत्वेन विशिष्टे कल्पिततत्वव्यपदेश इति, नभसो बिम्बे नवकमलिनीपत्रताद्रूप्य-बुद्धेःकल्पितस्य प्रवेशरूपपर्यन्तत्वेन अनाहार्यत्वमेवेति नातिव्याप्तिरिति भावः।

**नचात्र**- लक्षणे उपमेयतावच्छेदकधर्मपुरस्कारेणैव अभिधानस्य निर्दिष्ट इति विषयविशेषणेनैव लाभे सति उपरञ्जकतापदार्थघटकत्वेन आहार्यत्वविशेषणवैयर्थ्यम्, उदाहृतभ्रान्तिमदुदाहरणयोः दोषविशेषेण प्रतिबध्यमानतया उपमेयतावच्छेदकस्य पुरस्कारो नास्त्येवेति अतिव्याप्तिवारणसंभवादिति वाच्यम्। निर्दिष्टपदलब्धार्थकथने तात्पर्यमितिकल्पनात्, आहार्यत्वांशनिर्मुक्तस्यैव वा उपरञ्जकतारूपत्वमिति कथनेऽपि क्षतिविरहात्।

**नचैवमपि**-उक्तलक्षणं-

"नायं सुधांशु किं तर्हि सुधांशुः प्रेयसीमुखम्।"
"न विषं विषमित्याहुः ब्रह्मस्वं विषमुच्यते।"

इत्यादौ उपमेये उपमानाभेददाढर्चाय विषयिनिषेधपूर्वकं विषय्यभेदो विषये विधीयत"इति दृढारोपं रूपकम् "इति वदतो **विमर्शिनीकृतोऽनुरोधेन** अव्याप्तं भवति।

अथच **कुवलयानन्दानुरोधेनाऽपि**पर्यस्तापह्नुतित्वेनोक्तोदाहरणयोरतिव्याप्तिः। तत्रोभयत्रापि विषयिनिषेध एव क्रियते न विषयनिषेध इति विषयस्य पुरस्कारो नास्त्येवेतिशङ्क्यम्।

उक्तोदाहरणयोः आद्ये-प्रसिद्धसुधांशौ सुधांशुत्वनिषेधात् मुखे प्रसिद्ध सुधांशोरभेदो नारोप्यते। बाधितस्यारोपयितुम् अशक्यत्वात्। किन्तु सुधांशौ सुधांशुपदवच्यत्वं प्रतिषिध्य मुखे एव सुधांशुपदवाच्यत्वमिति प्रतिपाद्यते इत्यदोषात्।

यद्वा-"नायं सुधांशुः" "न विषं विषम्"इत्यादौ विमर्शिनीकारोक्तरीत्या न रूपकं ग्रन्थस्थापह्नुतिलक्षणाप्रसरान्नापह्नुतिः। किन्तु परिसंख्यैवालंकार इत्यत्र ग्रन्थकृतां तात्पर्यात्। यच्च **कुवलयनन्दे रत्नाकरकारानुरोधेन** पर्यस्तापह्नुतिरभिहिता सापि पर्यायामेवान्तर्भवतीत्यत्रैव ग्रन्थकृतां तात्पर्यमिति निश्चयात्।

## -तत्वालोकः-

**एतेन**-"निर्दिष्ट इति विशेषणादेव वारणात् भ्रान्तिमत्यापि अतिव्याप्तिवारणाय निश्चयगताहार्यत्वविशेषणं व्यर्थमिति **चित्रमीमांसाखण्डने** (चि .मि.खं.१५३पु) बिम्बाविशिष्ट इति रूपकलक्षणस्यातिव्याप्तिरिति **रसगंगाधरे** च (रस.१८१पु) यदापादितं तत्समाहितमिति बोध्यम् ॥

**ननु**-एवं लक्षणपरिष्करणेऽपि-

इन्दोरपि मृगाक्षीणां मुखेन्दुरतिरिच्यते ।
निर्जरैः पीयमानोऽपि यः कदाचिन्न हीयते ॥

इति व्यतिरेकेऽतिव्याप्तिः तत्र प्रतीयमानमाह्लादकत्वादिकमादाय मुखे इन्दुताद्रूप्यप्रतीतेस्सत्वात् ।

**नच**- प्रसिद्धचन्द्रात् मुखचन्द्रे भेदावगमकस्य निर्जरपान कर्मतासमानाधि-करणक्षीणताराहित्यस्य प्रतीतेः कथं ताद्रूप्यप्रत्यय इति वाच्यम् ।

उक्तधर्मस्य व्यतिरेकप्रयोजकत्वमेव न रूपकोपयोगित्वम् रूपकोपयोगित्वं तु व्यज्यमाानह्लादकत्वकान्तिमत्वादेरेव ।

**किञ्च**-मुखे चन्द्रताद्रूप्यप्रतीतेराहर्यत्वेन कदाचित् अहीयमानत्वरूप विशेषदर्शनस्य साधरणधर्मान्तरज्ञानप्रयोज्यताद्रूप्यप्रतीतौ अप्रतिबन्ध कत्वाद्रूपकत्वस्य न हानिः अथापि नात्र रूपकमलंकारः अपितु व्यतिरेकालंकार एव निर्जरशव्दश्लेषमूलतया गीर्वाणजरारहितरूपार्थयोरभेदात् साधारण्ये सत्यपि उपमेये मुखेन्दौ कदाचिदहीयमानत्वरूपस्योत्कर्षप्रयोजकस्य धर्मस्य प्रदर्शितत्वात्।

**नचै**तावता रूपकस्यानुत्थानमितिवक्तुंशक्यम्। अपितु कदाचिदहीयमाानत्व-रूपगुणान्तरकृतनिषेधोत्थापितेन उत्कर्षेण रूपकं न चमत्कारमादधातीत्येतावता व्यतिरेकव्यपदेश इति न रूपकलक्षणस्यातिव्याप्तिः । अत एव ग्रन्थकृता- "इन्दोरपि मृगाक्षीणा"मित्युपादाय मुखचन्द्रस्य प्रसिद्धचन्द्राद्व्यतिरेकवर्णनं तदभेदप्रतिपत्तौ न संभवतीति रूपके ताद्रूप्यप्रतिपत्तिरेवेत्युक्तम्।

**नच**-उदाहृतग्रन्थभागः **विद्यानाथकृ** तलक्षणदूषणावसरे आशङ्कितुरभिप्राया

**-चित्रमीमंसा-**

**अव्यङ्ग्यविशेषणाच्चैतदेवालंकारभूतस्य रूपकस्य लक्षणमिति सर्वं सुस्थम् ॥**

-तत्वालोकः-

विष्करणार्थ इति वाच्यम्, उत्तरत्र 'भेदप्रतीतिप्रदेशेषु अभेदप्रतिपत्तेरसंभवात् चन्द्रप्रभृतीनां पदानां विषये लक्षणा अभ्युपगतैवेति तादृशस्थले ग्रन्थकर्तुरपि ताद्रूप्यप्रतीतावेव तात्पर्यात् ॥

अत एव **दण्डिना-स्वीये काव्यादर्शे-**

शब्दोपात्ते प्रतीते वा सादृश्ये वस्तुनोर्द्वयोः ।
तत्र यद्भेदकथनं व्यतिरेकः सकथ्यते ॥

इति लक्षयित्वा-

अरत्नालोकसंहार्यमहार्यं सूर्यरश्मिभिः ।
दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥

इति सजातीयव्यतिरेक उदाहृतः संगच्छते ।

**यथाचान्यत्र-**

इष्टं साधर्म्यवैधर्म्यदर्शनात् गौणमुख्ययोः ।
उपमाव्यतिरेकाख्यं रूपकं द्वितयं यथा ॥

इति लक्षयित्वा-

चन्द्रमाः पीयते देवैः मया त्वन्मुखचन्द्रमाः ।
असमग्रोऽप्यसौ शश्वत् अयमापूर्णमण्डलः ॥

उदाहृतम् ।

एवं च तादृशस्थले दण्डिन इव व्यतिरेकरूपकमिति नातिव्याप्तेरवसरः इति ...॥

अलंकारभूतस्य रूपकस्य पूर्वोक्तमेवाव्यङ्ग्यत्वविशेषितं लक्षणं भविष्यतीत्याह अव्यङ्ग्येति ।

**-चित्रमीमांसा-**

**तच्च रूपकं त्रिविधम् । निरवयवं,सावयवं, परम्परितं च । निरवयवम्-केवलं मालाचेति द्विविधम् । सावयवन्तु-समस्तवस्तुविषयम् , एकदेशविवर्ति चेति द्विविधम् परम्परितं च श्लिष्टा-श्लिष्टशब्दनिबन्धनत्वेन द्विविधं सत् केवलं माला चेति द्वैविध्यात् चतुर्विधम् । एवमष्टविधो रूपकालंकारः ।**

-तत्वालोकः-

तथाच-उपात्तबिम्बाविशिष्ट-विषयधर्मिकनिषेधानङ्काव्यङ्ग्याहार्यारोप निश्चयविषयीभूतोपमानताद्रूप्यं रूपकमिति वाच्यालंकारलक्षणमिति भावः ॥ तेन पूर्वमुदाहृते मदीयपद्ये-

राजन् भवत्प्रतापोऽसौ भासयत्यखिला दिशः ।
दैन्यं लुम्पति कोकानां, विकासयति पङ्कजम् ॥

इति व्यङ्ग्यरूपके प्रतापे भास्करताद्रूप्यप्रतीतावपि नदोषः ॥

**यद्यपि**-व्यङ्ग्यत्वालंकारत्वयोर्विरोधो नास्ति । प्रधानव्यङ्ग्यवारणाय पुनरुपस्कारत्वं विशेषणमुचितमिति **नव्यानां रसगंगाधरकृतामनुरोधेन** नोक्ताविशेषणावश्यकता, **तथापि**- "अलंकारो हि चारुत्वहेतुः" इत्येवं वदतां **ध्वनिकृतामभिप्रायम्** अनुरुध्य मुख्यव्यङ्ग्यस्य अनलंकारतैवेचिता । वाक्यार्थस्य रसाद्यंगतया सर्वाभ्युपगतत्वात् इत्यभिप्रायात्। अत एव **ध्वनिकृता**-

तेऽलंकाराः परां छायां यान्ति ध्वन्यङ्गतां गताः ।

इत्युक्तं सगच्छते ॥

**यद्वा**- अलंकारशरीरानुप्रविष्टानां केषांचित् व्यङ्ग्यत्वे अस्त्यलंकारत्वम् यतश्च आत्मनोऽस्तित्व एव शरीरे आरोप्यावेध्यादिभेदेन भिन्नानां अलंकारत्वम्, तदसत्वेच भयजनकत्वमेवेतिन इतस्ततो वर्तमानानां शोभाकरत्वम् अस्त्येवेति अव्यङ्ग्यत्वविशेषणमनुपादेयमेव ॥

इत्थं रूपकं लक्षयित्वा तद्विभजते-**तच्चेति** ।

**-चित्रमीमांसा-**

**तत्र केवलं निरवयवं यथा-**

**कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्**

**सखीं कान्तोन्दन्तं श्रुतमपि पुनःप्रश्नयति यत्।**

**अनिद्रं यच्चान्तःस्वपिति तदहो वेद्म्यभिनवां**

**प्रवृत्तोऽस्यास्सेक्तुं हृदि मनसिजः प्रेमलतिकाम्॥**

-तत्वालोकः-

तत्र केवलं निरवयवं लक्षयन्नेवोदाहरति **तत्रेत्यदिना**।

अत्र **रुद्रटः**-

मुक्त्वावयवविवक्षां विधीयते यत्तु तत्तु निरवयवम्।

इति। अवयवतो निष्क्रान्तं निरवयवम् इति **विद्याधरः**। 'यत्रावयव्येव रूप्यते तन्निरवयवम्' इति **एकावलीतरलायां मल्लिनाथः**। अङ्गशब्दस्य हेत्वर्थत्वेन निरङ्गमित्यस्य निर्हेतुकमित्यर्थः, एकस्मिन् रूपके द्वितीयस्य रूपकस्य अङ्गत्वेनावस्थानाभावात्। तथा च अङ्गाङ्गिभावहीनं रूपकं निरवयवम् इति **प्रदीपकाराभिप्रायः**। एतेनैतदुक्तं भवति -रूपकान्तरनिरपेक्षैकविषयं रूपकमिति परस्परनिरपेक्षाङ्गिमात्रविषयकं रूपकमिति वा निरवयवरूपकलक्षणम्।

उदाहरति **कुरङ्गीवेति**। किशोर्याः वृत्तान्तं धात्री निवेदयन्ती आह।यत्-यस्मात् कारणात् गीतध्वनिषु संगीतनादेषु श्रुतेषु कुरङ्गीव मृगी यथा अङ्गानि स्तिमितयति स्तिमितानि करोति निष्क्रियाणि करोति तथैवेयमपि अङ्गानि स्तिमितयति निष्क्रियाणि करोति। गीतध्वनीनामुद्दीपकत्वात् स्तम्भाख्यं सात्विकभावमभिव्यञ्जयतीति यावत्। तथा यत्-यतः श्रुतमपि कान्तोदन्तम्,कान्तस्य-

कथाभिः कमनीयभिः काम्यैर्भोगैश्च सर्वदा।

उपचारैश्च रमयेत् यस्स कान्त इती रितः॥

## तत्त्वालोकः-

इति लक्षितो यो नायकः तस्य वृत्तान्तम् (अधिकृत्य) सखीं पुनः द्वितीयवारम् प्रश्नयति प्रश्नं कारयति, प्रश्नविषयं करोति इति, यतश्च अन्तः अनिद्रं यथाभवति तथा स्वपिति बहिः अक्षिनिमीलनेऽपि मनसा नायकमेव ध्यायति, अत एव बाह्यविषयान् नैव गृह्णाति, अतोऽस्याः नायिकायाः मनसि अभिनवां प्रेमलतिकां कमनीयां प्रेमरूपां लताम् **'अयं मम' 'अहमस्य'** इत्याकारकः **पक्षपातविशेषः प्रेम** इति तद्विवरणम् । मनसिजः मदनः सेक्तुं प्रवृत्त इति वेद्मि इत्यर्थः ॥

अत्र प्रेम्णि लतात्वरूपणात् "न विनालम्बनमाश्रयस्थितिः" इत्युक्तरीत्या नायिकाप्रेम्णः नायकालम्बनता, अभिनवत्वोक्त्या सेकौचित्यं च प्रतीयते ।

एवं च प्रेममात्रे लतिकात्वरोपः सकृदेव क्रियते । नपुनः तदुपपादकत्वेन क्वचिदप्यन्यारोपः क्रियत इति अङ्गाङ्गिभावानापन्नैकधर्मिकं रूपकमिति **केवलनिरवयवरूपकम्** ।

नन्वत्र-रूपकमेवेत्यत्र मानाभावः यतः प्रेम लतिकेव इति उपमितसमासस्यापि संभवात् उपमया सन्देहसंकरादिति चेन्न, यत्रान्यतरपरिग्रहे साधकं प्रमाणं नास्ति बाधकं वा प्रमाणं न विद्यते तत्र न्यायप्राप्तः संशय इति सन्देहसंकरस्तत्र विज्ञेयः ।

**यथा -**

यद्वक्त्रचन्द्रे नवयौवनेन श्मश्रु
च्छलेनोल्लिखितश्चकास्ति ।
उद्दामरामाहृढमानमुद्रा
विद्रावणो मन्त्रइव स्मरस्य ॥

इत्यत्र वक्त्रं चन्द्र इवेति किमुपमा? उत वक्त्रमेव चन्द्र इति रूपकम् इति सन्देहः । समासस्योभयथापि भावात् । "उपमितं व्याघ्रादिभिः" इति ह्युपमितसमासः। व्याघ्रादीनामाकृतिगणत्वात्, मयूरव्यंसका दित्वात्, विशेषणं विशेष्येणेति, वा रूपकसमासः नात्र क्वचित् साधकबाधकप्रमाणसद्भाव इति सन्देहसङ्करः ।

यत्र तु कस्यचित्परिग्रहे साधकं बाधकं वा प्रमाणं विद्यते तत्रनियतपरिग्रहः तत्र

## तत्वालोकः

साधकत्वं नाम आनुगुण्यं, बाधकत्वं च प्रातिकूल्यम्, तत्र रूपकपरिग्रहे आनुगुण्यं च यथा **राजानक रुय्यकस्य सर्वस्वे -**

एतान्यवन्तीश्वरपारिजातजातानि तारापति पाण्डुराणि।
सम्प्रत्यहं पश्यत दिग्वधूनां यशः प्रसूनायवतंसयामि॥

इत्यत्र अवतंसनं प्रसूनेष्वनुगुणमिति दिश एव वध्व इति रूपकपरिग्रहे साधकं प्रमाणम्।

क्वचित् उपमाबाधकसद्भावादपि रूपकपरिग्रहः यथा **विद्याधरस्य एकावल्याम्**

तल्पेषु कल्पद्रुमपल्लवानां
निषेदुषीभिस्सुरसुन्दरीभि :।
त्वत्कीर्तयो वीरकलिङ्गनाथ।
मनःकुरङ्गं रजयन्ति गीताः॥

अत्र मृगरमणे ह्यनुनासिकलोपः उक्तः। तथासति मनएवकुरङ्ग इति मयूरव्यंसकादिसमासेन भाव्यम्। तदैव कुरङ्गस्य प्राधान्यं सम्भवतीति मृगरमणं भवति। यदितु कुरङ्ग इव मनः इति उपमितसमासः क्रियेत तदा पूर्वपदार्थप्राधान्यात् मनोरमणमेव स्यान्नमृगरमणमिति अनुषङ्गलोप एव न स्यादिति अत्रत्योऽनुषङ्ग लोपएवोपमाबाधकः। एवं चोक्तरीत्या उपमाङ्गीकारे प्रेमसेचनमेव स्यात्, न लता सेचनमिति लता कार्यं मनसिजकर्तृकसेचनमुपनिबध्यत इति तदानुगुण्यात् उत्तरपदार्थ प्रधानेन मयूरव्यंसकादिसमासेन, विशेषणसमासेन वा, रूपकमेवालंकार इति नोपमारूपकयोः सन्देहसङ्करस्य प्रसक्तिः। इदं रूपकं **दण्डिना अवयविरूपकम्** इति व्यवहृतम्।

अत एव **उद्भटभट्टेन-**

अनेकालङ्क्रियोल्लेखे समं तद्वृत्त्यसंभवे।
एकस्य च ग्रहे न्यायदोषाभावेच सङ्करः॥

इति सन्देहसङ्करो लक्षितस्सङ्गच्छते। (उ.का.६८ पु.) सङ्करोल्लेखापेक्षया उपमेयगतसाम्यप्रकर्षकस्य रूपकस्यैवोचितत्वात्॥

## -चित्रमीमांसा-

**माला निरवयवं यथा -**

**सौन्दर्यस्य तरङ्गिणी, तरुणिमोत्कर्षस्य हर्षोद्गमः,**

**कान्तेः कार्मणकर्म, नर्मवचसामुल्लासनावासभूः ।**

**विद्या वक्रगिरां, विधेरनवधि प्रावीण्य साक्षात्क्रिया**

**प्राणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ।।**

तत्वालोकः

केवलं निरवयवमुदाहृत्य मालारूपंनिरवयमुदाहरति **-मालेति**। यत्र अन्योन्यनिरपेक्षतया एकस्मिन्नुपमेये नानोपमानताद्रूप्यम् आरोप्यते तत्र मालानिरवयवरूपकत्वम् **सौन्दर्येति**।

प्रेयसीं परामृशतो वियोगिनः उक्तिरियम्। सा परोक्षे वर्तमाना, प्रिया प्रेयसी, सौन्दर्यस्य......तरङ्गाः अस्यां सन्तीति तरङ्गिणी नदी, तरङ्गवदविच्छिद्यमानसौन्दर्य शालिनी सन्तापोपशमनी च। अतएव नदीत्वेन रूपिता, तरुणिमायाः तारुण्यस्य यः उत्कर्षः तस्य योग्यावासलाभात् हर्षोद्गमः तद्रूपिणी, कान्तेः शोभायाः कार्मणकर्म वशीकरणम् 'मूलकर्म तु कार्मणं' वशीकारः संवननम्' इति **वैजयन्ती**। नर्मवचसां नर्मोक्तीनाम्, उल्लासने-प्रकाशने वासभूः तल्पगृहम् एकान्ते हि नर्मोक्तयः प्रसरन्ति। वक्रगिरां साकूतवचसां विद्या उपदेष्ट्री, विधेः स्रष्टुः अनवधि सीमातीतं यत् प्रावीण्यं सृष्टिनैपुण्यं तस्य साक्षात्क्रिया प्रत्यक्षहेतुः। पञ्चशिलीमुखस्य पञ्चबाणस्य

अरविन्दमशोकंच चूतं च नवमल्लिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ।।

उन्मादनस्तापनश्च शोषणः स्तम्भन स्तथा ।
संमोहनश्च कामस्य पञ्चबाणाः प्रकीर्तिताः ।।

**इत्यमरः** । मदनस्य प्राणाः शरीरावस्थानहेतुः । ललनाचूडामणिः स्त्रीरत्नं भवति।

## तत्वालोकः-

अत्रैकस्यां प्रियायां सौन्दर्यतरङ्गिणीत्वादयो बहवः आरोप्यन्ते। अन्योन्यसापेक्षता च नास्ति। अतश्चात्र मालानिरवयवत्वम्। लोके यथा एकस्मिन् सूत्रे पुष्पाणां बहूनां गुम्फः तद्वत्।

**नन्वत्र-** कथं मालानिरववयवत्वमात्रमुक्तम्। यतः सौन्दर्यादौ सलिलत्वाद्यारोपमन्तरा तरङ्गिणीत्वारोपस्य अचमत्कारितया अर्थापत्तिलब्धसलिलरूपारोप्यस्य तरङ्गिणीरूपारोप्येणान्विततया परम्परितत्वमपीति चेत्सत्यम्। एतद्व्यतिरिक्तेषु कान्तेः कार्मणकर्म इत्यादौ प्रेयस्यां कार्मणकर्म तामात्रमारोप्यते नपुनः कान्त्यादौ किमपि। अतश्च मालानिरवयवत्वमुपपद्यते। अथापि परम्परितरूपकेण सङ्कीर्णमेवेदं पद्यम्। दृश्यत एवान्यत्रापि मुख्यालंकारविषयेषु अलङ्कारान्तर सङ्कीर्णता यथा - **सर्वस्वोदाहृते -**

दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि नास्मि दूये।
उद्यत्कठोरपुलकांकुर कण्टकाग्रैः
यत्खिद्यते मृदुपदं ननु सा व्यथा मे॥

इति पद्ये केवलनिरवयवरूपकेऽपि पुलकस्य अङ्कुरत्वरूपणानन्तरं कण्टकत्वरूपणात्परंपरित्वमिष्यत एव रूपकस्येति दिक्।

**यद्यपि निरवयवं रूपकं-** परस्परनिरपेक्षाङ्गिविषयकं यथा तथा परस्परनिरपेक्षाङ्गविषयकमपि संभवति। तत्रापि अङ्गिव्यतिरिक्ता नेकाङ्गविषयकानेकपदार्थारोपः श्लिष्टाश्लिष्टभेदेनापि परिदृश्यते। यथा वा-

वाहू बालमृणालिके, कुचतटी माणिक्यहर्म्यं रतेः,
मुक्ताशैलशिलानितम्बफलकं, हासः सुधानिर्झरः।
वाचः कोकिलकूजितानि, चिकुराश्चेतो भुवश्चामरं
तस्या स्त्रस्तकुरङ्गशावकदृशः किं किं न लोकोत्तरम्॥

**चित्रमीमांसा-**

**समस्तवस्तुविषयं सावयवं यथा-**

**ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी**
**न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्।**
**द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले**
**न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥**

तत्वालोकः-

इत्यत्र नायिकाव्यतिरिक्ताः बाहु-कुचतटी-नितम्बफलक-हासवाक्-चिकुराः बालमृणालमाणिक्यहर्म्य- मुक्ताशैलशिला-सुधाप्रवाह-कोकिलनाद- चामरत्वेन रूपिताः नायिका तु न रूपितेति अङ्गभूतेषु विषयेष्वनेकेषु अनेकविषयितारूप्य-मारोपितमिति अश्लिष्टमालानिरवयवरूपकमिदम्।

इदमेव श्लेषनिबन्धनमपि दृश्यते। तद्यथा-

नेत्रे पुष्करसोदरे, मधुमती वाणी विपाशा मतिः
चेतो याति नदीनतां कलयते शोणत्वमस्याधरः।
चारित्रं ननु पापसूदनमहो मामेष तीर्थाश्रयः
स्नातुं वाञ्छति भूपतिः परमतीवोष्णोदकं वल्गति ॥

अत्र अनेकेषां श्लिष्टाः अनेके आरोपिताः इति। श्लेषनिबन्धनं निरवयवं मालारूपकमिति **तथापि सर्वस्वानुरोधेनोक्तो विभाग ः**॥ अतएवोत्तरत्र दिङ्मात्रं प्रदर्शितमिति वक्ष्यते॥

सावयवं सप्रभेदं क्रमेणोदाहरति- **समस्तेति**। समस्तं- आरोपनिर्वाहकतया आरोप्यं, आरोप्यविषयश्च यः पदार्थः तद्रूपं वस्तु विषयो यस्य तत् समस्तवस्तुविषयम्। सावयवत्वं च परस्परसापेक्षरूपकसमुदमायत्वमिति **नागेशभट्टः**। तच्चिन्त्यम् -

शोभते विशुद्धकिरणः गगनसमुद्रे रजनिवेलालग्न ः।
तारामुक्ताप्रकरः स्फुटविघटितमेघशुक्तिसंपुटमुक्त ः॥

## तत्वालोकः-

इति **प्रवरसेनकृतसेतुबन्धघटकपद्ये** - गगनादौ समुद्रत्वादिकमारोप्यमाणं सर्वं शब्दोपात्तम् । अथापि तारासु मुक्तारोपं प्रति गगनसमुद्रन्तान्तर्गतत्वादि प्रतीतिमन्तरेणाऽपि शुभ्रत्वादिना सिद्धयतीति रूपकान्तरसापेक्षता न नियतेति अव्याप्तंस्यात्। अतः रूपकान्तरमनपेक्ष्यापि रूपकनिर्वाहेसति चमत्कारविशेषजननाय यत्र रूपकान्तरोपन्यासः तत्र सावयवत्वम् । परम्परिते तु रूपकान्तरमनपेक्ष्य यद्रूपकमेव स्वरूपं नासादयति तत् तथा "विद्वन्मानसहंसे"त्यत्रोदाहरिष्यमाणे पद्ये। अत एव **रुद्रटेन काव्यालङ्कारे** - 'उभयस्यावयवानामन्योन्यं 'तद्वदेव यत् क्रियते तत्सावयवम् इति । **एकावलीतरलायाम्** - यत्रावयवी अवयवाश्च कात्स्न्र्येन रूप्यन्ते तत् समस्तवस्तुविषयं सावयवरूपकमित्याह -**मल्लिनाथः** । प्राचीनश्च दण्डी सकलरूपकमिति व्यपदिदेश।

**काव्यप्रकाशकारश्च** - आरोपविषया इव आरोप्यमाणाः यदा शब्दोपात्ताः तदा मस्तानि वस्तूनि विषयोऽस्येति समस्तवस्तुविषयमित्येतावदेवोक्त्वा "ज्योत्स्ना रमेत्युदाजहार", ग्रन्थकारोऽपि तदेवोदाहरति - **ज्योत्स्नेति** ।

चन्द्रिकया अन्वितां रात्रिं रूपकमुखेन योगिनीत्वेन कवयति। इयं रात्रिरेव पालिकी योगिनी, कीदृशी? ज्योत्स्नैव भस्म तस्य च्छुरणमुद्धूलनम् अङ्गलेपोवा, न धवला, तारकाएव अस्थीनि बिभ्रती धारयन्ती, अन्तर्धानंमदृश्यत्वं तदनुगुणं सनं-शक्तिः 'व्यसनं शक्तिविपदोः' इति **वैजयन्ती**। रात्रवन्तर्धानम् अवसानं तदेव नं यापनं तत्र रसिका कुतूहलिनी, चन्द्ररूपे मुद्राकपाले मुद्रेव हस्तग्राह्ये कपाले। क्षाकालगृहीतोपकरणेषु मुद्रोपपदनाम्ना पाषण्डानां व्यवहारः । अञ्जनादि- णकपालं, रात्रौ तु चन्द्रमुद्रा, चन्द्रमण्डली सैव कपालं तत्र न्यस्तं निहितं, नस्य छलेन व्याजेन सिद्धाञ्जनस्य अन्तर्निहितनिधिदर्शकाक्षिसंस्कारोपयोगि नानुग्रहसिद्धौषधिविशेषस्य परिमलं विमर्दोत्थगन्धं, तद्वचूर्णं वा । मुक्ताकपाल पाठे ऽपि मुक्तास्फोटे सिद्धाञ्जनस्यादृश्यत्वादि सिद्धयर्थं साधितस्याञ्जनस्य नं विमर्दं लेशमिति यावत् । मुद्रापरिमलशब्दौ प्रशंसार्थाविति अन्ये । कापालिकानां चिन्हं तद्रूपे कपाले इति वा । दधती धारयन्ती द्वीपात् द्वीपं मात् द्वीपात् अन्यत् द्वीपं भ्रमति ॥

## तत्वालोकः-

अत्र अवयविन्याः कापालिक्याः रूपणं प्रधानं, तदवयवेषु ज्योत्स्ना-तारका-चन्द्रेषु, भस्मा-स्थि-मुद्राकपालत्वरूपणं क्रियतइति पादत्रये कापालिकीरूपधर्मिणः भस्मादि धर्माणां शाब्दतया आरोपणाद्रूपकं समस्तवस्तुविषयम्।

**नन्वत्र-** कापालिकी रात्रिरिव, रात्रिः कापालिकी इव इत्युपमितसमासस्य, रात्रिरेव कापालिकी इति रूपकसमासस्य वा निर्णायकाभावात् सन्देहस्वीकारे न्याय-दोषरूपसाधक बाधक प्रमाणानुदयाच्चायमनिश्चयलक्षणो वक्ष्यमाणस्सङ्करः। नतु शुद्धं रूपकम् इति चेन्न।

अन्तर्धानरसिकत्वरूप सामान्यधर्मप्रयोगेण उपमितसमासाप्रसक्त्या रूपकसमासस्यैवाश्रयितुं युक्तत्वात्।

**नच** - अन्तर्धानस्य रात्रिधर्मत्वाभावात् उपमितसमासव्यावर्तक सामान्यधर्मत्वं नास्तीति वाच्यम्। अन्तर्धानत्वेनाध्यवसितायाः विरते : तद्धर्मत्व सम्भवेन सामान्यधर्मत्वसंभवात्।

**यदितु-** "राजतेराजकुञ्जरः" "भाष्याब्धिः क्वातिगम्भीरः" इतिवत् अन्तर्धानस्य अविवक्षितस्य सामान्यस्य प्रयोगेऽपि उपमितसमासः संभवतीत्युच्यते **तदा-** अन्तर्धानरसिकत्वस्य कापालिक्यामेव मुख्यतया अवस्थितिः रात्रौ तु उपचारत इति उक्तधर्मस्य रूपकसाधाकत्वमिति सङ्करस्यानुत्थानात्। अत एव-

भवेत्प्रकृतधर्माणामारोपोऽप्रकृते यदा।
उपमा रूपकं त्वन्यत् साधारण्ये तु संकरः॥

इति उपमा-रूपक-संकराणां विषयविभागः **प्राचीनैः** प्रादर्शि। इत्थं च प्रकृतपद्ये चन्द्रिकान्विता रात्रिरेव प्रकृता तस्यां च अन्तर्धानरसिकत्वमारोप्यतइति उपचरितत्वमेव। तदानुगुण्येन ज्योत्स्नैव भस्मेत्येवंरीत्या रूप्यतेइति रूपकत्वं निर्बाधम्।

नन्वत्र-ज्योत्स्ना भस्मेत्यत्र कथं रूपकत्वम्? विशिष्टे विषये विशिष्टस्य विषयिणः ऐक्यारोपात्। तथाहि-ज्योत्स्नादि विशिष्टायां रात्रौ भस्मच्छुरणादिविशिष्टरूपायाः कापालिक्याः ऐक्यारोपः।

## तत्वालोकः-

तथासति विषयविषयिणोर्बिम्बप्रतिबिम्बविशिष्टयोः ताद्रूप्यारोपे निदर्शनाया एवावतरणात् इति वक्ष्यमाणारीत्या निदर्शनाया एव वक्तुमुचितत्वात् इति चेन्न।

उक्तोदाहारणे- रात्रि-कापालिक्योः तद्विशेषणानां ज्योत्स्नादीनां च प्रत्यैकमेवैक्यारोपः। नतु विशिष्टे विशिष्टस्येत्यदोषात्।

**यद्यपि**- उक्तपद्ये- ज्योत्स्नादौ भस्मादिरूपणमन्तरा रात्र्यां कापालिकीत्वरूपणं नोपपद्यते। अतः-नियतारोपणोपायः स्यादारोपः परस्य यत्। तत्परम्परितम् इति **काव्यप्रकाशीय** लक्षणस्य अतिव्याप्तिः प्रसज्यते, **तथापि**-ज्योत्स्नादिषु भस्माद्यारोपातिरिक्तेन धावल्यादिमात्रेणाऽपि रात्र्यां कापालिकीत्वसिद्धेः न परम्परितत्वव्यपदेशः।

**यद्वा**- परम्परिते एकरूपकप्रविष्टविषय्यन्वितविषयि- रूपकान्तरत्वम्। यथा- ''अलौकिकमहालोकेति'' पद्ये हेतुहेतमद्भावापन्नमुक्तारत्न-सद्वंशरूपकयोर्मध्ये राज्ञि मुक्तारत्न रूपके आरोप्ये अन्वितत्वमेव सद्वंशरूपमारोप्यं विषयभूते उपमान्वयएव सद्वंशइति (उत्कृष्टवेणुः) श्लेषमूलकेनारोपेण उत्कृष्टवेणुत्वारोपः तादात्म्येन निबध्यते। तत्र सद्वंशसंबंधि मुक्तरत्नरूपत्वेनेव रूपणस्य प्रकृते राज्ञि विवक्षितत्वात् इति मुक्तारत्नरूपैक रूपक प्रविष्टविषय्यन्वितम् उत्तमान्वयविषयकोत्कृष्टवेणुरूपविषयि-रूपकान्तरत्वं विद्यत इति तत्र परम्परितत्वम्।

''ज्योत्स्ना भस्मच्छुरणधवला'' इत्यत्र रात्रौ कापालिक्यादि रूपकं प्रति ज्योत्स्नादौ भस्मरूपकस्य हेतुत्वसद्भावेऽपि, यद्वा रात्रौ कापालिक्यादिरूपकस्य प्रधानस्य तदवयवज्योत्स्नादौ भस्मादिरूपकं प्रति हेतुत्वसद्भावेऽपि रात्रौ कापालिकीत्वनैव रूपणं नतु भस्मादिसम्बन्धिकापलिकीत्वेनेत्यदोषात्। अतएव ग्रन्थकृता **कुवलयानन्दे**- यत्रतु

विषयविषयिविशेषणानां परस्परसादृश्येन बिम्बप्रतिबिम्बभावोऽस्ति ''ज्योत्स्नाभस्मेति'' सावयवरूपकोदाहरणे विषययविषयिणोः तद्विशेषणानां च प्रत्येकमेवैक्यारोपः नतु ज्योत्स्नादिविशिष्टरात्रिरूपविषयस्य भस्मादिविशिष्ट-कापालिकीरूपविषयिणश्च विशिष्टरूपेणैक्यारोपोऽस्ति इत्युक्तम् ( कु.६० पु.)

## तत्वालोकः-

एवंचैतावता सावयवरूपकेऽपि विशिष्टयोरैक्यारोपाभ्युपगमे परम्परितरूप-काद्वैलक्षण्यं न स्यादित्यभिप्रायः ध्वनितो भवति।

एतेन **सर्वस्वकृता-** आरोपपूर्वकापह्नवस्योदाहरणतया "ज्योत्स्नाभस्मेति" उपन्यस्तमयुक्तं समस्तवस्तुविषयसावयव रूपकस्यैव चमत्कारित्वात्। अपह्नवस्य तु अतथात्वादिति सूचितं भवति। तेनच **प्रकाशकृतो** मतमुपष्टम्भितं भवतीति युक्तमेतत् ॥ **यद्वा** कैतवापह्नुत्या संकीर्णं सावयवं रूपकमिति वा वक्तुं युक्तम्। नत्वपह्नुतिमात्रम्।

**नच-** सावयवरूपकस्य रूपकालंकारप्रभेदतया गणनं युज्यते ? तस्य रूपकसमुदायात्मकत्वात् अपितु संसृष्टिरूपत्वंस्यादपीति वाच्यम्। यथा वज्ररत्नालंकारभेदगणनाप्रसङ्गे वज्रमयचूडामणेरिव समुदायात्मकवज्र-कटकाङ्गदादयोऽपि गण्यन्ते तथा चमत्कारविशेषाधायकतया अस्यापिरूपक-प्रभेदतोक्तिः नानुचिता भवति। अन्यथामालोपमादेरप्युपमाप्रभेदता अनुपपन्ना स्यादिति।

**ननूक्तोदाहरणे-**"रात्रिकापलिकी" इत्यत्र किं रात्र्यां कापालिकीत्वमारोप्यते, अथ कापालिक्यां रात्रित्वम्। रात्रिवर्णनस्य प्रकृतत्वात्तदानुगुण्येन रात्र्यां कापालिकीत्व-मेवारोप्यते। न चैतद्युक्तम्- मयूरव्यंसकादिसमासस्य तत्पुरुषत्वेनपूर्वपदार्थाभेदः उत्तरपदार्थे भासते। यथा- नीलः घटः इत्यत्र घटस्य विशेष्यत्वं नीलत्वं प्रकारः विशेषणप्रतियोगिकाभेदश्च संसर्गः। तथाच नीलप्रकारकाभेदसंसर्गकः घटविशेष्यक बोधः तथा अत्रापि रात्रिप्रकारकाभेदसंसर्गककापालिकीविशेष्यक शाब्दबोधोदयात् उत्तरपदार्थभूतायां कापालिक्यां पूर्वपदार्थरात्र्यभेदबोधो युक्तइति उपमेये उपमानाभेदो न भासते, अपितु उपमाने उपमेयाभेद इति रात्र्यां कापालिकीत्वारोपनिबन्धनं रूपकालंकारत्वं न स्यात्। उपमेये उपमानताद्रूप्यारोपः खल्वत्रापेक्ष्यते, अन्यथा परिणामाद्वैलक्षण्यं च नस्यात्।

**इतिचेत् सत्यम्-**अथापि कापालकीप्रतियोगिकाभेदवती रात्रिरित्येतद्बोधोत्तरं स्वस्य स्वाभिन्नाऽभिन्नतया रात्रिप्रतियोगिकाभेदोऽपि भासत इति

## - तत्वालोकः -

रात्रिविशेष्यकाभेद-संसर्गककापालिकीप्रकारकबोधतः रात्र्यां कापालिक्यभेदबोधो मानसः सम्भवतीति पूर्वोक्तानुपपत्तेरभावात्।

अत एवच **ग्रन्थकृता**- बिम्बप्रतिबिम्बभावमूलकतयापि धर्मे साधारण्यमङ्गीकर्तुम् उपमाप्रकरणे-

पाण्ड्योऽयमंसार्पितलम्बहारः
क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः
सनिर्झरोद्गार इवाद्रिराजः॥

इत्यादौ हरिचन्दन-बालातपहारनिर्झरादीनां बिम्बप्रतिबिम्बभावेन निर्दिष्टानामपि साधारण्यमित्युपपादितं संगच्छते।

**अन्यथा**- तत्र बिम्बप्रतिबिम्बभावापन्नपदार्थानाम् उपमानोपमेयविशेषण तापन्नत्वेन परस्परमभेदान्वयस्य शाब्दबोधविषयत्वाभावेन साधारण्यासंपत्त्या उपमा प्रयोजकत्वंन स्यात्। उक्तरीत्यभ्युपगमे तु तत्रबिम्बप्रतिबिम्बभावापन्नधर्माणां मानसाभेदबोधविषयत्वेन साधारण्यसम्पत्त्या उपमानुकूलत्वमिति सकलालंकारिकसम्मतः पन्थाः।

**किञ्च**- अत्र **अन्येतु** एवंसमाधदते- रात्रिकापलिकीति शाब्दबोधात्प्रथमं रात्र्यभिन्ना कापालिकीति योग्यताज्ञानस्याहार्यस्यावश्यकत्वात् तत्रच तुल्यवृत्तिवेद्यतया कापालिक्यांरात्र्यभेदस्याप्यवगाहनसंभवात्ततएव रात्र्यांकापालिक्याभेदारा ...नततपसिद्धिः।

परन्तु "मुखंचन्द्रः" इत्यादिवत् रात्रिः कापालिकी इत्यादौ कापालिकीप्रतियोगिकाभेदवती रात्रिरिति बोधानुरोधेन रात्र्यां कापालिक्यभेदः शाब्दः। मुखचन्द्रः"इतिवत् रात्रिकापालिकी इति समासगतरूपके तुल्यवित्तिवेद्यतया कापालिकीप्रतियोगिकाभेदवती रात्रिरिति बोधो मानसः।

एवं कापालिक्यां रात्र्यभेदस्य "मयूरव्यंसकादयश्चेति" (पा.सू.२-२-७२) ...शास्त्रप्रवृत्त्युपयोगिताङ्गीकारेऽपि तस्य वक्तृतात्पर्यविषयत्वाभावेन न

## -तत्त्वालोकः-

तमादायरात्रिरूपकव्यवहारः ।

**किञ्चात्र**-मयूरव्यंसकादयश्चेत्यपि नोत्तरपदार्थप्रधानः समासः। यतो **भगवता पतञ्जलिना**-" विशेष्यस्य पूर्वनिपातार्थमिदम्" इत्यभिहितत्वात् अपितु मयूरव्यंसकादयश्च इतीदमपि पूर्वपदार्थप्रधानसमासविधायकमेवेति रात्रिकापालिकी इत्यादौ कापालिक्यादिरूपकमेवेति ॥

**अतएव**- "यस्य रणान्तःपुरे" इत्यत्र रणेअन्तःपुरत्वम् आरोप्यमाणम् इति "विद्वन्मानसहंस" इत्यत्र मानसमेवमानसमिति "आलानं जयकुञ्जरस्ये"त्यत्र जये कुञ्जरत्वाद्यारोपःइत्यादि **काव्यप्रकाशादिग्रन्थाः** संगच्छन्ते ॥

**ग्रन्थकृतस्तु**- मयूरव्यंसकादयश्चेति समासः उत्तरपदार्थप्रधानएव न पूर्वपदार्थप्रधान इति अभिमतः । अत एव **परिणामालंकारसिद्धान्ते**-यथा

"प्रसन्नेन दृगब्जेन वीक्षते मदिक्षणा" इत्युदाहृत्य ।

अत्र तु अब्जस्य वीक्षणोपयोगित्वं निबध्यते । मयूरव्यंसकादयश्चेति (पा.सू.२-१-७३)समासेनोत्तरपदार्थप्राधान्यात् इति स्पष्टमभिहितम्। उक्तस्थले मानस एवोपमानप्रतियोगिकाभेदबोध इष्टः इति युक्तम्।

अतएव-**न्यायकिरणावल्याम्**-

विद्यासन्ध्योदयोद्रेकादविद्यारजनीक्षये ।
यदुदेति नमस्तस्मै कस्मैचिद्विश्वचक्षुषे ॥

इतिश्लोके, तद्व्याख्यानेच -**किरणावलीप्रकाशे** यदिति सामान्यतोऽपि कर्तृनिर्देशे-विद्याविद्ययोः सन्ध्यारजनी रूपणाद्रविरुदेता लभ्यते इति व्याख्यानात्। विद्याविद्ययोः अभेदस्य सन्ध्यारजन्योः शाब्दबोधे भानेऽपि सन्ध्यारजन्योः विद्याविद्याभ्यामभेदस्य मानसबोधविषयत्वाभिसन्धिनेति- **पक्षधरमिश्रेण** विवृतं संगच्छते ॥

**वस्तुतस्तु**- "मुखंचन्द्र" इत्यादिव्यासस्थले विषयप्राधान्यं सर्वसम्मतम् । **ग्रन्थकृतश्चापि** सम्मतं यथा-

## -तत्त्वालोकः-

चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वाः
वादद्यूतं चिरतरमभूत् सिद्धयूनोः कयोश्चित्।
एको वक्ति प्रथमनितं कैटभं कंसमन्यः
सत्वं तत्वं कथय भगवन् को हतस्तत्र पूर्वम्॥

इति **अनुभयाभेदरूपके-** विषयिप्राधान्ये सति कथयेति मध्यमपुरुषस्यासाधुत्वं प्रसज्येत। इत्थंच "मुखंचन्द्रः" इत्यादिव्यासवैरूप्यावहस्य विषयिप्राधान्य परिकल्पकस्य उत्तरपदार्थप्रधान्यस्य "मयूरव्यंसकादयश्चेति" सूत्रे कल्पनापेक्षया पूर्वपदार्थप्रधानो मयूरव्यंसकादिसमासः इति पक्षपरिग्रहो युक्ततरः। अतएव- "देशान्तरम्" इत्यत्र पूर्वपदार्थभूतदेशस्यैव प्राधान्यम् अन्यत्वविशिष्टदेश-प्राधान्यसूचकम् अन्यो देशो देशान्तरम् इति वृत्तविग्रहदर्शनं च संगच्छते। अत एव च विशेष्यस्य पूर्वनिपातार्थमिदं सूत्रमिति भाष्यं च संगच्छते।

**ग्रन्थकृता परम्-** मयूरव्यसकादयश्चेत्त्युत्तरपदार्थप्रधानः समास इत्यभिधानं तत्पुरुषाधिकारस्थत्वादुक्तसूत्रस्य। तत्पुरुषस्यच प्रायः उत्तरपदार्थ-प्रधानत्वादित्यभिप्रायेण।

**नागेशभट्टैश्च-** 'भाष्याब्धिः क्वातिगम्भीरः' इत्यत्र मयूरव्यंसकादिसमासः रूपकंचेति (म.भा.प्र.उ.)२पु) **महाभाष्यपदिीपोद्योते** उक्तम्। तेनच मयूरव्यंसकादिसमासः पूर्व पदार्थप्रधानः इतिएषामभिप्रायो भवेत्। यतश्च भाष्यस्यैव व्यारव्येयत्वेन प्राधान्यावगमः।

**यद्वा-**"मयूरव्यंसकादयश्चे"त्यस्य तत्पुरुषाधिकारीयत्वात् उत्तरपदार्थे प्रधानता परिणामालंकारसिद्धान्ते ग्रन्थकृता अभिधास्यमाना युक्तैवत्युत्पश्यामः। यतश्च परवल्लिङ्गसूत्रे **भाष्यकृता-** तत्पुरुषग्रहणप्रत्यारव्यानं कुर्वता, योह्युत्तपदार्थप्रधानः। तेनकृतं तस्य परवल्लिङ्गत्वम् इति वदता (म.भा.२-४-२६सू) परवल्लिङ्गं द्वन्द्वस्येतावतच्च क्रियते सूत्रमित्यर्थः। तत्रोत्तरपदार्थस्य प्राधान्यात्तदीयमेव लिङ्गं तत्पुरुषस्यापि भवतीति नार्थस्तत्पुरुषग्रहणेन इति विवृण्वता **कैयटकृतापि** असति

## -तत्त्वालोकः-

बाधके तत्पुरुषे उत्तरपदार्थप्राधान्यम् अभ्युपगतमेवेति "मयूरव्यंसकादयश्चेत्यस्य" **वृत्तिकारानुरोधेन** विधिपरत्वाभ्युपगमे आर्थं प्राधान्यमाश्रित्य रूपकता। **विशेषणस्य परनिपातार्थत्ववादिमतानुरोधेन** नियमपरतामाश्रित्य शाब्दप्राधान्येऽभेदबोधस्य शाब्दबोधगोचरतया रूपकत्वमिति विकल्पाश्रयणं युक्तम् **नपुनः** "कर्मधारयेह्यभेदो विशेषणस्य संसर्गः। "मुखं चन्द्रः" इति व्यासे चन्द्रप्रतियोगिकाभेदवन्मुखम् इति प्रतियोगित्वमुखः। "मुखचन्द्रः" इति समासेतु मुखानुयोगिकाभेदप्रतियोगीचन्द्रः इत्यनुयोगित्वमुखः। तदुभयत्रापि चन्द्राभेद एव संसर्गः। वाक्ये प्रतियोगित्वमुखः समासे तु अनुयोगित्वमुख इति विशेषः। मुखचन्द्रः इत्यत्र मुखाभेदस्तु न संसर्गः। चन्द्ररूपकतानापत्तेः। विशेषणप्रतियोगिक एव अभेदस्संसर्गः नतु तदनुयोगिकइति तु दुराग्रहः निर्बीजत्वात् इति **रसगंगाधरोक्ता** रीतिः।

यतश्च **प्राचीनैः नैय्यायिकैः** विशेष्यताविशेषणतादीनां सम्बन्धरूप त्वमभ्युपगम्य- "दण्ड-पुरुष-संयोगाः" इति समूहालम्बनात्मकज्ञानात् दण्डीपुरुषः इति विशिष्टज्ञाने वैलक्षण्यप्रतीत्यनुरोधेन विशिष्टज्ञाने विशेषण विशेष्य-तत्संसर्गाणां भानमभ्युपगतम्, यथा "दण्डीदेवदत्तः" इत्यत्र संयोगाख्यं दण्डपुरुषयोः वैशिष्टयं भासते तत्र दण्डः संयोगे प्रतियोगी इति विशेषणम् (प्रकारः) पुरुषस्तु तत्रानुयोगी इति विशेष्यम्। तदुक्तम्- **गादाधर्याम् प्रामाण्यवादे-** भासमान वैशिष्ट्य प्रतियोगित्वं प्रकारत्वं,, भासमानवैशिष्टयानुयोगित्वं च विशेष्यत्वम् इति, अतश्च विशेषणप्रतियोगिकएवाभेदः संसर्गः नतु विशेष्यप्रतियोगिकाभेदः॥ इति।

**यद्वा-** विशेषणतादीनामतिरिक्तविषयतास्वरूपत्वमिति मते विशेषण विशेष्ययोः सम्बन्धस्य संयोगादेः प्रतियोगित्वानुयोगित्वरूपः सम्बन्धः दण्डपुरुषादिनिष्ठो भासते इति समूहालम्बनात्मकत्वात् वैलक्षण्यमुपपादनीयम्॥

एवं च- "मुख चन्द्रः" इत्यादौ मुखप्रतियोगिकाभेदवान् चन्द्रः इति विशेषणप्रतियोगिकाभेद एव विशेष्ये भासते। विशेष्यप्रतियोगिकाभेदभानंतु मानसमेवेति भावः॥

## -चित्रमीमांसा-

**एकदेशविवर्ति सावयवं यथा-**

**प्रौढमौक्तिकरुचः पयोमुचां बिन्दवः कुटजपुष्पबन्धवः।**
**विद्युतां नभसि नाट्यमण्डपे कुर्वते स्म कुसुमाञ्जलिश्रियम्॥**

## -तत्त्वालोकः-

समस्तवस्तुविषयं सावयवं निरूप्य **भामहाद्यभिमतस्य** एकदेशविवर्त्ति सावयवस्य स्वरूपे केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थावसेयाः इत्येकदेशे विशेषेण वर्तनात् एकदेशनिवर्ति इति-**प्रकाशकृता,** एकदेशे विशेषेण वर्तत इत्येकदेशविवर्ति सावयवं यत्रैकं रूपकं कृतं सदकृतमपि रूपकान्तरं सामर्थ्यात् गमयति इति **विद्याधरेण** एवंविधैव व्युत्पत्तिः प्राचीनैः **उद्भटादिभिरपि** प्रादर्शि। तद्यथा-

यद्वैकदेशवर्तिस्यात्पररूपेण रूपणात्।

इति **उद्भटेन,** एकदेशे विशेषेण स्वकण्ठोक्त्या वर्णनात् इति **प्रतीहारेन्दुराजेन** च विवृतम्। अतस्तदुदाहरणमाह **एकदेशविवर्तीत्यादिना।**

**प्रौढेति-** प्रौढानि उत्कृष्टानि यानि मौक्तिकानि महारत्नविशेषाणि तेषां रुगिव रुक् **येषां ते प्रौढ**मौक्तिकरुचः पीतरक्तवर्णाः, कुटजपुष्पबन्धवः गिरिमल्लिकाकाराः, पयोमुचां मेघानां बिन्दवः जलबिन्दवः, विद्युतामाकालिकीनां नाट्यमण्डपे तत्तत्पदार्थ-स्वरूपरूपादिप्रत्यायनस्थलविशेषरूपे नभसि आकाशदेशे, कुसुमाञ्जलिश्रियम् पुष्पाञ्जलिशोभां कुर्वते स्म अकुर्वन् इत्यर्थः भूतेप्यर्थे स्मयोगे लट्।

लोकेऽप्यभिनयावसरे काव्योपनिबद्धधीरोदात्तादिनायकीयमनःकथा-[illegible]पाण्डुत्वादिरूपवेषादीन् अनुकर्तुं रङ्गप्रसाधनपुरस्सरं सूत्रधारेण पुष्पाञ्जलिः [illegible]र्प्यते तद्वत् चलितवर्चसां विद्युतामाविर्भावे सति कुटजपुष्पवत् स्थलस्थूलानां [illegible]बिन्दूनां तेषामेव विद्युत्प्रसरणसमये पीतरक्तानां पतनात् नभः नाट्यमण्डपत्वेन [illegible] नभसां नाट्यमण्डपत्वे तत्र नर्तकीनामावश्यकतया नृत्यन्तीनामिव भासमानानां

**चित्रमीमांसा-**

**इत्यत्र नभसो नाट्यमण्डपत्वेन रूपणाद्विद्युतामर्थात् नर्तकीत्वं गम्यत इत्येकदेशे रूपकस्य विशेषेण वाच्यतया वर्तनात् इदमेकदेशविवर्ति ॥**

**श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा-**

-तत्त्वालोकः-

विद्युतामेव नर्तकीत्वं सामर्थ्यादवगम्यते। परन्तु नभसि नाट्यमण्डपत्वरूपणं शाब्दम्, विद्युतां नर्तकीत्वम् अर्थसामर्थ्यावसेयमिति एकदेशे नभसि विशेषेण कण्ठोक्त्या वर्तनात् नाट्यमण्डपत्वरूपणात् एकदेशविवर्तित्वं तदेतदाह- **अत्र नभसइत्यादिना।**

एवं चात्र- नाट्यमण्डपं नर्तकनर्तक्यन्यतरव्याप्तमिति ज्ञानेसति नाट्यमण्डपरूपे नभसि विद्युत्सम्बन्धोक्त्या नर्तकसम्बन्धप्रतीत्यपेक्षया नर्तकीसम्बन्धस्यैव औचित्यबलात्सिद्धिः। इत्थं द्विविधं सावयवं निरूपितम्।

सम्प्रति रूपकस्य तृतीयः प्रभेदः प्रस्तूयते- अत्रतावत् यद्यपि **रुद्रटेन**- सावयवं -निरवयवं-संकीर्णं चेति त्रेधा विभज्य निरवयवानां प्रभेदाः शुद्धं माला रशनापरम्परितमिति प्रदर्शिताः। अथ च- परम्परितमित्थंलक्षितम् -

अन्यदिदं यस्मिन्नुपमानाभ्यां समस्यमुपमेयमन्यार्थे इति (८७श्लो)

विवृतंच **नमिसाधुना**- यत्र द्वाभ्यामुपमानाभ्यां सहैकमुपमेयम् अन्यस्य द्वितीयस्योपमेयस्यार्थे वर्तमानं समस्यते। यत्र द्वे उपमाने तत्रावश्यमुपमेयद्वयेनैव भाव्यमित्युपमेयार्थे उपमेयं समस्यते इति। तथापि निरवयवेषु परम्परितप्रदर्शनं तत्रापि श्लिष्ट-केवलपरम्परितयोः अपरिगणनं रशनारूपकस्य निरवयवेष्वेव परिगणनं च न युक्तमित्यभिप्रायेण श्लिष्टशब्दनिबन्धनं केवलं परम्परितमुदाहरति- **श्लिष्टेत्यादिना।**

## -तत्त्वालोकः-

श्लिष्टः- श्लेषसामर्थ्यात् आरोप्यारोपाधिकरणवाचकः यश्शब्दः सः निबन्धनं मूलं यस्य तत् श्लिष्टनिबन्धनम् केवलपरम्परितं केवलमालारूपं, परम्परितं परम्परा एकस्य आरोपस्य अन्यारोपहेतुत्वमित्येवंरूपा संजातात्रेति तदस्य सञ्जातम् (पा.सू. ५=२-३६) इति तारकादित्वादितच्।

**यद्यपि प्रकाशकृता-**

नियतारोपणोपायः स्यादारोपः परस्य यत्।

तत्परम्परितं श्लिष्टवाचके, भेदभाजि वा॥ इति।

एकस्यारोपस्य नियमेन आरोपान्तरहेतुकत्वे सति परम्परायातत्वात्।

इति **सम्प्रदायप्रकाशिनी**। आरोपान्तरसापेक्ष आरोपः परम्परितमिति **साहित्यचूडामणिः**।

**निष्कृष्टलक्षणन्तु-**'अन्यविशेष्यकान्यप्रकारकारोपाभावप्रयोजकाभाव प्रतियोग्यन्यविशेष्यकान्यप्रकारकारोपः परम्परितम् इति। सावयवरूपकादस्य परम्परितस्य भेदश्च-यत्र रूपकान्तरम् अनपेक्ष्य यद्रूपकमेव न स्वात्मानमासादयति तत्रोक्तं परम्परितत्वम्। यत्र तु-प्रकारान्तरेण सादृश्यनिर्वाहसंभवेऽपि चमत्कारविशेषोत्पादनाय रूपकान्तरमुपनिबध्यते तत्र सावयवत्वं यथा "अलौकिकेत्यत्र"।

**एतेन-**रूपकद्वयमात्रव्यवस्थितं परम्परितं, सावयवं तु न तथेति वदतो विद्यानाथस्य विवरणं चिन्त्यम्। वक्ष्यमाणे "विद्वन्मनसहंसेत्यादौ" श्लिष्टमालापरम्परितेऽव्याप्तेः। तत्र आरोपबहुत्वस्यैव अवगमात्।

तथा-प्रकृतारोपप्रयोजकाप्रकृतारोपः परम्परितमिति वादिनांमतमपि न समीचीनमत्-'आलानं जयकुञ्जरस्य' इति प्रकाशकाराद्युदाहृतपद्ये प्रकृते एव जये कुञ्जरत्वारोपस्य प्रकृतएव राज्ञो भुजे आलानत्वारोपहेतुत्वादव्याप्तेः॥

-चित्रमीमांसा-

**अलौकिकमहालोकप्रकाशितजगत्त्रयः।**
**स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान्॥**

**अत्र त्वमेव मुक्तारत्नमित्यारोपणपूर्वकः सद्वंश उत्तमान्वय एव सद्वंशः उत्कृष्टवेणुरित्यारोपः इति रूपकद्वयमपि संभूतपरंपरमिति परम्परितम्, वंशे श्लिष्टशब्दनिबन्धनंच॥**

-तत्त्वालोकः-

**अलौकिकेति** । हे देव! अलौकिकस्य लोकेऽन्यत्रादृष्टस्य लोकोत्तरस्य महस्य उत्सवस्य, आलोकः प्रदर्शनमेव प्रकाशः तेन प्रकाशितं जगत्त्रयं येन, यद्वा- अलौकिकः लोकातिशायी यो महानालोकः कीर्तिप्रतापरूपः तेन प्रकाशितजगत्त्रयः, सद्वंशः सत्कुलमेव वंशो वेणुः मुक्तोत्पत्तिस्थानं, तत्रोदीयमानं रत्नं सद्वंशमुक्तारत्नम् भवान् कैः न स्तूयते? सर्वैरपि स्तूयत इत्यर्थः ॥

**अत्र मतद्वयम्**-अस्मिन् परम्परितरूपके पूर्वरूपकंप्रति उत्तररूपकं हेतुरित्येकम्। उत्तररूपकं प्रति पूर्वरूपकस्य हेतुत्वमित्यपरम्। तयोराद्यं **रुय्यकादीनाम्**, द्वितीयं **मम्मटादीनाम्**। तयोः प्रथमं मतमवलम्ब्य समन्वयं विधत्ते **अत्रेत्यादिना**।

**अयं भावः**- "अलौकिके"त्युदाहरणे राज्ञि मुक्तारत्नत्वारोपणमन्तरा सद्वंशशब्देन अभिधीयमानस्य वेणोराकांक्षा नैव जायते। अतश्च प्रथमं राज्ञि मुक्तामणित्वारोपे सति तदारोपकारणीभूतः कुलगतः वेणुत्वारोपः इति द्वयोरारोपयोः हेतुहेतुमद्भाव इति उत्तरारोपः पूर्वारोपं प्रति हेतुभूतः इति परम्परितत्वमिति।

**मम्मटाभिप्रायं** परित्यज्य **सर्वस्वकारानुयानस्य** अयमाशयः-

अलौकिकेत्युदाहरणे राज्ञो वर्ण्यत्वेन प्रथमतः तस्य स्फूर्तौ राज्ञि मुक्तामणित्वारोपपूर्वकम् अवर्ण्ये सद्वंशरूपे सत्कुले श्लेषमूलकतया वेणुत्वाद्यारोपो युक्तइति।

**मम्मटाद्यनुरोधे तु**- सद्वंश एव सद्वंश इति हेतुरूपणनिमित्तः राज्ञि मुक्तामणित्वारोपः। तत्र सद्वंशेति श्लेषस्य प्रथमोपस्थित्या तन्मूलकार्थ

-चित्रमीमांसा-

**तदेव मालापरम्परितं यथा-**

**विद्वन्मानसहंस, वैरिकमलासंकोचदीप्तद्युते,**
**दुर्गामार्गणनीललोहित, समित्स्वीकारवैश्वानर।**
**सत्यप्रीतिविधानदक्ष, विजय प्राग्भावभीम प्रभो**
**साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥**

-तत्त्वालोकः-

द्वयाभेदाध्यवसायोपजीविरूपकस्य प्रथम प्रतीत्या तद्बुद्धेः उत्तररूपक बुद्धिं प्रति हेतुत्वं युक्तमित्युपपाद्यम्। **श्लिष्टेति**। अत्र राज्ञो मुक्तारत्नात्वारोपणान्यथानुपपत्त्या सद्वंश एव सद्वंश इति हेतुत्वात् श्लिष्टपरम्परितरूपकत्वम्।

एतेनैतदुक्तं भवति-सर्वस्वानुरोधे-अन्यत्रान्यारोपहेतुकः यदारोपः तदर्थकपदस्य श्लेषसामर्थ्याद्विषयविषयिवाचकत्वे श्लिष्टत्वं परम्परितत्वं च। मम्मटानुरोधे तु अन्यत्रान्यारोप हेतुर्यदारोपः तदर्थकपदस्य श्लिष्टत्वे श्लिष्टपरम्परितत्वमिति भेद इति।

यद्यपि-रसगंगाधरकृता-'समर्थकत्वेन विवक्षितस्यारोपस्य श्लेषमूलकत्वं श्लिष्टपरम्परितत्वम्' इत्यभिहितम्, तथापि तत् मम्मटानुगुणमेव न तु सर्वस्वानुगुणमिति बोध्यम्। अन्यथा उक्तोदाहरणे राज्ञि मुक्तरत्नारोपस्यैव समर्थकत्वेन तदर्थकपदस्याश्लिष्टत्वेन अव्याप्तिप्रसक्तेः।

अथ श्लिष्टशब्दनिबन्धनं मालापरम्परितमुदाहरति-**विद्वन्निति**।

यथा? हे वीर! वैरिञ्चं ब्राह्मम् पदम् वत्सरशतं उच्चैः साम्राज्यं क्रियाः कुर्याः। राज्ञः अन्यान्यपि सम्बोधनन्याह-**विद्वदिति**। विदुषां मानसम् मन एव मानसं सरः तत्र हंस हंसस्वरूप "मानसं सरसि स्वान्ते" **इति** कोशात्। तथा वैरिणां कमलायाः लक्ष्म्याः सङ्कोच एव कमलानां पद्मानामसंकोचः तस्य दीप्तद्युते सूर्य, तथा दुर्गाणां गिरिदुर्ग-

## -तत्त्वालोकः-

जलदुर्ग-वनदुर्गात्मना त्रिविधानां प्रसिद्धानां दुर्गाणाममार्गणं निर्भयत्वेन अनन्वेषणमेव दुर्गायाः पार्वत्याः मार्गणमन्वेषणं तत्र नीललोहित-

'वामे मरकतश्यामा दक्षिणे विद्रुमारुणा ।

देवता दम्पतिमयी.... ॥

इत्युक्तरीत्या अर्धनारीश्वरस्वरूप । तथा समितां सङ्ग्रामाणां स्वीकार एव समिधाम् एधसां स्वीकारः तत्र वैश्वानर वह्निस्वरूप तथा सत्ये सत्यवक्ये प्रीतिरेव सत्यां भवपत्न्यां दक्षकन्यायां अप्रीतिः तत्र विधाने दक्ष प्रवीण, अथ च दक्ष दक्षप्रजापते ? तथा विजयस्य वैरितिरस्कारस्य प्राग्भावे पूर्वकाले भीमः भयजनकः तदुत्तरं सौम्य ।, अत्र वत्सरशतं साम्राज्यं क्रियाः इत्यत्र कालाध्वनोरत्यन्तसंयोगे (पा.सू.१-३-५) इति द्वितीया । अत्र विदुषां मानसं हृदयमेव मानसं सरः इत्यादिरीत्या न प्रथमं श्लेषः क्रियते, अपि तु प्रथमं राज्ञि हंस सूर्य नीललोहित-वैश्वानररूपणाानन्तरमेव । राज्ञि हंसादिरूपणं विना कवेः अर्थद्वयविवक्षायमिह गमकाभावेन श्लेषस्यैवानुदयात् । श्लेषोहि रूपकेणोत्थाप्यते ।

नच-रूपकबाधकतया श्लेषस्यैव प्राथम्यम स्त्विति वाच्यं राज्ञि हंसाद्यारोपे कृते कथमयं हंसः इत्याकांक्षायाम् अनन्तरं श्लेषबाधकत्वात् प्रथमं रूपकमनन्तरं श्लेषः तृतीयकक्ष्यायां रूपक एव विश्रान्तिरिति उक्तं च-**चक्रवर्तिना**-

रूपकं पूर्वसंसिद्धं श्लेषमुत्थापयेद्यदि ।

तदा रूपकमेव स्यादन्यथा श्लेष इष्यते ॥ इति ।

**अलंकारसर्वस्वकारेण** च-श्लेषगर्भे तु रूपके रूपक हेतुकस्य श्लेषस्य तृतीयकक्ष्यायां रूपक एव विश्रान्तिरिति रूपकेण श्लेषो बाध्यते "इत्युक्तम् ।

**अन्यथा**-विदुषां मानसं हृदयमेव मानसं सरः इत्यादि श्लेषभित्तिकाभेदाध्यवसायलभ्यमानसत्वादिरूपसाधारणधर्मनिबन्धनसादृश्येन लक्षणा सम्भवति। तदुम्भकस्य श्लेषस्य रूपकोत्थाप्यतया रूपकापेक्षलक्षणादशायां तस्य बुद्धिपथानारोहादिति वृत्तिवार्तिके ग्रन्थकृतैवोक्तमसंगतं स्यादिति बोध्यम् ।

## -तत्त्वालोकः-

तेन रूपकेसारोपलक्षणानिराकरणार्थमुत्तररूपकं पूर्वरूपकसाधकमिति सर्वस्वकारानुसरणमित्यपि बोध्यम् । अत एव **ग्रन्थकृता वृत्तिवार्तिके-**''अत्रेदं तत्वम् - ''विद्वन्मानसहंस'' इत्यादौ हंसादिपदानां वर्ण्ये राजनि लक्षणा नाङ्गीकर्तव्या, सामानाधिकरण्येन वर्ण्यस्य राज्ञः प्रसिद्धहंसजातीयादिभिरभेदस्य वाक्यार्थविधयैव प्रतीत्युपपत्तेः । इत्युक्तम् ।

**किंच**-'गौर्वाहीकः',मुखं पङ्कजम्' इत्यादौ जाडयाह्लादकत्वादीनां साधारणधर्मणां प्रतीत्या विषयविषयिपदयोः समानाधिकरण्ये सारोपलक्षणासम्भवेऽपि, ''विद्वन्मानसहंस'' इत्यादौ श्लिष्टपरम्परितरूपकस्थले श्लेषमूलकाभेदध्यवसायमूलतया मानसवासित्वरूपे राजहंसयोः सादृश्ये सिद्धे सदृशलक्षणामूलस्य राज्ञि हंसरूपकस्य सिद्धिः । रज्ञि हंसरूपकसिद्धौ सरोमनोरूपानेकार्थभिधानलक्षणस्य श्लेषस्य सिद्धिरित्योन्याश्रयणं प्रसज्यत एवेति कथमत्र सरोपलक्षणा ।

**नवात्र**-भ्रमिमरति-मलसहृदयतां
प्रलयं मूर्च्छां तमः शरीर सादम् ।
मरणं च जलदभुजगजं
प्रसह्य कुरूते विषं वियोगिनीनाम् ॥

इत्यत्र यथा जलदादेः भुजगत्वारोपमन्तरेणाऽपि विषशब्दे भ्रमरत्यादिश्रवणादेव गरलरूपर्थान्तरप्रतीतिः, तथात्र राज्ञि हंसाद्यभेदारोपं विना कवेरर्थद्वयविवक्षा - ऽवगमकाभावेन श्लेषमूलकतया सरःप्रभृत्यर्थान्तरप्रतीतिरस्ति। अत एव-

**ध्वनिकृता**- ''भ्रमिमरतिम्'' इत्यत्र रूपकच्छायानुग्राही श्लेषो वाच्यतयैवावभासते इति प्रतिपाद्य श्लेषस्य प्राधम्यं प्रत्यपादि ।

**एतेन**- यत्र श्लिष्टशब्दाद्रूपकान्तरमनपेक्ष्यैव प्रकारान्तरेण अर्थान्तरप्रतीतिः तत्र न श्लिष्टपरम्परितम् किन्तु श्लेष एवेति प्रत्युक्तं वेदितव्यम् ॥

**अन्यथा**- 'भ्रमिमरतिम्' इत्यत्र भ्रमाद्यष्टविधप्रकृतिविकार- जनकत्व-...रस्यान गुणस्य हालाहलप्राधान्यप्रतीतिनिबन्धनौचित्यस्य भङ्गप्रसङ्गात् **ध्वनिकार-प्रकाशकारादि** ग्रन्थविरोधप्रसङ्गात् **वृत्तिवार्तिकाभिमतेन**

## -तत्त्वालोकः-

रूपकध्वनि त्वनिराकरणपूर्वकं तद्वाच्यत्वव्यवस्थापकग्रन्थभागेनच विरोधप्रसङ्गाच्च। उक्तंच- ननु भ्रमिमरतिं इत्यत्र विषपदेन अप्रस्तुतं व्यङ्ग्यं गरलं वाच्यस्य जलद एव भुजगः इति रूपकस्य सिद्धिकृदिति वाच्यसिध्यङ्गं गुणीभूतव्यङ्ग्यमुदाहरता **मम्मटाचार्येण** अप्रस्तुते शक्येऽपि शब्दशक्तिमूलो ध्वनिरुक्तः । सत्यम् । अप्रस्तुतार्थप्रतीतिमूलतया प्रतीयमानयोः वस्त्वलंकारयोः व्यक्त्यवश्यं भावदाढर्यायाश्रितम् "अप्रस्तुतार्थेऽपि व्यक्तिः ' इति प्रौढिवादमात्रमवलम्ब्य तत्प्रवृत्तमिति नात्रभिनिवेशः कार्य इति।

**अतश्च-**

रूपकं पूर्वसंसिद्धं श्लेषमुत्थापयेद्यदि।
तदा रूपकमेव स्यादन्यथा श्लेष इष्यते ॥

इति श्लेषरूपकयोविभागव्यवस्था **चक्रवर्तिना** या कृता सा **सर्वस्वकारा**नुसारिणीति बोध्यम्। इत्थंच विद्वन्मानसेत्यत्र रूपकस्यैव प्राधम्यं श्लेषस्य पाश्चात्यत्वं चेति न सारोपलक्षणायाः प्रसर इति **प्राचीनानां पूर्वमीमांसकानां** च गौणसारोप लक्षणाश्रयणमयुक्तमनावश्यकंचेति ग्रन्थकृतामभिसन्धिः।

**रसगङ्गाधरकृतातु-** रूपकनिरूपणावसरे-"विद्वन्मारसे"त्यत्र अन्योन्याश्रयदोषपरिहारपूर्वकं रूपके सारोपलक्षणा प्राचीनाभिमता युक्तेति प्रतिपादितैव। तथाहि-सकलसिद्धेः कल्पनामयत्वेन कल्पनायाश्च स्वप्रतिभाधीनत्वात्। शिल्पिभिः परस्परावष्टम्भमात्राधीनस्थितिकाभिः शिलेष्टकाभिः गृहविशेषनिर्माणाच्चेति ग्रन्थभागेन अन्योन्याश्रयदोषः परिहृतः। अन्यत्र च-ताद्रूप्यप्रत्ययो लक्षणायाः फलमिति प्राचां समयः । **महाभाष्यादि** ग्रन्थानामस्मिन्नेवानुकूलत्वाच्च । नव्यनयेतु तेषामाकुलीभावस्स्यादिति। अपरत्रच साधारणधर्मानु पस्थिति दशायामुपमालंकारस्येव रूपकालंकारस्यापि नास्ति निष्पत्तिः चमत्कारोवेति सकलहृदयसिद्धम्। कथमन्यथा 'भारतं नाकमण्डलम्' "नगरं विधुमण्डलम्" इत्यादि वाक्यश्रवणानन्तरमुन्मिषन्त्याः रूपकप्रतिपत्तेः सुपर्वालंकृत सकल कला-दिशब्दश्रवणोत्तरमेव समुन्मेषस्सर्वेषाम्। इत्थमेव 'मुखं चन्द्रः'

## -तत्त्वालोकः-

इत्यादिप्रसिद्धोदाहरणेऽपि। इयांस्तु विशेषः यदेकत्र साधारणो धर्मः प्रसिद्धतया नियमतः स्वबोधकश्रुतिं नापेक्षते। इतरत्र तु अप्रसिद्धतया तथा। एवं स्थिते साधारणधर्मवत्त्वरूपं सादृश्यं यदि रूपकमध्यं न प्रविशेत् तदा कथमिव धर्मविशेषानुपास्थितिदशायां रूपकं नपर्यवस्येत्। चमत्कारं वा न जनयेत्। उपमानोपमेययोराहार्याभेदबु रनन्यापेक्षपर्यवसानायाः साम्राज्यात्। आहार्यपदार्थ-द्वयाभेदबुद्धौ तच्चमत्कारेवा साधारणधर्मविशेषज्ञानमपेक्षितम्। तदभावेऽपि "यद्यनुष्ण"इत्यादिस्थलेऽ भेदप्रत्ययोपगतेःइति**प्रतिपादितं समीचीनमेव**।

**वस्तुतस्तु-** रूपके विषयविषयिणोः स्वस्वपदाभिहितयोः अभेदप्रतिपत्तिः संसर्गमर्यादयेत्येव वक्तव्यम् इति प्रागुक्तरीत्याश्रयणे "विद्वन्मानस" इत्यादौ राज्ञि हंसाभेदज्ञानस्य स्वान्ते सरसोऽभेदभानस्य च आहार्यत्वमेव न पुनः वास्तविकत्वम् अन्यथा तथा प्रयोक्तृणां भ्रान्तत्वापत्तेः। नह्येतद्भ्रान्तिजल्पितम् अभ्रान्तैः भ्रान्तिज्ञैश्च पुरुषैः "अग्निर्माणवकः" सिंहोदेवदत्तः "मुखंचन्द्रः" इत्यादेः प्रयुक्तत्वात्। तथासति साधारणधर्मज्ञानमन्तरापि रूपकसिध्या श्लेषमूलकतया मानसवसित्वस्य साधारण्यं प्रतिपाद्य रूपकान्तरं प्रति हेतुत्वोपपादनमयुक्तमिति क्वापि परम्परितत्वं न स्यादिति रूपके सारोपलक्षणाश्रयणं युक्तमेव। अतएवच **तन्त्रवार्तिके भट्टकुमारिलैः-**

असंकीर्णस्वभावं सद् वस्तु वस्त्वन्तरात्मना।
आरोप्यतेऽभिधानार्थं कथं नु भ्रान्तिवर्जितैः ॥
द्वावपि प्रतिपद्येते सिंह्मपुंसोर्विविक्तताम्।
नाध्यारोपयितुं शक्तिः तेनैकस्यापि विद्यते ॥

अनेन सन्दर्भेण अभ्रान्त-भ्रान्तिज्ञपुरुषप्रयुक्तप्रयोगाणां "मुखंचन्द्र" आदीनामाहार्यारोपप्रयोज्यत्वं निराकृतम् ॥

**किंच** यद्यत्र ग्रन्थकृतः अन्यथाख्यातिवादिनैयायिकैरिव बाधबुद्धेः आहार्यज्ञानाप्रतिबन्धकत्वेन आहार्ययोग्यताज्ञानात् "मुखंचन्द्रः" इत्यादौ शाब्दान्वयबोधः इत्यभिमतस्स्यात्- तदा अभेदस्य संसर्गमर्यादया भानाभिधानमयुक्तं, शाब्दबोधे खल्वेकपदार्थेऽपरपदार्थसंसर्गः संसर्गमर्यादया भासते इति तैरभ्युपगम्यते।

## -तत्त्वालोकः-

आहार्यभेदभानंतु योग्यताज्ञानस्य मानसप्रत्यक्षविषयरूपत्वस्वीकारानुसारि। अतएव परोक्षज्ञानमनाहार्यमेवेति शाब्दबोधादेः आहार्यत्वं निराकृतम्। अतएव **गदाधर भट्टाचार्येण राजपुरुषवादे प्रसङ्गतः**- एवं "मुखं चन्द्रः" इत्यादिरूपकस्थले चन्द्रादि-पदस्य चन्द्रादिसदृशलक्षणया चन्द्रादि सदृशाभेदानन्वयबोध एव। न तु सादृश्यादिसम्बन्धेन चन्द्रादेः मुखादावन्वयः इत्यभ्युपगतः इति प्रागेव आवेदितम्। इत्थंच परम्परितरूपकस्थले परम्परितत्वोपपादनंलक्षणापक्षएव स्वरसतस्संगच्छते। अन्यथा- रूपकयोः हेतुहेतुमद्भावोपपादनं नातीव स्वरसं भवेत् इत्यवधेयम्॥

**ननु**- विद्वन्मानसेत्यत्र मानसादिपदेषु समानानुपूर्वीक शब्दप्रति-सन्धानबोध्यानेकार्थकत्वरूपस्यार्थश्लेषस्य, पर्यायपरिवृत्त्यसहत्व लक्षणस्य-वार्थश्लेषस्य, कमलासङ्गो चेत्यादौ विभिन्ना- नुपूर्वीकशब्दप्रतिसन्धान-बोध्यार्थान्तरकत्वलक्षणस्य शब्दश्लेषस्य, पर्यायपरिवृत्ति-सहत्वरूपस्य वा शब्दश्लेषस्य तादृशश्लेषभित्तिका-भेदाध्यवसायमूलतया मानसवासित्वादिषु साधारण्यं सम्पाद्य-

स्फुटमेकत्र विषये शब्दार्थालंकृतिद्वयम्।

इत्युक्तलक्षणः शब्दार्थालंकारात्मकः संङ्करः इत्येव वक्तव्यः।

**सत्यम्**- अथापि श्लेषापवादकं रूपकम् इति **अलंकारसर्वस्वकारादीनां** मतमनुसृत्य अर्थालंकारमध्ये उदाहृतः। उक्तंच **सर्वस्वे**- श्लेषगर्भेतु रूपके रूपकहेतुकस्य श्लेषस्य तृतीयकक्ष्यायां रूपकएव विश्रान्तिः इति रूपकेण श्लेषो बाध्यते इति।

**वस्तुतस्तु**- नात्रोभयश्लेषस्यावसरः- सभङ्गाऽभङ्गभेदेन प्रविभक्तयोः श्लेषयोः अनेकार्थप्रतिपादकत्वसापेक्षतया अर्थमुखप्रेक्षितत्वस्य तुल्यत्वेन अर्थालंकारत्वस्यैवोचितत्वात्। आश्रयाश्रयिभावस्यैव लौकिकालंकारात् तत्तदलंकारप्रयोजकत्वम्।

**यद्यपि**- लोकेऽ कर्णाश्रिताः कर्णालंकाराः कण्ठाश्रिताः कण्ठालङ्काराः इति

## -तत्त्वालोकः-

व्यपदिश्यन्ते, **तथापि**- अत्र द्विविधयोरपिअर्थाश्रितत्वनियमात् अर्थालंकारत्वमेवोचितम्।

**नच** शब्दान्वयव्यतिरेकानुविधायित्वाच्छब्दालंकारत्वमिति वाच्यम्, तथासति सर्वेषामप्यलंकाराणां शब्दान्वयव्यतिरेकानुविधायित्वेन शब्दालंकारताप्रसंगात्। नच पदादि भेदेसति भिनप्रयत्नोच्चारणावश्यंभावात्। मिथस्वतो भिन्नयोः शब्दयोः **जतुकाष्ठःन्यायेन** शब्दद्वयसंश्लेषरूपत्वात् शब्दालंकारत्वम्, पदाद्यभेदे सति **एकवृन्तगतफलद्वयन्यायेन** एकस्मिन् पदे अर्थद्वयस्य संश्लेषादर्थश्लेषरूपार्थालंकारत्वमिति वदतो **भङ्गेद्वयानुसारिणस्सर्वस्वकारस्य** मतमनादरणीयम्। यतश्च प्रत्यर्थं शब्दनिवेशः इति **वैयाकरणैः**, अनेकार्थ-कल्पनायोगात्, अन्याय्यंचानेकार्थत्वम् इति **वेदान्तिभिश्च** अभिहितरीत्या शब्दयोः श्लेषस्यैव सुवचत्वात्। अतश्चोभयं शब्दालंकार इति, सभङ्गः शब्दालंकार इति, अभङ्गोऽर्थालंकारः इति मतद्वयमप्ययुक्तम्। तस्मात् द्वयोरप्यर्थालंकारत्वमेव युक्तिमिति **ग्रन्थकृदाशयः**। अतएव ग्रन्थकृतैव **कुवलयानन्दारव्यसन्दर्भे**- श्लेषप्रकरणे- पूर्वपक्षिणां मतमनूद्य उभयमप्यर्थालंकार इति स्वाभिप्रायः एतद्विवेचनं तु **चित्रमीमांसायां द्रष्टव्यम्** इत्युक्तम्। परंतु ...प्रकरणचित्रमीमांसा अद्यावधि नोपलब्धेति हताशाः स्मः॥

**नच** विद्वन्मानसेत्यत्र राज्ञि हंसत्वारोपबलात् मनसि सरस्त्वारोप इति राज्ञि हंसत्वारोपं विना मनसि सरस्त्वारोपो न सम्भवतीति-

एकदेशविवर्ति स्यात्पररूपेण रूपणात्।

इत्युद्भटकृतलक्षणानुरोधेन एकदेशविवर्तित्वमिति वाच्यम्। यत्र केचिदारोप्यमाणशब्दोपात्ताः सन्तः स्वसामर्थ्यादन्यारोपाक्षेपकत्व एवैकदेशविवर्तित्वस्य प्रकाशकाराद्यभितत्वात्। अत एव **प्रकाशकृता**- अश्लिष्टमेवोदाहरणं दत्तम्-

यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम्।

रससम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना॥

इति, अत्र च रणे अन्तःपुरत्वारोपे केवलमण्डलाग्रलतायाः तत्सम्बन्धानर्हतया तत्समानाधिकरणनायिकाप्रतिनायिकातादात्म्यावाच्छिन्नाया एतत्सम्बन्धार्हत्वात्। इत्थंच अर्थसामर्थ्यात् मण्डलाग्रलतायां नायिकात्वम्, रिपुसेनायां प्रतिनायिकात्वमर्थ-

-चित्रमीमांसा-

**अश्लिष्टशब्दनिबन्धनं केवलं परम्परितं यथा-**

**निरवधि च निराश्रयं च यस्य**
**स्थितमनिवर्तितकौतुकप्रपञ्चम्।**
**प्रथम इह भवान् सकूर्ममूर्तिः**
**जयति चतुर्दशलोकवल्लिकन्दः ॥**

-तत्त्वालोकः-

सामार्थ्यादवसीयते।

विद्वन्मानसेत्यत्रतु- **प्रकाशानुरोधेन** राजवर्णनस्य प्रकृतत्वात् एकपदोपस्थितयोः अन्तःकरण-सरोविशेषयोः मध्ये व्यञ्जनया उपस्थितस्य सरसोऽभेदो व्यञ्जनया विदुषां मानसे आरोप्यत इति नानुपपत्तिमूलकत्वम्।

ग्रन्थकारानुरोधेन तु उभयोरप्यर्थयोः वाच्यत्वमेवेति मनःप्रभृतौ सरःप्रभृतेरारोपस्य शाब्दत्वमेवेति नकस्याप्यार्थत्वम् इति एकदेशविवर्तित्वस्य प्रसक्तिरेव नास्ति।

नच- राज्ञि हंसाभेदप्रत्यये साधारणधर्मज्ञानमपेक्षितम्। तज्ज्ञानं च ''मानसं सरसि स्वान्ते'' इति कोशबलादेकपदोपस्थितयोः अन्तःकरणसरोविशेषयोरभेदप्रत्ययेन तद्वासित्वस्य ज्ञाने सति भवति। सत्यम्। अथापि मनःप्रभृतौ सरस्त्वाभेदप्रतीतिमात्रेण कथं सरोवरादिरूपकत्वम्? साधारणधर्मप्रतीतेस्तत्र अभावादिति वाच्यम्। तत्रापि स्वच्छतादिकं प्रतीयमानं धर्मं आदाय रूपणस्योपपन्नत्वात् इति दिक् ॥ राजविषयकहंस-सूर्य-रुद्र वैश्वानररूपनानापदार्थारोपरूपत्वात् परम्परितमपि ॥

अश्लिष्टशब्दनिबन्धनंकेवलं परम्परितमवतारयति **अश्लिष्टेत्यादिना** उदाहरति **निरवधीति।** यस्य भगवतः स्थितं स्थितिः तिष्ठतेः गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च (पा.सू.३-४-७२) इत्यस्माद्भावेक्तः । निरवधि च कालपरिच्छेदशून्यम् अनश्वरमिति यावत्, निराश्रयम् सर्वाधःस्थितत्वात् निराधारंच अतएव अनिवर्तितकौतुकप्रपञ्चम् अनुपसंहृतोत्तरकुतूहलविस्तारं नित्याश्चर्यजनकम्

## -तत्त्वालोकः-

सः प्रथमः आद्यः पुराणपुरुषः कूर्ममूर्तिः भगवान् चतुर्दशलोकवल्लिकन्दः भूः-भुवः-सुवः-महः-जनः, तपः सत्यम् , अतलं-बितलं-सुतलं-तलातलं रसातलं महातलं पातालम् इत्येवंरूपाः ये चतुर्दशसंख्यया मिताः लोकाः तद्रूपा या वल्लिः तस्याः कन्दःमूलम् सः जयति सर्वोत्कर्षेण वर्तते इत्यर्थः।

अत्र उत्तररूपकस्य पूर्वरूपकं प्रति हेतुत्वमिति वादिनां **सर्वस्वकारानुयायिनां** मते भगवद्वर्णनस्य प्रकृतत्वेन पुरःस्फूर्तिकत्वात् कूर्ममूर्तौ कन्दत्वारोपे तद्धेतुकः लोके वल्लित्वारोपात् परम्परितम्। विषयविषयिणोः श्लिष्टशब्देन अनभिधानादश्लिष्टनिबन्धनं मालारूपत्वविरहात् केवलं च।

पूर्वरूपकस्योत्तररूपकं प्रतिहेतुत्वमिति वादिनां-**प्रकाशकारकौस्तुभकारादीनां** मते "चतुर्दशलोकवल्लिकन्दः" इत्यत्र लोके वल्लित्वारोपस्य प्रथममुपस्थितिः पश्चात् कूर्ममूर्तौ कन्दत्वारोपः इत्युत्तररूपकं प्रति पूर्वरूपकं हेतुः।

**यद्यपि-** इदमुदाहरणं **काव्यालंकारसूत्रकृता वामनेन चतुर्थेऽधिकरणे-** अलंकारस्य अलंकारयोनित्वं संसृष्टिः तद्भेदावुपमारूपकोत्प्रेक्षावयवौ, उपमाजन्यं रूपकं उपमारूपकम् (वा.का.४-३-३--३१-३२ सूत्राणि) इति उपमारूपकयोः संसृष्टिरभिहिता।नतु **प्रकाशकारादिभिरिव** परम्परितं रूपकमिति। इत्थं सति अत्र कथं परम्परितत्वम्? इति चेत्

**अत्रोच्यते-** पूर्वैः वामनादिभिः "मुखंचन्द्रः" इत्यादिवत् व्यासस्थल एव रूपकम् "मुखचन्द्रः" इत्यादौ समासस्थले उपमितसमासेनोपमैव। नतु रूपकम्। तदनुगुणसमासानुशासनविरहेण तस्यासाधुत्वात्, मयूरव्यंसकादिसमासस्तु विशेषणसमासानुशासनकृतविशेषणपूर्वनिपातबाधनार्थः। "तत्पुरुषे तुल्यार्थेति" (पा.सू.६-२-२) प्रतिपदविहितोपमानसमासविषयकपूर्वपदप्रकृतिस्वरबाधनार्थो वा भवेत्। अतश्च उपमानोपमेयवाचकपदावयकसमासास्सर्वेऽपि उपमितं इत्याद्यनुशासनेनैव सिध्ययन्ति। यत्र पुनः साधारणधर्मप्रयोगः तत्रापि "भाष्याब्धिः अतिगम्भीरः" इत्यादिपूर्वपदार्थप्रधान्यानुरोधेन च विवक्षितसाधारणधर्म-

## -तत्वालोकः-

प्रयोगाभावमङ्गीकृत्योपमितिसमासेनान्यथासिद्धत्वात् अनन्यथासिद्धप्रयोगाणां मयूरव्यंसकादिगणे पाठादर्शनात् " मुखचन्द्रादिपदानां "मयूरव्यंसकादयश्च" इति सूत्रे आकृतिगणत्वेन परिकल्पने प्रमाणानुपलम्भात् समासस्थले "मुखचन्द्रः" इत्यादौ उपमितसमास एवेति एषामभिप्रायात्।

अतएव "जयति चतुर्दशलोकवल्लिकन्दः" "कूर्ममूर्तिः" इत्यादावपि न परम्परितरूपकमिति शक्यं वक्तुम्, चतुर्दशलोका एव वल्लिरिति समासस्यानुपपन्नत्वेन रूपकहेतुरूपकानुन्मेषात् । किन्तु चतुर्दशलोकाःवल्लिरिव इत्युपमितसमासा त्प्रथममुपमा। ततश्च चतुर्दशलोकवल्ल्याः कन्दः इति षष्ठीसमासेन वल्लिसदृशचतुर्दशलोककन्दत्वं कूर्ममूर्तौ आरोप्यत इति उपमाजनितं रूपकम् वल्ल्युपमां विना कन्दे लोकसम्बन्धस्य विवक्षितस्य दुरुपपादतया वल्लीसदृशलोकसम्न्धघटित-कन्दरूपकं वल्ल्युपमाजनितमिति उपमारूपकयोः संसृष्टिरेवेति।

दण्डयादीनांतु- "मुखचन्द्रः" इत्यादिसमासः रूपकौपयिकः साधुरित्येव सम्मतः। अतएव तैः बाहुलता, पाणिपद्मं, इति, अङ्गुल्यः पल्लवानि इत्यादिसमस्त-व्यस्तोदाहरणानि प्रदर्शितानि।

अथापि- मयूरव्यंसकादिगणेऽपठितानां समस्तानां मुखचन्द्रादिपदानां पाठकल्पनापेक्षया "उपमितंव्याघ्रादिभिः" इति सूत्रे व्याघ्रादिजातीयानामुपमानादीनां व्यस्तानां पाठकल्पने परं महल्लाघवम्। अतएवच ग्रन्थकृता "मुखचन्द्र" इत्यादौ उपमितसमासो न निराक्रियते।

रसगंगाधरकृता तु- "सुन्दरि राकासि" इत्यादौ असमस्तप्रयोगस्थले सुन्दर्यां विषयभूतायां राकातादात्म्यावगमात् स्फुटमेव तावद्राकारूपकम् "इत्युक्तम्। तथा मुखचन्द्रः" इत्यादौ विशेषणसमासे तु रूपकम्। उपमितसमासे तावदुपमैवेत्युक्तम्। तेनच "मुखचन्द्रः" इत्यादौ अभेदविवक्षायां "विशेषणं विशेष्येण"

(पा.सू.२-२-५७) इति स . सः । अत एव-"राजनारायणं लक्ष्मीः त्वामलिङ्गति निर्भरम्" इत्यत्र विशेषणसमासायत्तस्य रूपकस्य स्वीकारे प्रधानीभूतोत्तरपदार्थस्य नारायणसदृशस्यापि नारायणत्वेनैव प्रतीतेः लक्ष्मीकर्तृकालिङ्गनकर्मतायाः

**चित्रमीमांसा-**

## तदेव मालापरम्परितं यथा-

**-तत्त्वालोकः-**

अनुपपत्तेरभावात्। उपमितसमासायत्तायाः उपमायाः स्वीकारे तु पूर्वपदार्थप्राधान्यात् राज्ञः राजत्वेनैव प्रत्ययात् नारायणसदृशं प्रति प्रेसयीप्रयुक्तस्य आलिङ्गनस्यानुपपत्तेः "पादाम्बुजमि"त्यत्रापि रूपकस्यैव स्वीकारे प्रधानीभूतोत्तरपदार्थस्य अम्बुजसदृशस्य अम्बुजत्वेनैव प्रतीतेः मञ्जुमञ्जीरशिञ्जितमनोहरतायाः अनुपपत्तेः, उपमितसमासाय त्तोपमायां तु प्रधानीभूतस्य पादस्य पादत्वेनैव प्रतीतस्य नास्ति तस्या अनुपपत्तिरिति नकोऽपिदोषः इत्यभिहितम्॥

एषामनुरोधेन- व्यासे "सुन्दरि राकसी"त्यादिमध्यमपुरुषप्रयोगानुगुणतया विषयप्रधान्यमिष्टमिति "चतुर्दशलोकवल्लिकन्द" इत्यादावपि कूर्ममूर्तौ कन्दत्वारोपः क्रियते, अथापि कूर्ममूर्तेरेव प्राधान्यम् तदानुगुण्येन चतुर्दशलोका एव वल्ल्यः इति विशेषणसमासमभ्युपगम्य वल्लीसदृशस्यापि चतुर्दशलोकस्य वल्लीत्वेनैव प्रतीतेः। तत्कन्दत्वस्य कूर्ममूर्तावनुपपन्नत्वात्। परम्परितरूपकत्वं नानुपपन्नं भवति।

**प्राचीनमतानुरोधेतु** व्यासे विषयप्राधान्यानुरोधेन उपमितसमासाभ्युपगमे सति उपमारूपकत्वं तेन च उभयत्रापि रूपके विषयप्राधान्यं संपद्यते। नचैतावता रूपकयोः उपमारूपकयोः र्वा संसृष्टिः **वामनाभ्युपगता** युक्ता सम्भूय-वैचित्र्यातिशयाधायकत्वस्य मालोपमदिवत् दृष्टेः। अन्यथा मालोपमारशनोपमादेः अतिरिक्तत्वप्रतिपादनमसंगतं स्यात्। अत एव लोकेऽपि मुक्तासंसृष्टिरिति। अतश्च यत्र सम्भूयचमत्कारजनकत्वं नास्ति तत्र संसृष्टेरभ्युपगमात्। अतएव।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥

इत्यादौ संसृष्टिरित्येवोच्यत इति बोध्यम्॥

अश्लिष्टशब्दनिबन्धनं मालापरम्परितमवतारयति- **तदेवेति** । यद्यपि **काव्यप्रकाशकारेण**- अश्लिष्टशब्दनिबन्धनस्य मालापरम्परितस्य-

**- चित्रमीमांसा-**

**पर्यङ्को राजलक्ष्म्याः हरितमणिमयः पौरुषाब्धेस्तरङ्गः**
**संग्रामत्रासताम्यन्मुरलपतियशोहंसलीलाम्बुवाहः ।**
**भग्न प्रत्यर्थिवंशोल्बणविजयकरिस्त्यानदानाम्बुपट्टः**
**खङ्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य॥**

-तत्त्वालोकः-

आलानं जयकुञ्जरस्य, दृषदां सेतुर्विपद्वारिधेः,
पूर्वाद्रिः करवालचण्डमहसो, लीलोपधानं श्रियः ।
संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरः,
राजन् राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥

इत्येकदेशविवर्तिरूपकासङ्कीर्णं प्रदर्शितम्। एवमुदाहरणप्रदर्शनस्य अयमभिसन्धिः। निरवयवे- "सौन्दर्यस्य तरङ्गिणी" इत्यादौ, सावयवे "यस्य रणान्तःपुरे" इत्यादौ च क्रमेण सौन्दर्ये सलिलत्वारोपस्य मण्डलाग्रलतादिषु नायिकात्वाद्यारोपस्य आर्थिकत्वे सत्यपि परम्परितरूपके न तथेति । सच न युक्तः परम्परितेऽप्येकदेशविवर्ति-रूपकसंकरस्य दृष्टेरिति प्रदर्शयितुम् उदाहरणान्तरमाह- **पर्यङ्को राजलक्ष्म्या इति।**

प्रशस्तो मालवः मालवाखण्डलः मालवेश्वरः तस्य, गोतल्लजादिवत् आखण्डलशब्दः श्रेष्ठवाची तेन साकं जातिवचनस्य मालवशब्दस्य "प्रशंसावचनैश्च" (पा.सू.२-१-६६) इति तत्पुरुषः । खङ्गः मण्डलाग्रः, समिति सङ्ग्रामे, विजयते शत्रून् तिरस्कुरुते, कीदृशः सः इत्यत्राह- **राजलक्ष्म्या इत्यादिना ।** राजलक्ष्म्याः राजश्रियः, हरितमणिमयः प्राचुर्ये मयट् मरकतमणिघटित इत्यर्थः पर्यङ्कः पर्यस्तिः खट्वा "पर्यस्त्यामपि पर्यङ्कः" इति **वैजयन्ती ।** पौरुषरूपस्य पराक्रमरूपस्य अब्धेः तरङ्गः ऊर्मिरूपः, संग्रामे यस्त्रासः उद्वेगः तेन ताम्यन् ग्लानो यो मुरलपतिः मुरलाधिपः तस्य यद्यशः तद्रूपो यो हंसः तस्य या लीला विलासः तस्याः अम्बुवाहः मेघः यथा प्रावृषि हंसानामनुत्साहात् पद्मवनेषु संचारो नास्ति तद्वत् शत्रुयशःप्रसरपरिपन्थी, भग्नः जितः यः प्रत्यर्थिवंशः शत्रुकुलम् तस्य उल्बणम् एतस्य दानाम्बुपदार्थेऽन्वयः । यत् विजयकरिणां स्त्यानं शीनं दानाम्बु मदोदकम्, तदेव पट्टं पट्टिकारूपम् । जितो भग्नः

## -तत्त्वालोकः-

स्त्यानं शीनम् इत्युभयत्र **वैजयन्ती** । जितशात्रवकुलीनजयकुञ्जर कुम्भप्रभवस्ते-ममदरेखारूपः इति यावत् । क्ष्मायाः पृथिव्याः सौविदल्लः कञ्चुकी अवरोधाध्यक्षः खङ्गः

अ अत्र खड्गे सौविदल्लत्वारोपे क्ष्मायां महिषीत्वारोपो निमित्तम् खड्गे सोविदल्लत्वरूपणं क्ष्मायां महिषीत्वरूपणं विना नोपपद्यत इति एकदेशविवर्तित्वमपि। इदमुपलक्षणं खड्गे पर्यङ्कत्वरूपणं राजलक्ष्म्याः नायिकात्वप्रतीत्यधीनमिति तत्राप्येकदेशविवर्तित्वम् । खड्ग-पर्यङ्कयोः श्यामत्वादिकं साधर्म्यम् ।

**ननु**- पूर्वरूपकस्योत्तररूपकं प्रति हेतुत्वमिति **प्रकाशकारा**भिमतरीत्या खड्गः क्ष्मासौविदल्लः इत्यत्र क्ष्मायां नायिकारोपस्य अर्थसामर्थ्यसिद्धतया सौविदल्लरूपे उत्तररूपकारोप्ये पूर्वरूपकारोप्यभूताया नायिकाया अन्वयाभावात् कुतः परम्परितत्वम्? इष्यत एव नात्र परम्परितत्वमितिचेत् प्रकाशकाररीत्या परम्परितत्वस्याभावेऽपि अत्र क्ष्मासौविदल्लः इति परम्परितमप्येकदेशविवर्ति इति प्रतिपादयतः सर्वस्वकारस्य-रीत्या परम्परितत्वमुपपाद्यमेव ।

तर्हि- उक्तोदाहारणे परम्परितत्वसम्पादनाय आक्षिप्तरूपक संपन्नरूपकद्वयमात्रत्वं परम्परितत्वमिति परिष्क्रियते तदा रूपकगर्भत्वेन तु समासान्तराश्लेषणात् समानविशेषणत्वं भवदपि समासोक्तेः प्रयोजकम् । एकदेशविवर्तिरूपकमुखेनैवार्थान्तरप्रतीतेः तस्या वैयर्थ्यात् इति **सर्वस्वकाराभिमते** ग्रन्थकृता च **कुवलयानन्दे** समासोक्तिप्रकरणे एकदेशविवर्तित्वेनोदाहृते

निरीक्ष्य विद्युन्नयनैः पयोदो
मुखं निशायामभिसारिकायाः ।
धारानिपातैः सह किं नु वान्तः
चन्द्रोऽयमित्यार्ततरं ररासे ॥

इति पद्येऽपि परम्परितत्वप्रसङ्गात् इतिचेत्

एकरूपकसम्बद्धविषय्यन्वितविषयिरूपकान्तरत्वमिति साक्षात्परम्परा-साधारणस्य परम्परितत्वस्य लक्षणे कृतेऽव्याप्तेरभावात् । क्वचित्परम्परितस्याप्ये-

### चित्रमीमांसा-

**इदं वैधर्म्येणापि दृश्यते- तत्केवलं यथा-**

**आवृण्वतो लोचनमार्गमाजौ**
**रजोऽन्धकारस्य विजृम्भितस्य।**
**शस्त्रक्षताश्वद्विपवीरजन्मा**
**बालारुणोऽभूद्रुधिरप्रवाहः॥**

-तत्त्वालोकः-

कदेशविवर्तित्वं तु **सर्वस्वकारादीना**मभिमतमेव। अतएव परम्परितमप्येकदेशविवर्ति इति **अलङ्कारसर्वस्वकृता**भिहितमेव।

संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा।

इति वदता **प्रकाशकृतापि** आक्षेपलभ्यस्यार्थस्य शब्दाभिहितार्थेन साकं शाब्दबोधे भानं न निवारयितुं शक्यमिति "क्ष्मासोविदगुरुः इत्यत्र न परम्परितत्वानुपपत्तिः"

साधर्म्ये अश्लिष्टनिबन्धनं केवलं मालपरम्परितं चेत्युदाहृत्य वैधर्म्येऽपिकेवलमालारूपतया द्वैविध्यं सम्भवतीत्यभिप्रायेण आद्यमुदाहरति इदं **वैधर्म्येणापीत्यादिना।**

विगतः अनुपात्तः धर्मः ययोस्तौ विधर्माणौ तयोर्भावः वैधर्म्यं निर्दिष्टसाधर्म्याभाव इत्यर्थः। **आवृण्वतइति**। लोचनमार्गं दृष्टिपथम् आवृण्वतः उपरुन्धतः, आजौ युद्धे विजृम्भितस्य व्याप्तस्य रज एव धूलिरेखा अन्धकारः तस्य अश्वाश्च द्विपाश्च वीराश्च अश्वद्विपवीराः शस्त्रक्षताश्च ते अश्वद्विपवीराश्च शस्त्रक्षताश्वद्विपवीराः तेभ्यो जन्म यस्य स इति व्यधिकरणो बहुव्रीहिः। रुधिरप्रवाहः बालारुणः बालसूर्यप्रभ अभूत्।

अजस्य स्वामित्रैः सह युद्धे समुपस्थिते अश्वैरुत्थापिते, रथचक्रैः सान्द्रीकृते, कुञ्जरकर्णतालैः विस्तारिते रेणौ, तत्रत्यजनदृष्टिपथमतीत्य सूर्यमप्याच्छादयति अन्धकारइव विषये अगृह्यमाणे अनुपदमेव त्रिविधबलस्य नाशे सति प्रवाहतया प्रवृत्तं रुधिरमन्धकारविध्वंसनपटुतया तत्रत्यैः बालारुणः बालसूर्यइव अदर्शि। सूर्योदयात्प्राक् अरुणो यथा आकाशस्योर्ध्वभागं व्याप्नोति तथा रुधिरं भूमौ सर्वत्र

-चित्रमीमांसा-

**मालारूपकं यथा-**

**सौजन्याम्बुमरुस्थली, सुचरितालेख्यद्युभित्तिः, गुण**
**ज्योत्स्नाकृष्णचतुर्दशी, सरलतायोगश्वपुच्छच्छटा।**
**यैरेषाऽपि दुराशया कलियुगे राजावली सेविता**
**तेषां शार्ङ्गिणि भक्तिमात्रसुलभे सेवा कियत्कौशलम्॥**

-तत्त्वालोकः-

प्रसृतमभूदिति भावः।

अत्र अन्धकारत्वेन रूपितस्य रजसो निवृत्तिः तन्निवर्तकमपेक्षत इति रुधिरप्रवाहः बालारुणत्वेन रूपितः। इति द्वयोः परम्परितत्वम्। मालारूपताविरहात्केवलत्वम्, समर्थकरूपके निवर्तकत्वं धर्मः। समर्थ्यरूपके निवर्त्यत्वं धर्मः। तयोश्च नैकरूपत्वमिति अनुगतधर्मानिर्देशात् वैधर्म्यम्। यद्वा-रजोन्धकारयोः श्यामलत्वम्, रुधिरबालारुणयोः आरुण्यमिति विरुद्धधर्मवत्वाद्वैधर्म्यम्। सर्वस्वकृता तु वैधर्म्ये केवलं परम्परितं नोदाहृतम् अपितु मालारूपमिति न्यूनतेति ग्रन्थकृदाशयः॥

तदेव वैधर्म्ये मालारूपकं **सर्वस्वकृतो**दाहृतमिति ज्ञापनाय तदुदाहरणमेवाह **सौजन्येत्यादिना।**

यैः मानवैः, दुराशया अलभ्यलाभेच्छया, कलियुगे पापभूयिष्ठयुगे, अधिकृता राजावली राजसमूहः, कीदृशी राजावलीत्यत्राह **सौजन्येति।** सौजन्यंसुजनतैव अम्बु जलम्, तस्य मरुस्थली निर्जलप्रदेशः निर्जलदेशे जलं यथा नास्ति तथा राजनि सौजन्यं न सम्भवतीति वैधर्म्यम्, स्थली अकृत्रिमा भूः, यथा "सैषास्थली यत्रविचिन्वतात्वम्" "अत्र इदातीन्तन पुरुष परिष्कृत भूमिभिन्ना भूमिरित्यर्थेविवक्षिते जानपद कुण्डगोणस्थलेति(पा.सू.४-१-४२) ङीष्। कृत्रिमाचेत् स्थलाइत्येवप्रयोक्तव्यः। "तद्यथा स्थलयोदकं परिगृह्णन्ति इति यजुषि।" सुचरितं सच्चारित्रमेव आलेख्यं चित्रं तस्य द्युभित्तिः आकाशकुड्यम्। आकाशे चित्रं यथा न चित्रयितुंभवति तथा

## -चित्रमीमांसा-

**एवमष्टौ भेदाः रूपकालंकारस्य पाचीनैः दर्शिताः । एवं भेदाः**

## -तत्त्वालोकः-

राजावल्यामपि सुचरितं न सम्भवतीति वैधर्म्यम् । गुणाः एव ज्योत्स्नाः चन्द्रिकाः तासां कृष्णचतुर्दशी यथा कृष्णपक्ष चतुर्दश्यां चन्द्रस्य कलाक्षयात् ज्योत्स्नाया अभावस्तथा प्रभावशून्येषु राजसु गुणानामभावः वैधर्म्यम् । सरलता आर्जवं तस्य योगः सम्बन्धः तस्य योगेश्वपुच्छच्छटा श्वपुच्छस्वरूपा श्वपुच्छसमूहात्मिका वा, श्वपुच्छे प्रयत्नेननामितेऽपि सरलता सम्पादयितुं न शक्या तथा राजस्वपि आर्जवं सम्पादयितुं न शक्यमिति शक्यत्वाभावो वैधर्म्यम् । एवं सेविता अनुसृता, तेषां भक्तिमात्रसुलभे भक्तिव्यतिरिक्तव्यापारमन्तरापि अनायासेन लभ्ये शार्ङ्गिणि वासुदेवे सनातने, सेवा कियत्कौशलम् नकियदपीति भावः ।

निद्राति, स्नाति, भुङ्क्ते,चलति, कचभरं, शोषयत्यन्तरास्ते,
दीव्यत्यक्षैः, न चायं गदितुमवसरः, भूय आयाहि, याहि, ।
इत्युद्दण्डैः प्रभूणामसकृदधिकृतैर्वारितान् द्वारि दीनान्
अस्मान् पश्याब्धिकन्ये सरसिज रुचामन्तरङ्गैरपाङ्गैः॥

इत्युक्तरीत्या सेवितुमप्यलभ्यान् राज्ञ उपलभ्यापि सेवित्वापि अभीष्टमनुपलभ्यैवावतिष्ठमानानां राजसेवापेक्षया भक्तिमात्रेण परमपुरुषार्थप्रदस्य भगवतः सेवा गरीयसीति मुख्यतात्पर्यार्थः ।

अत्र राजावल्यां विषये मरुस्थल - गगनभित्ति-कृष्णच्चतुर्दशी श्वपुच्छच्छटानां विषयिणामभेदः तादूप्यं वा निश्चीयते । ततश्च सौजन्यसुचरित गुण-सरलतासु अम्बु-अलेख्यज्योत्स्नादीनां ताद्रूप्यम् आरोप्यत इति परम्परितत्वम् । परं तु राजावली मरुस्थल्यादौ विशेषणतया भासमानस्य सौजन्याम्ब्वादेः अवर्तमानत्वात् अभाव एव धर्म इति विषयविषय्यनुगत धर्माप्रतीतिरेव विधर्म इति भावः ।

इत्थं प्राचीनप्रदर्शितेन पथा अष्टौ रूपकप्रभेदान् प्रदर्श्य उपसंहति-**एवमिति**।

-चित्रमीमांसा-

**उपमायामपि वक्तुं शक्याः । एकत्र प्रदर्शितेन प्रकारेण सम्भवस्थलेऽन्यत्रापि उन्नेतुं शक्या इति न प्रदर्शिताः ।**

**तथा हि-**

**"वागर्थाविवसम्पृक्तौ" इत्यादौकेवलनिरवयवोपमा।**

**" ज्योत्स्नेव नयनानन्द" इत्यादौ मालानिरवयवोपमा ।।**

-तत्वालोकः-

उक्तरीत्या निरवयवादिभेदप्रदर्शनं रूपके एवेति न भाव्यम् परं तु यथासम्भवमुपमायामप्युन्नेतुं शक्यम्, तस्यामपि केचन प्रभेदाः प्राचीनैरपि तत्रतत्र प्रदर्शिताः केचन उन्नेयाइति न प्रदर्शिताः नत्वसामर्थ्यादुदाहरणालाभाद्वेति अभिधत्ते- **एवमित्यादिना** स्वयमुन्नीय उपमाया निरवयवादि भेदानुदाहरति तथाहीत्यादिना। केवलेति-वागर्थाविवेत्युदाहरणे - पार्वतीवाचोः परमेश्वरार्थयोश्च उपमाद्वयं निबध्यते,अथापि परस्परसापेक्षत्वाभावात् मालारूपत्वविरहाच्च केवलनिरवयवोपमात्वम् । इत्थं च परस्परनिरपेक्षाङ्गिमात्रविषयकोपमात्वं निरवयवोपमाया लक्षणम् इत्युक्तं भवति।

केवलनिरवयवोपमामुदाहृत्य तामेव मालारूपामुदाहरति **ज्योत्स्नेति** ।

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥

इति प्रागुदाहृतायामुपमायां एकस्यामेव नायिकायां ज्योत्स्नाद्यनेकोपमानसम्बन्धात्, एकोपमायाः अपरोपमासापेक्षत्वाभावाच्च मालानिरवयवत्वम् । इयं च **रूद्रटेन**- अभिहिता-

मालोपमेति सेयं यत्रैकं वस्त्वनेकसामान्यम् ।
उपमेयीतानेकैरुपमानैरेकसामान्यम् ॥ इति (४-२५ रू)

## चित्रमीमांसा

**ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम्।**

**शरैरुस्रैरिवोदीच्यान् उद्धरिष्यन् रसानिव ॥**

**इत्यत्र समस्तवस्तुविषयसावयवोपमा।**

-तत्वालोकः-

प्रकाशकृताच-"भिन्ने च तस्मिन् एकस्यैव बहूपमानदाने मालोपमेति। आचार्यदण्डिना तु-एतादृशोदाहरणेषु बहूपमा इत्यभिहितम्। तद्यथा-

चन्दनोदक चन्द्रांशुचन्द्रकान्तादिशीतलः।

स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा॥ (का.द.१-१०) इति

मालोपमा तु अन्यथैव लक्षिता-

पूण्यातप इव अह्लीव पूषा व्योम्नीव वासरः।

विक्रमस्त्वय्यधाल्लक्ष्मीमिति मालोपमा मता॥ इति (का.द.२-४२)

यद्वा-कान्त्या चन्द्रमसं, धाम्ना सूर्यं, धैर्येण चार्णवम्।

राजन्! अनुकरोषीति सैषा हेतूपमा म ता॥ (का.२-५०)

इत्युक्तरीत्याा "ज्योत्स्नेव" इत्यत्रापि एकस्यां नितम्बिन्यां नयनानन्द मद-सर्वलोक-समाकर्षरूपैर्हेतुभिः ज्योत्स्नासुराप्रभुतानामौपम्यं परिकल्पितमिति हेतूपमालंकारः, हेतूपमाऽनभ्युपगन्तृणां तु अत्र मालोपमैव। 'पूण्यातप इवेति **दण्डिपद्ये तु-**

अर्थानामौपम्ये यत्र बहूनां भवेद्यथापूर्वम्।

उपमानमुत्तरेषां सेयं रशनोपमेत्यन्या॥

इति **रूद्रटोक्त**रीत्या रशनोपमेवेति बोध्यम् (रू.का.८-२७)

निरवयवोपमां द्विविधामुदाहृत्य रूद्रटाद्यभिमतायां सावयवोपमायां द्विविधां प्रदर्शयितुमाद्यां समस्तवस्तुविषयसावयवोपमामुदाहरति-**ततः प्रतस्थ इति**।

ततो भास्वानिव रघुः उस्रैरिव शरैः रसानिव उदीच्यान् उद्धरिष्यन् कौबेरीं दिशं

## -तत्वालोकः-

प्रतस्थे इत्यन्वयः ॥ ततः पश्चिमदिग्विजयानन्तरम् भास्वानिव सूर्य इव रघुः उस्रैरिव शरैः उस्रसदृशैः शरैः उदीच्यान् उत्तरदिग्भवान् रसानिव रससदृशान् नृपान् उद्धरिष्यन् उत्थापयिष्यन् "स्यादुद्धरणमुद्धान्तभक्तेऽप्युच्चाटनेऽपि च। इति **वैजयन्ती**। कौबेरीं कुबेरसम्बन्धिनीं दिशं उदीचीं प्रतस्थे। प्रोपसृष्टात्तिष्ठतेः" समवप्रविभ्यः स्थः (पा.सू.१-३-२२) इत्यात्मनेपदम्। अत्र भास्वतः रघोश्चोपमा अवयवीभूता(प्रधानीभूता) उपमा-अवयवत्वेन विवक्षितानां सर्वेषामप्युपमा शाब्दी इति समस्तवस्तुविषया उपमा सावयवा च ॥

इयं च अनेकेवशब्दा वाक्यार्थोपमेति **दण्डी अलङ्कारशेखरकारश्च**।

**यद्यपि दण्डिना**

वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते।
एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा ॥ (द.का.२-४३) इति

**अलंकारशेखरकृता-**

कामिनीनयनकज्जलपङ्कात् उत्थितो मदनमत्तवराहः।
कामिमानसवनान्तरचारी कन्दमुत्खनति मानलतायाः ॥

इत्युदाहृतम्। अथापि **ग्रन्थकृता** इयं वाक्यार्थोपमैव सावयवोपमा, तया च विशिष्टोपमा गम्यते इति उत्तरत्र वक्ष्यते। एवं च **अलंकारशेखरकृता** यदुदाहृतं तत्र सावयवमेकदेशविवर्तिरूपकमेवेति ग्रन्थकृतभिमतं स्यादिति विभाति ॥

समस्तवस्तुविषया एकदेशविवर्तिनी चोपमा **रुद्रटेन** लक्षिता

क्रियतेऽर्थयोः तथा या तदवयवानां तदेकदेशानाम्।
परमन्या ते भवतः समस्तविषयैकदेशिन्यौ ॥ इति

उदाहृता च-

अलिवलयैरलकैरिव कुसुमस्तबकैः स्तनैरिव वसन्ते।
भान्ति लताः ललना इव पाणिभिरिव किसलयैः सपदि ॥

इति समस्तवस्तुविषयोपमायाः। एकदेशविवर्तिन्यास्तु-

-चित्रमीमांसा-

**नेत्रैरिवोत्पलैः पद्मैः मुखैरिव सरःश्रियः।**
**पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव॥**
**इत्येकदेशविवर्तिनी॥**

-तत्वालोकः-

कमलदलैरधरैरिव, दशनैरिव केसरैर्विराजन्ते।
अलिवलयैरलकैरिव कमलदलैः वदनैरिव नलिन्यः॥
इत्युदाहृतम् (रु.का.८-अ,२९-३०-३१.श्लो)।

समस्तवस्तुविषयां सावयवोपमामुदाहृत्य विशेषणोपमया विशेष्योपमाप्रतिपत्तिफलिकामेकदेशविवर्तिनीमुपमामुदाहरति। **नेत्रैरिवेति**।

सरश्शोभावर्णनमिदम्। नेत्रैरिव उत्पलैः नेत्रसदृशैः उत्पलैः, मुखैरिव पद्मैः, वदनसदृशैः कमलैः, स्तनैरिव चक्रवाकैः, लक्षणभूतैः लक्षिताः सरश्श्रियः सरश्शोभाः पदेपदे देशेदेशे विभान्ति स्म प्रकाशन्ते स्म। अत्र उत्पलादिप्रातिपदिकेभ्यः "इत्थंभूतलक्षणे तृतीया। अत्र उत्पल-पद्म-चक्रवाकानामवयवानां नेत्र-मुख-स्तनैः उपमा शब्दतः प्रतिपादिता। परन्तु अवयविन्याः सरश्श्रियः उपमानं नोपात्तमिति सरश्श्रियि नयिकासादृश्यमर्थाल्लब्धं- भवतीत्येकदेशविवर्तिनी उपमा। अत्र विशेषणोपमया विशेष्योपमा गम्यते।

**नन्वत्र**-कथमेकदेशविवर्त्युपमात्वम्? तस्याः प्राचीनैः **उद्भटादिभिः** अनभ्युपगमात्। उक्तं च **सर्वस्कृता**-उपमासंकरयोः एकदेशविवर्तिनोरभावात्" इति (अ.स.१११ पु.) तर्हि तेषां मतेऽत्र कोऽलंकारः? समसोक्तिरिति ब्रूमः। कथम्

"समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्"।

इति यथाश्रुतलक्षणानुसारेण प्रकृतया सरश्श्रिया अप्रकृतायाः परिस्फूर्तिरस्तीति। नचैतत्तस्याः लक्षणं भवितुमर्हति, 'सौमित्रे! ननु सेव्यतां तरुतलम्' इति पद्येऽपि चन्द्रोदये प्रस्तुते अप्रस्तुतायाः सीतादिपरिस्फूर्तेरतिव्याप्तेः। तथा-

-तत्वालोकः-

असावुदयमारूढः कान्तिमान् रक्तमण्डलः ।
रजा हरति सर्वस्य हृदयं मृदुलैः करैः ॥

इति प्रकृताप्रकृतश्लेषेऽतिव्याप्तिः । एवं " निर्गते नीरे सेतुमेषा चिकीर्षति । " इति ललितालंकारोदाहरणेऽतिव्याप्तिः। तत्रापि प्रस्तुतनायिकारूपे धर्मिणि अप्रस्तुतवृत्तान्तस्य परिस्फूर्तेः ।अतश्च-

यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानैः विशेषणैः ।
सा समासोक्तिरुद्दिष्टा संक्षिप्तार्थतया यथा ॥

इति **भामहीयलक्षणनुसारेण** ।

प्रकृतार्थेन वाक्येन तत्समानैर्विशेषणैः ।
अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता ॥

इति **उद्भटीयलक्षणानुसारेण** ।

विशेषणानांसाम्येन यत्र प्रस्तुतवर्तिनाम् ।
अप्रस्तुतस्य गम्यत्वं सा समासोक्तिरिष्यते ॥

इति **विद्यानाथोक्त्यनु**सारेण च विशेषणसाम्यबलादप्रस्तुतवृत्तान्तप्रतीतिः समासोक्तिरिति लक्षणमवश्यमभ्युपगन्तव्यम् । एवं सति नेत्रैरिवेत्यत्र अप्रस्तुतायाः नयिकायाः प्रतीतिः आक्षेपदेव न पुनः विशेषणानां साम्यात् । उक्तं च **सर्वस्वकृता** नेत्रैरिवेत्यत्र सरश्श्रियां नायिकात्वप्रतीतिः न समासोक्त्या,विशेषणसाम्याभावात् । तस्मान्नायिकात्रोपमानत्वेन प्रतीयते न तु सरश्श्रीधर्मवत्वेन नायिकात्वप्रतीति-रित्येकदेशविवर्त्युपमैवाभ्युपगम्या गत्यन्तराभावात्" इत्यभिहितम्॥

न चैतद्युक्तम्-

दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशलिवृन्देन सुवेषा हरिणेक्षणा॥

अत्र यथा दन्तप्रभाः पुष्पाणीवेत्युपमितसमासे,पश्चात् लताप्रतीत्यनुगुणतया दन्तप्रभासदृशैः पुष्पैरिति मध्यमपदलोपिसमासान्तरं परिगृह्य समानविशेषणत्वेन समासोक्तिः निरुह्यते तद्वत् अत्रापि उत्पलैरिव नेत्रैः पद्मैरिव मुखैः, चक्रवाकैरिव स्तनैः

## तत्त्वालोकः

इत्यन्वयलब्धयोः अर्थयोः अभेदाध्यवसायेन विशेषणसाम्यं सम्भवतीति समसोक्तिरेव युक्तेति चेत्

**अत्र केचिदाहुः**-नेत्रैरिव-इत्यत्र उत्पलैः इव नेत्रैः इत्यन्वयान्तरमभ्युपगम्यते तदा सरश्श्रीषु नेत्रादिबोधात् सरश्श्रियइव नायिकाः इति पर्यवसाने प्रक्रान्तसरश्श्रीवर्णनाभावापत्तेः "इति। एवंचात्र एकदेशविवर्त्युपमैवभ्युपन्तव्येत्युक्तं भवति । तथा सति तुल्यन्यायात्" दन्तप्रभापुष्पचिता' इत्यत्रापि उपमितसमासाश्रयणमेव युक्तमिति विशेष्योपमानिमित्तभूतया विशेषणोपमया विशेष्यभूतायां नायिकायां लतासादृश्यस्यैव प्रतीतेः समासान्तराश्रयणायोगात् विशेषणसाधरण्यं नास्तीति औपम्यगर्भविशेषणसाम्यगम्य समासोक्तिवाचोयुक्तिरयुक्ता। अत एव ग्रन्थकृता-कुवलयानन्दाख्यसन्दर्भे प्रकाशकारादिवत् श्लिष्टविशेषणत्वस्य, सर्वस्वकारादिवत् साधारणविशेषणत्वस्य औपम्यगर्भत्वेन वा विशेषणसाम्यप्रवेशः समासोक्तिलक्षणेकृतः। अपितु विशेषणसाम्यगम्याप्रस्तुतव्यवहारसमारोपः प्रस्तुतव्यवहारे क्रियते चेत्तदा समासोक्तिरित्येतावन्मात्रमेव लक्षणं प्रदर्शितम्, तत्रापि प्रस्तुतत्वांशमपहाय विशेषणसाम्यगम्याप्रस्तुतव्यवहारवत्वम् इत्येव लक्षणम्। तेन च-

असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः ।
अनाक्रम्य जगत्कृत्स्नं नो सन्ध्यां भजते रविः ॥

इति **सर्वस्वोदाहृतपद्ये** सन्ध्यादिनकरयोः स्त्रीलिङ्गपुल्लिङ्गादि माहात्म्यान्नायिकानायकभावप्रतीतेस्समासोक्तेरिष्टत्वात् ॥

**तेनएतदुक्तंभवति**-रूपकगर्भत्वे तु एकदेशर्तिरूपक-मुखेनैवअर्थ-न्तरप्रतीतेर्यथा समासोक्तेः वैयर्थ्यं ,तथा-उपमागर्भत्वेऽप्येकदेशविवर्त्यु-पमामुखेनैवार्थान्तरप्रतीतेः न समासोक्तिप्रसर इति ग्रन्थकाराशयः इति, अयमेव पक्षः अन्ततः **सर्वस्वकारस्यापि** अभिमतः । अन्यथा-एकदेशविवर्त्युपमास्थल इव एकदेशविवर्तिरूपकस्थलेऽपि समानन्यायात् समासोक्तिस्सर्वस्वकृता अभिहितो भवेत्। अत एव च " यत्र समासोक्तावुपमायां समसान्तरेण विशेषणसाम्यं योजयितुं

## -चित्रमीमांसा-

**अत्यन्तरागिणमपि निपीतवसुसंचयम्।**
**गणिकेवपरदिशा पूषाणं निरकासयत्॥**

**इत्यत्राप्येकदेशविवर्तिनी।**

-तत्वालोकः-

शक्यं तत्रौपम्यगर्भविशेषणप्रभाविता समासोक्तिरेवेति न विरोधः कश्चित्" इत्युक्तिरपि प्राचीनानुरोधेनैवोक्तेत्यवगन्तव्यम्। इत्थंच" नेत्रैरिवेति "पद्ये एकदशविवर्त्युपमैव न समासोक्तिः इत्युक्तं भवति। अत एव च **प्राचीनैः** -उपमायां व्यवहारप्रतीतेः रूपसमारो-पस्य चाभावात् एकदेशविवर्तिरूपकमभ्युपगम्योक्तं

व्यवहारोऽथवा तत्वं नौपम्ये यत्प्रतीयते।
तन्नौपम्यं समासोक्तिरेकदेशोपमा स्फुटा॥

इति। अस्यार्थश्च -यत् यस्मात् व्यवहारः समासोक्तिवत्, तत्वं-रूपकवत् औपम्ये सति न प्रतीयते तत् तस्मात् औपम्यगर्भसमासोक्तिर्न,किन्तु-तादृशास्थले एकदेशोपमास्फुटा इति। तथा चौपम्यगर्भविशेषणसमुत्थापिता समासोक्तिः नास्तीति उक्तं भवतीति॥

विशेष्योपमया विशेषणोपमाप्रतिपत्तिफलिकामेकदेशविवर्त्युपमामुदाहरति- **अत्यन्तेति।**

अत्यन्तं गाढं यथा तथा रागिणमपि अनुरगिणमपि,निपीतःअपहृतः वसुसञ्चयः धनराशिर्यस्मात्सः तम् अपहृतसर्वस्वम्, विटम् गणिकेव वेश्येव,अपरदिशा पश्चिमादिक् अत्यन्तरागिणमपि अत्यधिकलौहित्ययुतमपि निपीतवसुसञ्चयं नीरश्मिं सूर्यं निरकासयत् निष्कासयामास। धनार्जनपरायणाः हि वेश्याः निर्गुणमपि धनिकं सर्वस्वापहरणपर्यन्तमनुरक्तवत् अनुवर्तन्ते। गुणवन्तमपि हृतसर्वस्वं निर्वासयन्ति सद्य एवेत्यभिसन्धिः। अत्र अपरदिशि गणिकोपमया पूष्णि विटसादृश्यं गम्यमिति। एकदेशो विशेषेण वर्तनादेकदेशविवर्तिनी उपमा। "दिशा" इत्यस्य "आपं चैव हलन्तानाम्" इत्युक्तत्वादाबन्तत्वम्। यद्वा इगुपधत्वात् इगुपधज्ञेति कप्रत्यये टाबिति

## चित्रमीमांसा-

**पूर्वत्र विशेषणोपमया विशेष्योपमा गम्यते। उत्तरत्र विशेष्योपमया विशेषणोपमेति भेदः ।।**

**दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला।**
**आभाति वेला लवणाम्बुराशेः धारानिबद्धेव कलङ्करेखा ।।**

तत्त्वालोकः-

बोध्यम्। इयमुपमा साहित्यदर्पणकृतापि उल्लिखिता-

एकदेशविवर्तिन्युपमा वाच्यत्वगम्यत्वे।
भवेतां यत्र साम्यस्य ।। इति

नेत्रैरिवेति पद्ये अत्यन्तरागिणम् इति पद्ये च विशेषमाह- **पूर्वत्रेति**। पूर्वत्र नेत्रैरिवेति पद्ये विशेषणोपमया उत्पलादिषु नेत्राद्युपमया विशेष्योपमा सरश्श्रियि नायिकोपमा गम्यते आक्षिप्यते। उत्तरत्र अत्यन्तरागिणम् इति पद्ये विशेष्योपमया अपरदिशि गणिकोपमया, विशेषणोपमा पूर्णि विटोपमा गम्या इत्यर्थः।

इत्थं एकदेशविवर्तिन्याः उपमायाः प्रभेदावुदाहृत्य प्राचीनैरनुदाहृते श्लिष्टाश्लिष्टा परम्परितोपमे प्रदर्शयितुमादौ अश्लिष्टशब्दनिबन्धनीं केवलपरम्परितोपमामुदाहरति- **दूरादय इति**।

लोककण्टकं रावणमुद्धृत्य अयोध्यां प्रस्थितेन रघुवरेण जनकनन्दिन्यै समुद्रतीरवैलक्षण्यं प्रतिपाद्यते। **दूरादिति**।

अयश्चक्रनिभस्य लवणाम्बुराशेः दूरात् तन्वी तमालतालीवनराजिनीला वेला धारानिबद्धा कलङ्करेखेव आभाति इत्यन्वयः।

अयश्चक्रनिभस्य लोहनिर्मितचक्रेण सदृशस्य तद्वत् भासमानस्य लवणाम्बुराशेः क्षारसमुद्रस्य, दूरात्-दूरतः लवणाम्बुराशेः इत्यत्र दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् (पा.सू.२-३-३४) इति षष्ठी। दूरादित्यत्र च दूरान्तिकार्थेभ्यो द्वितीया च (पा.सू. २-३- ३५) इति चकारात्पञ्चमी। तन्वी सूक्ष्मतया भासमाना, तमालाश्च ताल्यश्च तमालताल्यः तासां वनं समूहः तेषां राजिः लेखा ताभिः अर्थात् निरन्तरैः तमालवनैः

## चित्रमीमांसा

**इत्यत्र अश्लिष्टशब्दनिबन्धनकेवलपरम्परितोपमा । अत्र हि अम्बुराशेः अयश्चक्रेणोपमा । तद्धाराश्लिष्ट कलङ्करेखया वेलायाः उपमाचेति द्वयमपि संजात परम्परम् । यथा वा ।**

**अस्त्रज्वलावलीढप्रतिबलजलधेरन्तरौर्वायमाणे**
**सेनानाथे स्थितेऽस्मिन् मम पितरि गुरौ सर्वधन्वीश्वरणाम्।**

तत्त्वालोकः-

निरन्तरैः तालवनैश्च नीला आकाशवर्णा, वेला समुद्रतीरभूमिः धारानिबद्धा अयश्चक्राश्रिता कलङ्करेखेव मालिन्यरेखेव, "मालिन्यरेखां तु कलङ्कमाहुः" इति **मल्लिनाथः**, विभाति शोभते।

उक्तोदाहरणे अश्लिष्टशब्दनिबन्धनी केवलपरम्परितोपमेत्युपपादयति - **इत्यत्रेति**।

**अत्रहिति**- अम्बुराशेः विषयस्य अयश्चक्रस्य विषयिणश्च शब्दभेदेन उपादानपूर्वकं तयोरुपमा निबध्यत इति अश्लिष्टशब्दनिबन्धनता । तथा अयश्चक्रधारानिबद्धकलङ्करेखायाः विषयिणः वेलायाः विषयस्य च शब्दभेदेन उपादानपूर्वकमुपमा निबध्यत इति तत्रापि शब्दभेदेन विषयविषयिणोः उपमानलक्षणं श्लेषवैधुर्यम् । अत्र वेलायां कलङ्करेखोपमां प्रति अम्बुराशौ अयश्चक्रोपमा उपाय इति परम्परितत्वम्। एवमम्बुराशौ अयश्चक्रोपमां प्रति वेलायां कलङ्क रेखोपमा उपाय इति द्वयोरुपमयोः परम्परितत्वम् इत्यपि वक्तुं शक्यम् मालारूपताविरहात् केवलत्वं चेति पर्यवसितोऽर्थः ॥

यदितु परम्परितरूपकवत् परम्परितोपमायामपि उत्तरोपमायाः पूर्वोपमां प्रति कारणत्वमिति रुय्यकादीनां सम्मतमित्युच्यते तदा पूर्वोदाहरणे अम्बुराशेरयश्चक्रेणोपमा कार्ण्यादिनापि भवतीति उपमान्तरसापेक्षात्मा- सादनोपमात्वलक्षणं परम्परितत्वं नास्तीति सावयववोपमैव तत्रोच्यते तदा उदाहरणान्तरं दर्शयति- यथावेति।

कर्णादीन् प्रति अश्वत्थामा आह **अस्त्रेति** । अस्त्राणां ज्वालाः ताभिः अवलीढैः

## -चित्रमीमांसा-

**कर्ण अलं संभ्रमेण, व्रज कृप समरं, मुञ्च हार्दिक्य शङ्कां,**
**ताते चापद्वितीये वहति रणधुरं कोभयस्यावकाशः ॥**

**अत्र द्रोणस्यौर्वेणोपमा प्रतिबलजलधेः इत्यत्रोपमायाः साधिकेत्युपमाद्वयमपि सञ्जातपरम्परम् ॥**

-तत्वालोकः-

आक्रान्तः यः प्रतिबलं जलधिरिव प्रतिबलजलधिः तस्य, अन्तः मध्ये, और्वायमाणे वडवाग्निरिवाचरति सति, कर्तुः क्यङ्सलोपश्च (पा.सू.३-१-११) इति क्यङ् प्रत्ययः ततो लटः स्थाने शानच् ,कस्मिन् ? सर्वधन्वीश्वराणाम् अखिलवरधनुर्धारिणाम्, गुरौश्रेष्ठे अस्मिन् विश्वविख्यातविक्रमे, मम पितरि द्रोणाचार्ये, सेनानाथे सेनापतौ स्थिते सति, हे कर्ण अलं सम्भ्रमेण भयेन साध्यं नास्ति, हे कृप त्वं समरं व्रज, हे हार्दिक्य कृतवर्मन् ? शङ्कां त्रासं मुञ्च, चापद्वितीये चापव्यतिरिक्तसहायान्तरनिर्व्यपेक्षे, अद्वितीये इत्यर्थः, ताते जनके द्रोणाचार्ये, धुरम् युद्धनिर्वहणभारम्, वहति सति भयस्य कोऽवकाशः। यतः कुतश्चिदपि न भयस्य प्रसक्तिरिति भावः । अत्र-

अर्थावधारणं यत्तु प्रमाणाद्युक्तिरुच्यते ।

इति भरतमतेन युक्तिरलङ्कारः । नव्यरीत्या काव्यलिङ्गमलंकारः । उपमायाश्च प्राधान्यम् इतरयोः उपस्कारकत्वम् ।

अत्र द्रोणस्य और्वेणोपमा शत्रुसैन्येषु जलनिधेरुपमां साधयतीति उत्तरोपमा पूर्वोपमां प्रति कारणमिति अभिव्यनक्ति **अत्रेत्यादिना ।**

अत्रायं विशेषः- प्रसिद्धो बडवानलः जलनिधेरेव भक्षकः । अयंतु साग्नेरपि भक्षक इति व्यतिरेकेण व्यज्यमानेनानुप्राणिता परम्परितोपमेति। उभयत्रापि द्रोणौर्वयोः प्रतिबलजलध्योश्च शब्दभेदेनोपादानात् उत्तरोपमायाः पूर्वोपमोपायत्वात् मालारूपताविरहाच्च अश्लिष्टत्वम् केवलपरम्परितत्वं चेति बोध्यम् ॥

**-चित्रमीमांसा-**

**एवं - राजहंसायते राजा विदुषामेष मानसे।**
**इत्यत्र श्लिष्टनिबन्धनकेवलपरम्परितोपमा।**
**उभयत्रापि मालापरम्परितमनयैवरीत्योन्नेयम् ॥**

तत्त्वालोकः

**ननु**- रूपक इव उपमायामपि श्लिष्टशब्दनिबन्धनकेवलपरम्परितोपमा सम्भवति नवेति शङ्कां परिजिहीर्षुराह- **एवमिति**। अत्र राज्ञि हंसोपमा, ततश्च विदुषां मानसे मानससरोवरोपमा, यद्वा इदमुदाहरणं-

मृगमदपङ्कश्यामे प्रोत्तुङ्गे तव पयोधरे तन्वि।
हारमणिकान्तिलेखा विलसति सौदामनीवेयम् ॥

इति। अत्र च कान्तिलेखायां विद्युदौपम्यम्, पश्चात् पयोधरशब्दवाच्ययोः मेघस्तनयोरौपम्यमिति।

नन्वेवंतर्हि-मालारूपेणवर्तमाना श्लिटशब्दनिबन्धनी अश्लिष्टशब्द-निबन्धनीचपरम्परितोपमा कुतो न प्रदर्शितेत्यत्राह-**उभयत्रापीति**।
तथा हि श्लिष्टशब्दनिबन्धनमालापरम्परितोपमा यथा-**ममैव**-

हिमवानिव सत्वस्य, रजसोऽभ्रमिवासि भोः।
तमसः सवितेव त्वं यदुशैलशिखामणे ॥

अत्र हिमवान् यथा सर्वप्राणिपोषकः तथायं यदुगिरीशः स्वाश्रितपोषकः, तथा रजसः पांसोः अभ्रं यथा वर्षद्वारा निर्वापकं तथा त्वमपि रजोगुणस्य निवर्तकः। तथा तमसः तिमिरस्य सविता यथा निवर्तकः तथा त्वमपि अज्ञानस्य निवर्तक इति। अत्र यादवाद्रिमधितिष्ठतो भगवतः हिमवदभ्र-सवित्रुपमाः प्राणिपांसुतिमिरैः श्लेषोत्थापि तेः सत्व-रजस्तमोगुणानामुपमाः उपायभूता इति श्लिष्टशब्दनिबन्धनमाला परम्परितोपमा।

अश्लिष्टशब्दनिबन्धनमालापरम्परितोपमा यथा मम आश्रयदातुः **नयचामराजनृपतेर्वर्णने-ममैव-**

## -तत्वालोकः-

ज्योत्स्ना इव स्युः भवतो गुणाश्चे- त्त्वमद्य पूर्णेन्दुरिवासि धीमताम्॥
धारा इवाभान्ति हि चेत्पृषत्काः तदा तटित्वानिव भासि राजन्॥
भवद्विपक्षा यदिचैधसां समाः तदा भवान् पावकसन्निभो मतः।
यदा तु भृङ्गा इव लब्धवर्णाः तदा समाप्नोति भवान् सुमोपमाम्॥

अत्र ज्योत्स्ना-गुणानां राजेन्दोः, धाराविशिखानां मेघ भूभृतोः, विपक्षैधसोः, राजपावकयोः, भृङ्गविदुषोः, चामराजनृपतेः सुमनसश्च शब्दभेदेनोपादानात्-उत्तरोपमायाः पूर्वोपमां प्रत्युपायत्वात् मालारूपकत्वाच्चेयं परम्परितोपमा॥

**यद्यपि**-उपमायाः भेदघटितत्वेन '' राजहंसायते राजा'' इत्यादौ मनस्सरसोरेकदोपस्थाप्ययोर्भेदान्बन्यो न घटते **तथापि**-श्लेषस्थले यथा एकपदोपात्तत्वेन रूपेण अभेदाध्यवसानं तथात्रापि एकपदोपात्तत्वेन साधर्म्येण सादृश्याध्यवसानमिति तस्यैव उपमाप्रयोजकत्वम्।

**किञ्च**-''वागर्थाविव सम्पृक्तौ'' इत्यनुगामिसाधारणधर्मकोपमोदाहरणेऽपि उपमानयोः वागर्थयोः वाच्यवाचकभावरूपं सम्पृक्तत्वम्, उपमेययोः पार्वतीपरमेश्वरयोः संयोगरूपं सम्पृक्तत्वमिति भेदोऽस्त्येवेति भेदेऽप्यभेदः इत्येवंरूपाभेदाध्यवसायं विनानुपपत्तेः।

**अपरं च**-''मुखं चन्द्र इव'' इत्यादि प्रसिद्धोदाहृतिष्वपि वस्तुतो रमणीयत्वादेः भिन्नतया तादात्म्याध्यवसानं विना अनुपपत्तेः अरिहार्यत्वात्।

अत एव-**अप्पय्यदीक्षितजगन्नाथाभ्याम्** अभेदज्ञानस्य धर्मे साधारण्यप्रयोजकत्वं बिम्बप्रतिबिम्बभावादौ स्वीकृतमेव-तदुक्तमत्रैव उपमायाम्-''वस्तुतोभिन्नयोर्धर्मयोः परस्परसादृश्यादभिन्नतयाध्यवसितयोः द्विरूपादानं विम्बप्रतिबिम्बभावः ''इति, रसगंगाधरेऽपिउपमेयगतानामुपमानगतानां चाऽसाधारणनामपि धर्माणां सादृश्यमूलेनाभेदाध्यवसायेन बिम्बप्रतिबिम्बभावः इत्युक्तम्।

**-चित्रमीमांसा-**

**"रेणुध्वान्तस्य रक्तौघो बालघर्मकरायते"।**

**इति वैधर्म्येण रूपकवदुपमेति सर्वं समानम्।**

**अयं तु विशेषः। समस्तवस्तुविषयं रूपकं न विशिष्टरूपकं भवति। विषयविषयिणोर्बिम्बप्रतिबिम्बधर्मविशिष्टयोः ताद्रूप्यारोपे निदर्शनाया एवावतरणात्॥**

-तत्वालोकः-

एतेन धर्मभेदज्ञानस्य उपमायामनुकूलत्वमेवेति बोध्यम्। इत्थं साधर्म्येण परम्परितोपमामुदाहृत्य वैधर्म्येणापि उदाहरति -**रेणुध्वान्तस्येति।**

अत्ररेणुः ध्वान्त इवेत्युपमितसमासः। बालघर्मकर इवाचरति इत्याचारे क्यङ्। इह रेणुध्वान्तयोरुपमायां निवर्त्यत्वं धर्मः बालघर्मकररक्तौघयोरुपमायां निवर्तकत्वं धर्म इति तयोर्नैकरूपत्वमिति वैधम्यम्। यद्वा-रेणुध्वान्तयोः श्यामत्वं, रक्तौघ-बालघर्मकरयोः आरुण्यमिति विरूद्धधर्मवत्वात् वैधर्म्यम्॥

इत्थं-रूपकवदेव उपमायामपि केवलनिरवयवा, मालानिरवयवा समस्तवस्तुविषया, एकदेशविवर्तिसावयवा, केवलश्लिष्टपरम्परिता, मालाश्लिष्टपरम्परिता, अश्लिष्टकेवलपरम्परिता, आश्लिष्टमालापरम्परिता इत्यष्टौ भेदाः सम्भवन्तीति सोदाहरणं ताः प्रदर्श्य समस्तवस्तुविषयायां सावयवोपमायाम् एकदेशविवर्ति सावयवोपमायां च समस्तवस्तुविषयरूपकाद्वैलक्षण्यं प्रतिपादयितुं प्रस्तौति-**अयन्त्विति। समस्तेति**- "अङ्घ्रिदण्डो हरेरूर्ध्वम्" इत्यत्र, "ज्योत्स्ना भस्मेत्यत्र" च न विशिष्टरूपकं साक्षाद्बिम्बप्रतिबिम्बभावापन्न वस्तुविशिष्टस्वरूप-योरैक्यारोपरूप रूपकं न भवति। अत्र हेतुमाह-**विषयविषयिणोरिति**। विषयविषयिणोः उपमानोपमेययोः, कीदृशयोः? बिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टयोः ताद्रूप्यारोपे अलंकारान्तरस्य निदर्शनारूपस्य अवतरणात् प्राप्तेः। एवं च निदर्शनायाः पदार्थनिदर्शनायाः रूपकापवादत्वात् अपवादविषये उत्सर्गस्य अप्राप्तेः।

## तत्त्वालोकः

वस्तुप्रतिवस्तुभावाद्यकरम्बितबिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टस्वरूपयोः विषयविषयिणोः ऐक्यारोपे निदर्शनाप्राप्तावसरेति न तत्र रूपकत्वं (विशिष्टरूपकत्वम्)

एवंच-उपमेये उपमानपदप्रवृत्तिनिमित्ततावच्छेदधर्मारोपस्य वस्तुप्रतिवस्तुभावापन्नधर्मघटितबिम्बप्रतिबिम्बभावापन्नधर्मविशिष्ट-योर्विषयविषयिणोरैक्यारोपस्य च रूपकत्वं ग्रन्थकृत्सम्मतम्।

तेन-न विशिष्टरूपकस्य उच्छेदप्रसङ्गः यथा-"कन्दर्पद्विपकर्णकम्बुमलिनैः" इति प्रागुदाहृते **विमर्शिनीकार** पद्ये-शशिमण्डलरूपे, विषयिषु दानजलादीनां विशेषणत्वेन प्रतीयमानानां विषयतावच्छेदकत्वाद्यनभ्युपगमे प्रमाणाभावात् कलङ्काङ्कितत्वविशिष्टे चन्द्रे दानजललाञ्छितत्वादिविशिष्टकम्बुत्वाद्यारोपो विशिष्टरूपकमेव। यथा "त्वदाननमधीराक्षम्" इति पद्ये भ्रमद्भृङ्गत्वाऽऽलक्ष्यकेसरत्वोभयविशिष्टेन पङ्कजेन अधीराक्षत्वाविर्दशनदीधितित्वोभयविशिष्टस्य आननस्योपमायां विशिष्टोपमात्वमभ्युपगम्यते तथैवात्रापि विशिष्टरूपकत्वमित्यभ्युपगमे बाधकाभावात्। नचैतावता वाक्यार्थनिदर्शनाया उच्छेदः प्रसज्यते। यत्र शुद्धबिम्बप्रतिबिम्बभावापन्नधर्मविशिष्टयोर्विषयविषयिणोः ऐक्यारोपः तत्र निदर्शनायाः सावकाशत्वात्। यथा- "अरण्यरुदितं कृतम्" इत्युदाहरणे अबुधजनसेवायामरण्यरोदनाद्यैक्यारोपः क्रियते। तत्र च सेवारोदनादिविशेषणयोः अबुधजनारण्याद्योः असमाधायकत्वं साधर्म्यमिति बिम्बप्रतिबिम्बभावोऽस्ति अथापि न तयोः विशेषणान्तरमुपादीयत इति शुद्धबिम्बप्रतिबिम्बभावापन्नधर्मविशिष्ट स्वरूपयोरेवैक्यरोप इति निदर्शनैव युक्ता। इत्थंच "कन्दर्पद्विप" इत्यादौ विशिष्टरूपकम्। "त्वदाननमधीराक्षम्" इत्यादौ विशिष्टोपमा। धर्मान्तराविशेषितविशेषणकयोः विषयविषयिणोरैक्यारोपे निदर्शनेति विषयविवेकः।

ज्योत्स्नाभस्मेत्यादिसमस्तवस्तुविषयं रूपकं तु न विशिष्टरूपकव्यपदेश्यम्। यतश्चात्र कन्दर्पद्विपेत्युदाहरणवत् ज्योत्स्नादिविशिष्टरात्रिरूपे विषये भस्मादिविशिष्टकपालिकीरूपविषयिण ऐक्यारोपः कर्तुं शक्यः ज्योत्स्नादीनां भस्मादावन्वितत्वेन रात्रौ अन्वयबोधाविषयत्वात्। तथा भस्मादीनामपि

## -चित्रमीमांसा-

## सावयवोपमा तु विशिष्टोपमां गमयति।

### तत्त्वालोकः

छुरणादावन्वयः नतु साक्षात्कापालिक्यामिति बिम्बप्रतिबिम्बभावापन्न वस्तुविशिष्टत्वाभावान्न निदर्शना। नापि विशिष्टरूपकम्। अपितु विषयविषयिणोः तद्विशेषणानांच प्रत्येकमेव ऐक्यारोपात् समस्तवस्तुविषयं सावयवरूपकमेव विधातृविष्टरकमलश्लिष्टत्वयोःविषयविषयिविशेषणत्वेऽपि न बिम्बप्रतिबिम्ब-भावयोग्यता, बिम्बप्रतिबिम्बभावप्रयोजकसाधारणधर्माभावात्। इत्थं चात्रापि न निदर्शना, नापि विशिष्टरूपकं किन्तु-

'अयं हि धूर्जटिः साक्षाद्येन दग्धाः पुरः क्षणात्।'

इत्यत्रेव विशेषणविशिष्टतामात्रं प्रतीयत इति रूपकमात्रमेव।

ननु-ग्रन्थकृतैव स्वकृते कुवलयानन्दे-निदर्शनावसरे-"अङ्गदण्ड" इत्युपादाय विशिष्टरूपकोदाहरणेऽपीत्युक्तमिति स्वोक्तिव्याघात इति न च शंक्यम्,तत्रैव विशिष्टरूपकत्वनिराकरणात्। वस्तुतः "बालेन्दुवक्त्राणीत्यत्र" यथा-यत्किंचिन्नखक्षतसादृश्येऽप्युपमानिर्वाहादुपमानुपयुक्त- वसन्तनायक-समागतवनस्थलीनायि कासम्बन्धरूपविशेषणबलादुत्प्रेक्षाङ्गीकृता तथात्रापि रूपकानुपयुक्तविधिविष्ट-

समसम्बन्धरूपविशेषणबलादुत्प्रेक्षैवास्तु न रूपकमित्यपि केचिदाहुः। विशेषस्तु पूर्वमेव अभिहित इति नात्र प्रतन्यते।

सम्प्रति समस्तवस्तुविषयं रूपकं सर्वमपि यथा विशिष्टरूपकव्यपदेशानर्हं भवति तथा समस्तवस्तुविषयासावयोपमापि विशिष्टोपमाव्यपदेशार्हा न भवतीत्याचष्टे सावयवोपमेति॥ सावयवोपमा तु-अङ्गाङ्गिभावेन अवस्थितीपमा तु, विशिष्टोपमां विशेष्ये विशेषणं तत्रापि विशेषणमिति रीत्या विशेषणविशिष्टस्य उपमेयस्य विशेषणविशिष्टस्य उपमानेन सम्बन्धं गमयति प्रत्याययतीत्यर्थः। यथा "ततः प्रजघ्ने" इत्युदहरणे शराणां-किरणानां,जलानां नृपाणां, रघोः रवेश्च, प्रत्येकमुपमा

## -चित्रमीमांसा-

**"ततः प्रतस्थे कौबेरीं भास्वानिव।" इत्यत्र शरैः उदीच्यान् उद्धर्तुं उत्तरां दिशं प्रस्थितस्य रघोः विशिष्टस्य किरणैः रसान् शोषयितुम् उत्तरां दिशं प्रस्थितेन विशिष्टेन रविणा साधर्म्यस्य फलितार्थतया लाभात्।**

**एवं च क्वचिदुपमया अन्यत्रोपमायाः गम्यत्वं चतुर्धा पर्यवस्यति। (१) क्वचिद्विशेषणोपमयाविशेष्योपमायाः॥ "विश्वजित्सर्व-पृष्ठोऽतिरात्र" इत्यत्र पृष्ठगतसर्वत्वविधिनेव तद्विशेष्यपृष्ठविधेः॥**

## -तत्वालोकः-

निबिध्यते तत्र रवेः रघोश्च उपमा प्रधानीभूता, शर-किरणादीनामुपमा अङ्गभूता। उभयत्र प्रत्येकं औपम्ये प्रतीते पश्चात् शरकरणकोदीच्यनृपोत्पाटनोद्देश्यकोदक्प्रस्थानविशिष्टस्य रघोः, करकरणकोदीच्यजलोद्धरणोद्देश्यकोदक्प्रस्थान-विशिष्टस्य रवेः उपमा गम्यते। अतश्चेयं विशिष्टोपमा न वाच्या, अपि तु-गम्यैवेति वाच्यतादशायां सावयवोपमेत्येव व्यपदेशः न विशिष्टोपमेति। विशिष्टोपमेति व्यवहारः कृतश्चेत् फलितार्थमुपादायैवेति बोध्यमिति यावत्।

एवं च एकयोपमया उपमान्तरमपि चतुर्धावगतं भवति-तदवगतिप्रकारश्च (१)विशेषणोपमया विशेष्योपमायाः (२) विशेष्योपमया विशेषणोपमायाः, (३)अवयवोपमया विशिष्टोपमायाः (४) विशिष्टोपमया -अवयवोपमायाश्चेति। तेषु आद्ययोरेकदेशविवर्त्युपमोदाहृतिषु सम्भवः। तृतीयतुरीययोः समस्तवस्तुविषयोपमोदाहृतिषु सम्भव इति न्यायप्रदर्शनपुरस्सरं निरूपयति-**एवंचेत्यादिना**।

तत्र विशेषणोपमया विशेष्योपमायाः गम्यत्वे "नेत्रैरिवे"त्युदाहृतमिति तस्मिन् दृष्टान्तप्रदर्शनेन प्रकृतार्थं द्रढयितुं मीमांसकसंमतं वाक्यमुपादत्ते-**विश्वजिदिति**।

## चित्रमीमांसा

**क्वचिद्विशेष्योपमया विशेषणोपमायाः,**

**वैकृतप्रधानविधिनेव प्राकृततदङ्गकलाप-**

**विधेः। उभयमप्येकदेशविवर्तित्वेनोदाहृतम्॥**

तत्वालोकः

विश्वजिति षाडहिकपृष्ठातिदेशाधिकरणे "विश्वजित्सर्वपृष्ठोऽतिरात्रः" इति विषयवाक्यमुपादाय अत्र पृष्ठशब्दस्य स्तोत्रपरत्वात् अत्रत्येन सर्वपृष्ठशब्देन माहेन्द्रादीनां चतुर्णां स्तोत्राणामनुवादः किं वा चोदकेन विकल्पात् प्राप्तयोः बृहद्रथंतरसामसाधनवतोः पृष्ठस्तोत्रयोः समुच्चयविधिः ? आहोस्वित् षाडहिकानां रथन्तर-बृहद्वैरूपवैराजादीनां षण्णां पृष्ठसाम्नामतिदेशः ? इति संशय्य, माहेन्द्रादीनां चतुर्णां चोदकप्राप्तेः सर्वपृष्ठत्वं ज्ञातमेवेति अनुवाद इत्युपपाद्य चतुर्षु स्तोत्रेषु पृष्ठताया अवगमेऽपि परसु पृष्ठताया अनवगमात् नानुवादः अपितु विकल्पेन प्राप्तयोः बृहद्रथन्तरयोः पृष्ठयोरनुवादेन सर्वत्व समुच्चयो विधीयते इति पूर्वपक्षं कृत्वा, सर्वशब्दस्य बह्वपेक्षत्वात् द्वयोरप्रवृत्तेः षाडहिकानां पृष्ठानां ज्योतिष्टोमविकृतौ विश्वजिद्यागे वचनादतिदेश इति सिद्धान्तः कृतः। परन्तु अत्र **मीमांसा-**भाष्यकारमतमवलम्ब्य "सर्वपृष्ठ" इति पृष्ठ पदसमभिव्याहारात् वस्तुवृत्त्या पृष्ठगतसर्वतामात्रे विहितेऽपि पृष्ठत्वमपि "नेत्रैरिवोत्पलैः" इति प्रागुदाहृते पद्ये नायिकावयवभूत नेत्र-मुख-स्तनानांसादृश्यं उत्पल-पद्मचक्रवाकेषु परिकल्पितंसत् नायिकायाः सादृश्यस्य सरःश्रियि परिकल्पनमन्तरा नोपपद्यत इति विशेष्ययोः सादृश्यंज्योतिष्टोमविकारभूतविश्वजिद्यागीयपृष्ठगतसर्वत्व विधिना पृष्ठत्वस्यापि विहितत्वमर्थाद्यथा सिध्यति तथा विशेषणांशेषु उपमायां प्रतिपादितायां विशेष्यांशेऽपि सा गम्यत एवेति भावः॥

**क्वचिद्विशेष्योपमयेति**- यथा-पूर्वं एकदेशविवर्तिन्याः उपमायाः उदाहरणे "अत्यन्तरागिणमपि" इत्यत्र विशेष्योपमया = पश्चिमदिशि गणिकोपमया

## चित्रमीमांसा

**क्वचित् अवयवोपमया विशिष्टोपमायाःगम्यत्वम्। अङ्गप्रधानगोचर प्रत्येकविधि कलापेनेव सर्वाङ्गविशिष्टप्रधानगोचरप्रयोगविधेः ॥ तत्तु समस्तवस्तुविषयोपमोदाहरणे दर्शितम्। एकवाक्यतायां अवयवोपमया विशिष्टोपमायाः गम्यत्वे इदमुदाहरणम् ॥ वाक्यभेदेनापि दृश्यते-**

**''हस्तइव भूतिमलिनः यथायथा लङ्घयति खलस्सुजनम्।**
**दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम्॥**

### तत्त्वालोकः

पूर्णिविटोपमायाः गम्यत्वम्, पूर्णि विटसादृश्यस्यावाच्यत्वेन अर्थगम्यत्वमिति। अत्रैवंथंदृष्टान्तमाह वैकृतेत्यादिना। असमग्राङ्गौ पदेशिकप्रधानवैकृतविधिना समग्राङ्गो पदेशिकप्राकृ तदङ्गकलापविधेः गम्यत्वं यथावा तद्वत्रापीति भावः।

क्वचित् अवयवोपमया विशिष्टोपमायागम्यत्वे वंथं दृष्टान्तमाह- **क्वचिदित्यादिना।** यथा-''ततः'' प्रतस्थे कौवेरीं भस्वानिवरघुर्दिशम्'' इति पूर्वोदाहृतपद्ये- भास्वतः रघोश्च याउपमा गम्या सा प्रधानीभूतोपमा। अस्त्रशरयोः उपमा अवयवोपमा सा च वाच्या। एवं च उभयत्र प्रत्येकं औपम्ये प्रतीते पश्चात् शरकरणकोदीच्यनृपोत्पाटनोद्देश्यकोत्तरादिक् प्रस्थानविशिष्टस्यकिरणकरणकाद्धे दीच्यजलोदरणोद्देश्यकोत्तरदिक्प्रस्थानविशिष्टस्य रवेः उपमा गम्यते अतश्चात्रे विशिष्टोपमाया न वाच्यत्वं अपितु गम्यत्वमेव। अथापि विशिष्टोपमाव्यपदेशः फलितार्थमुपादायैव। अङ्गप्रधानविषयकैकैक विधिकलापेन सर्वाङ्गविशिष्ट-प्रधानिविषयक प्रयोगविधे गम्यत्ववदितिबोध्यम् इयं चोपमा एकवाक्यतया वाक्यभेदेनचेतिद्वेधा, उक्त मुदाहरणं एकवाक्यगतत्वे। वाक्यभेदनापि दृश्यते इत्याह-

**वाक्य भेदेनेति** उदाहरति- हस्तइवेति भूतिमलिनः=भस्मना मलीमसः हस्तः=करः, यथा-यथा=येनयेन प्रकारेण उत्तरोत्तरमित्यर्थ- दर्पणम्= मुकुरम्, लङ्घ यति घर्षतिइति

## चित्रमीमांसा

**अत्रावयवोपमा। यथा भूतिमलिनो हस्तः दर्पणं अधिकमधिकं घर्षन् उत्तरोत्तरं निर्मलीकुरुते, तथा खलः सुजनमधिकं घर्षन् उत्तरोत्तरं निर्मलमेव कुरुते इति विशीष्टोपमागम्यते "**

**क्वचित् विशिष्टोपमया तदवयवोपमानां गम्यत्वम्। विशिष्टविधिनेव विशेषण विशेष्यविधीनाम्। यथा-**

**त्वदाननमधीराक्षमाविर्दशनदीधिति।**
**भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम्।**

तत्त्वालोकः

यावत्। ततश्च तं निर्मलच्छायम्=स्वच्छ बिम्बग्रहणे समर्थम्, कुरुते, तथा तथा=तेनतेन प्रकारेण तद्वदित्यर्थः। भूतिमलिनः= ऐश्वतिमिरान्धः, खलः=दुर्जनः सुजनम्=सज्जनम्, लङ्घयति=अतिक्रामति, अत्यधिकं पीडयति, तथातथा अतिपीडां कुर्वन् निर्मलच्छायम्=तदीयपापान् परिहृत्य तेजस्विनं कुरुते।।

अत्र भूतिमलिनहस्तस्य ऐश्वर्यमदान्धस्य खलस्यचोपमा निबध्यते तथाचेयमवयवोपमा। दर्पण-सज्जनयोरुपमावगम्यते। अत्र वाक्यं भित्वा अवयवोपमा उपनिबद्धा, मूलोपपादितरीन्या विशिष्टोपमाया गम्यत्वम्।।

अथ विशिष्टस्य विशिष्टेन उपमायां कल्पितायां तदवयवोपमानां गम्यत्वे ऽधमपि दृष्टान्तमुपन्यस्यति- **क्वचिदित्यादिना**-उदाहरति- **त्वदाननमिति**, अधीराक्षम्, आविर्दशनदीधिति, त्वदाननम् आलक्ष्यकेसरम् भ्रमद्भृङ्गं पङ्कजमिव भाति इत्यन्वयः।

अधीराक्षम्=अधीरे=चञ्चले अक्षिणी यस्य तत् चञ्चलनेत्रम्, तथा, आविर्दशन-दीधिति=बहिः प्रकाशमान दन्तकन्ति, "आविस्" इत्यनेकार्थमव्ययम्। "प्रादुराविः प्रकाशे" इति **वैजयन्ती**। त्वदाननम् भवत्याः मुखम्, आलक्ष्यकेसरम्= ईषत्प्रकट-

## चित्रमीमांसा

**अत्र विशिष्टस्योपमया तदवयवभूतानां भृङ्गलोचनानां केसरनखदीधितीनां पङ्कजाननयोश्चउपमानोपमेयभावो गम्यते।**

**एवमसंख्याः उपमाविकल्पाः।तथा**

### तत्त्वालोकः

किञ्जल्कम्, भ्रमद्भृङ्गम्= इतस्ततश्चश्चूर्यमाणषट्पदम्, पङ्कजमिव भाति।अत्र चञ्चलनयन- त्वादि विशिष्टस्य आननस्य, भृङ्गकेसरविशिष्ट पङ्कजेनोपमा निबद्धा। तेनचतदवयवभूतानां भृङ्गलोचनानां, दशनदीधिति-केसरयोश्च उपमा गम्यते, तथाच विशिष्टोपमया अवयवोपमायाः विशेष्योपमायाश्चगम्यत्वे उदाहरणमिदम्।

अत्र श्रौतं दृष्टान्तमुपादत्ते - **विशिष्टविधिनेवेति।** पूर्वमीमांसकैः ग्रहैकत्वाधिकरणे, यथा- विशिष्टविध्यन्यथानुपपत्त्या विशेषणविधिप्रकल्प्यमानेष्वपि यागादे धात्वर्थस्य विशेषणत्वेपि नतद्विषयो विशेषणविधिः श्रुतेनैव तु प्रत्ययेन धात्वर्थानुरक्तै व भावना विधीयते नशुद्धा शब्दान्तरन्यायात्। विशेषणान्यनुपादाय विशिष्टे व्यापारासम्भवात् विशिष्टे कल्प्यमाना उपमा विशेषणानां औपम्यं अर्थादवगमयति। तदर्थंच नपुनर्विधिसम्भावनाप्रयुक्त वाक्यभेदप्रसङ्गः विशिष्टविध्यन्यन्यथानुपपत्या (अर्थापत्त्या) विशेषणांशो विधिः कल्प्यत इति उच्यते तद्वदत्रापि विशिष्टस्याननस्य विशिष्टेन पङ्कजेनोपमा तदवयवभूतानां भृङ्गलोचनानां- केसर-दशनदीधितीनां उपमानोपमेयभावोवगम्यते''।

एवं रूपके यथा अष्टौ भेदाः प्राचीनैर्दर्शिताः तथा उपमायामपि पूर्वोक्ता भेदाः प्रदर्शयितुं शक्याः इति तद्भेदान् प्रदर्श्य रूपके विशिष्टरूपकस्य संभवो नास्तीति स्वबुध्यनुसारेण प्रतिपाद्य उपसंहरति - **एवमसंख्याः इति।**

एवं रूपकेष्वप्यानन्त्यमिति दिग्दर्शनाय रशनारूपकोदाहरणं प्रदर्शयति **तथेत्यादिना।**

**चित्रमीमांसा-**

**किसलयकरैर्लतानां करकमलैः कामिनां मनो जयतिन लिनीनां कमलकरैः मुखेन्दुभि योषितां मदनः॥**

**इत्येवमाद्या रशनारूपकाद्याः रूपकविकल्पा असंख्याः।**

**उक्तंहि काव्यालोके-**

**न अपर्यन्तो विकल्पानां रूपकोपमयोर्यतः।**
**दिङ्नागं दर्शितं धीरैः अनुकमनुमीयतम् ॥**
**इति चित्रमीमांयां रूपकालङ्कारप्रकरणम्।**

तत्त्वालोकः-

मदनः,कामिनां मनः लतानां किसलयकरैः, कामिनां करकमलैः, नलिनीनां कमलकरैः योषितां मुखेन्दुभिश्वः जयति इत्यन्वयः। मदयति=हर्षयति इति मदनः, मन्मथः। हर्षश्च "हर्षो मनः प्रसादः स्यादीप्सितार्थोपसङ्गमात्"। "यदिन्द्रियाणि पश्यन्ति हर्षयन्ति परानपि। तस्माद्धर्षइति ज्ञेयः प्रसादो मनसः स्मृतः इति **भावप्रकाशने शारदातनयः**॥ एवंचः मनसः प्रसादएवहर्षः कामिनाम्=कामः=स्त्रीपुंसयोः सुखम्, तदपेक्षिणाम् मनः=चित्तम्, लतानाम्= वल्लीनाम्, किसलयकरैः=पल्लवरूपैः करैः, कामिनां करकमलैः =हस्तरूपैः कमलैः, नलिनीनां= सरसीनाम्, कमलकरैः कमलरूपैः करैः, योषिताम्=सेवताम्, सेव्यमानानांवा,नारीणाम् मुखेन्दुभिः =मुखरूपैरिन्दुभिः जयति= जगत्वशयति अथवा मनःस्वाधीनंकराति इत्यर्थः

अत्र रशनारूपकम्- यत्र प्रथमरूपके यदुपमेयं तदेवोत्तरोपमायामुपमानं भवति तदा रशनारूपकत्वम्। अत्रच पूर्वरूपके उपमेयस्य करस्य उत्तररूपके उपमानत्वम्, उत्तररूपके उपमानस्य कमलस्य उपमेयत्वमिति रूपकस्य रशनात्वम्।

अत्र काव्यादर्शे दण्डिना उक्तं संवादायाह- **उक्तंहि काव्यालोके इति।**

## तत्त्वालोकः-

काव्यालोक शब्देन काव्यादर्शस्य ग्रहणम् तत्रैव किञ्चित्पाठव्यत्यासेन अस्यैव श्लोकस्य दर्शनात् ''नपर्यन्तो विकल्पानाम् ''इति (काव्या. २-९६)रूपकोपमयोः= रूपकस्य उपमायाश्च, विकल्पानाम्= प्रकाराणाम् इत्यर्थः विकल्पशब्दश्च प्रकारे प्रयुक्तो मनुना -

''प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत योनरः ।
तस्य दण्डविकल्पः स्यात् यथेष्टं नृपतिस्त था ।।

इति पर्यन्तः समाप्तिः न=नास्ति (अतः) यतः=समग्रभेदानां लक्षयितुं अशक्यत्वात्, दिङ्मात्रम्=दिग्दर्शनमात्रं कृतम्, अतः धीरैः =आलोचनापरैः अनुक्त मपि, ऊह्यताम्=उन्नीयताम् प्रदर्शितोदाहरणद्वारा जागरितधियां अन्वेषणया अनुक्ता अपि उपमा-रूपकप्रभेदाः उन्नेतुं शक्याः इति भावः उन्नयन प्रकाराः रसगङ्गाधरादौ द्रष्टव्याः।

इति श्रीमदत्रिकुलतिलकश्रीराममिश्रवंश्येन शोभाञ्जनग्रामा (नुग्गेहल्य)
भिजनेन सोमयाजियाण्डान्.जनार्दनाचार्यविदुषस्तनूजेन सीताम्बा
गर्भसम्भवेन,श्रीमन्महीशूरपुरीमध्यविद्योतमान श्रीमन्महाराज
संस्कृतमहापाठशालायां सरस्वतीप्रासादारव्यायांम् **अलंकार**
**शास्त्र प्राध्यापकेन न्यायालङ्कारव्याकरणविदुषा**
पण्डितरत्नादि बिरुदभाजा, आस्थानविदुषा **सो. रामस्वामि**
**ऐय्यङ्गार्यशर्मणा विरचिते चित्रमीमांसा**
**व्यारव्याने तत्वालोकारव्ये**
**रूपक प्रकरणं समाप्तम्।।**

**।।शुभं भूयात्।।**

## -चित्रमीमांसा-

### ॥अथ परिणामालङ्कारप्रकरणम्॥

**अथ परिणामः-**

**"आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः" इति तल्लक्षणम् उक्तम्॥ तत्र शङ्क्यते-**

**यामि मनोवाक्कायैः शरणं करुणात्मकं जगन्नाथ।**
**जन्म-जरा-मरणार्णव तरण- तरण्यं तवाङ्घ्रियुगम्॥**

## -तत्वालोकः-

### ॥अथ परिणामालङ्कारप्रकरणम्॥

अभेदप्रधानेषु विषयविषयितादूप्यापत्तिलक्षणं रूपकं निरूप्य विषयिणः विषयतादूप्यापत्तिलक्षणं परिणामं प्रस्तौति-**अथपरिणाम इति**।

एतेन-विषयिणि चन्द्रादौ मुखादितादूप्यप्रतीतेः विषयभूतमुखाद्यनुत्कर्षकत्वात् परिणामस्यालंकारत्वं नास्तीति वदतां मतमयुक्तं वेदितव्यम्। प्रकरणानुसारेण प्रकृतेऽप्रकृते वा अप्रकृतप्रकृतयोः सम्बन्धात् चमत्कारातिशयः प्रतीतश्चेत् तदा अलंकारत्वमिष्यते। अलंकारप्रभेदतायां तु अलंकारशरीरस्य वैलक्षण्यं प्रयोजकमिति वस्तुस्थितिः। अनयोश्च शरीरं भिन्नं, रूपके विषयः विषय्यभेदतादूप्यान्यतरतामनु भवति। परिणामे तु विषयी प्रकृतोपयोगितामापाद्यते। इत्थं सति कथमनयोरव्यतिरेकि-त्वम्। तत्र च अलंकारशरीरेऽवैलक्षण्यं प्रयोजकम् अन्यथा-तुल्ययोगितादीपकयोरपि पृथगलंकारताप्रतिपादनमयुक्तं स्यात् यत्किञ्चिद्वैलक्षण्य- सद्भावात्। अतश्च परिणामः रूपकाद्भिन्नः इत्यभिप्रयतो रूपकस्य लक्षणमनुवदति **आरोप्यमाणस्येति**।

आरोप्यमाणस्य प्रकृतोपयोगइत्यस्य प्रकृतकार्योपयोग इत्यर्थः। अथवा प्रकृतात्मनोपयोग इत्यर्थः? आद्ये वृत्तिकाराभिमते रूपके एवातिव्याप्तिः प्रसज्यत इत्यभिप्रेत्य तत्प्रकारं दर्शयति-तत्र शङ्क्यते इति। **यामीति। सर्वस्वकृता**

-चित्रमीमांसा-

**निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः ।**
**धारानिपातैस्सह किंनु वान्तः चन्द्रोऽयमित्यार्ततरं ररासे ॥**

-तत्वालोकः-

रूपकप्रकरणे केवलपरम्परितस्योदाहरणतया प्रदर्शितं पद्यमिदम्।

हे जगन्नाथ जगत्पते, अहं भक्तः, मनोवाक्कायैः त्रिकरणेन,करु णैव आत्मा स्वभावः यस्य तं करुणात्मकं करुणामयं " आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्मच" **इत्यमरः**। जन्म-जरा-मरणार्णवतरणतरण्यं, जन्म-जरा-मरणान्येव अर्णवाःतेषां तरणे लंघने तरण्यं तरणसाधनं तरणपदात् 'तत्र साधुः " (पा.सू.४-४-९८)इत्यर्थे यत्प्रत्ययः। तरणोचितमित्यर्थः। तव अङ्घ्रियुगं चरणयुगलं शरणं यामि रक्षकमित्यवगच्छामीति यावत्।

अत्र अङ्घ्रियुगे तरण्यत्वारोपे हेतुः जन्मादेरर्णवत्वारोपः इति परम्परितत्वम्। अमालारूपत्वात्केवलं च। एवंचात्र विषयिणस्तरण्यस्य तरणरूपप्रकृतकार्योपयोगित्वमस्त्येवेति उक्तलक्षणमतिव्यापकं भवति। न चात्र परिणामत्वम्। स्वेनैव रूपकाभ्युपगमात्।

**निरीक्ष्येति** । एकदेशविवर्तिरूपकमुखेनैव यत्र अर्थान्तरप्रतीतिस्तत्र समासोक्तेरन्यथासिद्धत्वमुपपादयता **सर्वस्वकृता** अश्लिष्टंकदेशविवर्तिरूपकोदाहरणतया समासोक्तिप्रकरणे प्रदर्शितमिदं पद्यम्।

पयोदो मेघः विद्युत एव नयनानि विद्युन्नयनानि तैः, निशायां रात्रौ, अभिसारिकायाः पितृगृहादेव स्वस्वामिनं अभिसरन्त्याः, तथाविधाया एव प्रथमं कान्तमभिसारयन्त्या वा इत्यर्थः। अतएव **साहित्यदर्पणकृता-**

"अभिसारयते कान्तं या मन्मथवशंवदा।
स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका॥"

-चित्रमीमांसा-

**एतान्यवन्तीश्वरपारिजात- जातानि तारापतिपाण्डुराणि।**
**सम्प्रत्यहं पश्यत दिग्वधूनां यशःप्रसूनान्यवतंसयामि ॥**

**इति श्लोकेषु आरोप्यमाणानां तरण्य-नयन-प्रसूनानां तरणनिरीक्षणावतंसनरूपप्रकृतकार्योपयोगे सत्यप्युक्तलक्षणकृता अलंकारसर्वस्वकारणैव रूपकमङ्गीकृतम् ॥**

-तत्वालोकः-

इति द्विविधा अभिसारिका प्रदर्शिता। मुखम् आननम्, निरीक्ष्य वीक्ष्य, धारानिपातैस्सह निपतन्तीभिः धाराभिः समं वान्तः किन्तु चन्द्रः इत्यतो हेतोः आर्ततरं यथा तथा ररासे चुक्रोश। अत्र यद्यपि विद्युतो नयनानीवेत्युपमितिसमासः कर्तुं शक्यः, अथापि निरीक्षणमुख्यार्थानुगुण्यात् उत्तरपदार्थप्रधानः (मयूरव्यंसकादिसमासः) अभ्युपेयते। अन्यथा उपमितसमासे पूर्वपदार्थप्राधान्यापत्त्या विद्युतां चेतनसंसर्गरहितानां निरीक्षणक्रियायां करणतयान्वयानापत्तेः। तथा च अवयवयोः विद्युन्नयनयोः रूपकसिद्धौ अवयविनोः पयोदद्रष्टृपुरुषयोः आर्थतया रूपकसिद्धिरित्येकदेश-विवर्तित्वम्। तद्बलाच्च पयोदे पुरुषे आर्तिविशिष्टरसित- क्रियोत्प्रेक्ष्यते।

यद्यपि रसितमात्रं पयोदेसिद्धम् अथापि चन्द्रवमन शङ्कानिमित्तकार्तिविशिष्टं चन्द्रसदृशाभिसारिकामुखदर्शनजन्यचन्द्रभ्रान्तिनिमित्तकार्तिविशिष्टं वा रसितमुत्प्रेक्ष्यते। तादृशोत्प्रेक्षायां पूर्वोक्तमेकदेशविवर्तिरूपकं निमित्तम्। उक्तलक्षणरीत्या तु विद्युति आरोप्यमाणस्य नयनस्य निरीक्षणरूपप्रकृतकार्योपयोगि-त्वादतिव्याप्तिरिति भावः ॥

**एतानीति।** सन्देहसङ्करनिरूपणावसरे-''यत्र तु क्वचित् कस्यचित् परिग्रहसाधकं बाधकंवा प्रमाणं विद्यते, तत्र नियतपरिग्रह इत्युक्त्वा रूपकसाधकस्येदमुदाहरणं प्रदर्शितम्। हे सखायः अहं एतानि प्रत्यक्षायमाणानि,

-चित्रमीमांसा-

**आत्मानं रथिनं विद्धि, शरीरं रथमेवतु ।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेवच ।।**
**इत्यादिश्रुतौ आरोप्यमाणानां रथिरथादीनां-**

**सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ।**
**इति वक्ष्यमाणाध्वपारगमनरूपप्रकृतकार्योपयोगे सत्यपि,**

-तत्वालोकः-

अवन्तीश्वर एव पारिजातः कल्पवृक्षः तस्माज्जातानि पुष्पितानि, तारापतिः चन्द्रः सइव पाण्डुराणि धवलानि, यशांस्येव प्रसूनानि कीर्तिकुसुमानि, सम्प्रति दिग्वधूनां दिश एव वध्वः तासां, अवतंसयामि कर्णाभरणीकृत्य प्रसाधयामि, अवतंसादिपदस्य कर्णाभरणरूपेऽर्थेवृत्तेः। तदेत्पश्यत इत्यर्थः। अत्र कर्मत्वस्य सम्बन्ध सामान्यविवक्षया दिग्वधूनाम् इत्यत्र शेषेषष्ठी

"पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे" **इत्यमरः** ।

अत्र "अवतंसनं प्रसूनेष्वनुगुणमिति रूपकपरिग्रहे साधकं प्रमाणम् इत्युक्तम्। अवतंसनरूपप्रकृतकार्योपयोगिता प्रसूनानां अस्त्येवेति तदुक्तं परिणामलक्षणमतिव्याप्तमेवेति परिणामलक्षणं कथं युक्तमिति शङ्काशयः। तदेतदाह- **इतिश्लोकइत्यादिना** । व्याख्यातप्रायोऽयं ग्रन्थभागः।

इत्थमालंकारिकरीत्या उक्तपरिणामलक्षणस्यातिव्याप्तिं प्रदर्श्य दार्शनिकदृष्ट्यापीदं लक्षणमतिव्यापकं भवतीति प्रतिपादयितुं **व्यासाभिमतरूपकोपयुक्तम्** औषनिषदंवाक्यमुदाहरति- **आत्मानमिति** ।

**चित्रमीमांसा-**

**भगवता बादरायणेन-**

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयतिच। (ब्रह्म.सू.१-४-१) इति शारीरकसूत्रे रूपकमङ्गीकृतम्। अतस्तेषु लक्षणस्यातिव्याप्तिः॥**

तत्त्वालोकः

अत्र **शांकरं भाष्यम्**- तत्र आत्मानं ऋतपं संसारिणं रथिनं, रथस्वामिनं विद्धि जानीहि, । शरीरं रथमेव तु रथबद्धहयस्थानीयैरिन्द्रियैराकृष्यमाणत्वाच्छरीरस्य । बुद्धिं तु अध्यवसायलक्षणां सारथिं विद्धि बुद्धिनेतृप्रधानत्वाच्छरीरस्य सारथिनेतृप्रधान इव रथः। सर्वं हि देहगतं कार्यं बुद्धिकर्तव्यमेव प्रायेण । मनः संकल्पविकल्पादिलक्षणं प्रग्रहं रशनां विद्धि । मनसा हि प्रगृहीतानि श्रोत्रादीनि करणानि प्रवर्तन्ते रशनयेवाश्वाः (कठो,अ.१ व-३-३) इत्यर्थः । एवमादिश्रुतौ आत्मशरीरादिकं भगवता **बादरायणेन** रथिरथादित्वेन रूपितं नतु रथादित्वेन परिणामितमिति सूत्रोपन्यासमुखेनाभ्युपगतमिति प्रतिपादयितुम् उपक्रमते- **इत्यादीति**।

अयं भावः उक्तश्रुतिः प्राप्तुः प्रत्यगात्मनः विवेकित्वे सति भगवत्प्राप्तिः विवेकित्वंच हितमितमेध्याशनादिभिः इन्द्रियाणि वशीकृत्य अवास्थितस्यैव भवतीति प्रतिपादयितुं प्रवृत्ता । तस्यां च वशीकार्यताज्ञापनरूपप्रयोजनसिद्ध्यर्थमात्मशरीर-बुद्धिमनः इन्द्रियरूपाणि षडपि रथि-रथ-सारथि-प्रग्रह-हय-मार्गात्मना रूपितानि । तत्र अध्वपारगमनरूपकार्योपयोगित्वमात्मादिष्वारोप्यमाणानां रथिरथादीनां विद्यते। नचैतावता परिणामश्शक्यो वक्तुम् । अपितु विषये विषयिरूपतापत्तिरस्तीति रूपकमेवेत्यकामेनाप्यभ्युपेयमेव । अन्यथा व्याससिद्धान्तविरोधः ।

**भगवता बादरायणेनेति ।**

कोऽसौ बादरायणः? बदारिकाभिः व्याप्ते यमुनाद्वीपे पराशरात् सत्यवत्यामुत्पन्नः ।

## तत्त्वालोकः

तदुक्तम् -

........यमुनाद्वीपे पाराशर्यः स वीर्यवान् ।
................ सत्यवत्यां पराशरात् । इति

महाभारते आदिपर्वान्तर्गतेंऽशावतरणपर्वणि (६३-अध्या.८४-८५)

ननु- पाराशर्य इति, सत्यवतीसूनुरिति, द्वैपायन इति च पूर्वोक्तेन वाक्येन ज्ञायते न पुनः बादरायणः इति।

सत्यम्- अथापि **श्रीमद्भागवते** तृतीयस्कन्धे पञ्चमाध्याये विदुरेण पृष्टः मैत्रेयः तं प्रति हरौ अनन्यभावप्रतिपादनं न चित्रमिति उत्तरयता विदुरस्य बादरायणात्मजत्वं, बादरायणस्य सत्यवतीसूनुत्वं च प्रतिपादितम्। तद्यथा -

नैतच्चित्रं त्वयि क्षत्तः बादरायणवीर्यजे ।
गृहीतोऽनन्यभावेन यस्त्वया हरिरीश्वरः ॥
माण्डव्यशापाद्भगवान् प्रजासंयमनो यमः ।
भ्रातुः क्षेत्रे भुजिष्यायां जातः सत्यवतीसुतात् ॥ इति

एवम् अनेनैव ब्रह्मसूत्राणि प्रणीतानि इत्यत्रापिप्रमाणम्, पराशरात् जातेन सत्यवतीसूनुना कृष्णेन (कृष्णाद्वैपायनेन) वेदव्यासेन, वेदार्थावगतये कृतानि ब्रह्मसूत्राणि इति वदता पराशरमहर्षिणा अभिव्यक्तम् ।

तद्यथा-

अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान् वेदान् उज्जहार हरिस्स्वयम् ॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधाचैव तथैव च सहस्रधा ॥
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥ इति

## तत्त्वालोकः

तथा अयमेव बादरायणः पाराशर्यः इत्यपि व्यपदिश्यते।

उक्तंच-

द्वीपे बदरिकामिश्रे बादरायणमच्युतम्।
पराशरात् सत्यवती पुत्रं लेभे परन्तपम्॥ इति

अयमेव पाराशर्यो व्यास इति श्रुतावपि श्रूयते - "सहोवाच व्यासः पाराशर्य इति॥ तथा कृष्णद्वैपायन एव व्यास इत्यपि

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्।
कोऽह्यन्यो भुवि मैत्रेय महभारतकृद्भवेत्॥

इत्यनेन ज्ञायते। अतएव **अस्मद्वंशीयैः सर्वशास्त्रविचारसरणिसञ्चरणचणैः आत्रेय मेघनादारिसूरिभिः** भगवद्रामानुजाचार्यानुगृहीतब्रह्मसूत्रभाष्य (श्रीभाष्य) व्याख्यायां **नयप्रकाशिकायाम्** - "पाराशर्यवचस्सुधाम् " इति पदविवरणावसरे- कृष्णद्वैपायनसूत्रात्मकवचस्सुधाम इति विवृतम्। **तत्वटीकाकृद्भिः निगमान्तमहादेशिकैश्च सेश्वरमीमांसायाम्-** बादरायणस्य शारीरक शास्त्रकृत्त्वं सर्वसम्मतम् इत्युक्तं संगच्छते॥बादरायणशब्दस्यव्युत्पत्तिं प्रदर्शयता पाणिनिना नडादिभ्यः फक् (पा.सू.४-१-९९) इति सूत्रे बदरशब्दः पठितः। तस्मात् फकि आयन्नादिषु कृतेषु "बादरायणः" इति रूपं सिध्यति। एवं द्वीपशब्दोऽप्यत्रैव सूत्रे पठ्यते। तस्मादपि फक् प्रत्यये "द्वैपायन" इति च रूपं सिद्धयति।

एवं पाराशर्य इत्यत्र पराशरस्य अव्यवहितेऽपि पुत्रे व्यासे गर्गादिभ्यो यञ् (पा.सू.४-१-१०५) इति यञ्प्रत्ययः गोत्रत्वारोपाद्भवति। अन्यथा- वासिष्ठः वैश्वामित्रः इत्यादाविव ऋष्यन्धकवृष्णिकुरुभ्यश्चेति (पा.सू.४-१-११४) अणप्रत्यये पाराशरः इति स्यात् न तु पाराशर्य इति, व्यासे पाराशर्य इत्येव प्रयोगः न पुनः पाराशरइति सहोवाच व्यासः पाराशर्य इति श्रुत्यनुरोधात्।

## -तत्वालोकः-

तथैव- ब्रह्मसूत्रमपि पाराशर्येण व्यासेन प्रोक्तमिति ''पराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः (पा.सू.४-३-११०) इति सूत्रे पारशर्येण प्रोक्तं भिक्षुसूत्रमधीयते इत्यर्थविवक्षायां पाराशर्यशब्दात् प्रोक्तार्थेणिनिः यलोपः अध्येत्रणस्तु प्रोक्ताल्लुक् (पा.सू.४-२-६४) इति लुकि पाराशरिणः इति रूपम् । भिक्षुसूत्रं नाम भिक्षवः सन्यासिनः तत्वसाम्पादकं (सन्यासित्वसम्पादकं) सूत्रं भिक्षुसूत्रम् इति विग्रहः प्रदर्शितः । यथा नटसूत्रज्ञाने नटत्वसम्पत्तिरिति ।

एवंच गुरुमुखाद्ब्रह्मसूत्राध्ययनेन परमात्मव्यतिरिक्तेषु विरक्तिर्जायते विरक्तश्च ब्रह्मदर्शनयोग्यो भवति । अतश्च ब्रह्मविद्यायां सन्यासिनामेव (भिक्षूणामेव) अधिकार इति यदुक्तं तदयुक्तमिति स्पष्टीकृतम् । तदेतदुक्तं **नागेशभट्टैः**- ''एतेन भिक्षुमात्राध्येयत्वात् भिक्षुसूत्रत्वमस्येत्यपास्तम् ''इति।

एवं च बादरायणः, पाराशर्यः व्यासः, कृष्णद्वैपायनः इति नामान्येकस्यैवेति बोध्यम् । तेन प्रोक्तं सूत्रम् । **आनुमानिकमिति** ।

सूत्रितंच **भगवता व्यासेन** अस्पष्टब्रह्मलिङ्गानि वाक्यानि विचारयितुपक्रान्ते शारीरकमीमांसायाः प्रथमाध्याय चतुर्थपादीयाद्याधिकरणे-

''आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेः दर्शयति च'' (ब्रह्म सू.१-४-१) इति । इदं च सूत्रम् आनुमानिकाधिकरणस्थम् । अस्यायं विषयः ।

''इन्द्रियेभ्यः पराह्यर्थाः महतःपरमव्यक्तम् ''।

इति । अस्मिन् विषयवाक्येऽव्यक्तपदं श्रूयते तत्किं सांख्याभिमतप्रधानबोधकमुत शरीरपरमिति संशयः । प्रधानबोधकं स्मार्तक्रमात् रुढेः योगसम्भवाच्चेति पूर्वपक्षः । स्मार्तक्रमात् श्रौतक्रमस्य बलवत्वात् इतः पूर्वतरेषु मन्त्रेषु आत्मशरीरादिकं रथिरथभावेन विन्यस्तत्वाच्च उक्तश्रुतौ अव्यक्तपदं (शरीरमेवभिधत्ते) शरीरपरमेवेति सिद्धान्तः । सूत्रार्थस्तु आनुमानिकमपि अनुमाननिरूपितमपि एकेषां केषाञ्चित् शाखिनां शब्दवत् उपलभ्यत इति चेत् न शरीरमेव रूपकविन्यस्तं तस्या गृहीतेः पूर्ववाक्ये आत्मबुध्योः मध्यपठितस्यात्रापि मध्यस्थेन अव्यक्तशब्देन ग्रहणात् ।

-चित्रमीमांसा-

**भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दोः**
**उच्चावचैरुपगतेषु सहस्रसंख्याम्।**
**दोषाऽपि नूनमहिमांशुरसौ किलेति**
**व्याकोचकोकनदतां दधते नलिन्यः ॥**
**इति भ्रान्तिमति।**

-तत्वालोकः-

दर्शयति च श्रुतिरिति शेषः। इतराणि इन्द्रियादीनिप्रकृतान्येव समनुक्रामन्तीश्रुतिः अव्यक्तशब्देन परिशिष्यमाणं प्रकृतं शरीरं दर्शयति इत्यर्थः ॥

इत्थं च स्वसिद्धान्तविरोधः दर्शनान्तरविरोधश्च प्रसज्यते इति प्रकृतोपयोगित्वमित्यस्य न प्रकृतकार्योपयोगित्वमित्यर्थो ग्राह्यः इति ॥

रूपकेऽतिव्याप्तिमुपपाद्य भ्रान्तिमति अतिव्याप्तिमुद्भावयति **भिन्नेष्वित्यादिना** ॥

इह अस्मिन् रैवतकपर्वते, इन्दोः किरणेषु, उच्चावचैः अनेकविधैः "उच्चावचं नैकभेदम्"**इत्यमरः**। उदक्‌चअवाक्‌च इति विग्रहे मयूरव्यंसकादयश्च (पा.सू.२-१७२) इतिसमासवृत्तिः।रत्नकिरणैः सह भिन्नेषु संभिन्नेषु अतएव सहस्रसंख्यामुपगतेषु प्राप्तेषु सत्सु, नलिन्यः सरांसि "नलं पद्मे नलं तृणम्" इति **शाश्वतः**। असौ प्रकाशमानः अहिमांशुः किल सहस्रकिरणत्वात्सूर्य इति संभावनया, दोषाऽपि रात्रावपि, रात्र्यर्थेऽव्ययम्। "दोषा नक्तं च निशि" इति **वैजयन्ती**। व्याकोचकोकनदतां विकसितपद्मवत्तां दधते स्वीकुर्वन्ति। अस्य देवभूमित्वात् नित्यपद्माः इति भावः ॥

अत्र रत्नकिरणसम्पर्कात् सहस्रधा प्रसृतेषु इन्दुकिरणेषु इन्दोः सहस्रकिरणत्वबुद्ध्या नलिनीनां सूर्यबुद्धिरुत्पन्नेति विकसितनलिनत्वं सञ्जातमिति अचेतनायामपि नलिन्यां भ्रान्तिः उपनिबद्धेति भ्रान्तिमानलंकारः। इह च इन्दौ आरोप्यमाणस्य हिमांशोः नलिनविकासरूपप्रकृतकार्योपयोगित्वसत्वात् लक्षणस्यातिव्याप्तिः।

**चित्रमीमांसा-**

**विकसदमरनारीनेत्रनीलाब्जषण्डान्य-**
**धिवसति सदा यः संयमाधःकृतानि।**
**नतु रुचिरकलापे वर्तत यो मयूरे**
**वितरतु सकुमारो ब्रह्मचर्यश्रियं वः ॥**
**इत्यपह्नुतौ ॥**

-तत्वालोकः-

तथा अपह्नुतिविशेषेऽतिव्याप्तिमुद्भावयितुमुदाहरति- **विकसदिति**।

यः कुमारः स्कन्दः, संयमेन धारणा-ध्यानसमाधिभिः एकस्मिन् विषये प्रवर्तमानैरित्यर्थः। तदुक्तं **पातञ्जल योगानुशासने** - त्रमयेकत्र संयमः (पा.योगसूत्र ३-४) इति। **भोजराजेन** विवृतं च **राजमार्ताण्डवृत्तौ**- एकस्मिन् विषये धारणाध्यानसमाधिलक्षणं नाम- देशबन्धः चित्तस्य धारणा (पा-योगसूत्र ३-१) नाभिचक्रादौ देशे चित्तस्य बन्धः विषयान्तरपरिहारेण यत्स्थिरीकरणं तत् **धारणेत्यर्थः ध्यानं च**- तत्र प्रत्ययैकतानता ध्यानम् (पा.योगसूत्र ३-२) इत्युक्तारीत्या यस्मिन् देशे चित्तं धृतं तत्र ज्ञानस्य विसदृशपरिणामपरिहारद्वारेण यदेव धारणायामालम्बनीकृतं तदालम्बनतयैव निरन्तरमुत्पत्तिः इत्यर्थः। **समाधिश्च**- तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः। (पा.योगसूत्र ३-३) अतिस्वच्छचित्तवृत्तिप्रवाहरूपं ध्यानमेवार्थमात्रस्वरूपेण निर्भासमानं समाधिः इत्यर्थः। तथाच विजातीय वृत्तिविच्छिन्ना **धारणा**। सजातीयवृत्त्यवच्छिन्नं **ध्यानम्**। ध्येय-ध्यान ध्यातृमध्ये ध्येयमात्रस्फूर्तिमान् **समाधिः**। एतत् त्रितयानुष्ठानरूपसंयमेन अधःकृतानि तिरस्कृतानि विकसन्ति व्याकोचानि यानि अमरनारीणामप्सरसां नेत्राण्येव नीलाब्जानि नीलकमलानि, तेषां षण्डानि वृन्दानि, " उद्भिज्जानां तु षण्डोऽस्त्री" इति **वैजयन्ती**। सदा सर्वकालावच्छेदेन अधिवसति अध्यास्ते। अधिशीङ्स्थासां कर्मेति (पा.सू. १-४-४६) तादृशनीलाब्जषण्डानामाधारभूतानां कर्मसंज्ञा। नतु - नपुनः रुचिरकलापे

**-चित्रमीमांसा-**

**उरोभुवा कुम्भयुगेन जृम्भितं**
**नवोपहारेण वयःकृतेन किम् ।**
**त्रपासरिद्दुर्गमपि प्रतीर्य सा ।।**
**नलस्य तन्वी हृदयं विवेश यत् ।।**
**इत्यतिशयोक्तौ ।।**

-तत्त्वालोकः-

मञ्जुलकोमलबर्हयुजि, मयूरे वर्तते मयूरवाहनो न भवति सः स्कन्दः वः युष्माकम् ब्रह्मचर्यश्रियं जितेन्द्रियत्वनिबन्धनं वीर्यलाभं वितरतु प्रदत्तात् । ब्रह्मचर्यं नाम गुप्तेन्द्रियस्योपस्थस्य संयमः इति **सांख्यप्रवचनभाष्ये** तद्व्याख्यायां **वाचस्पतिमिश्रैः** इत्थमभिहितम्। संयतोपस्थोऽपिहिस्त्रीप्रेक्षणतदालापकन्दर्पायतन तदङ्ग-स्पर्शनशक्तो न ब्रह्मचर्यवान्, ब्रह्मचर्येण वीर्यलाभः । तस्माच्च अप्रतिघानां गुणानामुपचयः सम्पद्यते। प्रतिष्ठितब्रह्मचर्यश्च विनेयेषु ज्ञानमाधातुं समर्थो भवति। अतश्च तेषु उपदेशः सद्यः फलति इति।

अत्र आविर्भवद्बर्हगतोज्ज्वकोमलमयूराधिष्ठिते शिखिवाहने तदधिष्ठानत्वं निषिद्धं प्रथमत एव संयमाधकृतामरनारीनेत्रनीलाब्जषण्डाधिष्ठानमारोपयति इत्यारोपपूर्वकोऽपह्नवः इत्यपह्नुतिः अलंकारः। अमरनारीनेत्राणामनधिष्ठानत्वेऽपि तदधिष्ठानत्ववर्णनं ब्रह्मचर्यवितरणरूपप्रकृतकार्योपयोगीति अपह्नुतावतिव्याप्तिरिति भावः।

तथा अतिशयोक्तावप्यतिव्याप्तिमुद्भावयितुमुदाहरति- **उरोभुवेति** । सा तन्वी जृम्भितं त्रपासरिद्दुर्गमपि प्रतीर्य नलस्य हृदयं विवेशेति यत् तत् नवोपहारेण वयः कृतेन उरोभुवा कुम्भयुकेन किम् इत्यन्वयः ।

सा वनितारत्नत्वेन प्रसिद्धिमुपगता दमयन्ती, अथच तन्वी कृशाङ्गी,

**चित्रमीमांसा-**

**चक्तभ्रमणकरत्वात् कुदृष्टिभिः दूरवर्ज्यमानत्वात् ।**
**श्रुत्यन्तखेलनत्वात् मशक त्वामेव माधवं मन्ये ॥**
**इत्यनुमाने- चातिव्याप्तिः ।**

-तत्त्वालोकः-

जृम्भितम् अत्युच्चं त्रपासरिद्दुर्गमपि लज्जारूपा नदी सैव दुर्गं दुर्गमप्रदेशः तमपि, प्रतीर्य उत्तीर्य नलस्य नैषधस्य, हृदयं मनः विवेश प्रविवेश इति यत् तत् नवोपहारेण सद्यस्संघटितमुक्ताहारेण उरोभुवा वक्षोजेन कुम्भयुगेन पयोधरयुगलधारणनिबन्धनं किमत्युत्प्रेक्षा। अन्यापि कुम्भकारकृतं कुम्भद्वयं वक्षसि विधाय जलदुर्गं तीर्त्वा प्रियेण संकेतितं प्रदेशं गच्छति तद्वदित्यतिशयोक्तिः। विलज्जा नवयौवना च दमयन्ती नलेन ध्याता इत्यर्थः ॥

अत्र कुचद्वये कुम्भद्वयावधिकभेदे सत्यपि तदभेदः अध्यवसित इत्यतिशयोक्तिः। प्रकृतेच कुम्भयुगात्मनास्तनयोः सरित्तरणरूपप्रकृतकार्योपयोगित्व मस्तीत्यति-व्याप्तिरिति भावः ॥

अनुमानालंकारोदाहृतावप्यतिव्याप्तिमुपपादयितुं लक्ष्यमुपादत्ते **चक्रभ्रमेति** हे मशक! हे मलिम्लुच त्वामेव चक्रभ्रमणकरत्वात् अनवस्थितसंचरणशीलत्वमेव सुदर्शनाख्यचक्रायुधभ्रमणकरत्वं तस्मात्, कुदृष्टिभिः अक्षिरोगिण इव निरीश्वरवादिनो नास्तिकाः तैः दूरं दूरतः त्यज्यमानतैव ईश्वरापलापः तस्मात्, श्रुतीनां कर्णानामन्ते समीपे खेलनं चलनमेव उपनिषत्प्रतिपाद्यत्वं तस्माच्च माधवं लक्ष्मीपतिं मन्ये सम्भावयामि अनुमिनोमि। अत्र मशकः माधवः चक्रभ्रमणकरत्वकुदृष्टिदूरवर्ज्य-मानत्व-श्रुत्यन्तखेलनत्वरूपधर्मत्रितयविशिष्टत्वात् इति पक्ष-साध्य-हेतुनिर्दे-शानुकूलतया विन्यासाच्चमत्कृतेश्च

"अनुमानं लिङ्गजन्यलिङ्गिज्ञानमुदाहृतम्"

इति लक्षितोऽ**नुमानालंकारः**। इह च मशके आरोप्यमाणस्य माधवत्वस्य चक्रभ्रमण-रूपकार्योपयोगित्वमस्तीत्यतिव्याप्तिरिति भावः।

## चित्रमीमांसा-

**भ्रान्तिमति अहिमांशोर्विकासे, अपह्नुतौ अमरनारीनेत्राणां ब्रह्मचर्यवितरणे, अतिशयोक्तौ कुम्भयुगस्य सरित्तरणे, अनुमाने माधवस्य चक्रभ्रमणे च प्रकृतकार्योपयोगित्वात् ॥**

**अपह्नुतौ- ''तंयथा यथोपास्ते तथैव भवति'' इति तत्क्रतुन्यायेन संयमाधःकृतामरनारीनेत्राधिष्ठानस्य ब्रह्मचर्यवितरणोपयोगित्वम् ॥**

## तत्त्वालोकः

इत्थं उक्तेषु भ्रान्तिमदपह्नुति-अतिशयोक्ति-अनुमानोदाहृतिषु आरोप्यमाणस्य प्रकृतकार्योपयोगित्वमस्तीत्यतिव्याप्तिमुपपादयति- **भ्रान्तिमतीत्यादिना।**

ननु-अपह्नुतिव्यतिरिक्तेषु प्रकृतकार्योपयोगित्वं सूर्यादीनामुपपादितं युज्यते-उदाहृतापह्नुत्युदाहरणे अमरनारीनेत्राधिष्ठानस्य ब्रह्मचर्यवितरणेउपयोगित्वं कथंयुज्यते। तादृशनेत्राधिष्ठान ब्रह्मचर्यावतरणयोः कार्यकारणभावस्यास्फुटत्वादित्याशंक्याह- **अपह्नुताविति।**

**तं यथेति**-इयं श्रुतिः **मुद्गलोपनिषदि श्रूयते।** अस्याः अयमर्थः-तं फलप्रदं देवतं यथा यथा-यादृशयादृशधर्मप्रकारकतया उपास्ते उपासनं करोति तथैवतादृशसाधारणधर्मवानेव भवतीत्यर्थः। तत्क्रत्विति। **तत्क्रतुन्यायग्राहकं** च विषयवाक्यं-

''यथा क्रतुरस्मिंल्लोके पुरूषो भवति तथेतः प्रेत्य भवति'' इति छान्दोग्ये **शाण्डिल्यविद्यायां** श्रूयते। अस्य च उष्टम्भकं ''तं यथायथोपासते'' इति **मुद्गलोपनिषद्वाक्यम्**। तदेतद्विषयवाक्यमधिकृत्य-**नयमयूखमालिकायाम्** तृतीयाध्यायतृतीयपादिके एकविंशे शरीरेभावाधिकरणे **ग्रन्थकृतैव** चिन्तितम्- सर्वासु परविद्यासु पर एवानुसन्धेय इत्युक्तम्। तथा तद्विशेषणत्वेन अपहत पाप्मत्वादियुक्तः प्रत्यगात्मा अनुसन्धेयो निरूप्यत इति। सर्वासु विद्यासु ब्रह्मरूपोपास्यवत् प्रत्यागात्मरूपोपासकोऽपि तद्विशेषणत्वेनानुसन्धेय इति।

## -चित्रमीमांसा-

## सुहृदालापेनैव प्रणश्यति स्थास्नुरान्तरः क्लेशः ।

## -तत्त्वालोकः-

"आत्मेति तूपगच्छन्ति ग्राहयन्ति च " इति चतुर्थाध्यायप्रथमपादीये **आत्मोपासनाधिकरणे** वक्ष्यते। किमयं प्रत्यगात्मा सांसारिककर्तृत्वभोक्तृत्वादियुक्तोऽनुसन्धेयः? किं वा मुक्तिदशाभाव्यापहतपाप्मत्वादिविशिष्टोऽनुसन्धेयः इति, तत्क्रतुन्यायस्य प्रत्यगात्मसाधारण्यासाधारण्याभ्यां संशये-

**अयं पूर्वपक्षः**-उपासनादशायामुपासकस्य शरीरे वर्तमानत्वात् तद्दशायां सांसारिककर्तृत्व-भोक्तृत्वादि यद्रूपं तदेवानुसन्धेयम् । तदनुसन्धानेनैव फलसिध्युपपत्तेः। नहि कर्मठानां स्वर्गार्थिनां स्वर्गानुभवदशायां यद्रूपं तत् कर्मानुष्ठानदशायामनुसन्धातव्यम्। तदविशेषादिहापि तथैव ॥

ननु-यथाक्रतुरित्यादिविशेषवचनमस्तीति वाच्यम्।मैवम्। तस्य" तं यथा यथोपासते" इति वचनान्तरानुसारेण उपास्यविषयत्वात् इति ।

**राद्धान्तस्तु**-मोक्षदशायां यो विशेषोऽपहतपाप्मत्वादिः तद्विशिष्टः अनुसन्धेयः। जीवस्य अपहतपाप्मत्वादिरूपापत्तेः तत्क्रतुन्यायेन तथानुसन्धानसद्भावभावित्वात्। "तं यथा यथोपासते" इत्यत्र तच्छब्दस्य प्रत्यगात्मविशिष्टविषयत्वात् । प्रत्यगात्मनोऽपिब्रह्मशरीरतया उपास्यकोटिनिक्षिप्तत्वेन तस्य तद्विशिष्टविषयत्वा-वश्यंभावात् ॥

**एतेनैतदुक्तं भवति**-जीवः उपासनादशायां यादृशाकारगुणादिविशिष्टं परमात्मानमनुसन्धत्ते, तादृशं फलं प्राप्नोति इति तत्क्रतुन्यायसरण्या अत्रापि ब्रह्मचर्यवितरणे संयमाधःकृतदिव्याङ्गनानेत्राधिष्ठानस्यैवोपयोगित्वमिति तादृशएव सुब्रह्मण्यउपास्यःनतु उत्पन्नाविर्भवद्बर्हगतोज्वलविचित्रकोमलमयूराधिष्ठानः तस्योपासनोपयोगित्वाभावादिति तन्निषिद्धमत्रेति भाव्यम् ॥

इत्थमतिव्याप्तिमुद्भाव्य ततोऽपि जघन्यामव्याप्तिमुक्तलक्षणे उद्भावयति- **सुहृदिति** ।

## चित्रमीमांसा-

**कान्तामुखचन्द्रेण हि शाम्यति रुचिरेण विरहजस्तापः।। इति दृष्टान्तसंकीर्णपरिणामे चाव्याप्तिः। अत्र आरोप्यमाणस्य उपमानकोटचन्तर्गताप्रकृतकार्योपयोगित्वात् ।।**

## तत्त्वालोकः-

स्थास्नुः स्थिरः "स्थास्न्वेकरूपं कूटस्थम्" इति **वैजयन्ती**। "ग्लाजिस्थश्च ग्स्नुः "(पा.सू.३-२-१३९) इति ग्स्नुप्रत्ययः। आन्तरः मानसिकः क्लेशः व्यथा, सुहृदालापेनैव स्निग्धैस्सह मिथस्संलापेनैव, स्निग्धेषु स्वीयव्यथानिवेदनैनैवेति यावत्,प्रणश्यति निश्शेषं भवति। उक्तार्थे दृष्टान्तमाह-**कान्तेति**। विरहजः वियुक्तोऽस्मीत्याकारकज्ञानजातः तापः ज्वरः रुचिरेण मनोज्ञेन कान्तायाः हृद्यायाः मुखचन्द्रेण हि मुखरूपेन्दुनैव शाम्यति उपशाम्यति नान्येनेति यावत्।

अत्र कान्तासुहृदोः, आलापमुखचन्द्रयोः, क्लेशतापयोश्च बिम्बप्रतिबिम्बभावः। तत्र आन्तरक्लेशनाशं प्रति सुहृदालापस्य अन्वयव्यतिरेकाभ्यां कारणत्वे ग्राह्ये तद्ग्राहकान्वयव्यतिरेकनिश्चायकदृष्टान्तवाक्यार्थपर्यवसानं कान्तामुखचन्द्रेणत्त्युत्तर-वाक्यार्थस्य भवतीति दृष्टान्तालंकारता। तथाहि-सुहृदालापसत्वे आन्तरक्लेशनाशः सुहृदालापाभावे आन्तरक्लेशनाशाभावः। यथा-कान्तामुखचन्द्रदर्शनसत्वे विरहजतापनाशः तादृशचन्द्रदर्शनाभावे-तादृशतापनाशाभावः "इति दार्ष्टान्तिक-वाक्यार्थनिश्चयस्य सम्प्रतिपन्नत्वेन तदानुगुण्यात्प्रकृतेऽपि सुहृदालापः मानसिकव्यथां परिहरति" इति सन्दिग्धार्थनिश्चायकत्वमिति युज्यते दृष्टान्तालंकारता। यथाहुः-

इष्टस्यार्थस्य विस्पष्ट प्रतिबिम्बनिदर्शनम्।
यथेवादिपदैश्शून्यं बुधैः दृष्टान्त उच्चते ।। इति

**प्रकाशकृता च-**

दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ।। इति

## चित्रमीमांसा-

**अत्राहुः-**

### तत्त्वालोकः-

तथाच "बिम्बप्रतिबिम्बभावापन्नोपमानोपमेयसाधारणधर्मकवाक्यद्वय-गम्यौपम्यकत्वम्" दृष्टान्त इति फलितम्। प्रकृते च यथा कान्तामुखचन्द्रस्य विरहजन्य तापोपशामकत्वं तथा सुहृदालापस्य आन्तरक्लेशप्रणाशकत्वमिति औपम्यं गम्यते।

**यद्यपि**-अत्र औपम्यं गम्यते प्रतिवस्तूपमावत् **अथापि** दृष्टान्ते एतादृशोऽर्थोऽन्यत्रापि स्थित इति प्रकृतप्रतीतिविशदीकरणमात्रार्थं नतु सादृश्यप्रतिपत्त्यर्थ इति **केचिद्वदन्ति**। तन्न युक्तम्। दृष्टान्तस्य सादृश्यमूलत्व-मालंकारिकाणांसम्मतमेव।परन्तु अत्र प्रकृतकार्यकारणभावग्राहकव्याप्ति-निश्चायकान्वयसहचारग्राहकत्वमप्रकृतार्थस्य, प्रतिवस्तूपमायां तदभावः इति वैषम्यस्य स्फुटत्वात्॥

**यद्यपि** दृष्टान्तालंकारशरीरानुप्रविष्टोपमानवाक्यार्थघटकस्य चन्द्रस्य कान्तामुखात्मना विरहजतापोपशमनरूपकार्योपयोगित्वमस्ति **तथापि**-उक्ततापोपशमनस्य प्रस्तुतकार्यत्वं नास्ति तस्य दृष्टान्ततयोपदानादिति भावः॥

**एतेन**-प्रकृतात्मतयेति सर्वस्वप्रतीकमुपादाय "प्रकृताङ्गतयेत्यर्थः। तेन विना प्रकृतार्थस्यानिष्पत्तेः। इत्युपक्रम्य" एवमत्र प्रकरणोपयोगित्वाभावादिति आरोप्यमाणस्योपयोग इति चान्वयव्यतिरेकाभ्यां प्रकृतोपयोगित्वस्यासाधारण्यं दर्शितम इत्यादि यदुक्तं **विमर्शिनीकारेण** तल्लक्षणं भवितुं नार्हतीति ध्वनितं भवति।

इत्थं सर्वस्वसूत्रस्थस्य प्रकृतोपयोगित्वे इत्यस्य सर्वस्वव्याख्यात्रा **समुद्रबन्धेन** प्रस्तुतकार्योपयोगित्वे "इति यद्व्याख्यातं तद्रीत्युपगमे "सुहृदालापेनेति दृष्टान्तपरिणामेऽव्याप्तेः भ्रान्तिमदादवतिव्याप्तेश्च प्रसक्त्या सर्वस्ववृत्त्युक्तरीत्या उक्तलक्ष्येषु अतिव्याप्तिमात्रं परिहर्तुं शक्यमित्यभिप्रायेणाह **अत्राहुरिति**। इदं च फलितार्थकथनपरं-**सर्वस्वे तु** परिणामे तु प्रकृतात्मतया आरोप्यमाणस्योपयोगः

**-चित्रमीमांसा-**

**'आरोप्यमाणस्य प्रकृतात्मनोपयोगित्वे परिणामः' इति लक्षणार्थः ॥**

**न चैवं सति उदाहृतरूपकादिष्वतिव्याप्तिः। तेषु आरोप्यमाणानां तरण्य-नयन-प्रसून-सूर्यादीनां स्वात्मनैव तरण-निरीक्षणावतंसन-कमलविकासनादिकार्योपयोगित्वसंभवेन तदर्थम् अङ्घ्रियुग-विद्यु-द्यशश्चन्द्रादिप्रकृतात्मतापत्त्यनपेक्षणात्।**

**न चोक्तलक्षणस्य परिणामेऽसम्भवः। यत्र आरोप्यमाणं किञ्चित्कार्योपयोगित्वेन निबध्यानं स्वतः तस्य तदुपयोगित्वासम्भवात् प्रकृतात्मतापत्तिमपेक्षते तत्रैव परिणामाङ्गीकारात् ॥**

-तत्त्वालोकः-

इति(प्रकृतमारोप्यमाणरूपत्वेन परिणमतीति) एवं च प्रकृतात्मतया इत्यस्य प्रकृतो यो विषयः तदात्मतयेत्यर्थः। तथा च आरोप्यमाणस्य प्रकृतविषयात्मतयोपयोगित्वे इति पर्यवसितोऽर्थः। उक्तरीत्या परिणामलक्षणकथने पूर्वोक्तेषु अतिव्याप्तिः परिहृता भवतीत्याचष्टे- **नचैवमिति।**

रूपकादिषु इति आदिपदात् भ्रान्तिमत्-अपह्नुति- अतिशयोक्ति-अनुमानानां ग्रहणम्। सूर्यादीनामित्यादिपदात् कुम्भयुग-माधवयोर्ग्रहणम्। कमलविकास-नादीत्यादिपदात् ब्रह्मचर्यवितरण -सरित्तरण -चक्रभ्रमणानां ग्रहणम्। चन्द्रादीत्यादिपदात् मयूर-स्तनयुग-मशकानां ग्रहणम्। शिष्टं स्पष्टम्।

नचैवंसति-परिणामलक्षणं न समन्वेति। सर्वत्र परिणामोदाहरणे मयूरव्यंसकादिसमासेन उत्तरपदार्थप्राधान्यात् उपमेये उपमानताद्रूप्यप्रत्यायनस्य उपमेयोत्कर्षविवक्षाधीनत्वाच्च तदानुगुण्येनैव कार्यसंघटनात् प्रकृतविषयात्मतया कार्योपयोगित्वं न संभवतीत्यसम्भव इति वाच्यमित्याह-**नचैवंसतीति**

समाधत्ते-**यत्रेत्यादिना**। यत्र यादृशार्थे आरोप्यमाणः विषयी

## चित्रमिमांसा-

**यथा-**

**"प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा" इति। अत्रत्वब्जस्य वीक्षणोपयोगित्वं निबध्यते। मयूरव्यंसकादि समासेन उत्तरपदार्थप्राधान्यात्।**

### तत्त्वालोकः-

किञ्चित्कार्योपयोगित्वेन निबध्यमानः अन्वीयमानस्सन् स्वतः विषयरूपतापत्तिं विना, तस्य विषयिणः तदुपयोगित्वासंभवात्= प्रकृतकार्योपयोगि त्वासम्भवात् इत्यर्थः प्रकृतात्मतापत्तिं प्रकृतविषयरूपतामपेक्षते, तत्रैव तादृशार्थ एव परिणामाभ्युपगमात् परिणामालंकारताङ्गीकारात् रूपके तु विषय्यभेदो विषये, परिणामे तु प्रकृतविषयाभेदो विषयिणि, इति भेदादिति भावः ॥

पूर्वोक्तपरिष्कारानुरोधेन तदुदाहरणमाह **यथेति**। **अत्रत्विति**। उक्तोदाहरणे तु अब्जस्य कमलस्य, वीक्षणोपयोगित्वं वीक्षणक्रियाकरणत्वं, उपनिबध्यते कविनेति शेषः। ननु अत्र दृग् एव अब्जमिति समासे कृतेऽपि अब्जे स्वयं द्रष्टुं योग्यता नास्तीति नेत्र एव तादृशक्रियान्वय उपसंक्रामतीति चेत्तत्र बाधकमाह **मयूरेति**। अयं भावः दृगब्जेनेत्यत्र दृक्पदार्थस्य अब्जरूपार्थे अभेदेन अन्वये जाते निराकांक्षत्वेनैकत्र विशेषणतया अन्विताया दृशः क्रियायामन्वयस्य अव्युत्पन्नत्वात् प्रधानस्याब्जस्यैव प्रकृतक्रियायामन्वयो वाच्यः अब्जस्य प्राधान्यं च तत्पुरुषसमासनिबन्धनम्। मयूरव्यंसकादिसमासश्च तत्पुरुषाधिकारस्थः "उत्तरपदार्थप्रधानस्तत्पुरुष"इति च प्रवाद इति ॥

**नन्वत्र-** दृगेवाब्जमिति मयूरव्यंसकादिसमास एवाश्रियतव्य इति कोऽयं नियमः "यद्वक्त्रचन्द्रे नवयौवनेन" इत्यत्र यथा-वक्त्रं चन्द्र इव, वक्त्रमेव चन्द्रः इति द्विविधोऽपि समासः क्रियते तद्वत् अत्रापि दृगब्जमिवेत्यपि समासः कर्तुं शक्यः। इत्थं सति-

## चित्रमीमांसा-

**नचोपमितसमासाश्रयणेन पूर्वपदार्थ-प्राधान्याद्दृश एव तदुपयोगित्वं निबध्यत इत्यस्त्विति वाच्यम् । प्रसन्नेनेति सामान्यधर्मप्रयोगात्। ''उपमितं व्याघ्रादिभिः सामान्याप्रयोगे''इति तदप्रयोग एवानुशासनात् ।**

**अब्जस्य वीक्षणेपयोगित्वं निबध्यते तच्च न स्वात्मना सम्भवति। अतः प्रकृतदृगात्मतापत्त्यपेक्षणात्परिणामालंकारः ॥**

## तत्त्वालोकः-

पादाम्बुजं भवतु वो विजयाय
मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः ।

इत्यत्र यथा मञ्जीरशिञ्जितमम्बुजे न संभवतीति मयूरव्यंसकादि समासं परित्यज्य उपमित समासेन पूर्वपदार्थप्राधान्यं सम्पाद्य पादे मञ्जीरशिञ्जितयोगः परिकल्प्यते तद्वदत्रापि उपमितसमासेन दृशः प्राधान्यं सम्भवतीति तस्य वीक्षणक्रियायां करणतयान्वयोनानुपपन्नः इत्याशङ्क्य उपमितसमासे बाधकमुपन्यस्यति **नचेत्यादिना ।**

**अयं भावः** यद्यप्यत्र मयूरव्यंसकादिसमासे अब्जस्य क्रियायां करणतयान्वयस्य अलाभात् दृगब्जमिवेत्युपमितसमासे प्रधानभूतायां दृशि क्रियान्वय उपपद्यते, अथापि "**एकामसिद्धिं परिहरतो द्वितीयापत्तिरिति**" न्यायानुसारेण आनुशासनिकः बाधः अपरिहार्यः ।''उपमितं व्याघ्रादिभिः सामान्याप्रयोगे (पा.सू.२.१.५६)इति उपमितसमासविधायकसूत्रे सामान्याप्रयोग इति ह्युच्यते। प्रसन्नेन दृगब्जेन'' इत्यत्र च दृगब्जोभयान्वयिनः प्रसादस्य साधारणधर्मस्य उपादानमस्तीति तदेव समासबाधकमिति कथमत्रोपमितसमासः कर्तुं शक्यः। यन्निबन्धनं पूर्वपदार्थ-प्राधान्यमाश्रित्य प्रकृतक्रियान्वयोपपत्तिप्रदर्शनम् तदेव बाधितं भवतीति उपमितसमासप्रयुक्तं प्रकृतक्रियान्वयोपपादनमयुक्तमिति ।

एवं तर्हि कथमत्र समाधानमिति अनुयोगे तत्प्रकारम् आह-**अब्जस्योति ।**

## तत्त्वालोकः

**अयं भावः**- कविः अत्र दृगब्जेनेति समस्तपदं सामान्यवाचिपदं चोपयुज्य उत्तरपदार्थप्राधान्यं स्फुटीचकार । तत्र च वीक्षणान्वयो वाच्यः । स च बाधितः। उत्तरपदार्थेऽब्जे बाधितस्सन् दृग्रूपतामुपगतेऽब्जेऽन्वयं भजते यथा-मृत् घटात्मना परिणमतीत्यादौ आनयनकर्मता घटात्मनापरिणताया एव मृदो न पुनः केवलाया मृदः नथात्रापि दृगात्मना परिणतस्यैव वीक्षणकरणता न पुनरब्जमात्रस्येति यथा कथंचित्समाधेयमिति ।

**वस्तुतस्तु**-''मुखंचन्द्रः'', ''गौर्वाहीकः,'' ''तत्वंसत्वंकथय'' इत्यादिव्यासस्थलीयप्रयोगानुरोधेन मुखादौ विषये चन्द्रत्वादिकमारोप्यते अथापि तत्र मुखादीनामेव प्राधान्यं तस्यैव प्रकृतत्वात्। एवं ''मुखचन्द्रः ''इत्यादिसमासेऽपि व्यासानुरूप्येण मुखस्यैव प्राधान्यमिति सर्वत्र रूपके विषयप्राधान्याभ्युगमो ज्यायान्। रूपक-परिणमयोः वैलक्षण्यं तु यस्य कार्यवाचिपदप्रथमप्रतीत तन्मुरव्यार्थ-निर्वर्तनसामर्थ्यं तदात्मनोपयोगित्वे परिणामः यथा-

वदनेनेन्दुना तनन्वी शिशिरीकुरुते दृशौ,

''पायंपायं वचस्सुधाम्,''प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजःप्रेमलतिकाम् ''इत्यादौ''। यस्य कार्यवाचिपदप्रथमप्रतीततन्मुरव्यार्थनिर्वर्तनसामर्थ्यं न स्वात्मना अपि तु विषयात्मना तत्र रूपकं '' श्रावं श्रावं वचस्सुधां, ''वदनेन्दुना तन्वी स्मरतापं विलुम्पति इत्यादौ ।।''प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा,'' इत्यत्र वीक्षणे दृश एव करणत्वं नत्वब्जस्य ,दृगब्जेनेति रूपकस्वीकारेऽपि दृक्प्राधान्यान्न वीक्षणानुपपत्तिः। अतःअत्रउपमितसमास एव रूपकमेवालंकार इति । नच प्रसन्नत्वरूप प्रकृताप्रकृतसाधारणधर्मप्रयोगादुपमितसमासो नोपपद्यत इति वाच्यम्। ''भाष्याब्धिःक्वातिगम्भीरः'' इत्यादावनुपात्तवितत दुरवगाहत्वादि साधारणधर्म-प्रयुक्तसाम्यविवक्षया उपमितसमासोपपादनानुसारेणे वात्रापिअनुपात्त-रमणीयत्वादि सामान्यधर्मनिमित्त कसाम्यविवक्षयोपमितसमासस्य स्वीकर्तुं युक्तत्वात् ।अन्यथा ''भाष्याब्धि''रित्यत्र यथा उपमितसमासं परित्यज्य रूपकस्वीकारे प्रकृतभाष्यप्राधान्यानुपपत्तिस्तथात्रापि प्रकृत-दृक्प्राधान्यानुपपत्तिप्रसङ्गात् ।

## तत्त्वालोकः-

"राजते राजकुञ्जरः" इत्यादि**काव्यप्रकाशाद्युदाहृते** धर्मवाचकलुमात्वानुपपत्तिप्रसङ्गाच्च। अतः दृगब्जेनेत्यत्र उपमितसमास एव रूपकमेवालंकारः। यत्र विषयमात्रस्य स्वरूपेण प्रकृतकार्यानुपयोगस्तत्र विषयिरूपतापत्त्यपेक्षणं तत्र परिणामता-यथा-"पायं पायं वचस्तुधाम्" इत्यादौ। यत्रतु विषयिणः(विषय)स्वरूपेण नोपयोगः अपि तु प्रकृतात्मना तत्र रूपकं-यथा-"श्रावं श्रावं वचस्सुधाम्"इत्यादौ।अत एव **विद्याधरेण-एकावल्याम्-**

तं परिणामं द्विविधं कथयन्त्यारोप्यमाणरूपतया।
परिणमति यत्र विषयः प्रस्तुतकार्योपयोगाय।

इति लक्षयित्वोपपादितम्-आरोप्यमाणस्य प्रकृतोपरञ्जकत्वे रूपकस्य जागरूकत्वात्। यत्रारोपविषयः प्रकृतकार्यसिध्यर्थं आरोप्यमाणात्मतया परिणमति तत्र यथार्थाभिधानः परिणाम इति।

व्याख्यातश्चै**कावलीतरलायां मल्लिनाथेन-**"यत्र प्रकृतकार्योपयोगितया विषयः विषय्यात्मना परिणमति सः परिणामः "इति, रूपक परिणामयोर्भेदश्च-आरोप्यमाणस्य प्रकृतोपरञ्जकत्वे रूपकं प्रकृततादात्म्येनोपयोगित्वे परिणाम इत्यर्थ इति।

**यदि तु-** वयं तु ब्रूमः-उपमानप्रतियोगिकाभेदो रूपकम्।उपमेयप्रतियोगिकाभेदः परिणामः। प्रतीपवत् तत्राभेदे उपमेयप्रतियोगिकत्वे तात्पर्यग्राहकं प्रकृतकार्योपयोगः न तु तच्छरीरेऽस्य प्रवेशः। एवं च यत्रोपमानस्य स्वात्मनैव प्रकृतकार्योपयोगः, यत्र चोदासीनता तत्र रूपकमेव। एवं च परिणामो विशेषणसमासायत्तः।रूपकं मयूरव्यंसकादिसमासायत्तं"मुखचन्द्रः" इत्यादौ। यदा तु""चन्द्रमुखमिति"प्रयुज्यते तदा विशेषणसमासायत्तमपि रूपकमिति **नागेशोक्तिरनुस्रियते।** तदापि"दृगब्जेन"इत्यत्र उपमेयप्रतियोगिकाभेदभानात्परिणामता स्यात्। नचा चोपमेयप्रतियोगिकाभेदभानस्य अस्ति चमत्कारकत्वमिति वाच्यं, अगत्या तथाभ्युपगमात्.

**यदि तु-** परिणामप्रकरणस्थ **नागेशोक्त्य**नुसारेण मयूरव्यंसकादि समासेऽपि राजान्तरमितिवत् पूर्वपदार्थप्राधान्यमिति तत्र वीक्षणान्वयः अबाधित इति न तत्र

## तत्त्वालोकः-

...ब्जस्य दृगात्मतापत्त्यपेक्षेति **उच्यते** तदा रूपकत्वमेवेति युक्तमुत्पश्यामः।

किंच- मयूरव्यंसकादयश्च (पा.सू.२-१.७३) इति निर्देशस्वारस्यानुरोधेन, मयूरइवव्यंसकः,धूर्तः, छात्र इव व्यंसकः,काम्बोज इव मुण्डःइत्युपमान-समासापवादोऽयं समासः प्रतिपदविहितोपमानसमासविषय-पूर्वपदप्रकृति-स्वरबाधनार्थ इत्याहुः। (म.भा.कै.२.१.८२)इति **कैयट**कृताऽस्वरसोद्भावनात् - तत्पुरुषे तुल्यार्थेति (पा.सू.६.२.२.) सूत्रे **वृत्तिकारेण, भट्टोजिदीक्षितेन** च "शस्त्रीश्यामा" इत्युदाहरणप्रदर्शनाच्चास्य "विशेषणं विशेष्येण बहुलम् "(पा.सू.२.१.५७)इति विषेषणवाचकस्य पूर्वनिपाते प्राप्ते परनिपातार्थमारम्भः इति **ज्ञानेन्द्रसरस्वतीभिः तत्वबोधिन्यां** स्पष्टं प्रतिपादनाच्च मुखचन्द्रः,दृगब्जम्, करकिसलयम्, मुखपद्ममि,त्यादीनां पदानां व्याघ्रादिषु पाठस्य उपमितं व्याघ्रादिभिः सामान्याप्रयोगे (२.१.५६) इति सूत्रे **वृत्तिकारेण** उदाहृतत्वाच्च उपमितसमासएवयुक्तःन तु मयूरव्यंसकादयश्चेति, नचैतावता परिणामालंकारस्योदाहरणालाभप्रसङ्गः। यत्र विषयिप्राधान्यं (वदनेनेन्दुना तन्वी शिशिरीकुरुते दृशौ) 'पायं पायं वचःसुधाम्'इत्यादौ परिणामः सेत्स्यति, अत्र च विशेषणं विशेष्येण बहुलम् (पा.सू.२.१.५७) इत्यनेनैव समासः।यत्र च "श्रावं श्रावं वचस्सुधाम्"इत्यादौ "विशेषणं विशेष्येणेति" वचसः परनिपाते प्राप्ते विशेष्यस्य पूर्वनिपातार्थेन उपमितसूत्रेण विशेष्यस्य पूर्वनिपातमात्रमिति उत्त रपदार्थस्य विशेषणत्वमेवेति तदा रूपकत्वं युक्तमेवेत्यदोषात्। एवं च यदा रूपकं तदोपमितसमासः। यदा च परिणामः तदा विशेषणसमासः।

**नन्वेवंतर्हि-**

तल्पेषु कल्पद्रुमपल्लवानां
निषेदुषीभिः सुरसुन्दरीभिः।
त्वत्कीर्तयो वीरकलिङ्गनाथ
मनःकुरङ्गं रजयन्ति गीताः।

इत्यत्र किं रूपकं?उत परिणामः ?। यदि रूपकं तदा कथं विग्रहः?यदा मनःकुरङ्गइवेति तदोपमितसमासेन भाव्यम्। तस्मिन् सति मनसःप्राधान्यं स्यान्नतु कुरङ्गस्य। तेन किं

## तत्त्वालोकः-

स्यात् ?रञ्जेर्णौ मृगरमण (पा.सू.६.४.२४)इति नलोपो नस्यात्। कुत इदमुच्यते। उपमितसमासे सति मनोरमणं स्यान्न मृगरमणम्। मृगरमणे हि नलोपोविहितः। तर्हि विशेषणसमासः क्रियतां "विशेषणं विशेष्येणेति"। तस्मिन् सति कथं विग्रहः? मन एव कुरङ्ग इति। तथा सति उक्तरीत्या परिणामः स्यात् न रूपकम्। तर्हि कथं समाधिः। अयमत्र समाधिः। मन एव कुरङ्ग इति विगृह्य "मयूरव्यंसकादयश्च"इत्यनेन कृते समासे उत्तरपदार्थप्रधानस्तत्पुरुषः" इत्यनुरोधेन कुरङ्गस्य प्राधान्यं सम्भवतीति मृगरमणमबाधित मिति नलोपस्य नानुपपत्तिः। उक्तंच **विद्याधरेण**-"इह रञ्जेरनुषङ्गलोप एव रूपकं प्रतिअनुकूलतामालम्बते नतूपमां प्रति। तस्यैतां प्रति प्रतिकूलत्वात्। इति

सत्यं - एवं सति रजयन्तीतिप्रयोगानु गुण्येन कुरङ्गग्रहण मरणाद्यनुकूलव्यापारविषयत्वप्रतीतेः मनसः कुरङ्गात्मना परिणतिरपेक्षितेति -तदुक्तस्य-

तं परिणामं द्विविधं कथयन्त्यारोप्यमाणरूपतया।
परिणमति यत्र विषयः प्रस्तुतकार्योपयोगाय॥

इत्युक्तरीत्या मनसः ग्रहणवशीकरणादिरूपकार्योपयोगाय कुरङ्गरूपारोप्यमाणरूपतया परिणामस्यैव वक्तुं युक्तत्वेन रूपकाभिधानमयुक्तं स्यात्। अन्यथा रजयन्तीति प्रयुक्तमयुक्तं स्यात्।

**यदितु**-विशेषणं विशेष्येण बहुलम् (पा.सू.२.१.५७)इत्यनेन समासपरिग्रहेऽपि शाब्दं प्राधान्यमाश्रित्य मृगरमणमुपपाद्य कुरङ्गप्रतियोगिकाभेदः मनसि प्रतिपाद्यतइति मनस्यपि मृगकर्मकग्रहणवशीकरणसदृशव्यापारकर्मतास्तीत्यभ्युपगम्यते तदा **विद्याधरोक्तं** रूपकाभिधानं युज्येत। किंचात्र प्रकृते मनसि अप्रकृतधर्मस्य ग्रहणवशीकरणादेः आरोपः क्रियत इति रूपकत्वमयुक्तम् उक्तं च **विद्याचक्रवर्तिना**-

भवेत्प्रकृतधर्माणामारोपोऽप्रकृते यदि।
उपमा, रूपकंत्वन्यत्, साधारण्ये तु संकरः।

इति एतदनुरोधेनापि प्रसन्नेन दृगब्जेनत्यादावपि प्रकृतधर्मस्य वीक्षणस्य अपकृतेऽब्जे आरोपादुपमितसमासएव युक्तः उपमैव च युक्ता। यथा-

## तत्त्वालोकः-

"मुकुलितनयनैः मुखारविन्दैः।"

इत्यादौ यथा मुखं रेवारविन्दैः इति विग्रहेण रूपकपरिग्रहे मुकुलितनयनैः इति विशेषणं बाधकं तथात्रापि। प्रसन्नेनेति सामान्यं प्रयुक्तमपि "राजते राजकुञ्जरः" इतिवत् न तद्विवक्षितं सामान्यम्। विवक्षितं च रमणीयत्वादिकमिति "उपमितं व्याघ्रादिभिरिति" समासः क्रियते बाधकाभावात्। एतेन यथा-"प्रसन्नेन दृगब्जेन इत्यारभ्य परिणामालंकारः इत्यन्तेन यदुक्तं तत् **कुवलयानन्दानुरोधेनेति** मन्तव्यम्। एवं च "मुखं चन्द्रः" इत्यादि व्यासस्थले विषयप्राधान्यानुरोधेन रूपकसमासस्थलेऽपि विषयप्राधान्याभ्युपगमो युक्त इति रूपके प्रकृतमप्रकृत रूपापन्नं भवति, परिणामेत्वप्रकृतं प्रकृतरूपापन्नं भवतीत्यभिधास्यमानं चिन्त्यमेव।इत्थं सति रूपक-परिणामयोर्व्यवस्था कथं कार्या इतिचेत्-

यत्र विषये विषय्यभेदो भासते तत्र रूपकता। यत्र विषयिण्येव विषयाभेदो भासमानः प्रकृतकार्योपयोगी तत्र परिणामः। एवं च यत्रोपमेयप्राधान्यं तत्र रूपकता, यत्रोपमानप्राधान्यं तत्र परिणामता। रूपकत्वे समस्ततया निर्देशे उपमितसमासः। परिणामत्वे "विशेषणं विशेष्येणेति" समासः। तर्हि रूपक-परिणाम-उपमिति-अतिशयोक्तीनां किंकृतं वैलक्षण्यमितिचेत्।

**उच्यते**- रूपके उपमेये उपमानाभेदः, उपमायाम् उपमेये उपमानसादृश्यमात्रम्, परिणामे उपमाने उपमेयाऽभेदः, उपमायां तु स नास्ति। यदा तु उपमेयोपमानपदयोः समासस्तदोपमेयमात्रानुगुणधर्मोपादानं तदोपमितसमासेऽप्युपमैव-यथा "पादाम्बुजं भवतु वः"इत्यादौ। यदा तु उपमानोपमेयपदयोस्समासः उपमानमात्रानु-गुणधर्मोपादानंच तदा विशेषणसमासःपरिणामता च यथा "पायं पायं वचस्सुधाम् "इत्यादौ। अतिशयोक्तौ तु विषयस्योपादानं नास्त्येव अथापि तत्र लक्षणयोपमेयस्य प्रतीतिरिरिति भेदात्।

**अत्रेदं चिन्त्यम्** -"आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम" इति राजानकमङ्ककगुरुणा **रुय्यकेण** सूत्रितं यत् तदुपादाय ग्रन्थकृता या अतिव्याप्तिरुद्भाविता सा न युज्यते। रुटयकसूत्रस्यायमर्थः आरोप्यमाणस्य विषयिणः प्रकृतोपयोगित्वे

## तत्त्वालोकः-

प्रक्रान्तकार्योपयोगित्वे परिणामः परिणामाख्योऽलंकार इति, रूपके विषयिणः विषयोपरञ्जकत्वं, परिणामे विषयस्य स्वरूपेण प्रकान्तकार्यानुरोधादारोप्यमाणरूपेण परिणत्योपयोग इति विषयस्यैव विषयिरूपत्वमिति भेद इत्यभिप्रायात्। यथा "तीर्त्वा भूतेशमौलिस्रज" मिति **सर्वस्वो**दाहृतपद्ये गंगातरणानन्तरं नाविकाय आत्तरदानं प्रकृतम् अथापि गुहस्य रघुनाथप्रसादार्थित्वेन सौमित्रिमैत्री आतरापेक्षयाधिकगुणाऽपि आतररूपतां गता (गंगातरण भाटकतां गता) इति सौमित्रिमैत्री आरोप्यमाणा तररूपत्वेन प्रक्रान्तनदीतरणरूपकार्योपयोगी इति परिणामता। उक्तं च **सर्वस्वकृता**-अत्र सौमित्रिमैत्री प्रकृता आरोप्यमाणसमानाधिकरणातररूपत्वेन परिणता इति। अथाप्युत्तरवाक्यं उक्तार्थविपरीतमिव भाति आतरस्य मैत्रीरूपतया प्रकृते उपयोगादिति। इदं च वाक्यं पूर्वोक्तस्य "परिणामे तु प्रकृतमारोप्यमाणरूपत्वेन परिणमतीति लक्षणविवरणस्याननुगुणम्। अतश्चोक्तसर्वस्वे लक्षणविवरणावसरे" परिणामे तु प्रकृतात्मतया आरोप्यमाणस्य उपयोग इति "प्रकृतमारोप्यमाणरूपत्वे न परिणमति। इति पाठो यदि स्यात्तदा लक्ष्यसमन्वयरीत्यनुगुणं स्यात्। तथोत्तरत्रापि "आतरस्य मैत्रीरूपतया प्रकृतेऽनुपयोगादिति पाठो यद्युपलभ्येत तदा समन्वयग्रन्थ-लक्षणविवरणग्रन्थयोरानुगुण्यम् सूत्राक्षरार्थस्वारस्यं चेति बोध्यम्। सूत्राक्षरार्थस्वारस्यानुरोधेन-यामि मनोवाक्कायैः" इत्यत्र न केवलमर्णवतरणं प्रकृतं येन तादृशतरणोपयोगित्वं तरण्येऽस्तीति परिणामताया अतिप्रसक्तिः। स्यात्। अपि तु जन्म-जरामरणरूपार्णवतरणं प्रकृतकार्यं तदुपयोगित्वं तरण्यस्य न स्वाकारेण अपि तु उपमेयभूतभगवदङ्घ्र्यात्मनैवेति आरोप्यमाणस्य न प्रकृतकार्योपयोगः। अपि तु तद्वैपरीत्येन आरोपाधिकरणस्यैवेत्यतिव्याप्तेरयोगात्। यच्चैवं विवृण्वतापि **सर्वस्वकृता** "निरीक्ष्य विद्युन्नयनैः", एतान्यवन्तीश्वरेत्युदाहरणयोः रूपकोल्लेखः चिन्त्य एव। तयोः "विशेषणं विशेष्येणेति" विशेषणसमासेन, उपमितमिति समासेन वा उत्तरपदार्थप्राधान्यानुगुणविशेषांशोपादानात्परिणामतैवोचिता परिणामस्य व्यतिरिक्तत्वमनभ्युपगच्छतां विषय तावच्छेदकविषयितावच्छेदकान्यतरपुरस्कारेण आरोपीयमान विषयविषय्यन्यतराभेदो रूपकमित्यभिप्रायेण

## तत्त्वालोकः

"तद्रूपकभेदो य उपमानोपमेययोः"

इति लक्षयतां **प्रकाशकारदिनां** मते उभयत्रापि रूपकमेव। विषयपरिणामः विषयिपरिणामः इति वादस्तु रूपकव्यपदेशमूलघातकतया न युक्तः। "आत्मानं रथिनं विद्धि"इत्यादिश्रुतौउपमेये उपमानाभेदप्रतीत्यानुरोधेन व्यासादि भीरूपकपरिग्रहात् तद्विरोधप्रसंगादुच्छृंखलतापत्तेश्च।

इत्थं च "निरीक्ष्यविद्युन्नयनैः""एतान्यवन्तीश्वरेत्यादिपद्ये" आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति रुय्यकसूत्रानुगुण्यात्परिणामता इष्यत एवेति सूत्रोपरि अतिव्याप्त्यभिधानमसङ्गतमेवेति अन्धगोलाङ्गूलानुसरणनीतिरियम्। यतश्चात्र न सूत्रकृतोऽपराधः अपि तु व्यारव्यातुरेव ॥

. एवं "आत्मानं रथिनं विद्धि"इत्यत्रापि सौत्रलक्षणस्य अतिव्याप्तिप्रदर्शनं यत्कृतं तदपि चिन्त्यम्, तत्रातिव्याप्तेः अभावात् ययोरिवादियोगे उपमा तयोरेव इवशब्दाप्रयोगे रूपकं इति सर्वसम्मतः। यथा-

"हरीतकीं भुक्ष्व राजन् मातेव हितकारिणीम्"

इति प्रयुक्ते हरीतक्या मात्रुपमाप्रतीतेः उपमा, उपमेयभूतहरीतकीप्राधान्यं च तत्रैव हरीतकीमातेति कृते समासे अकृते वा तस्मिन् इवशब्दाप्रयोगाद्रूपकम्। तद्वदत्रापि आरोप्यमाणानां रथादीनां स्वरूपेण विष्णुपरमपदप्राप्तियोग्यता नास्त्येव। अपि तु रथ्यादित्वेन रूपितानामात्मादीनामेवेति आरोपाधिकरणस्यैव प्रकृताध्वपारगमनोपयोगित्वमित्यतिव्याप्तेरभावात्। परिणामाभ्युपगमे तु रथादीनामेव प्राधान्यं स्यात् न आत्मादेः। विवक्षितं चात्मादीनामुपमेयभूतानां प्राधान्यम्।

अतएव-

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि,

इत्युपक्रम्य, तस्मिन्नेव प्रकरणे उत्तरत्र "महतः परमव्यक्तम्" इति श्रुतौ अव्यक्तपदेनोच्यमानं किं सांरव्याभिमतं प्रधानम् उत पूर्वोपक्रान्तं रथत्वेन रूपितं

## तत्त्वालोकः-

शरीरमेव अव्यक्तशब्दाभिधेयं न तु सांख्याभिमतं प्रधानमिति प्रतिपादयतामहर्षिणा **बादरायणेन** "आनुमानिकमप्येकेषां इति चेन्न शरीर रूपकविन्यस्तगृहीतेर्दर्शयति चेति सूत्रितम्, तथा च यत्प्रकृतं तदेव विशेष्यं, इतरद्विशेषणम्। प्रकृते रथत्वेन रूपितं शरीरमेव विशेष्यं तस्यैव संसाराध्वपारगमनसाधनत्वमिति आरोप्यमाणस्य विशेषणत्वमेव। तस्य प्रकृतकार्योपयोगित्वं नास्त्येवेति प्रकरणात् गृह्यत एव। अत एव अस्मिन्नेवाधिकरणे "ज्ञेयत्वावचनाच्च" इति सूत्रे **शंकराचार्यैः**-"अस्माकं तु रथरूपकक्लृप्तशरीराद्यनुसारेण विष्णोरेव परमपदं दर्शयितुमुपन्यास इत्यनवद्यम्" इति भाषितम् (ब्रह्म सू.शा.१.४.४ सू)

एतेन रूपके आरोप्यमाणस्य न प्राधान्यम्, अपि तु आरोपाधिकरणस्येति आरोप्यमाणप्रधानकस्योक्तपरिणामलक्षणस्य कथमतिव्यापकत्वम्

यच्चोक्तलक्षणस्य "भिन्नेषु रत्नकिरणैरिति" भ्रान्तिमति अतिव्याप्तिरापादिता सापि परिहर्तुं शक्या "अभेदप्राधान्ये आरोपे आरोपविषयानपह्नवे रूपकमिति पूर्वसूत्रात् आरोपविषयानपह्नव इत्यस्याप्यनुवृत्तिसद्भावेन उक्तभ्रान्तिमति भ्रान्त्या विषयस्य-तिरोधानात्, इन्दौ सहस्रकिरणत्वबुध्या यदा अहिमांशुः इति बुद्धिर्जाता तदा इन्दौ जातायाःअहिमांशुरिति बुद्धेः(आहार्या) अभेदज्ञानमूलकत्वमपि न भवति। अत एव नातिव्याप्तेरवकाशः। अत एव रुय्यकेण भ्रान्तिमति "सादृश्याद्वस्त्वन्तरप्रतीति-र्भ्रान्तिमान् "इति सूत्रितम्। ग्रन्थकृतापि-रूपकनिरूपणावसरे **विद्यानाथोक्तलक्षणं** दूषयता-अतिरोहितरूपिणः इत्यनेन भ्रान्तिमति अतिव्याप्ति वारणाभ्युपगमः कृतः स च भ्रान्तेर्बिषयतिरोधायकत्वाभ्युपगम एव संगच्छते॥

एवं-"विकसदमरनारी" इति पद्ये विषयापह्नवादेव न अतिव्याप्तिः उक्तपरिणामलक्षणे आरोपविषयानपह्नवे इत्यस्यानुवृत्तेः १.उक्तविशेषणेनैव "उरोभुवा कुम्भयुगेन जृम्भितमि"त्यत्रापि अतिव्याप्तिवारणम्- उक्तोदाहरणे कुम्भयुगस्य नदित्तरणरूपप्रकृतकार्योपयोगित्वे सत्यपि कुम्भयुगपदेन साध्यवसानलक्षणया स्तनद्वयस्य क्रोडीकारेऽपि स्तनवाचकपदानुपादानात् अपह्नव एवेति नातिव्याप्तिः। **यद्वा**-रूपकपरिणामयोः अभेदप्राधान्यम्, अतिशयोक्तेः अध्यवसायप्राधान्यमिति

## तत्त्वालोकः-

भेदस्य **रुय्यक सर्वस्वकाराभ्याम्** उपगतेरदोषात् ।

एवं "चक्रभ्रमणकरत्वात्" इत्यत्रापि नातिव्याप्तिः, यतो मशके माधवत्व-संभावनात्मकज्ञानरूपकार्यस्यैव प्रकृतत्वेन चक्रभ्रमणादेः प्रकृतत्वा-भावादेवानुमानेऽतिव्याप्तिवारणात् इत्थंच सौत्रलक्षणस्य न क्वाप्यतिव्याप्तिः।

**नापि** "सुहृदालापेने"त्यत्र अव्याप्तिः उक्तलक्षणानुसारेण आरोप्यमाणस्य चन्द्रस्य न स्वात्मना विरहतापोपशामकत्वम् अपितु कान्तामुखात्मनैवेति रूपकत्वमेवेति अप्रकृतकार्योपयोगित्वेसत्यप्यदोषात् "अनुदाहरणमेवैत-त्सूत्रानुगुण्यात्" इति ग्रन्थकृता अतिव्याप्त्यादीन्मुद्भावनम्-ः

परिणामः क्रियार्थश्चेत् विषयी विषयात्मना ।

इति स्वकृतपरिणामलक्षणानुरोधेन, जयदेवस्तु रूपके उपमानस्योपरञ्जकत्वमात्रम्। परिणामे तु विषयिणः विषयात्मतेति-

"कान्तेन पृष्टा रहसि मौनमेवोत्तरं ददौ ।"

इत्युदाहरणाज्ज्ञायते । प्रश्नस्य उत्तरदानं प्रकृतं तत्राप्रकृतस्य मौनस्योत्तरात्मना पतिणतिरिति उक्तजयदेवकृतलक्षणानुरोधेन वा स्यान्नपुनरलंकारसूत्रानुसारेणेति रुय्यकाभिमतं परिणामलक्षणं युक्तमेव । अत एवैतदनुयायिना **विद्याधरेण यत्र** आरोपविषयः प्रकृतकार्यसिद्धयर्थमारोप्यमाणात्मतया परिणमति तत्र यथार्थाभिधानः परिणाम इति । तदेतदुभयम् उद्धृतसूत्रानुगुणम् ।।

यत्तु **रसगंगाधरकृता-"अलंकारसर्वस्वकारस्तु** आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणागः इति सूत्रयित्वा आरोप्यमाणं रूपकेप्रकरणोपयोगित्वाभावात् प्रकृतोपरञ्जकत्वेनैव केवलेनान्वयं भजते, परिणामे तु- प्रकृतात्मतयारोप्यमाणस्योपयोग इति प्रकृतमारोप्यमाणतया परिणमतीति व्यारव्यातवान्" इति तन्मतमनूद्य निराकृतं तदपि चिन्तयम् ।

यतश्च-**अलंकारसूत्रप्रणेता रुय्यकः**-तच्छिष्यो **मंखुको** व्यारव्यातेति

तत्त्वालोकः-

मंखुकप्रणीतश्रीकण्ठचरितस्य पंचविंशीयसर्गस्थेन-

तं श्रीरुय्यकमालोक्य सः स्वयं गुरुमग्रहीत्।
सौहार्दप्रश्रयरसस्रोतस्संभेदमज्जनम्॥

इति पद्येन भिन्नकर्तृकत्वोपलब्धेः। तत्र तत्र सूत्राननुसारेणापि लक्ष्यदर्शनाच्च भिन्नकर्तृकत्वं निश्चेतुं शक्यते। इत्थंच रसगंगाधरकृतः एककर्तृकत्वबुद्धिः भ्रमरूपा स्यात्। अत एव च खण्डनोद्योगः।

यतश्च सूत्रस्थ प्रकृतोपयोगपदस्य (आरोप्यमाणस्य) प्रकृतकार्ये उपयोग इति यद्यर्थः तदा -

दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि नास्मि दूये।
उद्यत्कठोरपुलकांकुरकण्टकाग्रैः
यत्विद्यते तव पदं ननु सा व्यथा मे॥

इति **सर्वस्वकारो**दाहृतपद्ये आरोप्यमाणानां कण्टकानां प्रकृतखेदव्यथारूपकार्ये उपयोगेनातिप्रसंगात् इत यदुक्तं तदपि मन्दम्। तत्र पुलकांकुरे आरोप्यमाणस्य कण्टकस्य पादभेदनकार्यसाधकत्वं विद्यते। सत्यम्, तथापि तत्कार्यं न प्रस्तुतम्। प्रणयमानिन्याः मानापनोदनाय नायककृतानुनयस्यैव प्रस्तुतत्वात्। यदि पादभेदः प्रस्तुतकार्यस्य सम्पादनार्थः स्यात्तदा एतद्वैपरीत्येन दुःखजनकत्वात् कुपितनायिकानुनयप्रतिबन्धक एव स्यात्। अतश्चात्र नखेदव्यथायाः प्रकृतकार्यत्वमित्यप्रकृतकार्योपयोगित्वमेवेति अतिव्याप्तेरभावात्॥

यदि प्रकृतविषयात्मतयोपयोगोऽर्थः इति तदा **सर्वस्वकारोक्ते** -

अथ पक्त्रिमतामुपेयिवद्भिः
सरसैर्वक्त्रपथाश्रितैर्वचोभिः।
क्षितिभर्तुरुपायनं चकार
प्रथमं तत्परतस्तुरङ्गमाद्यैः॥

## तत्त्वालोक

इति व्यधिकरणपरिणामेऽव्याप्तिः इति, तदपि चिन्त्यमेव सूत्रस्वरसानुसारेण विषयिरूपतया प्रकृतकार्योपयोगे एव परिणामता न पुनः विषयिणो विषयरूपत्वेनेति प्रकृते राजसंघटने न ह्युपायनस्यारोप्यमाणस्य स्वात्मनोपयोगः । किन्तु विषयवाचकपदसमभिव्याहाराच्च वचसामुपमानभूतोपायनरूपत्वमिति लक्षणसमन्वयात्परिणामतैवेत्यव्याप्तेरभावात् ।

परन्तु- व्याख्यायां-"परिणामे तु प्रकृतात्मतयारोप्यमाणस्योपयोग इति प्रकृतमारोप्यमाणरूपतया परिणमतीति पाठदर्शननिबन्धनम् । अयं चोद्धृतपाठः पूर्वोत्तरव्याहतः " प्रकृतात्मतयारोप्यमाणस्योपयोगे प्रकृतस्य आरोप्यमाण रूपता कथं घटते । द्वयोरेकदा असम्भवात् इति अशुद्धपाठनिबन्धनोऽयं खण्डनोद्योगः ।

एवमुपमेयतावच्छेदकपुरस्कारेणोपमेये निश्चीयमानमुपमानतादात्म्यं रूपकमिति लक्षयित्वा उपमानप्रतियोगिकोपमेयानुयोगिकाभेदस्य रूपकत्वमुपगम्य परिणामेऽपि विषयप्राधान्यपरिकल्पनमन्यानुसरणमूलमवैति **रसगंगाधरकृदुक्तं** परिणामलक्षणं **जदेवादिकृत**लक्षणानुगुणमेव । न प्राचामनुगुणम् । एवंच -विषयप्राधान्ये रूपकं, विषयिप्राधान्ये सति प्रकृतकार्योपयोगे परिणाम इत्यभ्युपगमे -

"राजनारायणं लक्ष्मीः त्वामालिङ्गति निर्भरम् "

इत्यत्र "विशेषणं विशेष्येण बहुलम्" इति समासे सति उत्तरपदार्थप्राधान्यानुरोधेन राज्ञोऽपि नारायणत्वेन प्रतीत्या "आरोप्यमाणस्य प्रकृतकार्योपयोगे परिणामः " इत्युक्तरीत्या परिणामताभ्युपगमो युक्त एवेति न तत्र रूपकालंकारता अपि तु परिणामतैव।"पादाम्बुजं भवतु वो विजयाय"इत्यत्र अतिसाम्यविवक्षया पादे अम्बुजतादात्म्यम्-तत्प्रयोजकश्च धर्मः, "चन्द्रमुखी कन्या" इत्यादौ प्रियदर्शनत्वादिः प्रसिद्धिवशात् उपमानिमित्तत्वेन प्रतीयते तद्वदत्रापि अम्बुजगत-सौगन्ध्यसौकुमार्यादिकं प्रतीयते । मञ्जुमञ्जीरशिञ्जितमनोहरत्वम् अम्बुजव्यावर्तको धर्मविशेष उपात्तः स च उपमेये पादे उत्कर्षकः इति उपमितसमासो युक्तः उपमा रूपकं वालंकारः । **वामनादिमते** समासे रूपकत्वस्य प्रसक्तिरेव नास्ति । नव्यमते उपमित समासे रूपकत्वमपि । अत एव **शेखरकृता**-अत एव एतद्विषये उपमेतिप्राञ्चः ।

## तत्त्वालोक

**कैयटस्तु** उपमानस्य सादृश्यमूला- भेदारोपेणोपमेयेऽन्वयेऽपि इदं प्रवर्तते। संकोचे मानाभावात् ।एवं चैतद्विषये रूपकमपीत्युक्तं संगच्छते ।एतेन अत्राहुः इत्यारभ्य प्रकृतदृगात्मतापत्त्यपेक्षणा-त्परिणामालङ्कारः इत्यन्तो भागः चिन्त्य एव। यदितु **जयदेवोदाहृतं -**

परिणामः क्रियार्थश्चेत् विषयी विषयात्मना।
कान्तेन पृष्टा रहसि मौनमेवोत्तरं ददौ ॥

इत्युदाह्रियते तदा कथंचित् अप्रकृतस्य मौनस्य प्रकृतोत्तरात्मना परिणतिरपेक्ष्यत इति परिणामता वक्तुं शक्या। नतु-प्रसन्नेन दृगब्जेनेति,अलमतिचर्चया।

इत्थमेवान्यत्रापिअनौचित्यपरिहाराय उत्तरपदार्थप्रधान विशेषणसमास-परिग्रहोदृष्टः यथा

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचती।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥

इत्यत्र महावीरेण रामेण स्त्रीवधः कृतः इत्युपवर्ण्य पश्चात् तदनौचित्यं परिहर्तुकामेन कविना रामोमन्मथत्वेन, रामशरः कामशरत्वेन, ताटकापि निशासंचरणशीला-भिसारिकात्वेन दुगन्ध्यपि रुधिरं भगवदनुग्रहबलात् सुगन्धितापन्नचन्दनात्मतया, यमोऽपि प्राणनाथत्वेन मरणमपि प्रियसमागमात्मतया परिणामितः। एवं च कामशरप्रेरणया अभिसारिकारक्तचन्दनालंकृता स्वकान्तमभिससार न तु ममारेति प्रकृतबीभत्साननुगुणं शृङ्गारमुपनिबबन्ध ।अत एव च

ज्ञेयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ।
रौद्राद्भुतौ, तथा हास्यकरुणौ वैरिणौ मिथः।

इति प्रतीत्यनुगुणतया घटनाकृतेति अमतपरार्थत्वं काव्यदोषः स्फुटइव भाति।

यदित्वत्र-उपमा रूपकंवा स्यात्तदा पूर्वपदार्थप्राधान्यापत्त्या शृङ्गरस्य परिपोषः स्यादिति अमतपरार्थता स्यात्, अस्मदुक्तरीत्या विशेषणसमासेनोत्तरपदार्थप्राधान्ये सति मन्मथाभिसारिकाचन्दन-प्राणानाथानां सम्बन्धित्वेन शृङ्गारोऽभिव्यञ्जित इति

## तत्त्वालोकः-

प्रकृतबीभत्साननुगुणः श्रृङ्गारः प्रकृतरामताटकादि संबन्धपरिहारेण अभिसारिकादिसम्बन्धितया घटित इति विरोधपरिहारोऽपि इति ना मतपरार्थत्वदोषप्रसक्तिरपीत्यपरमनुकूलम्। एवं चात्र प्रकरणे मृतताटकाद्यालंबनः। रामादिनिष्ठा जुगुप्सा स्थायी। तस्मिन्नेव श्रृङ्गारस्थायिनो रतेरुपनिबन्धे ऐकाधिकरण्यविरोधः प्राप्नोति। अतश्चैतत्परिहर्तुकामेन कविना अभिसारिकानिष्ठत्वेन रतिरुपनिबद्धा। तथासति स्थायिनोः रतिजुगुप्सयोः भिन्नाश्रयता जातेति रतिपरिपोषेऽपि अदोषतैव इत्यवधेयम्। अत एव -

विरोधैकाश्रयो यस्तु विरोधी स्थायिनो भवेत्।
स विभिन्नाश्रयः कार्यः तस्य पोषेऽप्यदोषता॥

इति **ध्वनिकृता**, तत्रैव-"यस्तु स्थायी स्थाय्यन्तरेण सम्भाव्यमानैकाश्रयत्वाद्विरोधी भवेत्। यथा उत्साहेन भयं,सः विभिन्नाश्रयत्वेन नायकतद्विपक्षादिगामित्वेन कार्यः" इति, **अभिनवगुप्तपादै र्विवृतं च** साधुभवतीति दिक्॥

ननु **शेखरकृता**-उपमितसमासः उपमानोपमेययोः समानलिङ्गकत्व एव प्रवर्तते। उक्तसूत्रे "उपमानैरिति वक्तव्ये व्याघ्रादिभिरित्युक्तेः" इत्यभिहितमिति दृगब्जेनेत्यत्र कथमयं समास इति शङ्क्यः। तथासति

स चन्द्रिकां चन्द्र इवाभियातः
चन्द्राननां यादववंशचन्द्रः।
निवेशनीयस्सविशेषमासीत्
नेदीयसां नेत्रचकोरवृन्दैः॥

इति महाकविप्रयोगे चन्द्र इवेत्युपमालिङ्गानुगुण्येन नेत्रचकोर वृन्दैः इत्यत्र नेत्राणि चकोरा इवेत्युपमितसमासः उपमैव अलंकार इत्यस्येष्टत्वेऽपि उपमितसमासो न प्राप्नोति उपपादितश्चात्र ग्रन्थकृतैवोपमितसमासः।तथा **काशिकावृत्त्यादिषु** व्याघ्रादिगणे "करकिसलयम्, मुखकमलम् "इत्यादीनां पदानां पठनस्य अननुगुणत्वप्रसङ्गात्॥

## चित्रमीमांसा-

**नन्वेवं 'यामि मनोवाक्कायैः 'इत्यादिष्वपि तरणादिशब्दलक्षितजन्मनाशाद्युपयोगित्वं तरण्यादीनामङ्घ्रियुगाद्यात्मनैवेति तेष्वपि परिणामप्रसङ्गः।**

## तत्त्वालोकः-

एवम्-आलंकारिकैरपि दण्डि-भोजराजादिभिः बाहुलता-पाणिपद्मम् इति-

पाणिपद्मानि भूपानां संकोचयितुमीशते।
त्वत्पादनखचन्द्राणामर्चिषः- कुन्दनिर्मलाः ॥

इत्युदाहृता **भोजराजेन च** "उपमितंव्याघ्रादिभिः (पा.सू.२.१.५६) इति समासः "इति **सरस्वतीकण्ठाभरणे** स्फुटमभिधानात् । **तत्वटीकादौ** -"भाष्याब्धिः क्वातिगम्भीरः" इत्यादिवत् इति सदृष्टान्तं पाराशर्यवचस्सुधाम् "इत्यत्र उपमितसमासस्याभ्युपगमाच्च **शेखरकृदुक्तिः** संभवाभिप्राया नतुनियामिका। अन्यथा बहु प्रामाणिकोपपादितोप-मितसमासपरिकल्पनस्यायुक्ततापातात् । अतश्चोक्तिर्नागेशस्य प्रायिकीति अवधेयम्॥

स्वाभिमतलक्षणानुरोधेनापि "यामि मनो वाक्कायैः" इत्यादिष्वपि-परिणामताप्रसज्यत इत्याशंकते **नन्वेवमिति**।

अयमाशंकाशयः नह्यत्रार्णवतरणमेव प्रधानं तथासति तादृशतरणस्य तरण्डमात्रेणैव निष्पत्या तदर्थं करणत्रयसारूप्येण भगवत्पादयुगलशरणा-गतिरनपेक्षितैव अतश्च तादृशशरणागतेः अर्णवाभिन्नजन्म-जरामरणतरणमेव प्रधानमिति तदानुगुण्येन तरण्यस्य अंघ्रियुगात्मकविषयरूपेण परिणति र पेक्षिता। तथा सति तरणं नं मुख्यं किन्तु जन्माद्यपरिग्रहरूपमिति तरण जन्मनाशरूपेष्वर्थेषु लाक्षणिकमिति तदुपयोगित्वं तरण्यस्य अंघ्रियुगरूपतयैवेति विषयिणः पदात्मनोपयोगित्वसद्भावात् परिणामतेति लक्षणमतिव्याप्तमेवेति।

**इत्यादिष्विति**। आदिशब्दात् "निरीक्ष्य विद्युन्नयनैः" "एतान्यवन्तीश्वरेति" पद्योदाहरणयोः ग्रहणम्।

निरीक्ष्येति पद्यस्य वर्षर्तुवर्णनप्राधान्येन प्रवृत्तत्वे न पयोदेऽचेतनत्वात् कर्तृत्वं

### चित्रमीमांसा

**मैवम्। यस्य कार्यवाचिपदप्रथमप्रतीत तन्मुरव्यार्थ निर्वर्तन सामर्थ्यं तदात्मनोपयोगित्वस्य ग्राह्यत्वात् तरणादिपद मुरव्यार्थनिर्वर्तनसामर्थ्यस्य च तरण्यादिष्वेव व्यवस्थितत्वात्।**

### तत्त्वालोकः-

बाधितं, तेन च नयननिरीक्षणं च अत्यन्तमसंभवीति पयोदकर्तृकं विद्युत्करणक निरीक्षणंनायिकामुखसंसर्गं लक्षयति, तदनुगुणतया नयनस्य विद्युदात्मना उपयोगोऽस्तीति आरोप्यमाणस्य नयनस्य प्रकृतविद्युदात्मना उपयोगोऽस्तीति यथाकथंचित् अतिव्याप्तिः उपपादयितुं शक्येति भावः।

"एतान्यवन्तीश्वरेति" पद्ये अवन्तिराजस्य परिशुद्धयशसः दिगन्तविश्रान्तत्वसम्पादनप्राधान्येन प्रवृत्तत्वाद प्रकृतानां वधूनां दिग्रूपत्वेन, तथैव अप्रकृतानां प्रसूनानां यशोरूपप्रकृतात्मनोपयोगोऽस्तीति अवतंसनपदं लक्षणया ज्योत्स्नेव आनन्दपरवशसर्वजनाभिनन्दनास्पदत्वं प्रतिपादयतीत्यतिव्याप्तिरिति चाभिसन्धिना। इदं चातिव्याप्त्यापादनं न स्वारसिकं, किन्तु कथंचित्कृतमिति विभाव्यम्॥

उक्तां प्रसक्तिं परिहरति- **मैवमिति यस्येति**। तरण्य-नयन-प्रसूनानां कार्यवाचिपदेनतरण-निरीक्षणावतंसनादिपदेन प्रथमंप्रतीतः प्राथमिकन्वयबोध-विषयीभूतो यो मुरव्यार्थः तरणादिपदसंकेतितार्थः तन्निर्वर्तनसामर्थ्यं तरणादि-निष्पत्तिसम्पादकत्वं, तदात्मना तरण्याद्यात्मना ग्राह्यत्वात्। एवं च यामीत्याद्युदाहरणेषु -तरण्यादेर्विषयिणः तरणादिपदमुरव्यार्थनिर्वर्तनसामर्थ्यसंभवे तरणादिपद-लक्ष्यार्थमादाय तन्निर्वर्तनोपपादनमनपेक्षितमिति तेषां अंघ्रियुगाद्यत्मना परिणत्यपेक्षानास्तीति आरोप्यमाणस्य स्वात्मनैवोपयोग इति नातिव्याप्तिः।

'यामि मनोवाक्कायैः' त्यत्र वस्तुतः जन्मजरा-मरणरूपार्णवतरणसाधनं परमात्मनोंघ्रिद्वये विद्यत एवेति न परिणामावश्यता। "निरीक्ष्य विद्युन्नयनै" रित्यत्र तु वर्षासु कस्यांचिद्रात्रौ काचन चन्द्रमुखी स्वकान्तमभिसर्तुं निशायां यदा प्रवृत्ता तदा

**चित्रमीमांसा-**

**तस्मादुदाहृतेषु रूपकमेव तेषु च नातिव्याप्तिरिति ।।**

## तत्त्वालोकः

मध्येमार्गं मेघः विद्युतं बहिर्निस्सार्य धाराकारं वर्षन् गर्जति तदानीं कश्चन नायकः अभिसरन्त्याः नायिकायाः लावण्यपरिपूर्णमुखावलोकनमात्रेणैवापहृतमनाः "किमवस्फूर्जन् धाराकारं वर्षन् अम्बरगतं चन्द्रं भूमौ पतितमवलोक्य किं ररासे इतिपयोदउत्प्रेक्षते । तेन च नायिकामुखसौन्दर्यं लोकातीतमिति व्यज्यते । अत एव पयोदे द्रष्टृत्वमर्थाद्रूपयता विद्युत्सु नयनात्मतया रूपितम् । यतश्च कवयः अचेतनानां वाक्यार्थीभावेनापि चेतनवस्तुवृत्तान्तं योजयन्ति । तत्कृतश्च चमत्कारः सहृदयानावर्जयति ।यथा अत्रैव केवलपयोदवृत्तान्तेन प्रकाशितेन न तावांश्चमत्कारः यावान् पयोदे द्रष्टृपुरूषवृत्तान्तयोजनेन, उक्तंच ध्वनिस्थापनपरमाचार्येण **आनन्दवर्धनेन** "यस्मान्नास्त्येवासावचेतनवृत्तान्तः यत्र चेतनवस्तुवृत्तान्त योजना नास्ति अन्ततो विभावत्वेन "इति दिक् ।

"एतान्यवन्तीश्वरे"ति पद्ये अवतंसनादिरूपमुरव्यार्थनिर्वर्तन सामर्थ्यं प्रसूनानां प्रसूनत्वेन रूपेणैव उपयोगोऽस्तीति नात्र यशोरूपतया प्रसूनानां परिणाम आवश्यक इति अतिव्याप्तेरभावात् ।।

निगमयति **तस्मादिति** ।

तस्मात् तरणादिपदमुरव्यार्थनिष्पादनकरणत्वस्य तरण्यादिषु विद्यमानत्वा-लक्ष्यार्थप्रतीतिमादायतन्निष्पादकत्वमंघ्रियुगाद्यात्म नेत्येतावत्पर्यन्तमविवक्षितत्वादेव उदाहृतेषु यामीत्यादिषु रूपकमेवेति नातिव्याप्तिरिति ।।

**अत्रेदं चिन्त्यते-**

यस्येत्यादिना यः परिष्कृतोऽर्थः सःकिम् आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः "इत्यस्य परिणामलक्षणस्य? उत रूपकस्य? यदि आद्यस्य तदा "यामीत्या"दावेव अतिव्याप्तिः तत्र तरण्यादेः प्रकृततरणादिपदशक्यार्थोपयोगित्वं स्वात्मना संभवतीति न लक्ष्यार्थपर्यन्तानुधावनापेक्षेति लक्षणसमन्वयप्रसङ्गात् ।

## तत्त्वालोकः-

तथा त्वदभिमते" प्रसन्नेनेत्युदाहरणे आरोप्यमाणस्याब्जस्य प्रकृत'वीक्षते' पदशाक्यार्थोपयोगित्वस्याभावात् इति।

यद्यन्त्यस्य (रूपकस्य),तदा "तीर्त्वा भूतेशमौलिस्रज"मित्यत्र प्रकृतोपकृतवत्पदशाक्यार्थोपयोगित्वमातरस्य स्वाऽत्मना संभवतीत्यतिव्याप्तिः।

किचं रूपकशरीरे प्रकृतोपयोगित्वांशो न **रुय्यकेण न वा मङ्खुकेन** निवेशितः। प्रत्युत **मङ्खुकेन** रूय्यकीयसूत्रवृत्तौ आरोप्यमाणं रूपकेप्रकृतोपयोगित्वाभावात् प्रकृतोपरञ्जकत्वेनैव केवलान्वयं भजते इति विवृतम् ।तद्व्यारव्यात्रा **जयरथेन** च प्रकृतोपञ्जकत्व-प्रकृतोपयोगित्वयोः रूपक-परिणामासाधारण्यं प्रदर्शितम्। अतश्च नायं रूपकस्य परिष्कारः किन्तु परिणामस्यैव ।यस्येत्यादिना अभिहितांशस्तु पूर्वोक्तपरिणामस्वरूपपरिशिष्टोंऽशः तथाच परिणामस्य ग्रन्थकृदभिमतं सूत्रवृत्त्यनुगुणत्वेनाभिमानास्पदं लक्षणंचेत्थं पर्यवस्यति।

यत्रारोप्यमाणं किञ्चित्कार्यवाचिपदप्रथमप्रतीततन्मुरव्यार्थ-निर्वर्तनोपयोगित्वेन निबध्यमानमपि स्वतस्तस्य तदुपयोगित्वासंभवात् प्रकृतात्मतापत्तिमपेक्षते तत्रैव परिणामतेति,एवं पर्यवसितेऽर्थे "यामि मनोवाक्कायैः" इत्यादौ नातिव्याप्तिः आरोप्यमाणतरण्यादेः प्रकृततरणादिकार्यवाचिपद प्रथमप्रतीततरणादिरूपमुरव्यार्थनिर्वर्तनोपयोगित्वेन निबध्यमानस्य स्वतःतदुपयोगित्वमेव सम्भवतीति तदसंभवप्रयुक्तविषयात्मतापेक्षा नास्तीति उक्तोदाहरणेषु नातिव्याप्तिरिति अभिप्रायः।

इत्थं च ग्रन्थकृदभिमते "प्रसन्नेन दृगब्जेने"त्युदाहरणे अब्जस्यारोप्यमाणस्य वीक्षणरूपकार्यवाचि वीक्षते पद प्रथमप्रतीततन्मुरव्यार्थवीक्षणनिर्वर्तनोपयोगित्वेन निबध्यमानत्वेऽपि तस्य अब्जात्मना तादृशवीक्षणोपयोगिता न संभवतीति अब्जस्यदृगात्मना परिणतिरपेक्ष्यत इति नाव्याप्ति ः।

**वस्तुतस्तु**-"आरोप्यमाणस्य प्रकृतकार्योपयोगित्वे परिणाम" इति सूत्रानुगुण्येन "प्रसन्नेन" इत्यादौ मयूरव्यंसकादिसमासप्राप्तौ विनिगमकाभावात्, उपमितसमास-

## -तत्त्वालोकः-

प्राप्तौ विनिगमकसत्वाच्च प्रधानीभूतायां दृश्येव वीक्षणान्वयस्य "दण्डिनं पश्य, शूलिनं पूजय" इत्यादौ दर्शनपपूजनान्वयवत् अन्वयः, अब्जस्य उपरञ्जकत्वमात्रमेवेति रूपकस्वीकार एवोचितः ।"सुहृदालापेन"इत्यात्रापि विरहजतापोपशमनानुगुण्येन चन्द्रस्य मुखोपरञ्जकत्वमेवेति रूपकतैव ।न परिणामरूपता ।"तीर्त्वा भूतेशमौलिस्रजाम्" इति **सर्वस्वकारो**दाहृतोदाहरणे सौमित्रिमैत्री प्रकृता आरोप्यामाणसमानाधिकरणातररूपत्वेन परिणते-त्युपपादनानुसारेण आतररूपत्वेन परिणतायाः सौमित्रिमैत्र्याः प्रकृतनौतरणोपयोगित्वमिति आरोप्यमाणस्य आतरस्य प्रकृतकार्योपयोगः अस्तीति न परिणामलक्षणस्याव्याप्तिः ॥

अतएवैतदनुयायी **विद्याधरोऽपि**-

अमरनगरीसौधोत्सङ्गाधिरोहमहोत्सव-
व्यतिकरधुराधौरेयाणामराति महीभुजाम् ।
मरकतमयीनिश्श्रेणिस्त्वत्कृपाणलता कवीन्
कति न कुरुते श्लाघाव्यग्रान् कलिङ्गपुरन्दर ॥

अत्यत्र प्रकृतकृपाणलता आरोप्यमाणनिश्श्रेणिरूपतया परिणमन्ती प्रकृता-मरनगरीसौधोत्सङ्गाधिरोहणोपयोगिनी इति प्रतिपाद्य परिणामतामाह॥

**एतेन**- "श्रावं श्रावं वचःसुधाम् " इत्यत्र "वदनेनेन्दुना तन्वी स्मरतापं विलुम्पती " त्यादौ रूपकमेव । "पायं पायं वचःसुधाम् ," वदनेनेन्दुना तन्वी शिशिरीकुरुते दृशौ " इत्यादौ परिणामतैवैतन्मते इति बोध्यम् । एवंच विशेषणसमासे परिणामता । उपमितसमासे रूपकता उपमा वा प्रकरणलिङ्गादिभिःपरिकल्प्येति वक्तुं युक्तं नतु अनावश्यकखण्डनोद्यम इति भाति। अतः रसगंगाधरकृत-परिणामलक्षणतदुदाहरणादिकं चिन्त्यमेव॥ ग्रन्थकाराभिमतरीत्या मयूरव्यंसकादिसमासाश्रयणकारणं उत्तरत्र चिन्त्यते । प्रकृतेप्राचीनालंकारिकरीति-माश्रित्य रूपकस्थले मयूरव्यंसकादिसमास-परित्यागकारणानि तत्र तत्र वर्णितानि ।

**-चित्रमीमांसा-**

**नन्वेवं उक्तातिव्याप्तिपरिहारेऽपि-**

**सोऽपूर्वो रसनाविपर्ययविधिः तत्कर्णयोश्चापलं**
**दृष्टिस्सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा।**
**सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोद्याप्यसौ**
**अन्तःशून्यकरोऽपि सेव्यत इति भ्रातः क एष ग्रहः ॥**
**(भल्लटशतकम्)**

**इत्यप्रस्तुतप्रशंसायामतिव्याप्तिः ॥**

-तत्त्वालोकः-

प्रागुक्तपरिष्कारानुसारेण "आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः" इत्यस्य प्रागुक्तेषूदाहरणेषु अतिव्याप्तिपरिहारेऽपि अप्रस्तुत प्रशंसायामप्रकृतस्य प्रकृतात्मतापत्तिमन्तराऽनिर्वाहात् परिणामता दुर्वारेति प्रतिपाद्य शेषपूरणादिना परिष्कर्तुमाशंकते - **नन्वित्यादिना** ॥

**सोऽपूर्वइति** । हे भ्रमर ! भ्रातः यस्य वारणस्य दन्तिनः निवारकस्य च रसनाविपर्ययविधिः चतुर्मुखवरप्रसादलब्धतारकासुरोपद्रुतदेववर्गप्रार्थितेन चतुर्मुखेन अग्नेरन्तरन्वेषणाय प्रेरितेषु देवेषु "क्वाग्निः गूढः " इति गजं पृच्छत्सु गजैः अश्वत्थेऽग्निस्तिष्ठतीति प्रत्युत्तरिते गूढेनाग्निना भवतां जिह्वापरिवृत्तिर्भूयीदिति यश्शापः प्रदत्तः तेन या जिह्वाविपरिवृत्तिः तस्या विधिः उपयोगः, पूर्वापरवैपरित्येनाभिधानफलं, अपूर्वः विलक्षणः सः अनुभूतपूर्वः, तथा कर्णयोः कर्णतालयोः चापलम् अनवस्थानं निरन्तरचालनम्, स्वपरयुक्तायुक्तसाध्वसाधुत्वविवेचनमन्तरा प्रतारकोक्तिश्रवणेन अस्थिरबुद्धित्वंच । तदेव अनुभूतचरमेव, दृष्टिः नेत्रम् मदविस्मृतस्वपरदिक् गण्डप्रदेशनिस्सरन्मदतया स्मृतिपथानारूढनिजपरमार्गा, जन धनयौवनादिप्रभगर्वविस्मृतामानाम्विवेकाच सैव अनुभूतपूर्वैव दृष्टिः। वा अथवा भूयसाअत्यधिकंउक्तेन तदीयानभिगम्यता-

**-चित्रमीमांसा-**

**तत्र अप्रकृतवारणरसनाविपर्ययादीनां प्रकृतदुष्प्रभुरसना विपर्ययाद्यात्मतयैव तत्सेवात्यागलक्षणकार्योपयोगित्वात् ।।**

**नहि यथा वारणस्य कर्णचापलं भ्रमरस्य तत्सेवात्यागे हेतुः न तथा तस्य रसनाविपर्ययः शून्यकरताच तत्र हेतुः । मदश्च प्रत्युत सेवायामेव हेतुरिति तस्य तत्त्यागहेतुत्वं दूरापास्तम् ।।**

-तत्त्वालोकः-

प्रयोजकवाक्येन किम्? नकिमपि प्रयोजनमित्यर्थः।। एवं सत्यपि सर्वं विस्मृतवानसि, तदनभिगम्यताहेतून् विस्मृत्य, अद्यापि असौवारणः हस्ती वारयिता च अन्तःशून्यकरोऽपि अस्थिमांसादिशून्यान्तरशुण्डादण्डः रिक्तहस्तोऽपि सेव्यते अनुस्रियते, त्वया, क एष ग्रहः अभिनिवेशः कीदृशः । रिक्तहस्तजनानुवर्तनेन क्लेशएव भविता नतु किंचिदपि प्रयोजनम्। अभिनिवेशेन प्रवृत्तानां भ्रमः पर्यन्ते निर्वेदमेवोत्पादयेत्। "**अभिनिवेशवशीकृतचेतसां बहुविदामपि संभवति भ्रमः**" इति **न्यायादिति** भावः ।।

अत्र भ्रमर-गजवृत्तान्तेनाऽप्रस्तुतेन सारूप्यात् तत्सदृशदरिद्र-दुष्प्रभुवृत्तान्तः प्रवृत्तः प्रतीयतइति भवतीयमप्रस्तुतप्रशंसा।

तत्र "अप्रस्तुतात् सामान्यविशेषभावे, कार्यकारणभावे, सारूप्ये, च प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा" इति तल्लक्ष'णात्।

**यद्वा-** सारूप्यपदमुपलक्षणं तदभेदस्यापि । भ्रमरगजवृत्तान्तेनाप्रकृतेन तत्तदात्म्यात् दरिद्रदुष्प्रभुवृत्तान्तः प्रतीयत इत्यप्रस्तुतप्रशंसा।

अत्रोदाहरणे उक्तपरिणामलक्षणस्यातिव्याप्तिमुपपादयति **तत्रेत्यादि**।

नन्वत्र आरोप्यमाणवारण-रसनाविपर्ययादीनामेव स्वात्मना तत्सेवा-त्यागहेतुत्वमस्तु, किमर्थं प्रकृतात्मतेति आशंक्याऽप्रकृतवारणादीनां प्रकृतात्मतापत्तिं विना सेवात्यागलक्षणकार्योपगित्वं न सम्भवति। प्रत्युत तद्वैपरीत्येन तत्सेवायामेव [illegible]त् इत्याह- **नहीत्यादिना**।

## -चित्रमीमांसा-

**एवमपि यत्तेषां त्यागहेतुत्वं निबध्यते तद्वारणादीनामप्रकृतानां दुष्प्रभुप्रभृतितादात्म्यापत्यैव निर्वाह्यमिति।**

## -तत्त्वालोकः-

अत्र भ्रमरकर्तृकवारणसम्बन्धिसेवात्यागे बहवो हेतव उपात्ताः। रसनाविपर्ययः, कर्णचापलम्, वारणत्वम् मदविस्मृतस्वपरदिक्त्वम्, अन्तःशून्यकरत्वमिति। एषु कर्णचापलमेकं भ्रमरकर्तृकसेवात्यागे हेतुः। गजत्वं, मदविस्मृतस्वपरदिक्त्वं च तत्सेवात्यागे प्रतिकूलम्। प्रत्युत सेवायामनुकूलमेव। रसनाविपर्यया-न्तस्सुषिरशुण्डादण्डत्वं तत्त्यागे नानुकूलं नवा प्रतिकूलम्। इत्थं सर्वेषां सेवा-त्यागहेतुत्वसम्पादनं वारणशब्दयोगलभ्यप्रकृतदुष्प्रभुत्वादिरूविषयक्रोडीकारेणैव वारणादिशब्दप्रवृत्त्या रसनाविपर्यय-कर्णचापल, मदविस्मृतस्वपरदिक्त्वान्तः शून्यकरत्वानां सर्वेषामपि दुष्प्रभुसेवात्यागलक्षणकार्योपयोगित्वादिति अप्रकृतवारणरसनाविपर्ययादीनां प्रकृतदुष्प्रभु-रसनाविपर्ययाद्यात्मतयैव प्रकृतोपयोगित्वमित्यतिव्याप्तिरिति भावः।

तदेतदाह- **एवमपिति**।

**वस्तुतस्तु-** अस्मत्प्रदर्शितरीत्या आरोपविषयस्यानपह्नवे एव परिणामस्यापि प्रवृत्तेः सूत्रकृदाभिमतत्वात् अत्रच दुष्प्रभुप्रभृतीनामनुपादानात् आरोप्यमाणस्य स्वरूपेण प्रकृतकार्योपयोगाभावाच्च न परिणामता। कर्णचापलमात्रांशे परिणामतात्वेऽपि न परिणामता यतो। न प्रकृतोपयोगित्वमात्रं परिणामशरीरम् अपि तु विषयस्योपादानमपीत्यतिव्याप्तेरभावात्।

किंच नात्राप्रस्तुतप्रशंसा "कस्त्वं भोः कथयामि " इत्यत्र यथा स्थावरस्यानामन्त्रणीयत्वेन वाच्यासंभवेऽपि मौग्ध्यादिना तत्संभवाद्वाच्यमपि प्रस्तुतं तद्वदिहापि भ्रमरोपालम्भरूपेणप्रस्तुतमेव, तेनच दुष्प्रभु-दरिद्रवृत्तान्तः प्रतीयत इति **प्रस्तुताङ्कुर** एव अलंकार इति सूत्रानुरोधेनातिव्याप्तेरनवकाशात्।

## -चित्रमीमांसा-

**'सुहृदालापेनैव' इत्यत्रोदाहृतपरिणामे अव्याप्तिश्च तदवस्था। तत्र चन्द्रवन्मुखस्याप्यप्रकृतत्वेन प्रकृतात्मनोपयोगित्वाभावात्॥**

## ॥इतिचित्रमीमांसायां परिणामपूर्वपक्षः॥

## -तत्त्वालोकः-

प्रत्युत-"परिणामः क्रियार्थश्चेद्विषयी विषयात्मना।"

इति**कुवलयानन्दो**क्तलक्षणानुसारेणातिव्याप्तिरापाद्या। अथच **विद्यानाथीय-**परिणामलक्षणरीत्या च, न पुनर**लंकारसर्वस्वरीत्येति** बोध्यम्॥

यदि तु "आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः" इत्यत्र प्रकृतात्मनोपयोगित्वे इत्यर्थकरणेनापि न निस्तारः। यत्र आरोप्यमाणस्यारोपविषयस्य चापकृतत्वमेव तत्र प्रकृतात्मनोपयोगित्वाभावात् परिणामविशेषेऽव्याप्तेरित्याह **सुहृदेति**।

उक्तोदाहरणे- आन्तरक्लेशस्यैव प्रकृतत्वात्तत्र सुहृदालापस्यैवोपयोगित्वमिति कान्तामुखस्य तत्र भेदेनान्वयिनश्चन्द्रस्य चाप्रकृतत्वमेवेति प्रकृतत्वस्यैवाभावे तदुपयोगित्वं सुतरां न सम्भवतीत्यतिव्याप्तिः प्रसज्यत इत्यभिमानमात्रम्॥

**वस्तुतस्तु-** पूर्वपक्ष्यभिमतरीत्या नात्र परिणामता अपितु रूपकत्वमेव। रूपके अप्रकृतस्य प्रकृतोपरञ्जकत्वम् इति प्रकृतकार्योपयोगविवक्षा नास्त्येव अप्रकृतविरहजतापापनोदकत्वे चन्द्रस्योपमानस्योपरञ्जकत्वमेवेत्यव्याप्तेः अभावात्। प्रत्युत तद्वैपरीत्येन परिणामं लक्षयतो **विद्यानाथस्य** लक्षणेऽव्याप्तिः-

आरोप्यमाणमारोपविषयात्मतया स्थितम्।
प्रकृतस्योपयोगि स्यात्परिणाम उदाहृतः॥ इति।

अत्र आरोपविषयमुखात्मतयास्थितस्य चन्द्रस्य प्रकृत आन्तरक्लेशपरिहाररूपकार्यो-पयोगित्वं न सम्भवतीति दूषणाभिधानम् अलग्नकम्॥

**इदमन्यदप्यत्रावधेयम्-** "सूत्राक्षराणि यमर्थं स्वरसतो बोधयन्ति सएव सार्थः। वक्तुः स्वसमीहितार्थवाचकशब्दप्रयोगव्युत्पत्तेः। स्वरसतः

## -तत्त्वालोकः-

परपत्यायनार्थत्वाच्छब्द प्रयोगस्य। तत्र तु परं व्याख्यानविरोधे व्याख्येय स्वारस्यानुसरणस्यदर्शनसम्प्रदायव्यवस्थापकत्वात्, "अत्रापिसूत्राक्षरानुसारेणैव वक्तव्यम्। **ग्रन्थकृता** परं पूर्वोत्तरव्याहतव्याख्यापाठानुरोधेन सूत्रार्थ एवान्यथा कृत इत्यहो दार्शनिकत्वपराकाष्ठा ग्रन्थकृत इति दार्शनिकालंकारिकैरेवंविधदोषोद्भावनं सूत्रविदो न बहुमन्यन्ते॥ **राजानकरुय्यक**सूत्रमुद्दार्शनिकतया उत्सूत्रतया दूषितमिति विद्वांस एव गुणदोषौ परिशीलयन्तु॥

अतश्च राजानकरूय्यकसूत्रतद्वृत्त्योरुपरि दाषोद्भावनं स्वोक्तपरिणामलक्षणा-नुसारि **विद्यानाथ**कृतपरिणामलक्षणानुसारि चेति सर्वमपि प्रतिज्ञाननुगुणमेवेति सर्वोप्ययं ग्रन्थभागश्चिन्त्य एव।

अथापि व्याख्या तदनुसारेणापि कृता केवलमिति बोध्यम्॥

॥इति तत्वालोके परिणामपूर्वपक्षः॥

## -चित्रमीमांसा-

### -अथपरिणामसिद्धान्तः-

**उच्यते- प्रकृतात्मनेत्यत्र प्रकृतशब्दः विषयमात्रपरः इति नोदाहृतपरिणामाव्याप्तिः ॥**

**उपयोगित्वं च प्रकृतागमककार्यं प्रति विवक्षितम् । अप्रस्तुतप्रशंसोदाहरणे प्रकृतदुष्प्रभुसेवात्यागगमकवारणसेवात्यागं प्रतिउपयोगित्वमिति नातिव्याप्तिः ॥**

### -तत्त्वालोकः-

### -अथपरिणामसिद्धान्तः-

इत्थम् अप्रस्तुतप्रशंसात्वेनाभिमतोदाहरणे दृष्टान्तसंकीर्णपरिणाम त्वेनाभिमते चाव्याप्त्यतिव्याप्ती परिहर्तुं सिद्धान्तमाह- **उच्यतइति** परिणामोदाहरणेऽव्याप्तिपरिहारोपायमाह- प्रकृतेति॥ प्रकृतात्मना इत्यत्र प्रकृतशब्दस्य प्रक्रान्तार्थकत्वं परित्यज्य विषयमात्रपरत्वे पूर्वोक्ताव्याप्तिः वार्यते । तथाहि " सुहृदालापेनेत्यत्र आरोप्यमाणस्य चन्द्रस्य तद्विषयभूतमुखात्मनैव विरहतापोपशामकत्वमिति परिणामता नक्षीणेत्यभिमानात् ।

एवमप्रस्तुतप्रशंसायामतिव्याप्तिं परिहर्तुमुपयोगित्वं प्रकृतागमककार्यं प्रति इति विशेषितंचेच्छक्येत्याह- **उपयोगित्वं चेति** ।

तथाच यत्रारोप्यमाणं प्रकृतागमककार्यवाचिपदप्रथमप्रतीतत न्मुख्यार्थनिर्वर्तनोपयोगित्वेन निबध्यमानमपि स्वतस्तस्य तदुप योगित्वा- संभवाद्विषयात्मतां अपेक्षते तत्र परिणामतेति पर्यवस्यति " "सोऽपूर्वो रसनाविपर्ययविधिः" इत्यप्रस्तुतप्रशंसोदाहरणे, अप्रकृतवारणरसनाविपर्ययादिनां प्रकृतदुष्प्रभुसेवात्यागगमकवारणसेवात्यागं प्रत्युपयोगित्वमस्तीति नातिव्याप्तिरित्यर्थः॥

अत्रेदंचिन्त्यम्- प्रकृतागमकेतिरीत्या परिष्कारे कृते अप्रस्तुतप्रशंसात्वेन

## -तत्त्वालोकः-

स्वाभिमते- "सोऽपूर्वो रसनाविपर्यय" इतिपद्ये अतिव्याप्तिपरिहारेऽपि तदुदाहृते- "सुहृदालापेनैव" इति दृष्टान्तसंकीर्णपरिणामेऽव्याप्तिरपरिहार्या। तत्र आन्तरः क्लेशः सुहृदालापेन प्रणश्यति नवेति सन्देहे- आन्तरक्लेशनाश-सुहृदालापयोः कार्यकारणभावग्राहकान्वयसहचारग्राहकत्वात् दृष्टान्तस्योपादानमिति सम्प्रतिपन्ने विरहजतापनाश-कान्तामुखचन्द्रदर्शनवाक्यार्थानुगुण्येन आन्तरक्लेशनाशः सुहृदालापमात्राधीन इति निश्चायकत्वेन दार्ष्टान्तिकसुहृदालापप्रयोज्यान्तरक्लेशप्रणाशरूपप्रकृतकार्यगमकविरहजतापोपशमनरूपकार्योपयोगित्वमेव मुखत्वेन परिणतस्य चन्द्रस्येति प्रकृतागमकत्वं नास्तीत्यव्याप्तेरवारणात्। अतश्च "सोऽपूर्वोरसनाविपर्ययविधिरि"त्यत्र "अन्यासु तावदुपमर्दसहासु भृङ्ग" इत्यत्रेव वनमध्ये कर्णचापलं विदधानं दन्तिनमनुसरन्तं भ्रमरं प्रत्युपालम्भोऽयमिति वाच्यार्थस्यापि प्रस्तुतत्वम्। तेन च इतः प्रागपि एनं दुष्प्रभुमनुसृत्य प्रयोजनं यत्किञ्चिदलभ्यापि अभिनिवेशेनानुसरन्तं दरिद्रं प्रत्युपालम्भो द्योत्यत इति प्रस्तुताङ्कुरतामुपगम्य वारण-रसना-विपर्ययादीनामप्रकृतत्वं नास्ति किन्तुप्रकृतानामेव तेषां प्रकृतदुष्प्रभुरसनाविपर्ययाद्यात्मतया तत्सेवात्यागलक्षणकार्योपयोगित्वेऽप्यतिव्याप्तेः परिहर्तुं शक्यत्वात्।

प्रस्तुताङ्कुरालंकारस्यातिरिक्तत्वमनभ्युपगच्छताम् अनुरोधे तु-

कस्त्वं भोः? कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि, साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटः तमध्वगजनः सर्वात्मना सेवते
तच्छायापि परोपकारकरिणी मार्गस्थितस्यापि मे॥

इत्यत्रेव गज-भ्रमरवृत्तान्तस्य अविवक्षितत्वमिति ध्वनिकाराद्युक्तरीत्या अत्राप्रस्तुतप्रशंसेत्युच्यते तदा प्रकृतागमकेति परित्यज्य विवक्षितकार्योपयोगित्वं विवक्ष्य उक्तातिव्याप्तिर्वारणीया॥ तथाचअयमत्र निष्कर्षः-

यत्रारोप्यमाणं विवक्षितकार्यवाचि पदप्रथमप्रतीत तन्मुख्यार्थनिर्वर्तनोपयोगित्वेन निबध्यमानमपि स्वतस्तस्य तदुपयोगित्वासम्भवात्

**-चित्रमीमांसा-**

**एवंच-**

**आरोप्यमाणमारोपविषयात्मतया स्थितम् ।**

**प्रकृतस्योपयोगिस्यात्परिणाम उदाहृतः ।।**

**इति विद्यानाथलक्षणं प्रकृतस्येति पदस्य प्रकृतागमकस्येति व्यारव्यानेन परिष्करणीयम् ।।**

-तत्त्वालोकः-

विषयात्मतामपेक्षते तत्र परिणामता इत्येवंकृते नातिव्याप्तिः उक्ताप्रस्तुततप्रशंसायां भ्रमरकर्तृक वारणसेवात्यागस्य प्रकृतत्वेऽपि विवक्षिततत्वं नास्ति इति नाति व्याप्तिरित्यवधेयम् ।। विवक्षिततत्वं च मुख्यतात्पर्यविषयत्वम् ।।

इत्थम्- "आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः " इति **रुय्यक** सूत्रे- आरोप्यमाणस्य प्रकृतात्मनोपयोगित्वे परिणामः इति **मङ्खकप्रणीतवृत्तौ**च दूषणाभासमभिधाय परिष्कृत्य **विद्यानाथोक्त**लक्षणस्य स्वकृतपरिणामलक्षणानुगुण त्वेऽपि उक्ताप्रस्तुतप्रशंसायामतिव्याप्तिरपरिहार्येति अभिमानेनतल्लक्षणमनूद्य शेषपूरणेन समीकरोति-**एवंचेति** ।।

**आरोप्यमाणमिति** । आरोपविषयात्मतया मुखादितादात्म्येन स्थितम्- आरोप्यमाणं चन्द्रादि यदि प्रकृतस्य उपयोगि तदा परिणामः इत्यर्थः। तथा "मुखचन्द्रेण तापः शाम्यति" इत्यत्र प्रकृततापोपशमनान्तमारोपस्य विवक्षितत्वात्। वस्तुतो मुखस्यैव तापशान्तिनिमित्तत्वेन तादात्म्याभावे चन्द्रस्य प्रकृतोपयोगाभावात् इति भावः । अतः प्रकृतमनपह्नुतस्वरूपमेव आरोप्यमाणात्मना परिणमतीति परिणामालंकार इत्यर्थः। एवंच यत्रारोपस्य ताद्रूप्यप्रतीतिमात्रपर्यवसायितया प्रकृतमनपह्नुतस्वरूपं अप्रकृतरूपापन्नं भवति, तस्मात् रूपकात् परिणामस्य वैलक्षण्यं दर्शितम् इति **रत्नापणे कुमारस्वामिना** विवृतम् । एतदनुरोधेन विषयी यत्र आरोपविषयात्मतया प्रकृतोपयोगी न स्वातन्त्र्येण तत्र परिणामः इति फलति ।

## -चित्रमीमांसा-

## अयं च परिणामो द्विविधः सामानाधिकरण्यवैयधिकरण्याभ्याम्।

## -तत्त्वालोकः-

शश्वत्प्रसाधनविधानकृताभिलाषाः
नम्रैर्भजन्ति मकुटैरवनीपवर्गाः ।
श्रीवीररुद्रनृपतेः ककुभां विजेतुः
आज्ञामयीं स्रजममन्दविलासलक्ष्मीम् ॥

इति तदीयसमानाधिकरणपरिणामस्थलेऽप्रकृताया स्रजः प्रकृताज्ञातादात्म्यमापन्नायाः मुकुटधारणात्मक प्रकृतोपयुक्तत्वमिति समन्वयेऽपि पूर्वोदाहृते "सोऽपूर्वोरसनाविपर्ययविधिः" इति पद्येऽप्रकृतवारण-रसनाविपर्ययादीनां प्रकृतदुष्प्रभुरसनाविपर्ययाद्यात्मना तत्सेवात्यागलक्षणकार्योपयोगित्वादतिव्याप्तिः तत्परिहारोपायमाह **प्रकृतस्येत्यादिना** । प्रकृतस्योपयोगि स्यात् इत्यस्य प्रकृतागमक [illegible]र्योपयोगि स्यादित्यर्थः । तथाच नातिव्याप्तिः। अप्रकृतवारणरसनाविपर्ययादीनां [illegible]प्रभुसेवात्यागगमकवारणसेवात्यागं प्रत्युपयोगित्वात् ॥

**[illegible]चिन्त्यम्-** "सोऽपूर्वोरसनाविपर्यय" इति पद्यमुपादाय कर्णचापलमात्रं [illegible]मरस्य वारणसेवात्यागे हेतुः अन्येषां वारकत्व-रसनाविपर्यय-मदविस्मृत स्वपरदिक्त्वान्तश्शून्यकरत्वानां भूयसां प्रकृतदुष्प्रभुसेवात्यागमात्रोपयोगित्वात् तेषां प्रकृतदुष्प्रभुरसनाद्यात्मतयैवोपयोग इति कथमतिव्याप्तिः वारयितुं शक्या? भूयोऽनुग्रहन्यायात् । अतश्च **प्रस्तुताङ्कुरन्यायेन** उभयोरपि कार्ययोः प्रकृतत्वमेवेति अप्रकृतो विवक्षितो वा विषयी यत्र विषयात्मतया प्रकृतकार्योपयोगी तत्र परिणाम इति विषयिणि अप्रकृतत्वविशेषणात् विवक्षितत्वविशेषणाद्वा अप्रस्तुत प्रशंसायां नातिव्याप्तिः। तत्र वारणरसनाविपर्ययादीनां विषयिणां स्वस्वरूपेण प्रकृतत्वात् विवक्षितत्वाभावाद्वेति समाधेयमिति तु वयम् ।

अयंच परिणामः आरोप्यमाणारोपाधिकरणयोः समानविभक्त्या निर्देशे सति सामानाधिकरण्येन, तयोर्विभिन्नविभक्त्या निर्देशे सति वैयधिकरण्येनेति द्वेधा भवतीति तं विभजते-**अयंचेति** ॥

## - चित्रमीमांसा-

**सामानाधिकरण्येन यथा-**

**तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीयः**
**तस्मै सौमित्रिमैत्रीमयमुपकृतवानातरं नाविकाय।**
**व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं**
**कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे ॥**

**(अनर्घराघवे)**

### -तत्त्वालोकः-

सामानाधिकरण्यं च विषयविषयिणोरेकविभक्त्यन्ततया निर्देशो यथा - आतरं सौमित्रिमैत्रीमयमिति वक्ष्यमाणोदाहरणे। वैयधिकरण्यंच विषयविषयिणो र्भिन्नविभक्त्यन्ततया निर्देशः। यथा - "पुन्नागजालकैः हारान्" इति वक्ष्यमाणोदाहृतौ, तयोः सामानाधिकरण्येन परिणाममुदाहरति- **सामानाधिकरण्येनेत्यादिना** ॥

आत्मना तृतीयः त्रयाणां पूरण इत्यर्थे त्रेस्संप्रसारणंच (पा.सू.५-२-५५) इति तीयप्रत्ययः त्रेःसम्प्रसारणं च भवति तृतीयाविधायकसूत्रे "प्रकृत्यादिभ्यः उपसंख्यानम्" इति वार्तिकात् तृतीया। असौ रामः भूतेशमौलिस्रजम् भूताः देवयोनिविशेषाः तेषां ईशः पतित्यर्थः। प्रतिसायं लोकपीडार्थं प्रवर्तमानानां तेषां नर्तनप्रदर्शनेन पारवश्यं सम्पाद्य शिवेनैव नियमनं क्रियत इति **श्रीमन्महाभारते-** उमामहेश्वरसंवादे पार्वतीकृतश्मशानवासनिमित्तप्रश्ने

मदन्येन न शक्यं तन्निहन्तुं भूतजं भयम्।
तत्रस्थोऽहं प्रजास्सर्वाः पालयामि दिने दिने ॥

मन्नियोगाद्भूतसंघाः नच घ्नन्ति हि कञ्चन।
तांस्तु लोकहितार्थाय श्मशाने रमयाम्यहम् ॥

भूतत्वादीशः भूतेश इत्युच्यते। तस्य मौलेः संयतकेशस्य स्रजं मालारूपाम्,

**– चित्रमीमांसा–**

**अत्र आरोप्यमाण आतरः विषयभूतसौमित्रिमैत्रीरूपतापत्त्या गुहोपकारलक्षणकार्योपयोगीति परिणामः । उभयोः विभक्त्यैक्यात् सामानाधिकरण्यम् ।**

-तत्त्वालोकः-

अमरधुनीं दिव्यापगाम्, तीर्त्वा उत्तीर्य, तस्मै नाविकाय श्रीरामचन्द्रसखित्वेन प्रसिद्धाय जात्या कर्मणा च निषादाय गुहाय,सौमित्रिमैत्रीमयं लक्ष्मणसख्यात्मकम्, आतरं तरपण्यम् उपकृतवान् सहकृतवान्। उपहृतवानिति पाठे तु उपायनत्वेनानुगृहीतवान् इत्यर्थः। उपकृतवान् इति ज्यायः भगवद्भक्तमैत्रीलाभस्यादृष्टविशेषलभ्यत्वात्। तत्रापि भगवतैव तन्मैत्रीसम्पादनस्य महोपकाररूपत्वात् । अथो-अथ व्यामेन तिर्यक्प्रसारितबाहुयुगलान्तरालेन ग्राह्यौ तावत्परिणाहौ स्तनौ यासां ताभिः व्यामग्राह्यस्तनीभिः" स्वांगाच्चोपसर्जनादसंयोगोपधात्" (पा.सू. ४-१-५४) इति ङीष् । शबराः शूद्रात् भिल्ल्यां जातास्तेषां युवतिभिः तरुणीभिः कौतुकात् कुतूहलात् उदश्चन्ति विकस्वराणि अक्षीणि यस्मिन कर्मणि तद्यथा भवति तथा, कृच्छात् स्तनभारालसतया क्लेशेनापि, क्षणं कश्चित्कालम् अन्वीयमानः अनुगम्यमानः, चित्रकूटं (तान्नामकं) मन्दाकिनीतटावस्थितम्, इदानीं कामतानाथगिरिरिति प्रसिद्धं पर्वतं प्रति, प्रतस्थे प्रययौ, "समवप्रविभ्यस्स्थः" (पा.सू.१-३-२२) इत्यात्मनेपदम् ॥

अत्र परिणामप्रकारमुपपादयति - **अत्रेति** ।

अत्र आतरमुपमानम्, सौमित्रिमैत्री उपमेयभूता गुहस्य रघुनाथप्रसादैकार्थित्वेन वेतनार्थित्वाभावात् विषयभूतसौमित्रिमैत्रीरूपतामुपगत एव गुहोपकारलक्षण कार्योपयोगीति परिणामइत्यर्थः ।

अत्र **रूय्यक-विद्यानाथाद्यनुरोधेन**-उपमेयस्य उपमानरूपत्वेन प्रकृतकार्योपयोगित्वे परिणामात्- आतरापेक्षया भगवदनुग्रहभूतसौमित्रिमैत्र्याः अधिकगुणत्वादुपमानता वाच्या अथापि लोकप्रसिद्धेः आतरस्यैवोपमानत्वम्। नदीतरणानन्तरम् आतरं दत्वा अन्यत्र गम्यते जनैरित्यनुभवः। अत्रच गंगात[illegible]नन्तरं

## - चित्रमीमांसा -

**वैयधिकरण्येन यथा-**

**पुन्नागजलकैर्हारान् काञ्चीः केयूरदामभिः ।**
**कर्णिकाः कर्णिकारैश्च विहर्तुं विदधुर्वने ।।**

### तत्त्वालोक

रामेणातरो दत्तः सच न धनादिरूपः किन्तु सौमित्रिमैत्रीरूपः तथाच रामः सौमित्रीमैत्रीरूपमातरं दत्वा चित्रकूटं प्रतस्थ इति सौमित्रिमैत्री उपमानभूता आतरात्मतामुपगता प्रकृतनौतरणोपयोनी जातेति परिणामता । युक्तंचैवंरीत्या परिणामत्वोपपादनम्, तीर्त्वा भूतेशमैलिस्रजम् आतरं नाविकयेति पदानाम् उपादानात् नदीतरणप्रकरणानुगुण्याच्च ।।

**सर्वस्वकृता**-व्यधिकरणपरिणामस्य-

अथ पक्त्रिमतामुपेयिवद्भिः
सरसैर्वक्त्रपथाश्रितैर्वचोभिः ।
क्षितिभर्तुरुपायनं चकार
प्रथमं तत्परतस्तुरङ्गमाद्यैः ।।

इत्युदाहृतम् । उपपादितं च अत्र राजसंघटने ह्युपायनमुचितं तच्च वचोरूपमिति । तदेतत्-

आरोप्यमाणमारोपविषयात्मतया स्थितम् ।
प्रकृतस्योपयोगि स्यादिति............।।

लक्षणाननुगुणम् । यतस्तत्र राजसंघटने ह्युपायनप्रदानमुचितम् । तद्वचोरूपं स्यात् तुरङ्गमादिरूपं वा स्यादुभयरूपं वा, परन्तु सर्वमर्प्यमाणमुपायनरूपमेव स्यादिति उपमानस्योपायनस्य न वचोरूपोपमेयरूपतेति स्वमते रूपकमेवेति मनसि निधाय वैयधिकरण्येनान्यदुदाहरति- **वैयधिकरण्येनेत्यादिना** । वने कानने, विहर्तुं क्रीडितुं वनविहारार्थमिति यावत् । तत्र अन्तःपुरविहारयोग्यानां हार-केयूर-कर्णिकानां वनविहारानर्हत्वात् तत्तद्विहारोचिताभरणधारणस्यैव आनन्दजनकत्वात् प्रकृताः

## - चित्रमीमांसा -

**अत्रारोप्यमाणा हारादयः विषयभूतपुन्नागजालकादिरूपतयैव वनक्रीडोपयोगिन इति परिणामः। विभक्तिभेदात् वैयाधिकरण्यम्॥**

**इदंच वैयधिकरण्यं रूपकेऽपि संभवति। यथा-**

**तारानायकशेखराय, जगदाधाराय, धाराधर-**
**च्छायाधारककन्धराय, गिरिजासङ्गैकश्रृंगारिणे।**
**नद्या शेखरिणे, दृशातिलकिने, नारायणेनास्त्रिणे**
**नागैःकंकणिने, नगेन गृहिणे, नाथाय सेयं नतिः॥**

## -तत्त्वालोकः-

स्त्रियः पुन्नागजालकैः सुरवल्लभकोरकैः हारान् मुक्तावलीः, एकावलीर्वा केयूरदामभिः बाहुमूलालंकारभूषादामभिः काञ्चीः कटिबन्धनानि "स्त्रीकटयां सप्तकी काञ्ची" इति **वैजयन्ती**। कर्णिकारैश्च वृक्षोत्पलैः," वृक्षोत्पले कर्णिकारः" इति **वैजयन्ती**। कर्णिकाः कर्णाभरणानि च विदधुः परिकल्प्य धारयामासुः। **अत्रेति** उपमानभूताहारादयः उपमेयभूतसुरवल्लभादिरूपतया परिणता एव वनविहारोपयोगिन इति परिणामः।

**वस्तुतस्तु-** पुंनागकोरकादीनां न स्वस्वरूपेण वनविहारयोग्त्वमपितु हाराकारतया ग्रथितानामेव तदुपयोगित्वमिति पुन्नागादीनामुपमानभूतहारात्मताया परिणामश्चारुतरः इति उपमानाभिन्नतयावस्थान एवोत्कर्षातिशय इति प्रचीनानाभिमतः उपमानाभिन्नतयोपमेयस्य प्रकृतोपयोगे परिणामः इत्युक्तः साधुः। रूपके तु उपमेयाभिन्नतेति विशेष इति मतभेदेनोपपाद्यम्, नपुनः दूषणाभिधानम्॥

प्राचीनैः **सर्वस्व-प्रतापरुद्रीयैकावलीकारादिभिः** परिणामे वैयधिकरण्येनोदाहरणं प्रदर्शितं रूपके बहुभिः न प्रदर्शितमित्यभिप्रायेण प्रासंगिकतया व्यधिकरणरूपक-मवतारयति **इदं चेति**। अत्र अपिशब्दः व्यधिकरण रूपकासंभवव्यावर्तकः नतु प्राचीनैः कैरप्यनुक्त इत्यभिप्रायकः। **साहित्यदर्पणकृता** रूपकनिरूपणावसरे क्वचिद्वैयधिकरण्येऽपि। यथा-

## -तत्त्वालोकः-

"विदधे मधुपश्रेणीं इह भ्रूलतया विधिः" इत्युदाहरणं प्रदर्शितम्। व्यधिकरणरूपकमुदाहरति-**तारानायकेति**।

ताराः अश्विन्याद्याः तासां नायकः अधिपतिः "चन्द्रमा नक्षत्राणामधिपतिः" इति श्रुतेः, स शेखरे यस्येति व्याधिकरणो बहुव्रीहिः। दक्षयज्ञे अनपराद्धापि चन्द्रः क्रुद्धेन ईश्वरेण पादाङ्गुष्ठेन ताडितः पश्चात् चन्द्रः आत्मानमनपराधिनं ख्यापयामास। तथा आवेदनेन हृष्टः परमेश्वरः अदण्ड्यदण्डनदोषशान्तये चन्द्रं शिरसा धृतवानिति। **महाभारते आनुशासनिके पर्वणि** दर्शितत्वात्। तस्मै जगतामाधाराय आश्रयाय, धाराधरस्य मेघस्य छाया इव छाया वर्णो यस्य तस्यं विषस्य धारिका कन्धरा ग्रीवा यस्य तस्मै, यद्वा इन्द्रकृतवज्रप्रहारजनितनीलकण्ठाय,तदुक्तं **हरिवंशे-**

दत्तप्रहारः कुलिशेन पूर्वं तवेशानामरराज्ञातिवीर्य।
कण्ठे नैल्यं तेन ते यत्प्रवृत्तं तस्मात्ख्यातस्त्वं नीलकण्ठोतिकायः॥ इति।

गिरिजायाः पार्वत्याः सङ्ग एव एकोऽद्वितीयःश्रृङ्गारः यस्यास्ति तस्मै,अनेन दिव्यश्रृङ्गाराश्रयत्वं सूचितं भवति। नद्या दिव्यनद्या शेखरिणे शिरोभूषणवते उक्तं च **श्रीमद्वाल्मीकिरामायणे बालकाण्डे-** " शिरसा धारयिष्यामि शैलराजसुतामहम्।" इति। दृशा तृतीयनयनेनाग्निरूपेण तिलकिने फालविशेषकयुक्ताय नारायणेन नरसचिवेन अस्त्रिणे त्रिपुरसंहारसमये विष्णुः बाणतामगमत् इति पुराणेषु स्मर्यते।

**शङ्कराचार्यैश्च-**

क्षोणी यस्य रथो,रथाङ्गयुगलं चन्द्रार्कबिम्बद्वयम्
कोदण्डः कनकाचलः, हरिरभूद्बाणो विधिस्सारथिः।
तूणीरो जलधिः हयाः श्रुतिचयो मौर्वी भुजङ्गाधिपः
तस्मिन् मे हृदयं सुखेन रमतां साम्बे परब्रह्मणि॥

ध्यानसंहितम्। नागैः वासुकिप्रभृतिभिः कङ्कणिने करभूषणवते दारुकावनस्थमुनिकृता ... गारोत्पन्नाः सर्पाः गरुडभीत्या ईश्वरं शरणं गताः। तांश्च जाज्वल्यमानान् ... णत्वेन ईश्वरो दधारेति **स्कान्देऽभिहितम्**। नगेन कैलासाचलेन गृहिणे वसतिमते, ... -नन्दिभृङ्गिमहाकालप्रभृतीनां प्रमथगणानाम् ईश्वराय, सत्यभामा-

## -चित्रमीमांसा-

**अत्रनदीदृशोर्विषययोर्विभक्तिः आरोप्यमाणयोश्शेखरतिलकयोः नास्ति।**

## -तत्त्वालोकः-

भामेतिवत्प्रमथनाथो नाथ इति गृह्यते **नामेकदेशे नामग्रहणमिति न्यायात्।** प्रमथनाथायेति यावत्। तस्मै सुप्रसिद्धाय सेयं नतिः प्रह्वीभावः अस्तु इति शेषः। अत्र नद्या शेखरिणे इत्यादौ धान्येन धनवान् इतिवदभेदे तृतीया, तेन नद्याद्यभिन्नशिरोभूषणादिमते इत्यर्थः।

अत्र रूपके वैयधिकरण्यमुपपादयति-**अत्रनदीति**। अत्र नदीशेखररूपताम्, दृक्तिलकरूपतामापाद्यत इति प्रकृतस्य अप्रकृतरूपतापत्तौ रूपकत्वमिति। अथापि विषयिवाचकपदाभ्यां विभक्तेरश्रवणात् सामानाधिकरण्यं नास्तीत्येतावता वैयाधिकरण्यमिति बोध्यम्।

यत्तूक्तं **रसगंगाधरकृता-यच्चाप्पय्यदीक्षितैः** वैयधिकरण्येन परिणामे उदाहृतम् इत्यादिना चिन्तितम्। तदशुद्धपाठोपलब्धिनिबन्धनमिति भाति। यतश्च-संप्रति मुद्रितकोशेषु **चित्रमीमांसायां** इदं च वैयधिकरण्यंरूपकेऽपि दृश्यते इत्यवतार्य- "तारानायकेति" पद्यम् "द्विर्भाव" इति पद्यं चोल्लिखितं वर्तते। तथा नद्यादीनां शेखरादिरूपतयैवोपयोग इति तिलकादीनामुपमानत्वमेवोपवर्णितम् अतश्च नात्र परिणामरूपत्वं ग्रन्थकृत्सम्मतम्।

किञ्च-इतःपूर्वमेव-अयंच परिणामो द्विविधः "इति विभज्य" सामानाधिकरण्येन "तीर्त्वा भूतेशमौलिस्रजम्" इति पद्यम्, वैयधिकरण्येन-"पुन्नागजालकैः " इति पद्यंचोदाहृत्य पुनरपि किमपि कारणान्तरमनुपादाय परिणामस्यैवोदाहरणान्तरं दत्तमिति कल्पनमनौचित्यावहम्। ग्रन्थकर्तुश्चानवधानतामारोपयेत्। एतेनात्रैव **नागेशभट्टैः मर्मप्रकाशे** परिणामतासाधनं प्रयासमात्रमेव।

**-चित्रमीमांसा-**

**यथा वा-**

**द्विर्भावः पुष्पकेतोः,विबुधविटपिनः पौनरूक्त्यं, विकल्पः**
**चिन्तारत्नस्य, वीप्सा तपनतनुभुवो, वासवस्य द्विरु क्तिः।**
**द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य, कुर्वन्**
**आनन्दं कोविदानां, जगति विजयते श्रीनृसिंह्मक्षितीन्द्रः ॥**

-तत्त्वालोकः-

यच्च **रसगंगाधरकृता**-गिरिजासङ्गैकश्रृङ्गारिणि भवे कविकर्तृका नतिः प्रक्रान्तेत्युक्तं तदपि न्यूनम् । यतः कविः स्वदोष-परदोषौ विज्ञाय स्वतोऽवगतेऽदण्ड्यदण्डनदोषपरिजिहीर्षया तस्य शिरसा धारणमुत्तमलक्षणमिति ख्यापयितृताम् वज्रपातेऽप्यभीतताम्, उत्तमश्रृङ्गारिताम्, गर्वितजनगर्वनिराकरिष्णुताम्, तपस्विजनसामान्योपस्पर्शनयोग्य गङ्गाधारणम्, आपादितनारायणास्त्रताम्, भयभीतानां हिंसाविहाराणामपि अभयप्रदताम्, सर्वविधविलासाश्रयकैलासवासितां च भवेऽनुसन्दधानः **तत्क्रतुन्यायेन** तादृशास्वरूपतामामुं नतिः प्रक्रान्तेत्युक्ते परिपूर्णता स्यात् ।

तारानायकशेखरायेति,पद्ये नद्या शेखरिणे, दृशा तिलकिने, नारायणेनास्त्रिणे, नागैः कंकणिने, इत्येषु ''सुबन्तात्तद्धितोपत्तिः'' इति सिद्धान्तानुरोधेन मत्वर्थीयप्रत्ययप्रकृत्यनन्तरमान्तरालिकविभक्तीनां श्रवणमेव नास्ति । अतश्च श्रूयमाणविभिन्नविभक्तिकत्वेनापि व्यधिकरणरूपकं संभवतीति मनसि निधाय **विद्याधरेण** द्वितीयोन्मेषे गौणसारोपलक्षणासंसृष्टेर्यदुदाहरणं दत्तं तदेव व्यधिकरणरूपकस्यापि भवतीत्युदाहरति-**यथावेति** ।

श्रीनृसिंह्मनामा उत्कलदेशाधिपः (१२३८. १२९२ क्रि श) उत्कलभूमिपाल इति विद्याधरेण सम्बोधनात् (ए.द्वि.उ.६९ पु.) क्षितीन्द्रः अयमेव कलिङ्गाधिपतिरपि जगति विजयते सर्वोत्कर्षेण वर्तते। किंरूप इति विशिनष्टि-**द्विर्भाव इत्यादिना**। पुष्पं केतुर्यस्य सः मन्मथ इति भावः । विबुधानां देवानां विटपी कल्पवृक्षः तस्य

## -चित्रमीमांसा-

## अत्र विषयस्य राज्ञो, विषयिणां पुष्पकेतुप्रभृतीनां च विभक्तिभेदः।

## .-तत्त्वालोकः-

पौनरुक्त्यम्, रूपान्तरमिति यावत्। चिन्तारत्नस्य चिन्तामणिरिति ख्याताया देवतायाः मन्त्रस्य वा विकल्पःअभीष्टार्थप्रदत्वेनान्यतरपरिग्रहयोग्यतासत्वात्। अत एव मीमांसकैरपि-"व्रीहिभिर्यजेत" "यवैर्यजेत" इत्यादौ व्रीहियवयोः एकैकस्य पुरोडाशनिष्पादनक्षमत्वाद्विकल्पोऽभ्युपेयते। तद्वदयमपि चिन्तामणेः रूपान्तरम्। द्वितीयश्चिन्तामणिः इत्यर्थः। तपनः सूर्यः तस्य तनुभुवः कर्णस्य वीप्सा आवृत्तिः रूपान्तरमिति यावत्। वासवस्य इन्द्रस्य द्विरुक्तिः तस्यैव रूपान्तरमिति यावत्। दैत्याधिपाःहिरण्यकशिपुप्रभृतयः तेषां यन्मथनं निबर्हणंतदेव कला तस्यां केलिकारस्य नर्मकारस्य, यद्वा दैत्याधिपमथनविधौ "न मृगं न मानुषम्" इत्युक्तरीत्या

अभूतपूर्वाकारपरिग्रह एव कलाकुशलशिल्पं तया केलिकारस्य क्रीडाकरस्य देवस्य विष्णोः द्वैतं द्वयोर्भावः द्विता, द्वितैव द्वैतं भेदः द्वितीयो विष्णुरित्यर्थः। अयं कोविदानां पण्डितानाम् आनन्दं कुर्वन् संतोषमुत्पादयन्निति यावत्। अस्य श्रीनृसिंह्मक्षितीन्द्रो विजयते इत्यनेनान्वयः॥

अत्र रूपकत्वमुपपादयति-**अत्रेत्यादिना**। उत्तरत्र परिणाम-ध्वन्युदाहरणप्रसङ्गेन रूपके प्रकृतमप्रकृतरूपापन्नं भवति, परिणामे तु अप्रकृतं प्रकृतरूपापन्नं भवतीति वक्ष्यमाणरीत्या प्रकृतो राजा मन्मथ-कल्पतरु-चिन्तामणि-कर्णेन्द्र-विष्णुरूपाप्रकृतरूपापन्न इति विषय्यात्मना रूपितत्वाद्रूपकम्। राजवाचकस्य पुष्पकेत्वादिपदानां च विभिन्नविभक्तिकत्वात् वैयधिकरण्यम्।

**एकावलीकारादि**मते तु-अहो नयनानामस्मदीयानां साफल्यंयदयमपरो मन्मथः अस्माभिरालोक्यते इत्यादिरीत्या विषय्यात्मना उपयोगित्वे परिणामतैव॥

**वस्तुतस्तु**-प्रकृतं राजानमुपश्लोकयितुं प्रकृतेन कविना मन्मथाद्यभेदस्य राज्ञि वर्णनेन प्रकृतस्योत्कर्षः स्फुटं प्रतिभाति प्रकृतार्थप्राधान्यं चेति प्राचोनमतरीत्या-रूपकत्वमेव युक्तम्। न तूपमानप्रधान्यम्। तस्य प्रकरणानुगुणत्वाभावात्।

## -तत्त्वालोकः-

**ग्रन्थकृतापि** रूपके उपमानप्राधान्योपादनं समास स्थलीयमयूव्यं-सकादिसमासाश्रयणनिबन्धनम्। रूपके विषयिप्रधान्यवादिभिरपि समासस्थल एव तदभ्युपगमात्। अत एव **कुवलयानन्दे-**"सत्वं तत्वं कथय" इति मध्यमपुरुषः प्रयुक्तः। नव्येनापि **रसगंगाधरकृता-**

सुविमलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे।
वदनपरिपूर्णचन्द्रे सुन्दरि राकासि नात्र सन्देहः ॥

इत्युदाहरणानन्तरम् "अत्र वदन्ति इत्युपक्रम्य-अभेदस्तावत् विशेषणस्य संसर्गो भवति। सच यथा "मुखंचन्द्रः" इत्यादौ वाक्यगते रूपके स्वप्रतियोगिनः चन्द्रस्य स्वानुयोगिनि मुखे विशेषणतयाः निर्वाहः इत्युपपादयता वाक्ये विषयप्राधान्यमुक्तम्। अथापि अत्र "द्विर्भावः पुष्पकेतोः" इति ग्रन्थकृदुक्तिं. दूषयता वैपरीत्येनैवाभिहितम्। तत्रत्योयं ग्रन्थः-"द्विर्भावः पुष्पकेतोः" इति पद्येऽपि कोविदानन्दजननजगदुत्कर्षौ कथ्येते राज्ञोनृसिह्मस्य। तत्र कोविदानन्दजनकत्वमपि राज्ञः आरोप्यमाण-द्वितीयमन्मथादि ताद्रूप्येण यथा संभवति न तथा केवलस्वरूपेणेति। तेणामानन्दोऽप्यारोप्यमाणैः कल्पवृक्षादिभिरेवेति न विषयात्मना विषयिणः उपयोगः अपि तु स्वात्मनैवेति कुत्रास्ति परिणामः इति।

**वस्तुतस्तु-**अप्पय्यदीक्षिदैः "द्विर्भावः पुष्पकेतोः" इति पद्यं वेयधिकरण्येन रूपकस्यैवोदाहरणन्तरतयोपन्यस्तं न पुनः परिणामतयेति कुतोऽत्र परिणमचिन्ताया अवसरः।

**किञ्च-विद्याधरेण एकावल्याम्-**सारोपलक्षणायाः रूपकबीजत्वमुपन्यस्य ... जातीय गौणसारोपाणां संसृष्टेरिदं पद्यमुदाहृतम्। तेन चात्र रूपकालङ्कारता इष्टा **विद्याधरस्यापि** व्यासेऽपि विषयिप्राधान्यं सूचितं भवति नच तद्युक्तम्। न ह्यत्र मन्मथादिविजयस्य कवेरभिप्रायगोचरत्वम्। अपि तु राज्ञो नृसिह्मस्य अतश्च अग्निर्माणवकः, सिंहोमाणवकः इत्यत्रेव प्रकृतप्राधान्योपवर्णनं युक्तम्। अत एव **भट्टकुमारिलैः-**

-चित्रमीमांसा-

**अथ परिणामस्य व्यङ्ग्यतायां किमुदाहरणम्?**

**नरसिंह्य धरानाथ! के वयं तव वर्णने।**
**अपि राजानमाक्रम्य यशो यस्य विजृम्भते॥**

**इति विद्याधरेणोदाहृतम्।**

**अत्र राजपदेन चन्द्रे विषये निर्दिष्टे तत्रारोप्यमाणस्य नृपस्य आक्रमणरूपकार्योगिनः प्रतीतेः परिणामो व्यज्यत इति।**

-तत्त्वालोकः-

अग्नित्वलक्षितादर्थाद्यत्पैङ्गल्यादि गम्यते।
तेन माणवके बुद्धिः सादृश्यादुपजायते॥ इत्युक्तम्।

तेन च माणवकेऽग्निबुद्धिर्जातापि न माणवकमप्रधानीकुरुते। अत एव च **नागेशभट्टैः बृहच्छब्देन्दुशेखरे** उपमानोपमेययोः समभिव्याहारे उपमानस्य विशेषणत्वम् अत एव "उपमितं व्याघ्रादिभि"रित्यस्य "विशेषणं विशेष्येणेति" विशेष्यस्य परनिपाते प्राप्ते पूर्वनिपातार्थः इति प्राचां वृत्तिकारादीनामभिप्रायवर्णनं संगच्छते।

किञ्च-"भाष्याब्धिः" इत्यादौ मयूरव्यंसकादिना समासे कृतेऽपि पूर्वपदार्थप्राधान्यं, "राजान्तरम्" इत्यादौ पूर्वपदार्थप्रधानतायाश्च दृष्टत्वात् इति चोपपादितमिति उपमेयप्राधान्यमेव रूपके गरीय इति **बृहच्छब्देन्दुशेखरे** तैरेव उपपादितम्।

इत्थं प्रासङ्गिकतया व्यधिकरणरूपकमुदाहृत्य प्रकृते परिणामस्य व्यङ्ग्यतायां स्वाभिमतोदाहरणप्रदर्शनाय-**विद्याधर-विद्यानाथाभ्याम्** उदाहृतयोः परिणामस्य व्यङ्ग्यत्वाभिधानं न युज्यत इत्युपपादयितुमनुयुंक्ते-**अथेति**।

ननुप्रश्नस्यैव नावकाशः प्राचीनेन **विद्याधरेण** व्यङ्ग्यपरिणामस्यो-

## -चित्रमीमांसा-

**तदयुक्तम्-अत्र ह्यारोप्यमाणस्य नृपस्य नृपात्मनैव आक्रमणोपयोगो न चन्द्रात्मना। विद्याधरेणापि विषयिणः स्वरूपेण कार्यानुपयोगे तदुपयोगाय विषयिणो विषयात्मना परिणत्यपेक्षायामेव परिणामोऽङ्गीकृतः**

**यदाह-तं परिणामं द्विविधं कथयन्त्यारोप्यमाणविषयतया।**
**परिणमति यत्र विषयी प्रस्युतकार्योपयोगाय।। इति।**

## तत्त्वालोकः-

दाहरणप्रदर्शनादिति तदुदाहरणमनुवक्ति **नरेति**।

धरानाथ भूपते हे नरसिंह! उत्कलाधिपते यस्य विश्वविरव्यातस्य तव यशः कीर्तिः राजानमप्याक्रम्य राजसमूहं द्युलोकचारिणं चन्द्रमप्याक्रम्य व्याप्य विजृम्भते अप्रतिहतं प्रसरति, तस्य भवतः वर्णने उपश्लोकने गुणाविष्करणे, के वयं अत्यन्तमसमर्थाः। द्यावाभूमी अभिव्याप्य विश्रान्तकीर्तेः भवतो गुणगणान् वर्णयितुमल्पज्ञा वयमसमर्था इति भावः। अत्र अपि शब्दःसमुच्चये, "अपि संभावना शङ्कागर्हणासु समुच्चयेप्रश्ने-युक्तपदार्थेषु कामचारक्रियासु च।। इति रूपमालायाम्। राजा तु क्षत्रिये चन्द्रे लताभेदे नृपे प्रभौ।इति **वैजयन्ती**।

अत्र तदुपपदितरीत्या तद्व्यङ्ग्यतामुपपादयति **अत्रेति**। अत्र चन्द्रः आरोपाधिकरणम् नृपः आरोप्यमाणः। आरोप्यमाणस्य नृपस्य आक्रमणरूपकार्योपयोगित्वं नृपात्मनैव नतु चन्द्रात्मनेति चन्द्ररूपप्रकृतार्थस्य शब्दशक्त्या प्रत्यायने अप्रकृतस्य नृपस्य व्यञ्जनया प्रतीतिरिति आरोप्यमाणस्य व्यङ्ग्यतामात्रात्परिणामस्यापि व्यङ्ग्यत्वमित्यभिप्रायः। तदेतद्दूषयति- **तदयुक्तमिति**।

विषयिणो विषयरूपेण परिणतौ सत्यामेव प्रकृतकार्योपयोगित्वे परिणामोऽभिमतः।

## तत्त्वालोकः-

प्रकृते तु (अप्रकृतस्य) व्यज्यमानस्य स्वरूपेणैवाक्रमणोपयोगित्वं नपुनर्विषय रूपत्वमापन्नस्य विषयिण इति तदीयलक्षणरीत्यापि परिणामो **विद्याधरस्य** अभिमतः। अत एव "तं परिणामं द्विविधम्" इति लक्षणेऽपि विषयिणः विषयरूपेण परिणतौ सत्यां परिणाम "इत्यर्थकं सूत्रमुपन्यस्तमिति भावः।

**वस्तुतस्तु-विद्याधरेण**-तृतीयोन्मेषे संलक्ष्यक्रमव्यङ्ग्यभेदं शब्दशक्तिमूलं पदप्रकाश्यं ध्वनिमुदाहरता-

नरसिंह धरापाल के वयं तव वर्णने।
अपि राजानमाक्रम्य यशो यस्य विजृम्भते।।

इत्यलंकारध्वनिमुदाहृत्योपपादितम्। अत्र राजपदेन इन्दोर्विषयस्य प्रस्तुतत्वे विषयिणो नृपस्याक्रमणादि प्रकृतोपयोगिनः प्राधान्येन प्रतीतेः परिणामो व्यज्यत इति। तथा **एकावलीतरलायाम्**-अत्रराजपदेनेति प्रतीकमुपादाय "विषयिणः आरोप्यमाणस्येत्यर्थः। आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः" इति लक्षणम्। आरोप्यमाणस्य नृपस्य तादात्म्येन प्रकृतस्येन्दोराक्रमणीयत्वापादनेनोपयोगात् परिणामालंकारः राजपदमहिम्ना व्यज्यत इति पदगतशक्तिमूलत्वमिति व्याख्यातं **मल्लिनाथेन**।

एवंविधविवरणं व्याख्या च विद्याधराभिमतपरिणामलक्षणोदाहरणतद्विवृत्योरनुगुणमिति प्रतिभाति। तथाहि वि**द्याधरणैव** परिणामप्रकरणे

तं परिणामं द्विविधं कथयन्त्यारोप्यमाणरूपतया।
परिणमति यत्र विषयः प्रस्तुतकार्योपयोगाय।।

इति लक्षितं विवृतंच तेनैव एष न रूपकम् आरोप्यमाणस्य प्रकृतोपरञ्जकत्वे रूपकस्य जागरूकत्वात् यत्रारोपविषयः प्रकृतकार्यसिद्धयर्थमारोप्यमाणात्मतया परिणमति तत्र यथार्थाभिधानः परिणामः।।

उदाहृतं च तेनैव-

अमरनगरीसौधोत्सङ्गाधिरोहमहोत्सव
व्यतिकरधुराधौरेयाणामरातिमहीभूजाम्।

## तत्त्वालोकः-

मरकतमयीनिःश्रेणिस्त्वत्कृपाणलताकवीन्
कति न कुरुते श्लाघाव्यग्रान् कलिङ्गपुरन्दर।। इति

अत्र समन्वयरीतिरपि तेनैव प्रदर्शिता। अत्रारोप्यमाणनिश्रेणिरूपतया परिणमन्ती कृपाणलता प्रकृतममरनारीसौधोत्सङ्गाधिरोहणं कार्यं प्रति उपयोगितां भजते इति।

विवृतंच सूत्रं **मल्लिनाथेन** यत्र प्रकृतकार्योपयोगितया विषयो विषय्यात्मना परिणमति स परिणामालंकार इति।

एवावता प्रपंचेन आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः इति वदतो **राजनकरुय्यकस्य**अलंकारसर्वस्वसूत्रकर्तुर्मतानुयायी विद्याधरः इत्यत्र न बहुवक्तव्यम्। इत्थं सत्यपि पूर्वापरपर्यालोचनं विना, स्वाभिमतपरिणामलक्षणश्रद्धाजाड्येन वा विद्याधराभिमत परिणामलक्षणे विवर्यासः ग्रन्थकृता परिकल्पितो भवेदित्यूहितुमवकाशः स्फुटतयैव प्रतीयते।

किञ्च **विद्याधराभिमत**लक्षणे "आरोप्यमाणरूपतयेति" पाठं परित्यज्य चित्रमीमांसानूदितस्य आरोप्यमाणविषयतयेति पाठस्य परिग्रहे आरोप्यमाणविषयतयेत्यस्य विग्रहवाक्यप्रदर्शनं न संगतं भवति। यतश्चात्र आरोप्यमाणश्चासौ विषयश्चेति विग्रहे सामानाधिकरण्यं न सम्भवति। नह्यालं - कारिकाणामारोप्यमाणशब्देन कदापि विषयवाचित्वमभिमतम्। अपि तु विषयिवाचित्वमेव। इत्थंसति यत् आरोप्यमाणं न स विषयः यश्च विषयः नासावारोप्यमाण इत्यसामानाधिकरण्यात् समासो नोपपद्यते। अतश्च-

तं परिणामं द्विविधं कथयन्त्यारोप्यमाणरूपतया।
परिणमति यत्र विषयः प्रस्तुतकार्योपयोगाय।।

इति **एकावल्याम्** उपलभ्यमानः पाठः विद्याधराभिमत परिणामलक्षण तदुदाहरण- तद्व्याख्यानुगुण इति, ग्रन्थकृता व्यङ्ग्यपरिणामानुदाहरणत्वोपपादनसरणिः ...पतारणप्रायैव। तत्खण्डनं च सुतरामसंगतमेवेति सुधियो विमृशन्तु।।

यच्च **चित्रमीमांसाखण्डनकृता खण्डने रसगंगाधरे च**- परिणामव्यङ्ग्यतोदाहरण ...खण्डनम् परिणामव्यङ्ग्यतास्थिरीकरणं चेत्युभयपि **विद्याधराननुगुणमेव**।

## तत्त्वालोकः-

तथाहि-**जगन्नाथेन चित्रमीमांसाखण्डने**-यच्च **विद्याधरोक्तं**परिणामध्वन्युदाहरणमनूद्य दूषितम्।

नरसिंह धरानाथ के वयं तव वर्णने।
अपि राजानमाक्रम्य यशो यस्य विजृम्भते।।

अत्र राजपदेन चन्द्रे विषये निर्दिष्टे तत्रारोप्यमाणस्य नृपस्य आक्रमणरूपकार्योपयोगिनः प्रतीतेः परिणामो व्यज्यतइति। तदयुक्तम्। तत्र ह्यारोप्यमाणस्य नृपस्य नृपात्मनैवोपयोगः न चन्द्रात्मना इति दीक्षिताभिप्रायमनूद्य-तदसत्। अत्र विजृम्भणं नाम न केवल प्रागल्भ्यमात्रं कवेरभिप्रेतम् येन यशःकर्तृकाक्रमणे नृपस्य नृपात्मनैव कर्मतारूप उपयोगः स्यात्। अपि तु निरतिशयनैर्मल्यगुणवत्तायां स्वसमानजातीय द्वितीयराहित्यप्रयुक्तः प्रौढिविशेषः। आक्रमणं न्यग्भाव एव। एवं चैवंविधे विजृम्भणे चन्द्रकर्मकमा-क्रमणमुपयुज्यते न तु नृपकर्मकमिति विषयितया व्यज्यमानस्यापि नृपस्य चन्द्रात्मनैव उपयोग इति रमणीयमेव विद्याधरोक्तं परिणामव्यङ्ग्यतायाम् उदाहरणम् इति।

यतश्चात्र- नरसिंह धरानाथेति पद्ये **विद्याधरेणैव** कण्ठतः"इन्दोर्विषयस्य प्रस्तुतत्वे विषयिणो नृपस्य आक्रमणादि प्रकृतोपयोगिनः प्राधान्येन प्रतीतेः परिणामोव्यज्यत इत्युपपादने कृते सत्यपि तद्विरुद्धतया"एवंविधे विजृम्भणे चन्द्रकर्मकमाक्रमणमुपयुज्यते, न तु नृपकर्मकमिति विषयितया व्यज्यमानस्यापि नृपस्य चन्द्रात्मनैवाक्रमणोपयोग इति रमणीयमेव **विद्याधरेणोक्त**मिति वैपरीत्याभिधानं कथं रमणीयं भवेत्।

यदपि-**रसगंगाधरमर्मप्रकाशे-नागेशभट्टैः** अभिहितम् "तत्रेदंचिन्त्यम् राजशब्दस्यानेकार्थत्वात्, विजृम्भृतेश्च प्रागल्भ्यतदुक्तार्थोभयपरत्वात् प्रकरणादेश्च शक्तिसंकोचकस्याभावात्, तन्त्रेण शक्तयैव तुल्यार्थद्वयोपस्थितौ" सर्वदो माधवः पातु" इतिवत् श्लोषएवायं, न परिणामःइति।

तदपि चिन्त्यम्-प्रकृतं पद्यमुपादाय-इन्दोर्विषयस्य प्रस्तुतत्वे इत्युपपादयता **विद्याधरेण** द्युलोकव्याप्तिर्यशसः प्रकृतेति चन्द्ररूपेऽर्थे राजशब्दः

## तत्त्वालोकः-

प्रकरणेन नियन्त्रित इति नृपरूपस्यार्थान्तरस्य प्रतीतिर्व्यञ्जनयेति प्राचीनमतानुरोधेन अर्थद्वयस्यापि न "सर्वदो माधवः पातु" इतिवत् शक्त्या प्रतीतिरिति कथं श्लेषालंकारता। अस्तुवा श्लेषेणार्थद्वयोपस्थितिः अथापि विषय्यात्मना प्रकृतकार्योपयोगित्वांशस्य अधिकस्य भाने सत्यपि कथमत्र परिणामता निराकृता युक्ता भवेत्।

**किञ्चात्र**-अर्थद्वयप्रतिभानमात्रेण चमत्कारिता कवेरपि नाभिमता किन्तु अप्रकृतस्य नृपस्य लोकसिद्धाक्रमणकर्मत्वेनोपयोगितयैवेति तद्विवरणादेव लाभाच्च। यत्र अनेकालंकृतीनां एकत्र समावेश एव मणिबन्धादिना हारादेरिव चारुत्वातिशयविवक्षायां कविः उपस्कार्योपस्कारकभावेन बहून् अलंकारान् उपनिबध्येदेव। एवंरीत्योपनिबन्धश्च **आचार्यकुन्तकादेरप्यभिमत** एवेति **वक्रोक्तिजीवितादौ** स्पष्टमभिहितमेव। एवं चात्र श्लेषोपस्कृतस्य परिणामध्वनेः शोभातिशयाधायकत्वमिति **विद्याधराभिमतिरिति** प्रतिभाति। अतश्च **नागेशभट्टेन**: अभिहितं कवयित्रभिप्रायाननुगुणमिति न पुनर्वाच्यतामर्हति॥

क्व वा नृपस्य व्यज्यमानतेति प्रकृतनरसिंहराजोत्कर्षस्य चन्द्रकर्मकाक्रमणेनेव इतरनृपाक्रमणेनापि सूपपादत्वात् इत्यभिधानं तु उत्तरत्र-**वस्तुतस्तु** अप्रकृतेऽर्थे शब्दानामभिधैव व्यापारः इति अस्माभिः व्यवस्थापयिष्यमाणत्वात्" इति ग्रन्थकर्तुर्मते न स्यान्नपुनर्विद्याधरानुरोधेनेति, उक्तपरिणामप्रकरणस्थ**मर्मप्रकाशोक्तं** सर्वमपि असमञ्जसमेव॥

यच्चापि -**कौस्तुभकृता**-उपमानिरूपणावसरे उक्तोदाहरणे "विद्याधराभिमतपरिणामध्वनित्वं निराकृत्य परिणामस्य वाच्यत्वमुपपादितं "यत्तु-नरसिंह धरापाल.......इति **विद्याधरेण** परिणामध्वनावुदाहृतम्। तत्तुच्छम्। राजशब्दस्य विद्वन्मानसहंसेत्यादाविव संभवेन परिणामस्य वाच्यत्वात्" इति, तत् विद्याधरोपपादितरीत्यननुगुणम्, तत्रहि चन्द्रस्य प्रस्तुतत्वं खलूपपादितम्। इत्थं सति यत्र नानार्थकशब्दस्य एकत्र तात्पर्यनियामकं प्रकरणादिकमस्ति, तत्रैव व्यङ्ग्यत्वं परिणामस्य युक्तमिति वक्ष्यमाणकौस्तुभकारोक्तरीत्यापि" तात्स्थायात् ताच्छब्द्यमिति" न्यायेन चन्द्रावस्थितःप्रदेशविशेषः

-चित्रमीमांसा-

**विद्यानाथेन तु उदाहृतम्-**

**एष शाम्यति वस्तापो राजपादनिषेवया।**
**कण्टकद्रुममूलेषु वासस्तं शमयेत्कथम्॥**

तत्त्वालोकः-

चन्द्रनृपोभयसाधारणराजशब्देनाभिधीयत इति तावत्पर्यन्तं यशसो व्याप्तिः प्रकृतेति, प्रकरणेन चन्द्ररूपस्य-चन्द्रावस्थानाधिकरणान्तरिक्षप्रदेशस्य वा नियमनाद-प्रकृतस्यारोप्यमाणस्यनृपस्य प्राचीनालंकारिकपथा परिणामस्य व्यङ्ग्यत्वमेव युक्तमिति-**चित्रमीमांसारसगंगाधर-मर्मप्रकाश कौस्तुभकारादि-**भिरभिहिताः प्रकाराः विद्याधरग्रन्थाननुगुणा इति तत्तत्कृतदूषण-मलग्नकमेवेतिदिक्।

अथ **विद्यानाथाभिमत**तदुदाहरणे परिणामता सम्भवति अथापि न व्यङ्ग्यतेति प्रतिपादयितुं तदुदाहरणमनुवदति-**विद्यानाथेनेत्यादिना।**

यद्यपि-इदानीन्तनमुद्रिते विद्यानाथकृते **प्रतापरुद्रीये** "एष शाम्यति वस्तापः"इति पद्यं नोपलभ्यते। अथापि विद्यानाथकृतपरिणामव्यङ्ग्यता-यामुदाहरणमिति उद्धरणं कृतमिति तदनुगुणतया व्यारव्यास्यते।

हे सामन्तनृपाः वः युष्मत्संबद्धः एव तापः राज्यभ्रंशादिजनितस्सन्तापः, राजपादनिषेवया राजा प्रभुः चन्द्रश्च पादः चरणः किरणश्च, नृपचरणसेवैव चन्द्रकिरणसेवा, तया शाम्यति प्रणश्यति। तम् उक्तसन्तापं, कण्टकद्रुममूलेषु कण्टकचितवृक्षमूलप्रदेशेषु,वासः समाश्रयणं (क्षुद्रशत्रुसमाश्रयणम्) कथं शमयेत्? केन प्रकारेण प्रणाशयेत्। अतश्च प्रकृतस्य राज्ञः पादयोर्निपत्य प्रसाद्य प्रकृतदुःखमपनोद्यतां न पुनरेवं दुःखमनुभूयताम् इति।

अत्र राजपादसेवाशब्दवाच्ययोः नृपचरणसेवाचन्द्रकिरणसेवयोः प्रकृता प्रकृतयोः श्लेषमूलकतयाऽभेदे सत्यपि प्रकरणात् आरोप्यमाण-चन्द्रकिरणसेवायाः प्रकृतनृपचरणसेवारूपविषयात्मकतयैव राज्यभ्रंशादिजनिततापशान्तिहेतुत्वात् आरोप्यमाणस्य प्रकृतात्मना प्रकृतकार्योपयोग इति परिणामता।

-चित्रमीमांसा-

**नास्त्यत्र प्रगुक्तदोषानुषङ्गः।नृपचरणसेवायां प्रस्तुतायाम् आरोप्यमाणायाः चन्द्रकिरणसेवायाः नृपचरणसेवात्मतयैव तापशान्तिहेतुत्वात्। तापशब्दस्य सौरतापसाधारण्येऽपि प्रकृते राज्यभ्रंशजनिततापस्यैव विवक्षितत्वात्। तन्निवर्तने चन्द्रकिरणसेवायाः स्वतोऽसामर्थ्यात्। तथापि प्राचीनानां मत एवैतदुदाहरणम्। ते हि "राजपादनिषेवया" इत्यस्य(वाचकतायां नृपचरणसेवार्थे) प्रकरणनियन्त्रितत्वात् अप्रकृतायां चन्द्रकिरणसेवायां शब्दशक्तिमूलो व्यञ्जनाव्यापार इति मन्यन्ते।।**

तत्त्वालोकः-

राजपादशब्दावगतार्थद्वयेअभिधाया प्रस्तुतैकपरतन्त्रत्वादप्रस्तुतचन्द्रकिरणसेवा प्रतीतिर्व्यञ्जनयैवेति आरोप्यमाणांशस्य व्यङ्ग्यत्वेन तस्य ध्वन्यमानता इति **विद्यानाथाशयः**।

अत्र च "नरसिंह धरानाथ" इति विद्याधरोदाहृतपद्यवत् न आरोप्यमाणस्यैव प्रकृतोपयोगप्रसक्तया परिणामत्वाभावप्रसक्तिः। अपि तु अस्ति परिणामरूपता अथापि अस्मत्सिद्धान्तानुसारेण ध्वनित्वं न सम्भवति। इति उदाहरणान्तरमेव कल्प्यम्।।

**प्रकाशाद्य**नुरोधे परं स्यादप्यत्र परिणामध्वनित्वमित्यभिप्रेत्यआह **नास्तीति**।

अत्र "एषशाम्यति"इति विद्यानाथोद्धृतपद्ये प्राग् "नरसिंह धरानाथ"इत्यत्र उक्तो यो दोषः परिणामत्वाभावरूपः तस्य अनुषङ्गः अनुवृत्तिः नास्ति। अपि तु तस्मिन् ध्वन्यमानत्वाभावरूपदोषानुषङ्गोऽस्त्येव अस्मत्सिद्धान्तानुसारादिति सूचितं भवति।

परिणामत्वमुपपादमति **नृपेति**।

ननु- तापस्तावदनेकप्रकारः सौरः, राज्यभ्रंशजःज्वरजः, इत्येवं तेषु सौरतापोपशमः चन्द्रकिरणसेवया भवतीति आरोप्यमाणायाः स्वरूपेणापि तदस्तीति प्रागुक्तदोषनुषङ्गोऽस्त्येवेति भवदुक्तरीत्या इदं परिणामोदादरणं न भवेदेवेति शङ्कामपनुदति- **तापशब्दस्येति**।

11,

**चित्रमीमांसा-**

**वस्तुतस्तु-**

**अप्रकृतेऽप्यर्थे शब्दानामभिधैव व्यापार इत्यस्माभिः श्लेषप्रकरणे व्यवस्थापयिष्यमाणत्वात्।।**

तत्त्वालोकः-

प्रकृताप्रकृतश्लेषस्थले शब्दशक्तिमूलध्वनिमिच्छन्तःप्राचीनाः अप्रकृतेऽर्थे व्यञ्जनामुपयन्ति तेषामनुरोधेनात्र चन्द्रकिरणसेवायाः व्यज्यमानतास्तीति तदनुयायिनो **विद्यानाथ**स्याप्यस्मिन्नुदाहरणे परिणामध्वनिंत्वमिष्टमित्यभिव्यनक्ति-तथापि **प्राचीनानामित्यादिना**।

तेत्वेवमाहुः

संयोगादिभिरभिधा शृंखलिता यत्र कुण्ठतामेति।
अर्थान्तरावगमने व्यञ्जनमेव क्षमं तत्र।। इति,

वास्तवे विमर्शे नानार्थक पद्रोपादानस्थले सर्वत्र प्रकृताप्रकृतयोः अर्थयोरभिधयैव प्रतीतिः। न पुनः केवलप्रकृतश्लेषे केवलाप्रकृतश्लेषे च अभिधया, प्रकृताप्रकृतश्लेषेतु अप्रकृतस्य व्यञ्जनयेति वैषम्येणेत्यत्र विनिगमकाभावात्। तथा प्राचीनानामुक्तिस्तु प्रकृताप्रकृतयोःयदौपम्यादिकं तस्य व्यञ्जनाविषयत्वमित्यत्र तात्पर्यवतीति मनसि निधाय स्वतमतमुट्टङ्कयति **वस्तुतरित्त्वति**।

इयमत्र एषां प्रक्रिया-शब्दस्तावत् द्विविधः श्लिष्टः अश्लिष्टश्चेति। अश्लिष्टश्च रूढः यौगकः योगरूढश्चेति त्रिधा। श्लिष्टत्वं च तन्त्रैकशेषान्यतराश्रयेण अनेकशक्त्या अनेकार्थप्रतिपादकत्वम्। अश्लिष्टत्वं च रूढि-योग-योगरूढ्यन्यतमेनैकार्थबोधकत्वम्। क्वचिदेकशक्त्या अर्थद्वयबोधकत्वमपि। तत्र "अखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वम् रूढिरिति **वृत्तिवार्तिके**ऽभिहितम्। तदप्युपलक्षणमनेकार्थप्रतिपादकत्वस्यापि। अन्यथा-अखण्डशक्त्या अर्थद्वयप्रतिपादकानां "पुष्पवन्तौ" इत्यादिपदानामसंग्रहप्रसंगात्। अनेकशक्तिमत्वप्रसंगाच्च। तथाच- अखण्डशक्तिमात्रेणैकानेकान्यतरार्थप्रतिपादकत्वं रूढिः। तद्यथा-मणि-नूपुर-घट-पटादि शब्देषु यद्यपि एषां उणादिप्रत्ययान्ततया

## तत्त्वालोकः-

प्रकृतिप्रत्यययोरर्थवत्तया यौगिकत्वं शक्यशङ्कमथापि अर्थानुगमदर्शनात् "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इति **वैयाकरणैः** अभ्युपगमाच्च एषु रूढिरेव। क्वचिदवयवार्थभासेऽपि बाधाद्रूढिरेव यथा अतिमुक्तादौपदे।

किञ्च-"प्रकृतिप्रत्ययौ सहार्थं ब्रूतः"इति **भाष्यानुसारिभिः** प्रकृतिप्रत्यययोरपि स्वार्थे रूढिराश्रयणीयैव इत्यदोषात्। एवं चात्र अखण्डशक्त्या एकार्थप्रतीतिः॥अखण्डशक्त्या अनेकार्थप्रतिपादकत्वं यथा-"प्राक्प्रत्यग्धरणी धरशिखरस्थितपुष्पवन्ताभ्याम्" इत्यत्र "पुष्पवन्ताविति" पदे एकया शक्त्या उभयत्वविशिष्टचन्द्रसूर्यरूपार्थद्वयप्रतिपादकत्वम्। अत एव-

एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ॥

इति **अमरोक्तं** संगच्छते। अन्यथा-चन्द्रत्व-सूर्यत्वान्यतरप्रकारकबोधापत्तेः, तथा सति शक्यतावच्छेदकताभेदेन शक्तिभेदोऽभ्युपगतो भवेत्। तदा चास्य श्लिष्टशब्दवाच्यता स्यात्। उक्तरीत्या रूढेः लक्षणस्योपगमे तु न कोऽपि दोषः।

**योगश्च**- "अवयवशक्तिमात्रसापेक्षतया एकार्थप्रतिपादकत्वम्। यथा- कुम्भकारः औपगवः, नाभिपद्मं, रोमवली इत्यादिषु। यद्यपि उक्तोदाहरणेषु कुम्भादिप्रातिपदिकानि कृञ्धात्वणादिप्रभृतयः स्वस्वार्थे ऽन्यनैरपेक्ष्येण रूढा एव। अथापि कुम्भकारादिरूपात् समुदयात् कुम्भकर्तृत्वरूपे विशिष्टेऽर्थे- अवयवशक्तिमात्रसापेक्षत्वात् तेषां पदानां यौगिकत्वम्। न तु अश्वकर्णादिशब्दवदवयवार्थनिरपेक्षत्वमिति।

**योगरूढिश्च**- अवयव-समुदायोभयशक्तिसापेक्षमेकार्थप्रतिपादकत्वम्। यथा- सुरालयः, पङ्कजम् इत्यादौ। अत्र च सुराणामालयः इत्यवयवशक्त्या सुराणामावासस्थानम्, समुदायशक्त्या कनकाचलश्च बोध्यते इत्युभाभ्याम् एकार्थप्रतीतिः।

ननु-अत्र योगरूढिस्वरूपंतावत्- अवयवसमुदायोभयशक्ति सापेक्षमेकार्थप्रतिपादकत्वमित्युक्तम्। सत्यम्-तर्हि

अबलानां श्रियं हृत्वा वारिवाहैस्सहानिशम्।
तिष्ठन्ति चपलाः यत्र स कालः समुपस्थितः ॥

## तत्त्वालोकः-

इत्यत्र उभयविधोऽर्थः प्रतीयते- अशक्तानां द्रव्यमपहृत्य जलवाहकैः पुरुषैः सह पुंश्चल्यो रमन्ते "इति नायिकानां शोभामपहृत्य मेघैस्सह विद्युतो यत्र तिष्ठन्ति स कालः समुपागतः इतिच। नचात्र कस्य प्रथमतः प्रतीतिः यौगिकस्य वा योगरूढस्यवा? (नाद्यः) योगरूढिस्थले रूढिज्ञानेन योगापहरणस्य सकलतन्त्रसिद्धत्वात्। अत्रच अबला भामिनी कान्ता, अभ्रं मेघो वारिवाहः, विद्युच्चञ्चला चपला अपि" इति कोशपर्यालोचनया (नायिका) योगरूढिभ्यांयोषिन्मेघ-विद्युद्रूपाणामर्थानां प्रथममुपस्थित्या पश्चात् केवलयौगिकार्थस्य अशक्तजलवाहक-पुंश्चलीरूपस्य प्रतीतिर्नस्यात् रूढ्या प्रतिबन्धादिति वाच्यम्।

योगरूढिस्थले प्रकरणाद्यननुग्रहे सत्येव रूढ्यायोगरूढ्या वा योगार्थस्य प्रतिबन्धः, प्रकरणानुग्रहे तु रूढितः प्रकरणानुक्रान्तयोगस्यैव बलीयस्त्वात् योगार्थस्यैव प्रथमं प्रतीतिः। उक्तंच **तत्वटीकायां - निगमान्तगुरुभिः**- "प्रकरणानुक्रान्तयोगस्य रूढितो बलीयस्त्वात्" इति। एवंचात्र अशक्तानां द्रव्यमपहृत्य जलवाहकैः पुरुषैः सह पुंश्चल्यो रमन्त "इत्यस्यैव चमत्कारितया प्रकृतत्वात् योगः योगरूढिं प्रतिबध्नाति इति प्रथमतस्तस्योपस्थितिः। पश्चाच्च "श्रियं हृत्वा" "सकालः समुपागतः" इत्येवंविध पदान्तरसमभिव्याहारमहिम्ना नायिकानां शोभामपहृत्य मेघैः सह विद्युतो यत्रतिष्ठन्तिसकालइतियोगरूढार्थोपस्थितिः। "**क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिवशते "इति न्यायात्**। अत एव आतोऽनुपसर्गे कः(पा.सू.३-२-२) इत्यणपवादविषये अण् कर्मणिच (पा.सू.३-३-२२) इत्यण् प्रत्ययोऽपि भवति तेन अपवादविषयेऽपि अण् भवतीत्युक्तं भवति। तेन गोदायः इत्यणन्तम् गोदः इति कप्रत्ययान्तमपि साधुभवति। अन्यथा कप्रत्ययेन बाधे सति अण् न स्यादेव। अतश्चप्रथममुत्सर्गस्य प्रवृत्तिः पश्चादपवादस्येति यथा उपेयते तद्वत् योगार्थस्य प्रथमं प्रतीतिः पश्चात् योगरूढस्येति तदर्थं व्यञ्जना अनावश्यकी। एतेन-एवमपि

योगरूढिस्थले रूढिज्ञानेन योगापहरणस्य सकल तन्त्रसिद्धतया रूढ्यनधिकरणस्य योगार्थानालिङ्गितस्य अर्थान्तरस्य व्यक्तिं विना प्रतीतिर्दुरूपपादेत्यादिना यदुक्तं **रसगंगाधरकृता**-तत्सर्वमपि चिन्त्यमेवेति प्रकृताप्रकृतार्थकयोगरूढस्थले च प्रकृताप्रकृतयोः उभयोरपि अभिधेयैव प्रतीतिर्नपुनः सर्वत्र अप्रकृतार्थमात्रस्य व्यञ्जनयेति

## -तत्त्वालोकः-

ग्रन्थकृदाशय इति प्रतीमः।

इत्थमेकार्थकेषु अभिधाप्रकारःस्थूलरूपतया चिन्तितः सम्प्रति अनेकार्थकेषु अप्रकृतार्थे व्यञ्जना वा अभिधा वेति विचारोऽवशिष्यते।

तमेनमुपक्रमामः-अनेकार्थकत्वं च श्लिष्टत्वमेव। तच्च तन्त्रैकशेषान्यतराश्रयणेन अनेकशक्त्या अनेकार्थप्रतिपादनम् इत्युक्तम्। तस्येमान्युदाहरणानि यथा-हरि-निषध-भूभृत्-पील्वादीनि।

**तन्त्रं नाम**-अनेकशक्तिसहकृतेन सकृदुच्चरितेन अनेकार्थप्रतिपादनम्, "अनेकोपकारकं सकृदुच्चारणं," वा तद्भवति। तन्यते विस्तार्यते बहूनामुपकारो येन सकृदुच्चरितेन इति व्युत्पत्तेः, तन्त्र्यते बहूनामर्थनां संबन्धोऽवधार्यते इति व्युत्पत्ते-र्वाश्रयणात्. तथा च यत्र वक्ता अस्मात् उच्चरितात् पदात् अनेकार्थविषयकबोधो जायतामितीच्छया शब्दोच्चारणं कुरुते तदेव तन्त्रमित्युच्यत इति फलति। तन्त्रेच तुल्यरूपता उपायः"**प्रत्यर्थं शब्दनिवेशः**" इति न्यायेनैकजातीयानां तुल्यानुपूर्वीकाणां वा अनेकेषां शब्दानां प्रयोगे प्राप्ते लाघवेनानेकार्थप्रतिपत्तये इदं तन्त्रमाश्रीयते वक्तृभिः बोद्धृणां तु आवृत्यैव बोधः।अतएव **गादाधरभट्टाचार्येण-शक्तिवादे**-पुष्पवन्ताविति पदशक्तिविचारसमये "तथाच नानार्थस्थले तु आवृत्तिमन्तरेण न बोधः इत्यभिहितं संगच्छते।

तदिदं तन्त्रं द्विधा-शब्दतन्त्रम् अर्थतन्त्रंचेति। **शब्दतन्त्रं नाम**-पर्यायपरिवृत्त्यसहानेकार्थशक्तपदोच्चारणम्। यथा-अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामित्यादौ। अत्र सकृत् अक्षादिपदप्रयोगेऽपि भज्यन्तां भुज्यन्तां दीव्यन्ताम् इति क्रियापदसमभिव्याहारानुगुण्येन रथ-नाभि-विभीतक-पाशकानामभिधानात् अक्षपदस्यावृत्त्या उक्तक्रियास्वन्वयः॥

यत्र च पर्यायपरिवृत्तिसहत्वेनोच्चारणं तत्र अर्थतन्त्रम्। यथा-"घटाः-पटाः" इत्यादौ उक्तं च-

## -तत्त्वालोकः-

अक्षादिषु यथा भिन्नाः भक्षि-भुञ्जि-दिविक्रियाः ।
प्रयोगकालाभेदेऽपि प्रतिभेदं पृथक् स्थिताः ।
अक्षाणां तन्त्रिणां तन्त्रे उपायस्तुल्यरूपता ।। इति ।

**अत्रेदं चिन्त्यते**-श्लिष्टेषु पदेषु शक्तिरेका उत अनेका? यदि एका तदा-पुष्पवन्तौ "इत्यादिपदेभ्यः हर्यादिपदानामवैलक्षण्यं स्यात्। तथा सति-

एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ"

इतीदं वाक्यं नाममालाकृता नानार्थवर्गे एव पठितं स्यात् ।

नच तथा कृतम्। तेन ज्ञायते यानि पदानि अनेकशक्तिकानि सन्ति अनेकार्थोपस्थापकानि तान्येव नानार्थकानीति व्यवह्रियन्ते। पुष्पवत्पदं च नानार्थबोधकमपि न नानाशक्तिमत्। तस्य उभयत्वावच्छिन्नचन्द्रत्व-सूर्यत्वविशिष्टसन्द्रसूर्ययोरेव शक्तेः। अत एव च पुष्पवन्तपदाच्चन्द्रत्वसूर्यत्वोभययप्रकारक एव बोधः । नतु चन्द्रत्व-सूर्यत्वान्यतरप्रकारकबोधः हर्यादिपदोपादानस्थले तु सर्वत्र हरित्व-सिंहत्वादिनिष्ठानां अनुगतकिञ्चिद्धर्मावच्छिन्नविषयतानामभावात् एकशक्त्या तावतामर्थानां बोधोऽभ्युपगन्तुं न शक्यः। शक्यतावच्छेदकताभेदेन शक्तिभेदस्यावश्याश्रयणीयत्वात्। एकशेषपक्षाश्रयेण युगपदधिकरणवचनताभ्युपगमेऽपि नैकया शक्त्या तावदर्थावबोधः। अपितुअनेकशक्त्यैव। एकशेषपक्षाश्रयणापेक्षया तन्त्राश्रयणं गरीयः। एकशेषश्च क्वाचित्कः। तन्त्रंतु सार्वत्रिकम्। यतः पुष्पवन्तौ "इत्यत्र नैकशेषः, अथापि अनेकोपकारकं सकृच्चारणं तन्त्रम्" इति लक्षितस्य तन्त्रत्वस्य न हानिः। तन्त्रैकशेषयोः किञ्चिदेवान्तरम्। अथापि हलन्त्यमिति सूत्रे **मनोरमायाम्**-"तन्त्रावृत्त्येकशेषान्यतममस्तु" इत्युक्तं **भट्टोजिदीक्षितैः**, तदपि गोबलीवर्दन्यायेन सूत्रारूढत्वानारूढत्वाभ्यां तन्त्रैकशेषयोः एकशेषे प्राधान्याभिप्रायकम्।

किञ्च-'सेयं युगपदधिकरणवचनता कष्टाच दुरुपपादा च' इति ब्रुवता **पतञ्जलिना** नानार्थकेषु एकाशक्तिः नास्तीति तन्त्राश्रयणमेव गरीय इति च ध्वनितं भवति।

यद्यपि-**भाट्टदीपिकायां-खण्डदेवेन**-प्रथमाध्याय तृतीयपादे-पील्वादिपदेषु वृक्षरूपेऽर्थे शक्तिः। गजरूपेऽर्थे लक्षणेत्युक्तम्।नचैतावता अनेकार्थशक्तेषु पदेषु

## -तत्त्वालोकः-

अनेकशक्त्या अनेकार्थबोधकत्वं न दण्डेन निवारितम्। यतस्तत्रैव अधिकरणे उत्तरत्र- "यत्र तु नियामकाभावः तत्र अगत्या अक्षादिशब्देषु उभयत्रापि शक्तिः उभयत्र प्रयोगात्" इत्युक्तत्वात्।

अपिच-पदेषुनानाशक्तिकल्पनमनिवार्यम्। जाति गुणादिनिमित्तत्व-बहुरूढत्वपक्षेष्वपि हि समभिव्याहृतपदान्तरादेः अर्थविशेष स्सिध्यति। अत एव **श्रीभाष्यविवरणे**ब्रह्मपदशक्तिविचारावसरे" अनेकार्थत्वेऽपि ब्रह्मशब्दस्य अस्मिन् प्रयोगेऽसावेवार्थः" इत्यादिग्रन्थम् अस्मत्कुलमूलपुरुषैः **श्रीराममिश्रैः** अभिहितमुपादाय **श्रीमन्निगमान्तगुरूभिः तत्वटीकायाम्**-अनेकार्थत्वेऽपि ब्रह्मशब्दस्य अस्मिन् प्रयोगेऽसावेवार्थेः" इत्याहेति **विवरणंतु** अन्बरोहेऽपि विशेषदार्ढ्यार्थम्। जातिगुणादिनिमित्तत्व-बहुरूढत्वपक्षेष्वपि हि समभिव्याहृत पदान्तरादेः अर्थविशेषस्सिध्येत् इत्यनूद्य तात्पर्यपरिकल्पनं कृतम्।

एवं चार्थविशेषस्मरणे प्रकरणादीनां यथा तद्वत् समभिव्याहारस्यापि अर्थविशेषोपस्थापनसहकारित्वम्। अयमेव शब्दान्तर समभिव्याहारः शब्दान्तरसन्निधिरित्युच्यते इति **अप्पय्यदीक्षितैरेव वृत्तिवार्तिके** वृत्तिनिरूपणावसरे अभिहितमेव। अतश्च आलङ्कारिकैः मुख्यार्थबाधादीनामभावे लक्षणाभावात् अनकार्थोपस्थितिः एकदोच्चारितात्पदात् अनेकशक्त्यैवेत्यभ्युपेयमेव। अभ्युपेयते च-

"अब्जेन त्वन्मुखं तुल्यं हरिणाहितसक्तिना"। इत्यादौ। परन्तु-

असावुदयमारूढः कान्तिमान् रक्तमण्डलः।
राजा हरति सर्वस्य हृदयं मृदुलैः करैः॥

इत्यादिप्रकृताप्रकृतश्लेषस्थले परं प्राञ्चः शब्दशक्तिमूलध्वनिमिच्छन्ति। तेषामियं प्रक्रिया-

एकार्थका अनेकार्थकाश्चेति द्विविधाः शब्दाः। तत्र एकार्थका इत्यस्य एकयाशक्त्या अर्थप्रतिपादका इत्यर्थः। तेन पुष्पवदादिपदेषु अनेकार्थबोधकत्वेऽपि नाव्याप्तिः। अनेकार्थका इत्यस्य अनेकशक्त्या अनेकार्थप्रतिपादकाः इत्यर्थः।

## -तत्त्वालोकः-

शक्तिभेदे च शक्यतावच्छेदकताभेदः आवश्यकः। अवच्छेदकताभेदश्च अवच्छेद्यभेदनियत इति अर्थात् शक्यानामपि अनेकत्वं सिध्यति। अत एव च पुष्पवन्तादिपदेभ्यः हर्यादिपदानां विलक्षणत्वं सिद्धं भवति। तत्रैकार्थकप्रयोगेषु-यथा"मणिं च दिव्यां मधुकैटभान्तः" नूनं रवं नूपुरमञ्जरीणाम् "इत्यादौ मणि-नूपुरादिशब्दानामनेकार्थाप्रतिभासादेकार्थाः। तथा 'हरिरस्ति' इत्यादौ प्रकरणादेरनवगतौ अभिधानविद्भिः हरिशब्दस्य अर्यमा-निलेन्द्र-चन्द्रादयोऽर्थाः इत्यवधार्यते। तत्र क्वचित् केषांचित्प्रकृतत्वं यथा-"येन ध्वस्तमनोभवेने"त्यादौ। क्वचिदप्रकृतत्वं च यथा-

सदृशः काकतीन्द्रोऽयं महाकुलमहीभृताम्।
शिरोगृहीतसन्मार्गस्फुटत्कटकसम्पदाम्॥

इत्यादौ।

क्वचित् प्रकृतत्वमप्रकृतत्वं च। यथा-

हरिप्रियां केसरिणामिवैनां
दुरासदामन्यनृपद्विपेन्द्रैः।
सखीजनः प्रीतमना निदध्यौ
ययौ च खेदं निजविप्रयोगात्॥ (यादवाभ्युदये)

इत्यादौ हरिप्रभृतिपदबोध्यस्य प्रकरणात् कृष्णस्य प्रकृतत्वं सिंहस्याप्रकृतत्वम् इत्यनुभवः इति।

**अत्रेयं चिन्ता प्रसजति**-यत्रानेकार्थानामभिधित्सा तत्र कस्यार्थस्यात्र परिग्रहः इति सन्देहस्यैवाभावात् तत्परिच्छेदकानां प्रकरणादीनामप्रसरात् अनेकया शक्त्यानेकार्थप्रतीतिः। यत्र चाप्रस्तुतत्वमुभयोः तत्रापि प्रकरणादेः अप्रसरात् अनेक शक्त्या अनेकार्थप्रतीतिः। यत्र तु सन्देहः-

असावुदयमारूढः कान्तिमान् रक्तमण्डलः।
राजा हरति सर्वस्य हृदयं मृदुलैः करैः॥

## -तत्त्वालोकः-

इत्यादौ उदय-रक्तमण्डल राज करादिभिः पदैः नानार्थप्रतीतौ सत्यां कस्यार्थस्य परिग्रह इति सन्देहे-"प्रकरणादीनां अर्थविशेषनियामकत्वस्य **भाष्यकारादिसंमतत्वेन** प्रस्तुतार्थमात्रप्रतीतिः। तदुक्तम्-**संख्यारंज्ञासूत्रभाष्यकैयटयो**ः "अर्थात् प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः" इति **महाभाष्ये**। सर्वार्थाभिधानंशक्तियुक्तः शब्दो यदा विशिष्टेऽर्थे संव्यवहाराय नियम्यते तदा तत्रैव प्रतीतिं जनयति नान्यत्र इति **कैयटे**। तत्रैव **उद्योते**-इदमुपलक्षणमन्येषां पदार्थनियामकानामिति॥

अत्रार्थे महाभाष्यतात्पर्यज्ञापकवाक्यपदीयनिर्माणचतुरेण **भर्तृहरिणा**-

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥

सामर्थ्यमौचिती देशः कालो व्यक्तिस्स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥

इत्युक्तम्। अस्यायं भावः-एते संयोगादयः कस्यार्थस्य परिग्रहोऽत्रेति सन्देहे तदपाकरणद्वारेण एकतरमात्रार्थतात्पर्य निर्णयद्वारा तन्मात्रार्थ विषयकान्वयबोधजनकाः इति ॥

इत्थं सति संयोगादिज्ञानस्य प्रतिबन्धकत्वान्नार्थान्तरप्रतीतिः, यदि तु अर्थान्तरं प्रतीयेत तदा तस्य प्रतीतिः व्यञ्जनयैवेति **काव्यप्रकाशकारादयः**। उक्तं च **प्रकाशकृता**-

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।
संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम्॥ इति ।

**एतेनैतदुक्तं भवति**-अवाच्यार्थप्रतीतौ व्यापारभूता व्यञ्जना द्विविधा शाब्दीव्यञ्जना आर्थीव्यञ्जना चेति। प्रकरणादिनियन्त्रितार्थविषयकधीजनको व्यापारः शाब्दीव्यञ्जना। वक्तृबोद्धव्यादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीःतद्धेतुर्व्यापारः आर्थीव्यञ्जना" इति एवंच शब्दशक्तिमूलध्वनिस्थले शब्दव्यञ्जना। अर्थशक्तिमूलध्वनिस्थले अर्थव्यञ्जनेति पर्यवस्यति। एतन्मतेऽयं विशेषः-शब्दशक्तिमूलध्वनिस्थलेऽप्रकृतद्वितीयशक्यार्थस्य, तन्मूलकोपमाद्यलंकारस्य च व्यञ्जनाविषयत्वम्। अर्थशक्तिमूलध्वनिस्थले तु कदाचिदप्यनभिधेयस्यैव

## -तत्त्वालोकः-

व्यङ्ग्यत्वमिति।

वस्तुतस्त्वित्यादिना निरूपयतो ग्रन्थकृतः प्राचीनोक्तरीत्या उभयविधव्यञ्जनाङ्गीकारे संमतिसत्वेऽपि शब्दशक्त्यैवाभिधानं परस्तात्प्रकृता प्रकृतयोरर्थयोः असम्बद्धत्वपरिहाराय परिकल्प्यमानस्य उपमादेरलंकारस्य तु परं शब्दव्यञ्जनावगम्यत्वमिति। अयमेव पक्षो युक्तः।

यतः "रामार्जुनगतिस्तयोः" इत्यत्र यथा प्रकरणसहकारेण द्वयोरपि पदयोरर्थयोर्वा मिथो विरोधिद्वये प्रकरणविरोधाभ्यां युगपदेव तात्पर्यग्रहः। तद्वत्- "असावुदयमारूढः" इत्यादावपिप्रकृतार्थे प्रकरणबलाज्झटिति बुद्धिस्थे सत्येव पश्चान्नृपति तद्ग्राह्यधनादिवाचिनां राजकरादिपदानामन्योन्यसन्निधानबलात् अप्रकृतनवाभिषक्त-नृपतिविषयकोऽर्थः शक्त्यैव स्फुरति। तत्राप्यर्थे पृथक्शक्तेस्सत्वात्। नच तदर्थं व्यञ्जना आवश्यकी।

नच अर्थान्तरेऽतिरिक्तशक्तिसद्भावेऽपि प्रकरणेन प्रतिरुद्धत्वात् **"भ्रष्टावसरन्यायेन सकृद्गतिन्यायेन वा"** पुनःप्रसरो नास्तीति वाच्यम्। प्रकरणादीनां न प्रतिवन्धकत्वम्, अपि तु प्रकृतार्थविशेषस्मृति हेतुत्वमेव। अन्यथा- "रामार्जुनगतिः तयोः" इत्यत्रापि अन्यतरार्थे प्रकरणानुग्रहादेकतरस्फूर्तौ अपरार्थस्य विरोधितयापि नोपस्थितिस्स्यात्।

उच्यते च भवद्भिरेव विरोधिताया अपि अर्थविशेषस्मारकत्वम्। नचैवमादौ प्रकरणं नास्त्येवेति वक्तुं शक्यम्, कमप्यर्थमप्रस्तुत्य पदप्रयोगस्य दशदाडिमादि प्रयोगसाम्यप्रसंगात्।

अतश्च प्रकरणवत् समभिव्याहाररूपशब्दान्तरसन्निधेरप्यर्थ विशेषस्मारक-त्वस्य, तत्स्मरणे उत्तेजकत्वस्य वा अभ्युपगमे बाधकाभावात्।

**न्यायविद्भिस्तु**-प्रसिद्ध्यतिशये सति प्रकरणादिनामभावेऽपि अर्थस्मृतेः। प्रसिद्धिराहित्ये प्रकरणादीनामभिधानियामकत्वं नास्ति। तेषामननुगमात्। किन्तु लिङ्गविधया तात्पर्यग्राहकत्वमेव। अतएव "हरिरस्ति" इत्येतावन्मात्रश्रवणेन पूर्वापरसन्दर्भालाभेऽपि हरिशब्दस्य-सूर्यानिलेन्द्रमर्कटभेकसिंहादयोर्थाःइत्यवधार्यते

**चित्रमीमांसा-**

**इहापि "राजपादनिषेवया"इत्यत्र चन्द्रकिरणसेवायाम् अपि अभिधैव व्यापारः अतः प्रस्तुताप्रस्तुतद्वयताद्रूप्यप्रतीतेः श्लेषभित्तिकातिशयोक्त्यादिष्विव संसर्ग विधयैव लाभात् तस्याः, प्रकृतकार्योपयोगितायास्तृतीयया लाभाच्च न क्वापि व्यञ्जनाव्यापारापेक्षेति नेदं परिणामध्वनेरुदाहरणम्।**

-तत्त्वालोकः

अनुभूयते च **अभिधाननाममालाभ्याससमये**। तस्मात्प्रस्तुताप्रस्तुतोभयपरेऽपि वाक्ये प्रस्तुताप्रस्तुतयोः उभयोरपि वाच्ययोरर्थेऽभिधैव व्यापारः तदुपस्थितेषु च पदार्थेषु आकाक्षा-सत्ति-योग्यता तात्पर्यरूपसहकारिवशात् उभयविधवाक्यार्थप्रतीतिः। अतोऽ प्रस्तुतविषये न पदार्थज्ञानाय नापि वाक्यार्थज्ञानाय व्यञ्जनाऽभ्युपेया।।

इत्थंच-यत्र पर्यायपरिवृत्त्यसहपदसमभिव्याहारेसति उभयविधशक्यार्थ-प्रतीत्यनन्तरं तयोरुपमादेःप्रतीतिः तत्र (शब्दव्यञ्जना) शब्दशक्तिमूलध्वनिः, ।पर्यायपरिवृत्तिसहपदसमभिव्याहारे सति शक्यार्थप्रतीत्यनन्तरमनभिधेयस्यअर्थस्य प्रतीतौ अर्थशक्ति मूलव्यञ्जना(अर्थव्यञ्जना)इत्येव निष्कर्षः। **प्रकाशकारादेरपि**-अप्रकृताभिधेये व्यञ्जनेत्यत्र तात्पर्यं नास्तीति साधारमुपपादितमुपमानिरूपणे शब्दशक्तिमूलोपमाध्वन्युदाहरणव्यारव्या प्रसङ्गे। अतः तत्ततएवावधार्यमितिदिक्।

इयता प्रपञ्चेन "एष शाम्यति वस्ताप" इत्यत्रापि अप्रकृतेर्थे अभिधैवेति न तदर्थं व्यञ्जनापेक्षेति न परिणामध्वनित्वम् अपि तु परिणामस्य वाच्यत्वमेवेत्यभिप्रायेणाह **इहापीति**।

इहापि **विद्यानाथाभिमते** "एष शाम्यति" इति पद्येऽपि,राजपादनिषेवया इत्यत्र आरोप्यमाणायां चन्द्रकिरणसेवायामपि, अभिधैव तद्विषयकशक्तिग्रहमपेक्ष्य तत्प्रतिपादकत्वलक्षण एव व्यापारः।

**नच**- अप्रकृतार्थेऽपि अभिधाङ्गीकारे राजपादपदे युगपद्वृत्तिद्वयं कल्पितं स्यात्।

## -तत्त्वालोकः-

तच्च विरुद्धमिति वाच्यम्। "गंगायां मत्स्यघोषौ स्यः" इत्यादौ युगपद्वृत्तिद्वयदर्शनेन विरोधाभावात्। वक्तुः तन्त्रैकशेषान्यतराभ्युपगमेन, बोद्धुः तु आवृत्त्या बोधस्य चाभ्युपगमात् विरोधाप्रसरादिति भावात्।

**ननु**-प्रस्तुताप्रस्तुतयोरर्थयोरभिधेयत्वेऽपि तयोरभेदप्रतिपत्त्यर्थमपि वा व्यापारन्तरमाश्रयणीयमेव। रूपके तु विषयविषयिणोः स्वस्वपदेनाभिधानमस्तीति तयोरभिहितयोः अभेदस्य संसर्गमर्यादया लाभः अत्र तु पृथक्पदाभ्याम् अभिधानं नास्तीति कथं ताद्रूप्यप्रतीतिरित्याशंकायां समाधानमाह- **अत इति**।

**अयं भावः**- "गुणदोषौ बुधो गृह्णन्" इत्यत्र उपमाने ईश्वरे चन्द्रगरलयोर्ग्रहणमुपादानरूपं,उपमेये बुधे तयोः ग्रहणं ज्ञानरूपम्, तयोः साधारण्ये सम्पाद्ये गृह्णन् इति पदस्यैकत्वे सत्यपि श्लेषभित्तिकाभेदाध्यवसायलब्धारोपिताभेदेन उपादानज्ञानयोः एकत्वं समाश्रितम्, तद्वदत्रापि प्रकृतायाः नृपचरणसेवायाः अप्रकृतायाः चन्द्रकिरणसेवायाश्चेत्युभयोः एकेनैव राजसेवापदेनः लब्धयोः श्लेषमूलका(भेद)ताद्रूप्यप्रतीतेरपि संसर्गमर्यादया लाभात् नैतदर्थं व्यञ्जनाद्यपेक्षेति।

**नन्वथापि**-"पुन्नागजालकैः हारान्" इत्यादौ "विहर्तुम्"इति तुमुना विहाररूपक्रियोपगित्वं लभ्यते। विपूर्वात् हरतेः

"तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् (पा.सू.३.३.१० सू)इति भावे तुमुनो विहितत्वात्। अत्र तु न तथेति तस्य व्यज्यमानत्वात् परिणामध्वन्युदाहरणत्वमुपपद्यत इति पूर्वपक्षे सिद्धान्तमाह **प्रकृतकार्येति**।

**अयं भावः**- न हि "एष शाम्यति "इत्यत्र प्रकृतकार्योपयोगित्वांशे व्यापारान्तरवेद्यता। यतश्च "राजपादनिषेवया एष तापः शाम्यतीन्वये एष इत्यनेन प्रकृतत्वम्, तापः शाम्यतीत्याभ्यां कार्यं, राजपादनिषेवायां तदुपयोगित्वं नाम तादृशकार्यं प्रति असाधारणकारणत्वं, तस्य च बोधनं करणतृतीययेति तदर्थमपि न व्यञ्जनापेक्षेति। अत एव क्वापीत्यभिहितं समीचीनम्।

**चित्रमीमांसा-**

**इदं च दूषणं पूर्वोदाहरणेऽपि तुल्यम्। इदं तूदाहरणम्**

**चिराद्विषहसे तापं चित्त चिन्तां परित्यज।**
**नन्वस्ति शीतलः शौरेःपादाब्जनखचन्द्रमाः।।इति।**

**अत्र चिरतापार्तं प्रति हरिपादाब्जनखचन्द्रसद्भाव प्रदर्शनेन तमेव निषेवस्व तन्निषेवणादयं तापःशान्तिमेष्यतीति परिणामो व्यज्यते।।**

-तत्त्वालोकः-

एवं चात्र-अप्रस्तुतेऽर्थे-ताद्रूप्यप्रतीतौ कार्योपयोगित्वांशे च सर्वत्र अभिधैव प्रसरतीति व्यञ्जना अन्यथासिद्धैवेति कथमपि परिणामध्वनेरुदाहरणं न भवितुमर्हतीति निर्णीतं भवति।

**विद्यानाथो**दाहरणोपरि यद्दूणमभिहितं तत् **विद्याधरोदाहृत** "नरसिंहधरानाथेति पूर्वोदाहरणेऽपि स्वमतरीत्या समानमित्यतिदिशति **इदं चेति**।

तर्हि परिणामध्वनेरुदाहरणं कथं निर्मातव्यम्। इति अनुयोगे स्वयं तदाह-**इदं तूदाहरणमिति।**

हे चित्त अयि मनः, चिरात् बह्वोःकालादारभ्य, तापम्,त्रिविधं तापम् विषहसे मर्षयसि।? इति प्रश्ने, सन्तापोपशामकोपायचिन्ता क्रियत एव अथापि तादृशोपायानुपलम्भादद्यापि चिन्तयैव कालःक्षिप्यते इत्युत्तरे नहि चिन्तामात्रेण तापोपशान्तिः अपि तु तदुपायास्तित्वे तदेवानिष्कृष्टं अत एव चिन्ताया अविनाश इति चेत् तदुपायोऽस्ति। अतश्चिन्तां परित्यजेत्युक्तिः। कोसावुपाय इत्याह **नन्वस्तीति** शीतलः स्वभावशीतः शौरेः शूरिसूनोः कृष्णस्य पादाब्जनखान्येव चन्द्रमाः अस्ति ननु अस्त्येवेत्यर्थः।

परिणामस्य व्यज्यमानतामुपपादयति **अत्रेत्यादिना** अत्र चिरादिति पद्ये, चिरतापार्तं प्रति, बह्वोः कालादारभ्य संसारे जन्मजरामरणकृतदुःखेनपीडितं प्रति,

## तत्त्वालोकः

हरिपादाद्जनखचन्द्रसद्भावप्रदर्शनेन भगवत्पादारविन्दसमुत्पन्नानामाकारतः स्वभावतश्च आह्लादकानां शीतलानाम्अतिसाम्यात् चन्द्रसदृशानां नखानामस्तित्वज्ञापनेन, तमेव भगवत्पादनखात्मनापरिणतं चन्द्रमेव निषेवस्व शरणमुपयाहि। तस्मात्तव तापः दुःखं शान्तिं उपशममेष्यति इति परिणामः चन्द्रस्य नखात्मतापत्तिः व्यज्यते ध्वन्यते।

**अयं भावः** "परिणाम-तापसंस्कारदुःखैः गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः "इति **योगसूत्रोक्तरीत्या** जरादिदुःखस्य मरणत्रासदुःखस्य पुनर्जननादिदुःखस्य च भगवत्पादनखाश्रयणमन्तरा मूलोच्छेदः न सम्भवति। जरादीनां दुःखत्वं च "दुःखयतीति दुःखं दुःखप्रयोजकमित्यर्थः। तस्य चानुवृत्तिः सूक्ष्मशरीरनाशावधिवर्तत एव। अतश्च जन्मादिनां दुःखत्वमेव तदुक्तम् **याज्ञवलक्येन**-

अवेक्ष्या गर्भवासाश्च कर्मजाः गतयस्तथा।
आधयो व्याधयः क्लेशाः जरारूपविपर्ययः।।
भवो जातिसहस्रेषु प्रियाप्रियविपर्ययः। इति

एतद्व्यारव्यायां **मिताक्षरायाम् विज्ञानेश्वरः** इन्द्रियनिरोधोपायतया संसारस्वरूपनिरूपणमाहअवेक्ष्याइति। वैराग्यसिद्ध्यर्थं मूत्रपुरीषादिपूर्ण-नानाविधग**र्भवासा** अवेक्षणीयाः पर्यालोचनीयाः। चकारात् जननोपरमावपि। तथा निषिद्धाचरणादिक्रियाजन्या महारौरवादिनिरयपतनरूपा **गतयः**। तथा **आधयः** मनःपीडाः, **व्याधयश्च** ज्वरातीसाराद्याः शारीराः, **क्लेशाः** अविद्याऽस्मिता-रागद्वेषाभिनिवेशाः पञ्च, **जरा** वलीपलिताद्यभिभवः। **रूपविपर्ययः** खञ्जकुब्जत्वादिना प्राक्तनस्य रूपस्यान्यथा भावः तथाश्वसूकरोरगाद्यनेकजातिषु भवःउत्पत्तिः, तथा प्रियविपर्ययः इष्टानवाप्तिः अनिष्टस्य अवाप्तिरित्यादि बहुतरक्लेशावहं संसारस्वरूपं पर्यालोच्य तत्परिहारार्थं आत्मज्ञानोपायभूतेन्द्रियजये प्रयतेत इत्याह। एतेन जन्मजरामरणादीनां सर्वेषामपि तापरूपत्वमेव विवेकिनः इति तत्परिहाराय भगवत्समाश्रयणं कर्तव्यमेव। यथा लोके आतपतप्तस्य चिन्तामात्रेण न तापोपशान्तिः

## तत्त्वालोकः

अपि तु वृक्षच्छयासमाश्रयणेनैव तद्वत्संसारतापतप्तस्य तदुपशान्तिः भगवत्पादाब्जनखसमाश्रयणेनैवेति चन्द्रमसः प्रकृततापोपशामकत्वं न स्वस्वरूपेण,अपि तु भगवत्पादनखात्मतापत्त्यैवेति परिणामता। अस्य ध्वन्यमानता च प्रकृततापोपशमनरूपकार्यस्यावाच्यत्वात् इति भावः॥

**नच-** अत्र "आरोप्यमाणस्य विषयात्मकत्वेन प्रकृतकार्योपयोगे परिणामः" इति **ग्रन्थकृता** लक्षितम्। एवं चाप्रकृतस्य प्रकृतात्मतापत्तिः प्रकृतकार्योपयोगश्चेत्युभयं परिणामशरीरम् तयोः प्रकृतकार्योपयोगांशः व्यङ्ग्यः अथापि अपरोंऽशः पादाब्जनखचन्द्रमाःइत्युक्तत्वेनाप्रकृते प्रकृतरूपतापत्तिरूपः अभिहित एव। यतो **महाभाष्ये पतञ्जलिना** व्यपेक्षापक्षमुद्भाव्य "अथैतस्मिन् व्ययेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः" इति दूषणाभिधानात्,

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।

इत्युक्तरीत्या समासेऽतिरिक्तशक्तिस्वीकारे तत्ताद्रूप्यस्यापि वाच्यत्वात्। **नैयायिकमतानु**रोधेन वा तत्ताद्रूप्यस्य संसर्गमर्यादया भानसंभवाच्च तस्य वाच्यत्वमकामेनाप्यभ्युपेयमिति इदं पद्यं न ध्वनेरुदाहरणं भवितुमर्हतीति शङ्क्यम्। एकदेशस्य वाच्यत्वमात्रेण तद्व्यङ्ग्यत्वानपायात्। अन्यथा

धन्यासि या कथयसि प्रियसंगमेऽपि
विस्रब्धचाटुशतकानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यःशपामि यदि किञ्चिदपि स्मरामि॥

इति वस्तुनालंकारध्वनिमुदाहरता **काव्यप्रकाशकृता** अत्र प्रियासमागममध्ये परःशतचाटुवाक्यस्मरणमप्यनुचितम्।इत्थंसतितत्कथनेन विलंक्षण सुखानुभवैकचित्तत्वाभावसूचनद्वारा सख्यपेक्षया स्वस्मिन् रसपारवश्यताभिव्यक्तिद्वारा धन्यता अभिव्यज्यते।

## तत्त्वालोकः-

सखीनायिकयोरु पमानोपमेययोः मध्ये उपमेयभूतायां नायिकायां धन्यताप्रतिपत्तिद्वारा व्यतिरेकः प्रत्यायितो भवतीति वस्तुना व्यतिरेकालंकारस्य ध्वन्यमानतोक्तिः असङ्गता भवेत्। यतश्च अत्रापि त्वमधन्येति व्यतिरेकांशस्य लक्ष्यत्वेनाव्यङ्ग्यत्वात्, उपमानेऽपकर्षस्य उपमेये उत्कर्षस्य प्रतीतौ व्यतिरेकः। तयोरुभयो र्वाच्यत्वे व्यतिरेकस्य वाच्यता। अन्यतस्य व्यङ्ग्यत्वेऽपि व्यतिरेकध्वनित्वानपायात्। "चिराद्विषहसे" इत्यस्य परिणामध्वन्युदाहरणत्वं भवत्येवेति अत्रत्य **चित्रमीमांसाया** उपरि **रसगंगाधरकृता**-यदपीत्यादिना यद्दूषणमभिहितं तच्चिन्त्यमिति **कौस्तुभकृता** प्रतिपादितम्।

**अत्रेदंचिन्त्यम्**-प्रकाशकारेण-

"उपमानाद्यदन्यस्य व्यतिरेकस्स एव सः।"

इति व्यतिरेको लक्षितः। उपमानादुपमेये आधिक्यं वर्णितं चेत्तदा व्यतिरेक इत्युक्तं भवति। तथाच "अहं धन्ये"त्येवंरूपस्य प्रियकरस्पर्शमात्रेण विषयान्तरावेदनेन साहजिकप्रेमशालितां प्रकटयन्त्या नायिकया अभिव्यञ्जनात् व्यतिरेकध्वनित्वस्य सूपपादत्वात्। इत्थं सति त्वमधन्येत्यंशस्याव्यङ्ग्यत्वेऽपि व्यङ्ग्यत्वानपायादिति **कौस्तुभोक्तं** कथं घटताम्। यतश्चोपमानापेक्षया उपमेये उत्कर्ष प्रयोजकस्योपादानमावश्यकं न पुनरुपमाने न्यूनताप्रयोजकस्याप्युपादानम्। यथा- "माधुराः पाटलिपुत्रकेभ्यः आढ्यतराः" इत्युक्ते गम्यत एव पाटलिपुत्रकेषु आढ्यतामात्रम् तद्वत् इति न शङ्क्यम्। उपमाने न्यूनतायाः उपमेये उत्कर्षस्य च तत्प्रयोजकधर्मोपादानपूर्वकं किन्त्वादिशब्दैः प्रतिपादने वाच्यव्यतिरेकता, इतरथा तु लक्ष्यता व्यङ्ग्यतावेति विवेकेन प्रकृत्तत्वात् तदुक्तेः सांगत्यम्। धन्यासि "इत्यत्र च व्यतिरेकसूचककेवलादिपदानुपादानात्। "या प्रियसङ्गमेऽपि कथयसी"त्युक्तौ अपिः कथनाभावस्य युक्ततां कथनस्यायुक्ततां च वाच्यतादशायामेव स्फोरयित्वा धन्येतिपदमधन्येत्यर्थे विरुद्धलक्षणया प्रयुक्तमिति उपमानांशेऽपकर्षः वाच्यप्रायतां नीतः। "अहं न कथयामि" इति तु अवाच्यमेवेति उपमेयायां धन्यत्वमात्रं व्यज्यते, अथापि व्यतिरेकस्य ध्वन्यमानतेति।

**चित्रमीमांसा-**

**एवं रूपकवैलक्षण्येन परिणामो निरूपितः।**

**तत्र रूपके प्रकृतमप्रकृतरूपापन्नं भवति,परिणामे तु अप्रकृतं प्रकृतरूपापन्नं भवतीति वैलक्षण्ये स्थिते यत्तदुपजीव्य चक्रवर्तिनाऽन्यथैव तयोर्वैलक्षण्यं वर्णितम्।**

तत्त्वालोकः-

**वस्तुतस्तु**-(रतकालेऽपि)विषयान्तरवेदेनेनानुरागस्य कृत्रिमतामावेदयता सम्बोध्यायामधन्यतायाः, रतारम्भे करस्पर्शमात्रेणैव विषयान्तराऽवेदनेनानुरागातिशयस्याकृत्रिमतामावेदयता वस्तुना "अहं धन्येति" स्वस्मिन् धन्यतायाश्चाभिव्यञ्जनात् व्यतिरेकांशयोः उपमेयोत्कर्षोपमानापकर्षयो र्व्यङ्ग्यत्वमेवेत्यपि केचिद्वदन्ति। तद्रीत्या कौस्तुभोक्तदृष्टान्तप्रदर्शनमेव चिन्त्यम्।

यत्तूदाहृतं **रसगंगाधरकृता-**

इन्दुना परसौन्दर्यसिन्धुना बन्धुना विना।
ममायं विषमस्तापः केन वा शमयिष्यते।।

इत्यत्रापि विषयिणो विषयताद्रूप्यापत्तेरभिव्यज्यमानत्वेऽपि प्रकृतकार्योपयोगित्वांशस्य "इन्दुनेति तृतीयया लाभात् वाच्यताप्रायत्वमेवेति अहृदयङ्गममेवेत्युदाहरणान्तरं मृग्यम्।

यदि तु- प्रकृतकार्योपयोगित्वांशस्य परिणामशरीरे नानुप्रवेशः।अपितु उपमेयप्रतियोगिकाभेदप्रतीतौ तात्पर्यग्राहकत्वमिति ग्रन्थकृदाशयः स्यात् तदा रसगंगाधरोक्तोदाहरणे परिणामध्वनित्वं सूपपादंभवेत्। तेन च प्रकृतोपयोगित्वं लक्षणे निवेशितमेवेति तदनुरोधेनापि एकतरस्य व्यज्यमानत्वेऽपि परिणामस्य व्यङ्ग्यत्वमुपेयमेव। तथा सति उक्तोदाहरणे तत्समानमिति दूषणाभिधानमयुक्तमेवेति दिक्।।

स्वाभिप्रायानुरोधेन परिणामध्वनित्वमुपपाद्य निगमयति **एवं रूपकेत्यादिना।**

सम्प्रति **चक्रवर्तिमतनिरासार्थं** पीठिकां रचयति **तत्र रूपकेति।**

## -तत्त्वालोकः-

रूपकेप्रकृतम्-उपमेयम् अप्रकृतरूपापन्नम्-उपमानरूपतापन्नं भवति। परिणामे तु अप्रकृतम् उपमानम् प्रकृतरूपापन्नम् उपमेयरूपतापन्नं भवतिइत्येवं वैलक्षण्ये (भेद) स्थिते ज्ञाते चक्रवर्तिना **सर्वस्वसंजीविनीकारेण चक्रवर्तिना** अन्यथैव विषयस्थगना-स्थगनाभ्यां रूपक-परिणामयोः भेदःवैलक्षण्यं वर्णितम्॥

**अयं भावः**- 'मुखं चन्द्र इव' इत्यत्र समासाभावात् भेदघटितं सादृश्यं प्रतीयते। 'मुखंचन्द्रः' इत्यत्र इवसमभिव्याहाराभावान्मुखे चन्द्रताद्रूप्यं प्रतीते। "मुखचन्द्र" इत्यत्रापि यद्युपमितसमासः तदापि भेदघटितस्यैव सादृश्यप्रतीतिस्स्यात् नत्वभेदस्य ताद्रूप्यस्य वा प्रतीतिः।" मुखचन्द्र"इत्यत्र मुखं चन्द्र इवेत्येवं विग्रहे कृतेऽपि मुखमेव चन्द्रः इत्येवंरूपविग्रहसमानार्थकत्वं नानुभववेद्यं भवति।"अभेदप्रधानं रूपकमिति" सिद्धान्तानुगुण्येन अवधारणगर्भसमासकरणमेवोचितम्। किंच उपमितमिति सूत्रे सामान्यप्रयोगे सति समासप्रतिबंधात् समासानुपपत्तिश्च। अतः मयूरव्यंसकादयश्चेत्यनेन समासः **सर्वस्व-काव्यप्रकाश-साहित्यदर्पणकाव्य-प्रदीपोद्योतैकावलीतरलाकारादिभिः** बहुभिरालंकारिकैः कैश्चिद्वैयाकरणैश्च अभ्युपेयते। तदेतत्कथमुपपद्यते तज्जातीयपाठाभावादिति चेत्, "चिन्मात्रम्" इत्यादिषु यथा चिदेव इत्यर्थविवक्षायामनुशासनान्तराभावात् - आविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः इति **वृत्त्यादिग्रन्थेषु** दर्शनाच्च, अत्रापि "मुखचन्द्र" इत्यादौ मुखमेव चन्द्र इति विगृहीतुं शक्यम्। तथा सति "मयूरव्यंसकादयश्च " इत्यस्य तत्पुरुषाधिकारस्थत्वात् उत्तरपदार्थप्राधान्यस्य प्राप्त्या सर्वत्र रूपके प्रकृतमप्रकृतापन्नं भवति, प्रधानानुरोधित्वाद्गुणानाम्।

तद्रूपकमभेदो य उपमानोपमेययोः।

इति रूपकं लक्षयता **काव्यप्रकाशकारेणापि** मुखत्व ादिधर्मोपस्थितिदशायां शाब्दबोधविषयीभूताभेदप्रतीतेरनाहार्यत्वानुपपत्तेः आहार्यत्वं ध्वनितमेवेति आहार्यारोपेण विषयतिरोधानासंभवस्य उपपादयिष्यमाणत्वेन च उत्तरपदार्थ-प्रधानमयूरव्यंसकादिसमासाश्रयणेन रूपके उपमेयमुपमानरूपतां प्रतिपद्यते इत्येव विशेषः परिणामाद्वाच्यः नपुनः स्थगनादिनेति॥

-तत्त्वालोकः-

**वस्तुतः** रूपकेप्रकृतमप्रकृतरूपापन्नं भवतीत्युक्तिश्च मयूरव्यंसकादिसमासस्योत्तरपदार्थप्रधानत्वमेवेत्यभिमानेनैव। अतएव अङ्गाङ्गिभावसंकरप्रतिपादनावसरे-

तलेष्ववेपन्त महीरुहाणां
छायास्तदा मारु तकम्पितानाम्।
शशाङ्कसिंहेन तमोगजानां
लूनाकृतीनामिव गात्रखण्डाः ॥ इति

**यादवाभ्युदयस्थां श्रीमद्वेङ्कटनाथस्य** सूक्तिमुपादाय "अत्र शशाङ्कसिंह्मेनेति, तमोगजानामिति च रूपकम्" यद्यप्यत्र शशाङ्क एव सिंह्मः तमांस्येव गजा इति मयूरव्यंसकादिसमासाश्रयणेन रूपकवत् शशाङ्कः सिंह्मः इव तमांसि गजा इवेत्युपमितसमासाश्रयणेनोपमापि वक्तुं शक्या, तथापि लूनाकृतीनामितिविशेषणानुगुण्याद्रूपकसिद्धिः। तस्य हि विशेषणस्य प्रधानेनासहान्वयेन भाव्यं नतु गुणेन। "**गुणानां च परार्थत्वात् असम्बन्धः समत्वात्** स्यात् (पू.मी.३-१-२२) इति न्यायात्। उपमितसमासाश्रयणे तु तस्य पूर्वपदार्थप्रधानत्वाच्छशाङ्कस्य तमसां च प्राधान्यं भवेत्। तत्र च न मुख्यार्थान्वयस्वारस्यमस्ति इति **कुवलयानन्दे**-ग्रन्थकृता प्रतिपादितम्॥

**सत्यम्**-अथापि न सम्यक्प्रतिपादितम्-प्राधान्याप्राधान्यविवेकः प्रकरणादिनिवन्धनः, रूपके उत्तरपदार्थप्रधान्याभिधानं न सावत्रिकम्, अपि तु क्वाचित्कमेव। "मुखंचन्द्रः" इत्यादौ चन्द्रसदृशाभिन्नं मुखं इति प्राचीना नुसारेण,, चन्द्रप्रतियोगिकाभेदानुयोगिमुखम् इति नवीनानुसारेण बोधात् उपमानप्रतियोगिकः उपमेयानुयोगिकः अभेदो भासते। इत्थंच विशेषणप्रतियोगिकः विशेष्यानुयोगिकोऽभेदबोधस्सर्वानुभवसिद्धः। अतएव **दीधितिकारादयोऽपि**-भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वम्। भासमानवैशिष्ट्यानुयोगित्वं विशेष्यत्वमिति वदन्ति एवं च उपमेयस्यैव रूपके प्रधान्यम्, उपमानस्य विशेषणत्वमेव। अत एव **ग्रन्थकृता**ऽपि 'तत्वं सत्वं कथय'त्युपमेयप्राधान्यानुगुण्येन रूपकोदाहरणप्रदर्शनमुचितं भवति।

**किञ्च**-मयूरव्यंसकादिसमासाश्रयणमात्रेण- 'मुखं चन्द्रः' इत्यादिवत्

## -तत्त्वालोकः-

उपमेयप्राधान्यं परित्यक्तव्यमिति न नियमः,"राजान्तरम्" "देशान्तरम्"इत्यादौ मयूरव्यंसकादिना समासे कृतेऽपि पूर्वपदार्थभूतराजदेशादेरेव प्राधान्यं **बृहच्छेखरादौ** नव्यैरपि **शेखरकारादिभिः** प्रतिपादितमेव। अत एव च "प्रसन्नेन दृगब्जेन" इत्यत्र मयूरव्यंसकादिसमाससमाश्रित्यापि रूपकत्वमेवपूर्वदार्थप्राधान्येनाश्रितं **नागेशभट्टैः** न पुनः परिणामता।

**अपरंच** -"मयूरव्यंसकादयश्चे"ति सूत्रनिर्देशस्वारस्यानु गुण्यात्, मुखचन्द्रादिपदजातीयानां मयूरव्यंसकदगणे पाठाभावात् विशेषणं विशेष्येण बहुलम्(पा.सू.२-१-५७) इति विशेषणस्य पूर्वनिपाते प्राप्ते परनिपातार्थत्वस्य **कैयट-हरदत्ताभिः** वर्णितत्वात्, तद्गण पाठानुमानमात्रेणोत्तरपदार्थस्यैव प्राधान्यमाश्रयणीयमिति नियमस्य"देशान्तरम् राजान्तरम्'त्यादौव्यभिचारदर्शनाच्च "मुखंचन्द्र"इति व्यासवैरूप्य सम्पादकोत्तरपदार्थप्राधान्यसमाश्रयणस्यानुचितत्वात् "मुखंचन्द्र"इत्यादौ मुखे चन्द्राभेदः प्रतीयते इति चन्द्ररूपकमिति व्यवहारभङ्गप्रसङ्गात्। "आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेः दर्शयति च "। (ब्रह्म.सू.१-४-१) इत्यत्र रूपकविन्यस्तशरीरगृहीतेरिति निर्देष्टव्ये व्यत्यासेनाभिधानं रथिरथादिभावेन रूपितानामात्मशरीरादीनां प्राधान्यस्फोरणायेति **ब्रह्मसूत्रभाष्यकारादिभिः** व्याख्यातत्वाच्च रूपके क्वापि विशेषणस्य उपमानस्य प्राधान्याभिधानं न युक्तम्। उपमेयोत्कर्षायैव उपमानस्योपादानं सर्वत्र। इत्थं सति उपमेयोत्कर्षकतया स्थितमुपमानं कथं वा प्राधान्यमनुभवितुमीष्टे॥

**अपरं च**-रूपके प्रकृतमप्रकृतरूपापन्नं भवतीत्यस्य प्रकृतेऽप्रकृततादूप्यारोपः क्रियते इति खल्वर्थः। तथासति-

संसारमरुकान्तारे परिश्रान्तस्य देहिनः।
त्वभक्त्यमृतवाहिन्यामादिष्टमवगाहनम्॥

इति श्लोकव्याख्यासमये **अप्पय्यदीक्षितैरेव**-अत्र भक्तौ अमृतवाहिनीत्वारोपस्य संसाराध्वश्रमाहरणरूपकार्योपयोगित्वात्परिणामालंकारः "इति उपपादितम्।एवंच-

## -चित्रमीमांसा-

**मुखचन्द्र इति रूपके मुखं महारजतरूपेण पटवदारोप्यमाण-चन्द्ररूपेण स्थगितस्वरूपं भवति। ''मुखचन्द्रेण तापः शाम्यतीति परिणामे तु मुखमनाच्छादितस्वरूपमेव भवति। चन्द्रस्य मुखात्मनैव विरहतापशान्तिहेतुत्वादिति।। उक्तं च-**

**विषय्याकारमारोप्य विषयस्थगनं यदा।**
**रूपकत्वं तदा तत्र रञ्जनेन समन्वयः ।।**
**यदा तु विषयो रूपात् स्वस्मादप्रच्युतो भवेत्।**
**उपयुक्त्यै तदाकारः परिणामस्तदा मतः ।।**

## -तत्त्वालोकः-

मुख्यमवगाहनं वाहिन्यामेवेति तदानुगुण्येन रूपकत्वमेव वक्तव्यं भवेत् नतु परिणामरूपता। अप्रकृता वाहिनी भक्तिरूपतां प्रतिपद्यत इत्यभ्युपगमेऽवगाहनस्य मुख्यस्यान्वयस्वारस्याभावः तत्रत्यव्याख्याविरोधश्च।

अतश्च-रूपके प्रकृतमप्रकृतरूपापन्नं भवतीति अभिधानमुत्तरपदार्थप्रधानं रूपकमित्यभिधानं च मतान्तराभिप्रायेण शाब्दप्राधान्यमात्राश्रयणेन वा कृतमित्यवगन्तव्यम्।

**वस्तुतश्च**-रूपके उपमानोपमेययोर्मध्ये उपमेये उपमानसामानाधिकरण्यं शाब्दरीत्या,आर्थरीत्या वा प्रतीयत इति तावन्निर्विवादम्। सामानाधिकरण्यं च ''भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः। प्रवृत्तिनिमित्तभेदे सत्यपि तयोर्धर्मयोरेकाश्रयत्वमेकस्मिन्नर्थे पर्यवसानं वा वृत्तिरित्यर्थः। कुत्र पर्यवसानं युक्तमिति विमर्शे प्रधान एव पर्यवसानं युक्तम् प्राधान्यं च रूपके उपमेयस्यैव। एवं च उपमानवाचकपदस्य तत्सदृशाभेदेलक्षणया, संसर्गतया वा अभेदेन उपमेये पर्यवसानं तच्चाहार्यमित्येव युक्तम्। नतु स्थगनास्थगनाभ्यां रूपकपरिणामयोः वैलक्षण्यमिति **चक्रवर्तिनोक्तं** विमृश्यमेवेति मनसि निधाय तन्मतमनुवदति-**मुखचन्द्र इति।**

-चित्रमीमांसा-

**अत्रेदं विचारणीयम्-रूपके विषयस्य स्थगनं न तावत् तिरोहितरूपत्वम्। रजतभ्रमेण शुक्तिस्वरूपस्येव आहार्यारोपेण विषयस्य तिरोधानासंभवात्॥**

-तत्त्वालोकः-

**अयं भावः**-कार्पासतन्तूनां द्रवीभूतसुवर्णे निमज्जनेन कार्पासवर्णं आच्छादितं सत् सुवर्णवर्णतया दृश्यते वस्तुतः कार्पासतन्तुगतं शौक्ल्यादिकमन्तराविद्यमानमपि **जतुकाष्ठन्यायेन** पृथङ्न परिदृश्यते। तद्वदेव मुखं रूपके चन्द्ररूपेणाच्छादितं भवति। परिणामे तु मुखं स्वस्वरूपमजहदेव प्रकृतकार्योपयोगि भवति चन्द्रत्वेनाच्छादनेतु प्रकृतकार्योपयोगित्वं न स्यादेवेति।

उक्तमते संवादार्थं तदीयं कारिकाद्वयमनुवदति**उक्तंचेति** यदा विषये उपमेये,विषय्याकारं उपमानस्वरूपताम् आरोप्य विषयनिगरणमन्तरेण उपमानताद्रूप्यप्रतीतिगोचरतां प्रापय्य,विषयस्थगनम् उपमेयस्याच्छादनं भवति तदा रूपकत्वम्। तत्र उपमानस्य रञ्जनेन समन्वयः सम्बन्धः॥ एवं च रूपके विषयी विषयस्य स्वरूपमाच्छादयन्नेवोपरञ्जकं भवतीत्यर्थःपरिणामे तु-विषयः स्वस्मात् रूपात् स्ववृत्त्यसाधारणधर्मात्अप्रच्युत एव उपयुक्त्यैप्रकृतकार्योपयोगाय, तदाकारः विषयः स्वस्वरूपमनाच्छादयन्नेव विषयिरूपतामापाद्य प्रकृोपयोगी भवतीत्युक्तं भवति॥

**चक्रवर्तिना**-स्थगनास्थगननिमित्तको भेदो यः रूपक परिणामयोः कथितः तत्र स्थगनं किं रूपमिति विचारयति-**अत्रेति**। "मुखं चन्द्र" इत्यादौ विषयस्य मुखादेः स्थगनं तिरोहितरूपत्वेन वा विषय्युपसर्जनत्वेन बा विषयिविशेषितत्वेन वेति त्रेधा प्रसज्यते। तेषु नाद्यः, "मुखे चन्द्र "इति ज्ञानमात्रेण मुखस्वरूपस्य तिरोधानं न संभवति। एवं चात्र तिरोधानं मुखे मुखविषयकज्ञानप्रसराभाव प्रयोजकचन्द्रत्ववन्मुखनिष्ठविशेष्यतानिरूपितचन्द्रत्वनिष्ठप्रकारकज्ञानाद्वाच्यम्। तच्च न संभवति यदा मुखं पश्यन्नेव चन्द्र इति मनुते तदानीं च मुखविषयकज्ञानेसत्यपि तत्र सादृश्यातिशयमहिम्ना चन्द्राभेदप्रकारकं ज्ञानं जायते। उक्तार्थे दृष्टान्तमाह-

## -चित्रमीमांसा-

**शरीरके च-''य एवासौ तपति तमुद्गीथमुपासीत'' इत्यत्रोद्गीथस्यादित्यदृष्टिविषयत्वाङ्गीकारे रजतदृष्टिविषयशुक्तिस्वरूपमिवाद्गीथक्रियास्वरूपं तिरोधीयेतेत्याशंक्य आहार्यदृष्टेरतिरोधायकत्वस्योक्तत्वात्॥**

## -तत्त्वालोकः-

**रजतभ्रमेणेति**। यथा शुक्तिं दृष्ट्वा ''इदं रजतमिति जानाति तदानीं च शुक्त्यसाधारणधर्मास्फुरणात् रजतसाधारणधाळथळ्यग्रहणाच्च शुक्तावेव इदं रजतमिति ज्ञानम्। नह्येवंविधात् ज्ज्ञानमात्रात् शुक्तिस्वरूपं तिरोहितं भवति। महारजतरूपेण पटशौक्ल्यवत्। एवं च मुखे चन्द्र इत्याहार्यारोपेण विषयस्य मुखादेः तिरोधानं न संभवतीति भावः।

आत्मख्यातिवादिनां **योगाचाराणां** मतेऽपि-''इदं रजतमिति'' बुद्धिरेव रजतरूपेणावभासते। न तत्र विषयान्तरापेक्षेति मुखचन्द्रइति बुद्धिरेव मुखचन्द्राद्यात्मनावभासत इति तत्रापि विषयस्य तिरोधानं न संभवति। एवं सति ज्ञानमात्रस्यैव विषयतिरोधकत्वाभावे इच्छापरिकल्पितज्ञानस्य विषयतिरोधायकत्वं नास्तीति तिरोहितत्वरूपं स्थगनं न संभवतीति भावः। उक्तर्थे संवादार्थमादित्यादिमत्यधिकरणानुग्रहं प्रकटयति-**शारीरके चेति**।

अयंभावः-आदित्यादिमतयश्चाङ्ग उपपत्तेः (ब्रह्म.सू.४-१-६) इत्यत्र''यएवासौ तपति तमुद्गीथमुपासीत(छा.१-३-१)इति विषयवाक्यमुपादाय कर्माङ्गाश्रयोपासनेषु किमुद्गीथादौ आदित्यदृष्टिः कार्या उत आदित्यादौ उद्गीथादिदृष्टिः इति सन्दिह्य कुत्र कस्य दृष्टिर्युक्तेति शंकायां कर्मणः फलसाधकस्योत्कृष्टत्वात् आदित्यादेर्देवतात्वेन गुणत्वाच्च आदित्यादावुद्गीथादिदृष्टिः कार्येति पूर्वपक्षे प्राप्ते-

स्वयमेव उपासनस्य कर्मत्वात् फलवत्वोपपत्तेःआदित्यादिभावेनापि च दृश्यमानानामुद्गीथादीनां कर्मात्मकत्वानपायात् अनङ्गाश्रयाः आदित्यादि मतयः अंगेषु आदित्यादिमतः अंगेषु उद्गीथादिषु क्षिप्येरन् इति सिद्धान्तितम् **शंकराचार्यैः**॥

## -तत्त्वालोकः-

**यद्यपि-** शारीरके भाष्ये आदित्यदृष्टिविषयत्वाङ्गीकारे उद्गीथस्वरूपं तिरोधीयेतेति स्फुटं नाभिहितम् अथापि आदित्यादिभावेनापिच दृश्यमानानामुद्गीथादीनां कर्मात्मकत्वानपायादिति ब्रुवता **भाष्यकृता** आहार्यदृष्टेरतिरोधायकत्वं ध्वनितं भवतीति आशयेनाभिहितं ग्रन्थकृतेति ज्ञायते। अतएव अस्मिन्नेवाधिकरणे **भामत्याम्** आदित्यादिमतिभिः यद्युद्गीथादिकर्माणि विषयीक्रियेरन् एवंच कर्मरूपेष्वसत्कल्पेषु कुतःफलमुत्पद्येत ? इति **वाचस्पतिमिश्रैः** अभिहितम्।

**अत्रेदं चिन्त्यते-** यदुच्यते ग्रन्थकृता रजतभ्रमेणेत्यादिना तत्कतमं सिद्धान्तमवलंब्य ? किमात्मख्यातिवादिनां **योगाचाराणाम्** ? उत असत्ख्यातिवादिनां बौद्धप्रभेदानां शून्यवादिनाम् ? अथ अख्यातिवादिनां **मीमांसकानाम्** ? आहो अन्यथाख्यातिवादिनां **नैयायिकानाम्**? अथवा अनिर्वचनीयख्यातिवादिनाम् अद्वैतिनां? मतमवलम्ब्येति।

न तावत् आत्मख्याति वादिनां **योगाचाराणां** मतमवलंब्य,तेषां मते ज्ञानव्यतिरिक्तस्य वस्तुसामान्यस्यैवाभावात् तिरोधानप्रसक्तिरेव नास्ति। धर्मिभूतायाश्शुक्तेः तद्धर्मस्य इदंतायाः रजतत्वस्य च निषेधात् रजतत्वस्येव शुक्त्यादिनामप्यसत्यत्वमेवेति विषयतिरोधानस्य प्रसक्तिरेव नास्ति। अतःइदं रजतमिति बुद्धिरेव रजतरूपेणावभासते "इतीदमेव ज्ञानं भ्रमः। तेन विषयतिरोधानप्रसक्तिरेव नास्ति॥

नापि असत्ख्यातिवादिनां **माध्यमिकानां** मतावलम्बनेन, तेषां मते असतो रजतादेः प्रतीतिरित्यभ्युपगमेन शुक्तिस्वरूपस्य असता रजतज्ञानेन न हि तिरोधानं सम्भवति। ततश्चेदृश्याः असत्ख्यातेः न विषयतिरोधायकत्वप्रसक्तिः।

न वा अख्यातिवादिनां **मीमांसकैकदेशिनां** मतावलंबनेन तेषां मते शुक्तिरजतस्थले इदं रजतमित्यत्र इदमंशस्यैव प्रत्यक्षप्रतीति विषयत्वम् न रजतांशस्य। तस्य चक्षुराद्यसंनिकर्षात्। रजतमिति तु स्मृत्याकारदर्शनमित्युक्तत्वेन तादृशभ्रमस्य न शुक्तिस्वरूपतिरोधायकत्वसंभवः।

## -तत्त्वालोकः-

नापि अन्यथारव्यातिवादि **नैयायिक** मतावलम्बनेन तेषां मतेऽपि देशाकालान्तरगतं रजतरूपमेव शुक्तिसंप्रयुक्तेन दोषोपहतेनेन्द्रियेण शुक्त्यात्मना गृह्यते। नचैवं सति अननुभूतस्यपि ग्रहणं स्यादिति वाच्यम्। तादृशग्रहणं प्रति सादृश्यादेः नियामकस्य सत्वेन दोषाभावात्। एवं चैतन्मतेनापि शुक्तिस्वरूपस्य न तिरोधानप्रसक्तिः।

नापि अनिर्वचनीयरव्यातिवादिना**मद्वैतिनां मतेन** तेषामपि मते शुक्तिरजतस्थले रजतमनिर्वचनीयं न .सत्वेन प्रतीयते। भ्रान्तिबाधयोरयोगात्। नाप्यसत्वेन रव्यातिबाधयोरसंभवात्। किन्तु शुक्त्यज्ञानपरिणामभूतं सदसद्भ्यामनिर्वचनीयमपूर्वं रजतमुत्पद्यते इत्यभ्युपगमात्। एवं च शुक्त्यज्ञानपरिणामभूतसदसदनिर्वचनीयस्यापि रजतस्य यथान शुक्तिस्वरूपतिरोधायकत्वं तद्वदेवात्रापि बाधकालिकेच्छाजन्यज्ञान-विषयेणारोपेण विषयस्य तिरोधानं न संभवतीत्यभिप्रायात्।

एतेनैतदुक्तं भवति-**योगाचार-माध्यमिक-मीमांसक-नैयायिकाद्वैतिवादिना-**मनुरोधेन शुक्तौ रजतभ्रमस्य यथा शुक्तिस्वरूपतिरोधायकत्वं नास्ति तद्वदत्रापि मुखे आहार्यारोपेण मुखत्वस्य अतिरोधानात्। **अलंकारचक्रवर्तिना सञ्जीविनीकारेण** विषयस्थगनाभिधानं न तिरोहितरूपत्वाभिप्रायकमिति॥

**वस्तुतस्तु**-शांकरभाष्य, भामती कल्पतरुकारैः "य एवासौ तपति तमुद्गीथमुपासीत"इत्यत्र"शुक्तिकायां रजतधिया शुक्तिस्वरूपमभिभूयते" उद्गीथादिष्वादित्यदृष्ट्या तु उद्गीथादिक्रियास्वरूपंन तिरोधीयत इति स्पष्टं प्रतिपाद्यआहार्यारोपो निराकृतः।

**उक्तंच**-भवेदेतदेवं यद्यध्यासेन कर्मरूपमभिभूयेत। अपि तु माणवक इवाग्निदृष्टिः पिनचित्तीव्रत्वादिना गुणेन गौण्यनभिभूतमाणवकत्वात्तथेहापि। नहीयं शुक्तिकायां रजतधीरिव वह्निधीः येन माणवकत्वमभिभवेत्, किन्तुगौणी, तथयमप्युद्गीथादावादित्यदृष्टिर्गौणीति भावः" इति **भामत्यां वाचस्पतिमिश्रैः**।

## तत्त्वालोकः

अत्रैव **कल्पतरुकारैः अमलानन्दसरस्वतीभिः**"अग्निर्माणवक" इत्यादौ माणवकेऽग्निदृष्टिः केनचित् तीव्रत्वादि गुणयोगेन गौण्येव अनया च माणवकस्य तिरोधानं नास्तीति स्फुटं प्रतिपादितम्।

अनेन रूपकस्थले उपमेयतिरोधानाभावेऽपि उपमानवृत्तिगुणयोगेन उपमेये उपमानस्य गौणीत्वमेवाभ्युपगतम्। न पुनः आहार्यारोपेण विषयस्य तिरोधानासंभवः। परन्तु शुक्तिं दृष्ट्वा "इदं रजत"मिति भ्रमाद्विलक्षणत्वं मुखं चन्द्रः, अग्निर्माणवकः आदित्यो यूपः "इत्यादीनां प्रदर्शितम्। अतश्च-रजतभ्रमेण इत्यारभ्य...उक्तत्वादित्यन्तो ग्रन्थभागः प्राचामननुगुणः पूर्वोत्तरमीमांसकासम्मतश्च। अथापि "**गौणमुख्ययोः" इति न्यायमनु**सृत्य आरोपेण मुख्यतासंपादनायैवमुपन्यस्तम्" इति यत्किञ्चिदिदं समाधानम्।

यतश्चारोपः "मुखं चन्द्र" इत्यादौ मुखे चन्द्रपदशक्यार्थभेदभ्रमरूप एव पर्यवस्यतीति भ्रमाद्वैलक्षण्यमुपपादयतां **वाचस्पतिमिश्राणाम्**, ततोऽपि प्राचीनानाम्-

असंकीर्णस्वभावं सत् वस्तु वस्त्वन्तरात्मना।
आरोप्यतेऽभिधानार्थं कथं नु भ्रान्तिवर्जितैः॥
द्वावपि प्रतिपद्येते सिंहपुंसोर्विविक्तताम्।
नाध्यारोपयितुं शक्तिः तेनैकस्यापि विद्यते॥

इति वदतां **तन्त्रवार्तिककृतां कुमारिलभट्टपादानां** च अननुगुणमिति गौणवृत्तिसमाश्रयणमेव ज्यायः।

इत्थं सत्यपि प्रकृतेऽप्रकृतारोपवर्णनं क्रियत इत्यस्य कोऽयमाशयः स्यात्? **उच्यते**- व्यङ्ग्यरूपकस्थले गौणस्योपमानशब्दस्यानुपलम्भात् आरोपेणैव मुख्यत्वसंभवे मुख्यार्थसादृश्यं लक्षयित्वा तद्द्वारेण तद्वृत्त्यर्थान्तरे वृत्त्यभ्यु पगमस्यान्याय्यत्वात् रूपकेणोपमा व्यज्यत इत्यालंकारिकसमायानुसारेणौपम्यस्य व्यङ्ग्यतासम्पत्तये च गौणवृत्तिव्यपाश्रयणमनावश्यकमित्याशयात्। अतएव

## -तत्त्वालोकः-

**कल्पतरुपरिमले**- ग्रन्थकृता तस्मादारोपपक्ष एव प्रकृतोपयोगी- प्रसिद्धश्च स एव लोके वेदे च। लोके तावत्

किमसुभिर्ग्लपितै र्जड मन्यसे मयि निमज्जतु भीमसुतामनः।
मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः॥

इति। अत्र नलविरहातुरया दमयन्त्या चन्द्रं प्रत्युपालम्भः क्रियते। मृतानां मनः चन्द्रे लगतीति प्रतिपादयन्तीम्, " यत्रास्य पुरुषस्याग्निं वागप्येति वातं प्राणः चक्षुरादित्यं मनश्चन्द्रम् " इत्यादिश्रुतिं श्रुत्वा खलु दमयन्ती मृताचेत् अस्या मनः स्वस्मिन् लग्नं भवेदिति प्रत्याशया मां मारयितुमिच्छसि ? सा तव जडस्य प्रत्याशा निष्फला। यतस्सा श्रुतिः नलमुखचन्द्रविषयेति विबुधो मन्मथः मह्यमुपदिष्टवान् इति ह्युक्तम्। एवं श्रुतेः चन्द्रान्तरविषयत्ववर्णनं नलमुखे चन्द्रत्वारोप एव संगच्छते इत्युक्तम्।

सत्यमुक्तम्- अथापि " लक्षणायामपि संनिकर्षविप्रकार्षौ भवत एव। अध्यासपक्षे हि अर्थान्तरबुद्धिरर्थान्तरे निक्षिप्यत इति विप्रकृष्टा लक्षणा। विशेषणपक्षे तु अवयविवचनेन शब्देन अवयवः समर्प्यत इति सन्निकृष्टा लक्षणा इति **शाङ्करभाष्य**मुपादायान्यपरतया व्याख्यापेक्षया आहार्यारोपपक्षं परित्यज्य "मुखंचन्द्रः " इत्यादौ चन्द्रसदृशाभेदो मुखे लक्षणया भासते निरतिशयसौन्दर्यादीनां व्यङ्ग्यत्वमिति, चन्द्रपदस्य चन्द्रताद्रूप्ये लक्षणा। औपम्यस्य गम्यमानस्य तत्फलत्वमिति वा अभ्युपगमो युक्तः। अन्यथा "गौरश्वः", "अश्वोमहिषः" इत्यादावपि नामार्थयोः अभेदान्वयबोधप्रसक्तेः। किंच "समानाधिकरणनामार्थयोः खलु अभेदान्वयः इष्टः यथा" नीलो घटः" इत्यादौ। भवति चात्राभेदेनान्वयः नैल्यस्य घटत्वस्य च एकस्मिन् घटे विद्यमानत्वात्। सामानाधिकरण्यं च क्वचित् समवायसंबन्धवाच्छिन्न-प्रकारताकबोधजनकत्वं यथा-"नीलो घटः" इत्यादौ। नीलादिपदानां गुणिवाचित्वे अभेदसंबन्धावच्छिन्नप्रकारताशालिबोधजनकवाक्यत्वम् "नीलो घटः" स्तोकं पचति इत्यादौ।

अत एव **शाब्दिकाः**- भिन्नप्रवृत्तिनिमित्तकानां शब्दानाम् एकस्मिन् अर्थे वृत्तिः

## -चित्रमीमांसा-

## नापि विषय्युपसर्जनत्वम्। परिणामेऽपि तुल्यत्वात्।

### -तत्त्वालोकः-

सामानाधिकरण्यमित्याहुः" इति **भगवद्रामानुजमुनिभिः श्रीभाष्ये**ऽनूदितम्। अस्यायमर्थः -

भिन्नप्रवृत्तिनिमित्तकानां भिन्नधर्मावच्छिन्नोपस्थापकानां शब्दानाम् एकस्मिन्नर्थे वृत्तिः एक पदार्थबोधौपयिकसमानविभक्तिमत्वादिरूपाकांक्षाशालित्वम्। तेन-विशेषणतः विशेष्यतश्च एकार्थकानां घटो घटः, घटः कुम्भः इत्यादीनां न सामानधिकरण्यम्। तथा-उभयतो भिन्नार्थानां "गौरश्वः" अश्वोमहिषः "इत्यादीनां च न सामानाधिकरण्यमित्युक्तं भवति।

किंच-अभेदप्रतिपत्तिर्यत्र तत्र सर्वत्र रूपकमेवेत्यपि न वक्तुं शक्यम्, "आयुर्घृतम्" इत्यादौ तदभावस्य प्राचीनानामभिमतत्वात्। सादृश्यप्रतीतिमूलकतया यत्र अभेदप्रतीतिः तत्रैव रूपकतायाः बह्वालङ्कारिकसम्मतेः। "यद्यनुष्णो भवेद्वह्निः" इत्यादौ वह्न्यनुष्णत्वादीनामभेदप्रत्ययस्यानुभविकतया च एतादृशस्थले रूपकपरिहाराय "आदित्योयूपः", "मुखंचन्द्रः" इत्यादिवैदिकलौकिकप्रयोगानुरूप्याय रूपकस्थले शुक्तिं दृष्ट्वा "इदं रजतमित्यादि" भ्रमवैलक्षण्याय च " मुखचन्द्रः" इत्यादौ मुखेचन्द्रसदृशाभेदो भासते। स च लक्षणया इत्येवाभ्युपगन्तव्यः। न पुनः भ्रमपर्यवसायी शक्यार्थभ्रमरूपः आहार्यारोपः, नापि मयूरव्यंसकसमासश्चाभ्युपेय इत्यलम्।

विषय्युपसर्जनत्वरूपं स्थगनं विवक्षितमिति चेन्न। तादृशस्थगनं न रूपकमात्रेऽवस्थितं किन्तु परिणामेऽपि इति, परिणामाद्वैलक्षण्यप्रयोजकं तन्न भवति साधारणत्त्वादित्यव्यावर्तकमित्याह **नापीति।**

विषयिणि उपमाने उपसर्जनत्वं विशेषणत्वम् **परिणामे इति** रूपके यथा विषयः विषयिविशेषणं तथा परिणामस्थलेऽपि विषयः विषयिविशेषणं भवति अतश्च विषयिविशेषणत्वकृतं बैलक्षण्यं परिणामाद्रूपके बैलक्षण्योपयोगि न भवतीत्यर्थः।

## -चित्रमीमांसा-

**उभयत्राप्युत्तरपदार्थप्रधानस्य मयूरव्यंसकादिसमासस्याविशेषात्।**

## -तत्त्वालोकः-

ननु-रूपके विषयिणो विशेष्यत्वं, परिणामे विषयस्येति परिणामे विषय्युपसर्जनत्वं नास्तीति शंक्यं तत्रापि विषयि प्राधान्यस्यैव प्रतीतेः तदाह **उभयत्रेति**।

"मुखचन्द्रं पश्य", "मुखचन्द्रेण तापश्शाम्यती"त्यादिरूपक परिणामोदाहृतिषु। समासविधायकानुशासनान्तराभावादुभयत्रापि "तत्पुरु षाधिकारेण "मयूरव्यंसकादयश्च" इत्यनेनैव समासस्याभ्युपगन्तव्यत्वात् उत्तरपदार्थ प्रधान्य-मेकतरत्र न निवारितमित्यभिमानः॥

**वस्तुतस्तु**-मुखचन्द्रादिप्रयोगेषु उपमेयोत्कर्षकतया उपमानात्यन्तसाम्यस्य कविविवक्षोपारूढत्वेन "**गुणानां च परार्थत्वादिति** न्यायेनोपमानस्योपमेयोत्कर्षकतया गुणत्वमेवेति प्रकृतस्योपमेयस्यैव प्राधान्यमभ्युपगम्य-"उपमितम्" इत्यादिना समास एव युक्तः। पूर्वपदार्थप्राधान्यं च युक्तम्। परिणामात् रूपके बैलक्षण्यं च उपमानस्य रूपकेविशेषणत्वम् परिणामे तु विषयिणः स्वात्मना प्रकृतकार्योपयोगित्वम्। अथवा विषयस्यैव उपमानविशेषणत्वम् "विशेषणं विशेष्येण इति समासकरणात्। अथवा देशान्तरादिशब्दवत् मयूरव्यंसकादित्वेऽप्युत्तरपदार्थाप्राधान्यमिति विवक्षणात् वक्तुं युवचम् **एतेन** अतएवेत्यादिवक्ष्यमाणग्रन्थमपि न समञ्जसम्। अतश्च रूपके इत्यारभ्य विस्तरेण "इत्यन्तो भागश्चिन्त्यः॥

किंच-**ग्रन्थकृतापि** रूपके उपमेयस्य प्राधान्यं **शिवार्कमणिदीपिकायां**-प्रतिपादितम्-"व्याससूत्रमिदं नेत्रम्" इत्यत्र नेत्रं घटादिपरिच्छेदे नेत्रमिव निरपेक्षकारणमिति ग्रन्थावतरणे "अत्र नेत्रत्वारोपरूपेण रूपकालंकारेण इति बदता व्याससूत्रे नेत्रसदृशाभेदः प्रतिपादितो भवत्येव। अथापि आरोपाभ्युपगमोऽधिकः। अत्र वक्तव्योंऽशः असकृदावेदितः॥

## -चित्रमीमांसा-

**अत एव विषयिविशेषितत्वं स्थगनमित्यपि निरस्तम्। विषयिणो विशेष्यत्वात्।**

## -तत्त्वालोकः-

विषय्युपसर्जनत्वरूपं स्थगनमपि न संभवति तद्वैपरीत्यस्यैव उत्तरपदार्थप्रधानेन मयूरव्यंसकादिनैव समासस्य वक्तव्यत्वादित्यभिमानेनाह- **अतएवेति।**

विषयिविशेषणकत्वमित्यपि न वक्तुं शक्यम्। विषयिण एव विशेष्यत्वात् इत्यर्थः।

**वस्तुतस्तु**-रूपके विषयस्य विशेष्यत्वम्-यथा-"अयं हि धूर्जटिः" इत्यादौ। परिणामे च विषयिणो विशेष्यत्वे सति प्रकृतकार्योपयोगित्वम् यथा **एकावल्याम्**-

अमरनगरीसौधोत्सङ्गाधिरोहमहोत्सव
व्यतिकरधुराधौरेयाणामरातिमहीभुजाम्।
मरकतमयीनिश्श्रेणिस्त्वत्कृपाणलताकवीन्
कति कति न कुरुते श्लाघाव्यग्रान्कलिङ्गपुरन्दर॥

इत्यादौ तथानुभवात्। यद्वा रूपके विषय्युपसर्जनत्वम् परिणामे तु शाब्दमार्थं चोपसर्जनत्वं विषयस्येति वक्तुंयुक्तत्वात्। अतश्च स्थगनास्थगनवाचोयुक्ति**श्चक्रवर्तिनो** न युक्ता।

**यदि तु**-विषय्याकारमिति-**चक्रवर्तिकारिकायाः** प्राचीनानुरोधेन एवमर्थः परिकल्प्येत तदा साधुभवेत्-तथाहि-यदा(विषये) विषय्याकारमारोप्य विषयविषयिणौ सामानाधिकरण्येन निर्दिश्य विषयस्थगनं विषयविशेषणत्वेनोपादानं तदा तत्र विषयिणः रञ्जनेन विषयिकर्तृकं यद्रञ्जनं स्वगताह्लादकत्वादिमत्तया विषयस्य बुद्धावुपस्थापनं तेन समन्वयः समीचीनस्सम्बन्धश्चेत् रूपकत्वम् रूपकालंकार-त्वमित्यर्थः। तथाच रूप्यरूपकयोरुपस्थितौ सत्याम् आरोप्यवृत्तिधर्म-सजातीयधर्मवत्त्वस्य रूपणाधिकरणे प्रत्यायनं तदा रूपकालंकारतेत्यर्थः।

-चित्रमीमांसा-

तस्मात् स्थगनास्थगनवैलक्षण्यवचो निरालम्बनमिति विषयात्मनोपयोगेनैव परिणामस्य रूपकाद्वैलक्षण्यं समर्थनीयमित्यलं विस्तरेण।।

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजि
श्रीरङ्गराजाध्वरिवरसूनोरप्पय्य दीक्षितस्य
कृतौ चित्रमीमांसायां
।।परिणामालंकारप्रकरणम्।।

-तत्त्वालोकः-

यदा तु विषय इत्यस्य अयमर्थः-यदा तु विषयः उपमेयः स्वस्मात् रूपात् अप्रच्युतः उपमानवृत्तिधर्मेणानुपरक्तस्सन्नेव तदाकारः उपमानस्योपरञ्जकतां प्राप्तः उपयुक्त्यै भवेच्चेत् तदा परिणामो मतः परिणामालंकार इष्टः।तथा च विषयो यदा विषयिणमुपरञ्जयन् प्रकृतोपयोगि भवति तदा परिणामतेष्टेति फलितोऽर्थः।

एवं व्याख्याने-"आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम" इति **रूय्यक** सूत्राक्षरानुगुण्यमपि। यतस्सूत्राक्षरानुरोधेन आरोप्यमाणस्य प्रकृतोपरञ्जकत्वे **रूपकम्।** आरोप्यमाणस्यैव प्रकृतोपयोगित्वे **परिणामः**"इत्येवं विधार्थस्य प्रतीतेः। तद्व्याख्यात्रा **सर्वस्वसंजीविनीकारेण**-मूलसूत्रारूढतया व्याख्याकरणस्यैव औचित्यात्। ग्रन्थकृदभिहितप्रकारस्तु स्वकृतलक्षणानुसारीत्येत्यन्यदेतत्।

**चक्रवर्तिमतं** निरालम्बनमित्यभिमानेन दूषणमुपसंहृत्य परिणामस्य रूपकात् वैलक्षण्यं स्वकृतलक्षणारूढतया प्रतिपाद्य परिणामप्रकरणमुपसंहरति-**तस्मादित्यादिना।**

तस्मात् त्रिविधस्यापि स्थगनस्योक्तौ उपयोगाभावात्, स्थगनास्थगन-वैलक्षण्यवचः- रूपके स्थगनं, परिणामे तदभाव इति वैलक्षण्यप्रतिपादनम्, निरालम्बनम् निर्युक्तिकमिति हेतोः प्रकारान्तरेण वैलक्षण्यस्य वक्तुं शक्यत्वात् इति

## -तत्त्वालोकः-

भावः। बैलक्षण्यप्रयोजकश्च-परिणामे विषयिणः विषयात्मनोपयोगः रूपके तु न तथेत्येतावानेव स च परिणामस्य रूपकात् वैलक्षण्यसाधक इति यावत्।

**वस्तुतस्तु**-रूपक एव विषयिणः विषयात्मनोपयोगः। अत एव तत्कार्यकारित्वादिकं व्यज्यते। परिणामे तु विषयस्य विषय्यात्मनोपयोग इत्येव **राजानकरूय्यकस्य** सूत्रकृतोऽभिप्रायः स्यादिति **एकावलीकारा**दृतपरिणामलक्षणानुगुण्येन प्रतीमः। अत एव क्वचित्केवलो विषयः स्वात्मना न प्रकृतोपयोगीत्ययमारोप्यमाणाभिन्नतया अवतिष्ठते तत्र आरोप्यमाणपरिणामः। यथा-

वदनेनेन्दुना तन्वी शिशिरीकुरूते दृशौ।

इत्यत्र, क्वचिच्चारोप्यमाणः स्वात्मना न प्रकृतकार्योपयोगीत्ययं विषयाभिन्नतयावतिष्ठते तत्र विषयपरिणामः। यथा-

वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति।

इत्यादौ। एवं च परिणामद्वयात्मकमिदं रूपकमेवेत्याहुः। विमर्शे तु विषयस्य विषय्यभिन्नतयावस्थाने परिणामता। विषयिणो विषयाभिन्न तयावस्थाने रूपकतेति युक्तमिति वक्तुं शक्यमितिदिक्॥

इति श्रीमदत्रिकुलतिलकश्रीराममिश्रवंश्येन शोभाञ्जनग्रामा (नुग्गेहल्य)
भिजनेन सोमयाजियाण्डान्.जनार्दनाचार्यविदुषस्तनूजेन सीताम्बा
गर्भसम्भवेन,श्रीमन्महीशूरपुरीमध्यविद्योतमान श्रीमन्महाराज
संस्कृतमहापाठशालायां सरस्वतीप्रासादारव्यायाम् **अलंकार**
**शास्त्र प्राध्यापकेन न्यायालङ्कारव्याकरणविदुषा**
**पण्डितरत्नादि** बिरुदभाजा, आस्थानविदुषा **सो. रामस्वामि**
**ऐय्यङ्गार्यशर्मणा विरचिते चित्रमीमांसा**
**व्यारव्याने तत्वालोकारव्ये**

## परिणामालंकार प्रकरणं समाप्तम्॥

॥शुभं भूयात्॥

## चित्रमीमांसा-

## ससन्देहप्रकरणम्

**अथ ससन्देहः-**

**साम्यादप्रकृतार्थस्य या धीरनवधारणा।**
**प्रकृतार्थाश्रया तज्ज्ञैः ससन्देहः स इष्यते।।**

तत्त्वालोकः-

### ससन्देह प्रकरणम्-

अभेदप्रधानेषु रूपक-परिणामौ निरूप्य ससन्देहं निरूपयितुम् उपक्रमते-**अथ ससन्देह इति।**

तत्रतावत्-**वामनः** "उपमानोपमेयसंशयः सन्देहः" इत्यसूत्रयत्। **रुद्रटोऽपि**-संशय इति नाम्ना व्याजहार। **सर्वस्वकारश्च** सन्देह इत्याह। एवमन्येऽपि सन्देहसंशयनामभ्याममुं व्यवजहुः। **भामह-दण्डिप्रभृतयः** ससन्देह इति व्यवजहुः। एवं चोभयथाऽपि संज्ञा वर्तते। ससन्देह इति नाम्नःपरिग्रहे सन्देहेन सह वर्तते वर्ण्यत्वेनेति विग्रहादलंकारसंज्ञा। चमत्कारजनकसादृश्यमूलकसन्देहत्वं लक्षणम्। तत्र कस्यचिल्लक्षणमुपादाय तत्राव्याप्त्यतिव्याप्ती प्रदर्शयितुं तल्लक्षणमनुभाषते **साम्यादिति।**

प्रकृतार्थाश्रया साम्यात् अप्रकृतार्थस्य अनवधारणा या धीः सा तज्ज्ञैः सः ससन्देह इति इष्यते इत्यन्वयः।।

प्रकृतो योऽर्थः उपमेयरूपं यद्वस्तु सः आश्रयो धर्मी विशेष्यं यस्याः धियः सा। उपमेयधर्मिकेति यावत्। अप्रकृतार्थस्य उपमानस्य षष्ठयाः विषयत्वं घटस्य ज्ञानमितिवत्। उपमानकोटिका या अनवधारणा अनिश्चयात्मिका संशयात्मिका धीरित्यर्थः। तज्ज्ञैः सहृदयैः ससन्देह इष्यते अभिमतो भवतीति यावत्। तथा च-उपमेयधर्मिकचमत्कारजनकसादृश्यप्रयोज्योपमानकोटिकस्संशयो यत्र तत्र

।।।

## चित्रमीमांसा-

**त्रिविधश्चाप्ययं ससन्देहः शुद्धः निश्चयगर्भः निश्चायान्तश्च । क्रमेण यथा-**

-तत्त्वालोकः-

ससन्देहनामा अलंकारः। उपमेयधर्मिकत्वविशेषणात्-"स्थाणुर्वा पुरुषोवे"त्यादिव्यावृत्तिः। अन्यथा तत्रापि स्थाणुपुरुषोभयसाधारणोर्ध्व-तादिरूपसाधारणधर्मज्ञानजन्यतया तत्संशयस्य साम्याद् इत्युपादानेनाप्यवारण प्रसंगात्। संशयोपादानात्-

"कपाले मार्जारः पय इति करान् लेढिशशिनः"

इत्यादि भ्रान्तिमति नातिव्याप्तिः अत्र शशिकिरणेषु पय इति ज्ञानस्य निश्चयात्मकत्वात् नातिव्याप्तिरित्यर्थः। सादृश्यप्रयोज्यत्वविशेषणात्-

अमुष्य धीरस्य जयाय साहसी
तदा खलु ज्यां विशिखैः सनाथयन्।
निमज्जयामास यशांसि संशये
स्मरस्त्रिलोकीविजयार्जितान्यपि।।

इति **नैषधपद्ये** नातिव्याप्तिः। अत्र यशसः संशयेनिमज्जनोक्त्या "यशःसुप्रतिष्ठितं भवति नवेति" सन्देहो लभ्यते। अथापि चमत्कारिणः सादृश्यस्य विवक्षितत्वेनादोषात्। दुर्जय विजयोद्योगसाहसप्रयुक्तः कीर्तिभ्रंशसन्देह इति च नात्र सन्देहता इत्युत्तरत्रोपपादयिष्यते।।

तं विभजते-**त्रिविधश्चेति**।

सन्देहे शुद्धत्वं च उपमेये उपमानतादात्म्यप्रतिबन्धकस्य उपमेयतावच्छेदकव्याप्यस्य, उपमानतावच्छेकव्याप्यस्य वा अनुपादानात् संभवति। यथा आनीयेत्यादौ। **निश्चयगर्भ** इति। यत्र उपमानतावच्छेदकव्याप्यधर्मस्योपादानेन तत्कोटिकसंशयाभावेऽपि प्रकृतनिर्णयाभावात् कोटयन्तरमादाय संशयस्योत्पत्तिः तत्र निश्चयगर्भत्वम्। यथा-

**चित्रमीमांसा-**

**आनीय द्विषतां धनानि विपिने राजन्यचूडामणे**
**तेष्वालोक्य विनिर्मलं हिमकलाखण्डं करण्डं पुनः।**
**किं वाद्यं किमुपेषणं किमु धनं किं क्षेपणीयायुधम्**
**किं वा दैवतमित्यनिश्चितधियः मन्दाः पुलिन्दा जनाः।।**

तत्त्वालोकः-

"अयं मार्तण्डः किम्?" इत्यादौ। **निश्चयान्त** इति। यत्र उपमेयतावच्छेदकव्याप्यधर्मस्योपादाने प्रकृतनिर्णयस्योत्पत्तिः तत्र संशयान्तरानुदयात् निश्चयान्तत्वम्। यथा- "किं तावत्सरसीति" वक्षयमाणमुदाहरणम्। तेषुनिर्देशक्रमादुदाहरति **क्रमेण यथेति** शुद्धससन्देहो यथेत्यर्थः।**आनीयेति**

राजन्यचूडामणे! क्षत्रियजातौ मूर्धन्य? राजन् शब्दात् "राज्ञो जातावेवेति वाच्यम्" इत्यनुरोधेन "राजश्वशुराद्यत्"(पा.सू.४.१.१३७) इति यत्प्रत्यये "येचाभावकर्मणोः (पा.सू.६.४.९६८)इति प्रकृतिभावः। राजरत्न! इति यावत्। मन्दाःअज्ञाः अपटवो वा, पुलिन्दाः निष्ठचपूर्विकायां किरात्यां शबरादुत्पन्नाः पर्णशबराः इति परिभाषिताः म्लेच्छजातिविशेषाः ते जनाः,द्विषतां भवद्विषां, धनानि =अमूल्यवस्तूनि, आनीय=परिगृह्य,विपिने=कानने, वृक्ष-गुल्म-लतादिभिरावृतेप्रदेशे, निधाय, तेषु अमूल्यवस्तुषु मध्ये एकं विनिर्मलं अत्यन्तनिर्मलं हिमकलाखण्डं चन्द्रकलेव भासमानं करण्डं=कर्पूरादिपात्रम् (भरणि इति कर्णाटभाषायां) आलोक्य परिदृश्य, किम् वाद्यम्? वादित्रं किं,?किमु पेषणं? चूर्णनपाषाणं किम्?किमु धनम्?=व्यवहारोपयोगि वस्तु किम्? क्षेपणीयायुधं शत्रूणामुपरि पातनीयं प्रहरणं किम्? वा अथवा, सर्वेभ्यः अतिशयितं दैवतं इष्टार्थदम् आराध्यवस्तु किम्? इति अनिश्चितधियः अनिर्धारितबुद्धयो जाता इत्यर्थः।

अत्र करण्डे वाद्यं नवेत्यादिसंशये जाते पूर्वपूर्वसन्देहव्यावर्तकस्य उपमेयतावच्छेदकव्याप्यस्य, उपमानतावच्छेदकव्याप्यस्य वा धर्मस्य अनुक्तत्वेन सन्देहस्यैवावस्थानात् शुद्धत्वम्। करण्डे वाद्याद्याकारसादृश्यनिबन्धनश्च तत्संशय इति भावः।

चित्रमीमांसा-

**अयं मार्ताण्डः किं? स खलु तुरगैस्सप्तभिरितः**
**कृशानुः किं? सर्वाः प्रसरति दिशो नैव नियतम्।**
**कृतान्तः किं? साक्षान्महिष वहनोऽसाविति चिरं**
**समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः।।**

तत्त्वालोकः-

निश्चयगर्भमुदाहरति **अयं मार्ताण्ड इति**। हे राजन्! आजौ=युद्धे, त्वां विलोक्य=आलोक्य, प्रतिभटाः=प्रतियोद्धारः, विकल्पान्=सन्देहान्, विदधति=कुर्वते। किमिति किमिति विकल्पयन्तीत्यत्राह-**अयमिति**। अयम्=पुरो विलोक्यमानो मार्तण्डः किम्? =दिनमणिःकिम्? प्रकृष्टप्रतापवत्वात्, अथापि अयं सूर्यो न भवितुमर्हति यतः स सूर्यः सप्तभिःसप्तसंख्याकैः तुरगैः=अश्वैः इतः=युक्तः खलु तथा लोकैः ज्ञातः खल्वित्यर्थः। "सप्तयुञ्जन्ति रथमेकचक्रम्, एको अश्वो वहति सप्तनामा इति श्रुतिः, एक एवाश्वः सप्तनामभिर्व्यवह्रियत इत्याह। सप्ततुरगाभावान्नसूर्य इति मध्ये निश्चयः। राजासाधारणधर्माज्ञानाच्चान्ते सन्देह एव। तर्हि किं कृशानुः? वह्निःकिमित्यर्थः। एवं सन्देहे च हेतुः दुर्ग्रहत्वम् अथापि अयं वह्निर्न भवितुमर्हति यतस्सः कृशानुः सर्वादिशो नित्यं व्यवस्थितरीत्या न प्रसरति किन्तु वाय्वभिमुखतयैव। अयं तु सर्वासु दिक्षु प्रसरति। अतश्च नायं वह्निरिति निश्चयः राजेत्यादिपूर्ववत् अन्ते सन्देह एव, तर्हि क्रौर्यातिशयदर्शनात्कृतान्तस्स्यादिति संशेते **कृतान्तः किमिति**। साक्षात् प्रत्यक्षः, कृतान्तः किं?=मृत्युःकिम्? यतःअसौ महिषवाहनःअयं तु न तथा प्रत्युत अनर्घ्यरथादिवाहनः । अतश्च नायं कृतान्त इति निश्चयेऽपि राजासाधारण-धर्मादर्शनात्संशयः।।

अत्र राज्ञि अयं मार्ताण्डो नवेत्यादिसंशये जाते मार्ताण्डत्वव्याप्य-सप्ततुरगवत्वरूपो धर्मः उक्तः। तेन मार्ताण्डत्वसंशये निवृत्तेऽपि पुनःकृशानुत्वा-दिना संशयोऽस्त्येवेति निश्चयगर्भः सन्देहः। परन्तु निश्चयान्ते सन्देहस्य वाच्य-त्वमेव। किंतु वैधर्म्यमात्रोक्त्या निश्चयस्य व्यङ्ग्यता परिशेषो वा।

## चित्रमीमांसा

**किं तावत्सरसि सरोजमेतदारात्**
**आहोस्विन्मुखमवभासते तरुण्याः।**
**संशय्य क्षणमिति निश्चिकाय कश्चित्**
**बिब्वोकै र्बकसहवासिनां परोक्षैः॥**

**इति वदन्ति।**

### तत्त्वालोकः-

एवं चात्र सूर्याद्युपमानतावच्छेदकव्याप्यधर्मस्योपादानेन तत्कोटिकसंशयाभावेऽपिप्रकृतनिर्णयाभावात् कोटयन्तरमादाय संशयस्योत्पत्तेः निश्चयगर्भत्वमिति भावः॥

निश्चयगर्भं ससन्देहमुदाहृत्य निश्चयान्तं तमुदाहरति- **किं तावदिति**।

**माघकाव्ये**-जलविहरणप्रसङ्गे केनचिदेवं समशायि इति कविराह-**किंतावदिति**। कश्चित् विलासशीलः, सरसि पुष्करिण्याम् ,आरात् दूरात्, एतत् पुरोवर्ति तावत्सरोजं किम्? आहोस्वित् =उत, तरुण्याः मुखम् अवभासते इति क्षणं कश्चित्कालं संशय्य सन्दिह्य, शीङः क्त्वो ल्यपि अयङ्यिक्ङिति (पा.सू.७.४.२९) इत्ययङादेशः। तदनन्तरं बकसहवासिनां निश्चलतयावस्था- नस्वभावानां मत्स्यनिश्चयार्थं निश्चलतया स्थायिनां बकानां, यानि सहचारीणि सदृशानि पद्मानि तेषामपि परोक्षैः अगोचरैः अननुभूतचरैः, बिब्बोकैः इष्टार्थप्राप्तिप्रयोजकाभिमानगर्भसंभूतैः स्त्रीणां (भाव) व्यापार विशेषैः, निश्चिकाय विशेषदर्शनान्मुखमिति निश्चितवान्।

अत्र भावविशेषजन्यव्यापारविशेषरूपो बिब्बोकःसरोजे न संभवतीति मुखव्याप्यतया ज्ञाने सति मुखनिश्चय इति तदनन्तरं संशयाभावात् निश्चयान्तः ससन्देहोऽत्रेति बोध्यम्। नायिकानिर्णयानन्तरं च मुखनिर्णयः।

अत्रबिब्बोकस्य मुखवर्तित्वाभावात् "माघो बिब्बोके बभ्रामेति" प्रवादः।

उक्तं च **कुट्टनीमतव्याख्यायाम्**

माघो बभ्राम बिब्बोके, तत्रैवामरनामकः।
ताभ्यांसमो मया दृष्टः श्रीहर्षः किलिकिञ्चिते॥ इति

## चित्रमीमांसा-

**अत्रेदं विचारणीयम्।**

**साम्यादिति किमन्नाद्धेतोर्वसतीतिवत्फलत्वेन हेतुत्वविवक्षया पञ्चमी।**

## तत्त्वालोकः-

इत्थं **स्थालीपुलाकन्यायेन** प्राचीनलक्षणेष्वेकं ससन्देहलक्षणं सोदाहरणं प्रदर्श्य विचारयति-**अत्रेदमिति।**

साम्यादप्रकृतेति प्राचीनलक्षणे साम्यादिति पंचमी श्रूयते सा किं फलमभिधत्ते अथवाहेतुमिति विकल्पयति **साम्यादिति!**

**अयं भावः**- प्रकृत्यर्थस्य फलत्वविवक्षायां, तस्यैव हेतुत्व ।विवक्षायां च पञ्चमी परिदृश्यते। प्रकृते च किं साम्यप्रतिपत्तये सन्देहः? उत साम्यहेतुकस्सन्देहो निबध्यत इति सन्देहाद्विकल्पः।।

**यद्यपि**-"पुण्येन दृष्टो हरिः" "अध्ययनेन वसति" इत्युदाहरणानुरोधेन फलस्यापि हेतुत्वं परिदृश्यते। परं तु तृतीयाविभक्तिर्भविष्यति, हेतौ (पा.सू.२.३.३३)इति सूत्रात् न तु पञ्चमीति दार्ष्टान्तिके प्रकृत्यर्थफलत्वविवक्षायां कथं पञ्चमी साधुतां व्रजेत्। दृष्टान्ते-"अन्नाद्धेतोः वसति" इत्यत्र हेतुशब्दप्रयोगात् "षष्ठी हेतु प्रयोगे(पा.सू.२.३.२६) इति षष्ठ्या भाव्यं अन्नस्य हेतोर्वसतीतिवत् न तु अन्नाद्धेतोरिति शक्यशङ्कम् अथ।पि-विकारागमेषु परविज्ञानात्" इति भाष्यमुपादाय विभाषा गुणेऽस्त्रियाम् (पा.सू.२.३.२५) इति हेतौ पञ्चमी। फलमपि प्रयोजकत्वद्धेतुरित्युच्यत इति "प्रत्ययः"(पा.सू.३.९.९.) इति सूत्रस्थ **वार्तिक-भाष्यकैयटा**दिवचनप्रामाण्यानुरोधेनात्र प्रकृत्यर्थसाम्यस्य फलत्वविवक्षायां "साम्यात्" इत्यत्र "विभाषा गुणेऽस्त्रियाम्" इति वैकल्पिक्याः पञ्चम्याः प्रवृत्त्या तदुपपत्तेः। एवमेव दृष्टान्तेऽपि "अन्नात्हेतोर्वसती"त्यत्रअन्नस्य फलत्वविवक्षायां हेतुशब्दप्रयोगेऽपि तन्मुख्यार्थविवक्षाया अभावात् "विभाषा गुणे" इति सूत्रे "विभाषा" इति योगविभागात् पञ्चमीति बोध्यम्। एवं च दृष्टान्तदार्ष्टान्तिकयोः न वैषम्यप्रसक्तिरिति।।

**चित्रमीमांसा-**

**उत स्वतो हेतुत्वविवक्षया। आद्ये अप्रकृतसाम्याभिव्यक्तिफलकत्वमर्थः स्यात्। तथा सति "आनीय द्विषताम्" इत्याद्युदाहरणेऽव्याप्तिः।नहि तत्र हिमकरण्डस्य वाद्यादिस्दृश्याभिव्यक्तौ कविसंरम्भः, किन्तु द्विषत्पुरमीदृशीमवस्थामापन्नमितिराज्ञः प्रतापातिशायाभिव्यक्तौ।**

**द्वितीये "साम्यादि"त्यनेन किमेकमेवाप्रकृतसाम्यं यावत्सन्देह कोटयुपस्थितिहेतुत्वेन(यावत्सन्देह कोटयुच्छित्ति हेतुत्वेन इति पाठोपि) विवक्षितम्। उत एकमनेकं वा इत्यनियमः?**

तत्त्वालोकः-

**उत स्वत इति।** साम्यस्य यदि सन्देहं प्रति प्रयोज्यत्वं तदापि "विभाषा गुणे"इत्यस्मादेव पञ्चमी। अस्याः हेतुतृतीयापवादत्वात्। यथा "पाण्डित्यान्मुक्तः" इत्यादौ पाण्डित्यस्य हेतुत्वे विवक्षितेऽपि पञ्चम्याः दर्शनादिति भावः।

तयोराद्ये- "आनीयद्विषतामि"त्याद्युदाहरणेष्वव्याप्तिरित्याह **आद्य इति।** तत्प्रकारमुपपादयति **नहि तत्रेति।**

तत्र आनीयेति पद्ये, हिमकरण्डस्य इति षष्ठ्याः अनुयोगित्वमर्थः हिमकरण्डानुयोगिकं वाद्यादिप्रतियोगिकं यत् साम्यं तस्याभिव्यञ्जने नहि कवेः तात्पर्यम्. किन्तु शत्रुनगरीदुरवस्थानिवेदन एव। परंतु फलार्थिका पंचमीत्युपगमे तस्यैव प्राधान्यं प्रतीयात्। नचात्र तथेति लक्षणं न व्याप्नोतीत्यव्याप्तिरिति भावः। एतेन अप्रकृतसाम्याभिव्यक्तिफलकस्सन्देह इति लक्षणं न युज्यते इत्युक्तं भवति।।

द्वितीये कल्पे दूषणाभिधानाय विकल्पते-**द्वितीयेत्यादिना।**

द्वितीये सन्देहफलकं यत्साम्यं तस्मात् इत्यर्थविवक्षायां "साम्यात्" इति एकवचनश्रुतेः **कपिञ्जलाधिकरणन्यायेन** एकधर्ममात्रप्रयोज्या या यावत्सन्देह-

**चित्रमीमांसा-**

**आद्ये "अयं मार्तण्डः किम्?" इत्युदाहरणेऽव्याप्तिः। नहि तत्र "किंलक्ष्मीरुर्वशीवेयंरम्भावामेनकाथवा" इत्यत्रलक्ष्मीत्वादिविकल्पेषु अतिशयितसौन्दर्यसाम्यवदेकमेव साम्यमिह मार्तण्डत्वादिविकल्पेषु हेतुः। किन्तु प्रतापेन दुर्निरीक्षणत्वसाम्यं मार्तण्डत्वविकल्पे, दुराधर्षत्वसाम्यं कृशानुत्वविकल्पे, क्षणेन सकलसंहर्तृत्वसाम्यं कृतान्तत्वविकल्पे च हेतुः।।**

**तत्त्वालोकः-**

कोट्युपस्थितिः तत्र सन्देह इति विवक्षेति यावत्। **उतेति**। नात्र कपिञ्जलाधिकरणन्यायप्रसक्तिः यावत्सन्देहकोट्युपस्थापकधर्मस्यैकत्वे नानात्वे वा प्रत्यवायाभावात् उभयथाऽपि ससन्देहताभ्युपगम्यते। **कपिञ्जलाधिकरणे** तु "त्रयाणां कपिञ्जलानामालम्भने विधेश्चरितार्थतायास्संभवात्, तदपेक्षयाधिककपिञ्जलालंभने प्राणिहिंसा प्रयुक्तप्रत्यवायात् त्रयाणामेवालम्भनमिति **पूर्वतन्त्रे** निर्णयः कृत इत्यभ्युपगम्यतं इति द्वितीयविकल्पाशयः।

तयोराद्ये अव्याप्तिरित्याह-**आद्येइति**। तामेवोपपादयति-**नहि तत्रेत्यादिना**।

**अयं भावः**-एकस्मिन् वस्तुनि नानाधर्मिकस्संशयः क्वचिदेकेनैव धर्मेण भवेत्, यथा"किंलक्ष्मीः"इत्यादौ इदंपदवाच्यायां नायिकायां लावण्यातिशयमेकमेव साधारणधर्मं निमित्तीकृत्य लक्ष्मीत्वोर्वशीत्व-रम्भात्व-मेनकात्वविकल्पः क्रियते। क्वचित् "अयं मार्ताण्डःकिम्" इत्यादौ तु प्रकृते राज्ञि मार्ताण्डत्वादिविकल्पे दुर्निरीक्ष्यत्वादि साधारणधर्माणामनेकत्वमेव नत्वेकत्वमित्युक्तोदाहरणेऽव्याप्तिः पसज्येत। तत्र "किं लक्ष्मीः" इत्यादिस्थल इवैकस्यैव धर्मस्य साधारणस्य वक्तुमशक्यत्वात् सादृश्यप्रयोजकैकसाधारणधर्मकोपमेयकोटि कनानाधर्मिकस्सन्देह इति लक्षणं न समीचीन मित्युक्तं भवति।

चित्रमीमांसा-

द्वितीये-

इह नमय शिरःकलिङ्गवद्वा समरमुखे करहाटवद्धनुर्वा।

इति विकल्पालंकारे ऽतिव्याप्तिः।। अत्र दिग्विजयप्रवृत्तेन बलवता राज्ञा समरे प्रसक्ते यथा कलिङ्गनृपतिः-

समाक्रान्तो बलवता कांक्षन्नभ्रंशिनीं श्रियम्।
श्रयेत वैतसीं वृत्तिं न भौजङ्गीं कदाचन।।

इति नीतिमनुसृत्य असन्दिग्धं निजराज्यलक्ष्मीभ्रंशपरिहारकामः शिरो नामितवान् तथा वा शिरोनमय। यथा करहाटनृपतिः

"जयेन लभ्यते लक्ष्मीः मरणेन सुराङ्गना।"

इति नीतिमनुसृत्य युद्धकामोधर्नुर्नामि तवान् तथावा धनुः नमयेति समयोचिताप्तोपदेशे तत्तद्राजचरितदृष्टान्तप्रापितानवस्थितार्थ धीसत्वात्।।

तत्त्वालोकः-

अथोपमेयकोटिकसादृश्यप्रयोजकैकानेकान्यतर साधारणधर्मनिमित्तकः ...नाधर्मिकस्सन्देहः इति यद्युच्यते तदापि विकल्पालंकारेऽतिव्याप्तिरित्याह **द्वितीयेइति**

अत्र किं शिरोनमनमावश्यकम्, उत धनुर्नमनमिति सन्देहात् अतिव्याप्तिरिति ...त्। "इह नमयेत्यत्र" अतिव्याप्तिप्रकारमुपपादयति **अत्रेति**। अत्र= "इह नमयेति" ..., दिग्विजयप्रवृत्तेन तत्तद्देशीयाधिपतीनां राज्ञां स्वायत्तीकरणार्थं प्रवृत्तेन बलवता- ...द्बलयुतेन प्रज्ञाबलयुतेन च राज्ञेत्यर्थः। **समाक्रान्त इति**

**अयं भावः**-"अव्यवस्थौ हि दृश्येते युद्धे जयपराजयौ"

...रीत्या युद्धस्यैकान्तं जयप्रापकत्वानिश्चये सति बलवता अभियुक्तः अविनाशिनीं ...मिच्छन्स्वस्मिन् दुर्बलत्वे ज्ञाते शिरो नमयेत्। बलिष्ठत्वे तु धनुर्नमयेत्

**चित्रमीमांसा-**

**न च तत्र श्लोके तादृग्धीनिबन्धनं नास्तीति नातिव्याप्तिरिति वाच्यम्। तन्निवन्धनस्यापि लक्षणान्तर्गतिविवक्षायां-**

तत्त्वालोकः

बलराहित्येऽपि "रणेधीरम्" इत्युक्तरीत्या धैर्येण युद्धेकृते जयः स्वर्गसुखं वा लभ्यत इति मत्वा युध्येत इति उभयविधदृष्टान्तपर्यालोचनया इत्थमेव कार्यमिति निर्णयाभावात् सन्देह इति।

**वस्तुतस्तु-** "इह नमये"ति पद्ये "व्रीहिभिर्यवैर्वायजेत" इत्यत्रेव व्यवस्थितविकल्पार्थक एव वाशब्दः न तु संशयार्थकः यतः तत्र व्रीहजन्यत्वस्य यवजन्यत्वस्य च यागसामानाधिकरण्येनाबोधनात्। तद्वदत्रापि- शिरोनमन-धनुर्नमनयोरन्यतरस्य व्यवस्थितत्वमेवेति न संशयस्य प्रसक्तिरिति विकल्पालंकारोदाहरणे अतिव्याप्तेरभावात् इदं दूषणाभिधानं चिन्त्यम्।

**किञ्च-** उक्तसन्देहलक्षणे साम्यादिति खलूपात्तम्। "इह नमय"इति पद्ये तु-

बलीयसि प्रणमतां काले विक्रमतामपि।
सम्पदो नापगच्छन्ति प्रतीपमिव निम्नगाः॥

इति(९-५१)**कामन्दकनीत्य**नुसारेण "समाक्रान्तो बलवता"इति"जयेन लभ्यते लक्ष्मीः"इति पूर्वोदाहृतनीतिशास्त्रवाक्याभ्यां क्रमेण कोटिद्वयोपस्थितिः न तु सादृश्यज्ञानादिति तस्य अन्यथासिद्धत्वाद्रासभादिवत् हेतुत्वासम्भवात् प्रतीतमपि साम्यमप्रयोजकम्। एवं च उक्तविकल्पोदाहरणेऽनवधारणात्मकधीश्च दृष्टान्तप्रापितैव न तु साम्यप्रापितेत्यतिव्याप्तेर्नावकाशः।

**यदितु-** साम्यस्य वाच्यत्वं विवक्ष्यते तदा नोक्तप्रत्युदाहरणे अतिव्याप्तिरित्यपि न वक्तुं शक्यमित्याह-**नच तत्रेति**।तत्र" इहनमयेति पद्ये", तादृग्धीनिबन्धनं=अनवधारणात्मिकायाधियः निबन्धनं मूलमेकमेनकंवा साम्यं नास्ति नोपादीयत इति अतिव्याप्तिः, अलक्ष्ये लक्षणसमन्वयो नेति नच वाच्यमित्यर्थः।

तथा साम्यस्य वाच्यत्वविवक्षामुपगम्य अतिव्याप्तिवारणे कृतेपि व्यङ्ग्यसन्देहोदाहृतिषु अव्याप्तिः प्रसज्यत इति बाधाकमुपन्यसितुम् आह **तन्निबन्धनेति**।

**चित्रमीमांसा-**

**जीवनग्रहणे नम्राः गृहीत्वा पुनरुन्नताः।**
**किं कनिष्ठाः किमु ज्येष्ठाः घटीयन्त्रस्य दुर्जनाः॥**

**इत्यादिषु सन्देहविषयनिबन्धनगम्यससन्देहालंकारेष्वव्याप्ति प्रसङ्गात्।**

तत्त्वालोकः

तस्य अनवस्थितार्थकविषयकज्ञानं यत् तन्निबन्धनस्यापि तज्जनकस्यैकस्य अनेकस्य वा अप्रकृतसाम्यस्य यद्वाच्यत्वं तस्यापि इत्यर्थः। लक्षणान्तर्गतिविवक्षायां लक्षणघटकत्वविवक्षायामित्यर्थः । **जीवनेति**

जीवनं-वृत्तिः जलं च , तस्य ग्रहणे सम्पादने धारणे च, नम्राः विनीताः अधोमुखाश्च, गृहीत्वा वृत्तिं जलं च संपाद्य, पुनः तदुत्तरकाले इति पर्यवसितोऽर्थः।

उन्नताः गर्विताः ऊर्ध्वमुखाश्च, दुर्जानाः खलाः, घटीयन्त्रस्य शृङ्खलाकारतया निबद्धघटमालारूपस्य "उद्घाटनं घटीयन्त्रम्" इति **यादवः** । किं कनिष्ठाः? न्यूनाः किम्? किमु ज्येष्ठाः ? अधिकाः किम् इत्यर्थः । अत्र अल्पशब्दात् इष्ठनि परे प्रकृत्याल्पशब्दस्य "युवल्पयोः कनन्यतरस्याम्" (पा.सू.५-३-६४) इति कनादेशः। एवं ज्येष्ठाः इत्यत्र प्रशस्यशब्दात् इष्ठनि परे प्रशस्यस्य श्रः ज्य च (पा.सू.५-३-६-६१) इति ज्यादेशः। एवं चात्र ज्येष्ठकनिष्ठशब्दौ प्रशस्याल्परूपार्थयोः क्रमेण वर्तेते। अत्र दुर्जने उपमेये घटीयन्त्रप्रतियोगिकः अभेदो गम्यते । तेनच घटीयन्त्रात् दुर्जना अधिका न्यूना वेति सन्देहः उपजायते। अथापि संशयादिपदानुपादानात् गम्यत्वमेव।

नच-

" किं प्रश्नाक्षेपकुत्सानां वितर्कस्य च गोचरे। "

इति **अभिधाननाममालायां** वितर्कप्रतिपादकत्वोपगमात् सन्देहस्य वाच्यत्व-सम्भवात् कथं तस्य गम्यत्वमिति वाच्यम् । किमादीनामव्ययानां सन्देह-द्योतकत्वमतमवलम्ब्य गम्यत्वोक्तेः उपपत्तेः ।

-चित्रमीमांसा-

**उत्प्रेक्षायां वाच्य गम्यभेदवत् इहापि द्विविधोहारणदर्शनेन वाच्यगम्यभेदेन द्वैविध्यस्य अङ्गीकर्तव्यत्वात् ।**

-तत्त्वालोकः-

**नचात्र**- सन्देहस्य वाच्यत्व एवालंकृतित्वं न गम्यत्व इति नातिव्याप्तिरिति वाच्यम् । तथा सति गम्योत्प्रेक्षाया अपि अनभ्युपगम प्रसंगात्। ससन्देहे-उत्प्रेक्षायां च संशयस्समान एव। परं तु उत्प्रेक्षायामन्यतरकौटौ औत्कटचम्। इह तु न तथा इत्येतावानेव विशेषः। इत्थं सत्यपि-

असकलकलिकाकुलीकृतालि
स्खलनविकीर्णविकासि केसराणाम्।
मरुदवनिरुहां रजोवधूभ्यः
समुपहरन् विचकार कोरकाणि ॥

इत्यत्र कलिकाविकासनस्य वधूद्देश्यकपरागोपहरणमफलमपि तत्फलत्वेनोत्प्रेक्षणं गम्यते व्यञ्जकाप्रयोगाच्च गम्यता ।

तद्वदत्रापि गम्यसन्देहोऽभ्युपेय एव। अन्यथा तत्रापि परित्यक्तव्यः "यश्चोभयोस्समोदोषः" इति न्यायदित्यभिप्रायेण विनिगमकाभावमुभयत्र प्रकाशयति-**उत्प्रेक्षायामिति**।

किंच-"जीवनग्रहणे"इति पद्ये जीवनग्रहणनम्रत्वादीनां साधारण-धर्माणामुपादानेऽपि किं कनिष्ठाः किमु ज्येष्ठाःइत्युपादानेऽपि घटीयन्त्रस्य दुर्जनाः किमुपमेयभूताः किमु उपमानभूताः इति संशयान्तरस्य गम्यमानतया संशयध्वनित्वस्यानपायात्। एवंविधस्संशयध्वनिरन्यत्राभ्युपगत एव। यथा वा-

कापिशायनसुगन्धिविघूर्णन्
उन्मदोधिशयितुं समशेत ।
फुल्लदृष्टिदयितं वदनाना-
मब्जचारुचषकं च षडंघ्रिः ॥

**-चित्रमीमांसा-**

## अपि च अनवधारणेति किमुच्यते?

**-तत्त्वालोकः-**

इत्यत्र मुखचषकयोः किमधिशेतव्यमिति वाच्यसंशयेन किं मुखं ? किं चषकमिति संशयो ध्वन्यते। तत्र च षट्पदाभिलाषास्पदत्वरूपसाधारणधर्मयोगः स्फुरत्येवेति सन्देहध्वनिः नापोह्य इति भावः ॥

**वस्तुतस्तु**-"साम्यादप्रकृतार्थस्ये"ति ससन्देहं लक्षयतः चमत्कारजनकसादृश्यहेतुकप्रकृतधर्मिकाप्रकृतार्थविधेयकानवधारणं ससन्देहः". इति तत्स्वरूपस्य विवक्षितत्वेन "जीवनग्रहणे" इत्यत्र नाव्याप्तिप्रसरः। लक्षणे साम्यस्य वाच्यत्वेन लक्षणाघटकत्वात्। "इह नमय" इत्यत्र विकल्पालंकृतावतिव्याप्तिः पूर्वमेव परिहृतेति दूषणाभिधानं न युज्यते ।

अथापि अव्याप्त्यतिव्याप्ती न परिहृते भवतः उक्तलक्षणेऽनवधारणोपादानात्। अनवधारणं च अनिश्चयात्मकं तच्च उत्प्रेक्षायामपीत्यतिव्याप्तमिति अनुयुङ्क्ते- **अपिचेति**। अवधारणा निश्चयः सा न भवतीत्यनवधारणा अनिश्चयः इति विगृह्यते तदा-

अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्॥

इत्युक्तरीत्या विधेरप्राधान्यं नञर्थस्य प्राधान्यमिति ज्ञापितं भवति। एवं कृते यद्यपि नञ्समासो नोपपद्यतेऽसामर्थ्यात्। अथापि "असूर्यंपश्या राजदाराः" इत्यादिप्रयोगेष्वसमर्थसमासाभ्युपगमानुसरणेनात्रापि समासो यदि स्वीक्रियेत तदा अनिश्चयार्थकोऽनवधारणाशब्दः।

यदि तु निश्चयभिन्नं निश्चयसदृशं संशयरूपं ज्ञानं विवक्षितं तदा न अवधारणा अनवधारणा इति विग्रहे कृते अवधारणविपरीतस्य प्राधान्यं प्रतीयत इति ।

प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥

## -चित्रमीमांसा-

**अनिश्चयात्मकत्वमिति चेत्। तथा सति-**

**बालेन्दुवक्त्राण्यविकासभावात्।बभुः पलाशान्यतिलोहितानि ।।**

**इत्यादावुदाहरिष्यमाणायामप्रकृतसाम्यनिमित्ततादात्म्यसंभावना रूपायामुत्प्रेक्षायामतिव्याप्तिः।**

## -तत्त्वालोकः-

इत्युक्तरीत्या "अत्रस्तः" इत्यादिवत्समास उपपद्यत इति अनयोराद्यपक्षाश्रयणे उत्प्रेक्षायांमतिव्याप्तिमुद्भावयति-**अनिश्चयात्मेति**।

अनिश्चयात्मकत्वं न तावत्संशयनियतम्। यतस्संशयतर्कभेदेनानिश्चयस्य द्वेधा विभजनात्।"स्थाणुर्वा पुरूषोवेति" सामान्यतः पक्षद्वयोल्लेखे **संशयः** "दूरे तिष्ठन् देवदत्त इवाभातीत्येकतरपक्षावलम्बिकारणदर्शनपक्षान्तरबाधनमिव तर्कः (संभावना) इत्युभयोर्भेदे सत्यप्यनिश्चयात्मकत्वं तुल्यम्। "पुरूष एवायमिति" पक्षान्तरासंस्पर्शेनैकतरपक्षनिर्णयो **निश्चयः**।

अत एव-"अनियतोभयपक्षावलम्बी किंस्विदिति विमर्शः**संशयः**। एकतरपक्षावलम्बनेन अंशान्तरबाधनेनावस्थितः **तर्कः**" इत्युक्तं **प्राचीनैः**।

**नव्या** अपि-साधारणधर्मदर्शननिमित्तकं प्रकृतविशेष्यकं तादात्म्य-संसर्गकमप्रकृतप्रकारकं निश्चयाऽनात्मकं ज्ञानं सम्भावनामाहुः। एवं च उत्कटैकतरकोटिकः संशयः सम्भावना। सा च अनिश्चयात्मिकैवेति-

बालेन्दुवक्राण्यविकासभावात्
बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां।
नखक्षतानीव वनस्थलीनाम्।।

इति पद्येऽप्रकृतनखक्षतधर्मवक्रत्वलोहित्यसाम्यनिमित्तकं नखक्षततादात्म्यं प्रकृतेषु पलाशेषु संभाव्यत इति अनवधारणात्मकोऽनिश्चयः प्रतीयत इत्यतिव्याप्तिरिति भावः।

## -चित्रमीमांसा-

**विरोधेन परस्परप्रतिपक्षेपकतया निबद्धानेककोटच्यवगाहित्वम् विवक्षितमिति चेत् तथापि-''अङ्कं केऽपि शशङ्किरे ''इत्यादावुदाहरिष्यमाणायामपह्नुतावतिव्याप्तिः। सन्देहविकल्पयोः वाकारादिनेव तत्रापि तत्तन्मतत्वोपन्यासेन परस्परप्रतिक्षेपसिद्धेः।**

## -तत्त्वालोकः-

यदि तु उदाहृतोत्प्रेक्षायामतिव्याप्तिपरिहाराय अनवधारणेत्यत्र पर्युदासप्रतिषेधाश्रयणेन ससन्देह इत्यर्थनामनिर्देशानुगुण्येन च अन्योन्यप्रतिक्षेपकतया निबद्ध नानाकोटच्यवगाहित्वरूपानिश्चयस्यैव लक्षणघटकत्वमित्युच्यते तदा क्वचित्

अग्रसानुषु नितान्तपिशङ्गैः
भूरुहान् मृदुकरैरवलम्ब्य।
अस्तशैलगहनं नु विवस्वान्
आविवेश जलधिं नु महीं नु॥

इत्यत्र तपनस्यैकस्यैव एकदा शैल-गहन-जलधिमहीषु प्रवेशरूपाऽनेककार्यप्राप्तौ विरोध इत्येकस्य अपरप्रतिक्षेपकत्वं नुशब्देनावगम्यत इत्यव्याप्त्यभावेऽपि, यत्र परपक्षप्रतिक्षेपफलकतत्तन्मतोपन्यासः क्रियते तत्रापह्नुतिविशेषेऽतिव्याप्तिरपरिहार्येत्याचष्टे-**विरोधेनेत्यादिना**।

विरोधेन एकदेशकालावच्छेदेन अनेककार्याणां वस्तुधर्माणां वा युगपत्प्राप्तेः असंभवः तेन, परस्परप्रतिक्षेपकतया-अन्यतरव्यावर्तकतया निबद्धा परिकल्पिता या अनेककोटच्यवगाहिनी एकभिन्नविषयतावलम्बिनी,तदवगाहित्वं तच्छालित्वं विवक्षितमितिचेत् वक्तृतात्पर्यविषयं चेत् तथापि क्वचित् ससन्देहोदाहृताव-व्याप्त्यभावोऽपि संभवति। अथापि-

अङ्कं केऽपि शशङ्किरे, जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च संगदिरे, भूच्छायमैच्छन् परे।
इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते।
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे॥

## -तत्त्वालोकः-

इत्यत्रापाह्नुतिलक्ष्ये एतल्लक्षणमतिव्याप्नोति इत्यर्थः।

**न च**-एकधर्मावच्छिन्नविशेष्यकभावाभावप्रकारकज्ञानं संशय इति **संशयलक्षणम्** तच्च"स्थाणुर्वा पुरुषोवे"त्यादौ स्थाणुपुरुषशब्दाभ्यां स्थाणुत्वपुरुषत्वयोः वा शब्दाभ्यां स्थाणुत्वाभावपुरुषत्वाभावयोरुपस्थित्या स्थाणुत्व-स्थाणुत्वाभाव, पुरूषत्व पुरूषत्वाभावकोटिकस्संशयो जायते।

प्रकृते "अङ्कं केऽपि" इत्यपह्नुतिस्थले तदभावकोटयुपस्थापकवाकाराद्यभावात् कोटिद्वयानुपस्थित्या कथं परस्परप्रतिक्षेपसिद्धिरिति उक्तलक्षणस्य अतिव्याप्त्यापादनं कथं युज्यत इति शङ्क्यम्,

वाकाराभावेऽपि तत्स्थानापन्नस्य पराभिमतार्थस्य पूर्वमतविरुद्ध तयोपनिबन्धात्"अयं स्थाणुरि"ति केनचित्प्रयुक्ते सति अन्येन"अयं पुरूष" इति पश्चादभिहिते सति श्रोतॄणां"अयंस्थाणुर्वापुरुषो वेति" संशयः उदेतीत्यनुभूयमानत्वेन तत्तन्मतोपन्यासेनापि परस्परप्रतिक्षेपः सिध्यति, अतएव "विप्रतिपत्तिवाक्यजन्मानं संशयमामनन्ति **रत्नकोशकाराः** इति पक्षस्यापि **नैयायिकैः** अभिधानात् अतिव्याप्त्युद्भावनमुचितमेवेति निष्कर्ष्टुमाह **सन्देहविकल्पेति**। एवं च "अङ्कं केऽपी"त्यत्र खण्डितनीलशिलाश्यामलच्छायावतीन्दौ कलङ्क-जलधिपङ्क-सारङ्ग-भूच्छाय-गाढतमसां पूर्वपूर्वप्रतिक्षेपकरीत्या प्रतिपादनात् अनिश्चय इत्यस्त्यतिव्याप्तिरिति फलितोऽर्थः॥

**यदितु**-विरोधेन परस्परप्रतिक्षेपकतया निबद्धानेककोटयवगाह्य नाहार्यज्ञानत्वमिति परिष्क्रियते तदा " अङ्कं केऽपि शशङ्किरे" इत्यपह्नुतौ तादृशज्ञानस्याहार्यत्वेन अतिव्याप्तिर्नास्तीत्युच्यते तदा प्रागुदाहृते "किंतावत्सरसि" इति निश्चयान्तसन्देहोदाहरणे कान्तिसौरभाभ्यां साधारणधर्माभ्यां नायकनिष्ठः नायिकामुखविषयकस्सन्देहउपनिबध्यतेकविनेति अनाहार्य एवायं सन्देहः। नायके ग्राह्यनिश्चयस्य प्रथममभावादित्यव्याप्तिः॥

यदितु-"किं तावत्सरसि" इति पद्येऽव्याप्तिपरिहाराय परस्परप्रतिक्षेपकतया निबद्धानेककोट्यवगाहिज्ञानत्वमित्येव तल्लक्षणम्, एकस्मिन् वस्तुनि गृहीते सति

-चित्रमीमांसा-

**अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्ति प्रदः,**
**श्रृङ्गारैकरसः स्वयं तु मदनो, मासो नु पुष्पाकरः।**
**वेदाभ्यासजडः कथं स विषयव्यावृत्तकौतूहलः**
**निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः।।**

-तत्त्वालोकः-

मिथः स्फुटविरोधयोः सरोजत्वमुखत्वयोः कोटयोः स्फुरणमस्तीति नाव्याप्तिः। "अङ्कः केऽपि" इत्यत्र तु इन्दौ इन्द्रनीलशकलश्यामत्वविशिष्टतया गृहीते अंकपङ्क-सारंगच्छायारूपाणां इति ससन्देहोदाहरणे चाव्याप्तिः।।

सन्देहधर्मिणामेवानेकत्वं प्रकारस्तु इन्द्रनीलशकलश्यामत्वमेकमेवेत्यनेक कोटयवगाहित्वं नास्तीति नातिव्याप्तिरिति कथंचित्समाधीयेत। अथापि एककोटिकनानाधर्मिकसन्देहोदाहरणेऽव्याप्तिः दुष्परिहरेत्युदाहरति **अस्या इति।**

नरसखस्यनारायणस्यमुनेःऊरूद्भवा ऊर्वशी कैलासनाथं सेवित्वा निवर्तमाना गृहं प्रत्यागच्छन्ती मध्येमार्गं केशिना बन्दीकृतेति मेनकाप्रभृतिभिःअप्सरोभिः विदितवृत्तान्तो राजा केशिनं विजित्य ऊर्वशीम् उद्धधार। अथापि केशित्रस्तेव तिष्ठन्तीमूर्वशीं चित्रलेखा प्रकृतौ पर्यवस्थापयति। ततश्च राजानमवलोक्य केशिकृतोऽपि त्रासः राजर्षेः अवलोकनोपयोगितया उपकारक एव जातः इति आत्मन्येव अनुसन्दधानामूर्वशीमवलोक्यात्मगतं सन्दिग्धे-अथवा नेयं तपस्विनः सृष्टिरित्यवैमि। कुतः अस्याःऊर्वश्याः सर्गविधौ उत्पादनकर्मणि कान्तिप्रदः कान्तेः हृदयहारिणःकमनीयगतात्यन्ताभीप्सित धर्मविशेषस्य प्रदः नाल्पतयावस्थापयिता चन्द्रः अतिशयिताह्लादजनकतया अन्वर्थनामा,प्रजापतिःस्रष्टा अभूत् नु? एतेन स्वत एवाह्लादकश्चन्द्रः स्वकान्तिप्रदतया स्रष्टा किमभूत्? अन्यथा एतादृशाकान्तिसंभवो न भवेदिति यावत्। एवं च वनितास्रष्टृत्व प्रकारक-चन्द्रधर्मिकसन्देहे कमनीयलावण्यशालित्वं निमित्तमित्युक्तं भवति।

तस्यामेव श्रृङ्गारैकप्रधानत्वं निमित्तीकृत्य अस्याः स्रष्टा किं मदनः इति सन्दिग्धे-

## तत्त्वालोकः-

**शृङ्गारेति**। शृङ्गं प्राधान्यम् इयर्ति प्राप्नोति इति शृङ्गारः स एवैकः अद्वितीयोऽन्यव्यावर्तको वा रसः आस्वाद्यः यस्य सः इत्यर्थः। तल्लक्षणमुक्तं **भावप्रकाशने शारदातनयेन**-

भावानामुत्तमं यत्तु तच्छृङ्गं श्रेष्ठमुच्यते।
इयर्ति शृङ्गं यस्मात्तु तस्माच्छृङ्गार उच्यते।। इति

शृङ्गारप्राधान्यं च-

शृङ्गार एव मधुरः परः प्रह्लादनो रसः।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ।। इति

**आनन्दवर्धनेनाप्युक्तम्**। मदनः=मदयति=मोहयति हर्षयतीति वा मदनः, स्वयं स्वसहायकान् परित्यज्य अस्याःप्रजापतिरभून्नु? शृङ्गार एव नितान्तनिमग्नं मदनमन्तरेणास्याः सृष्टिर्नभवेत्। अन्यथा ईदृशमत्यन्तरसिकत्वं सहृदयत्वं च नास्याः सम्भवेत् इति यावत्। एवं च वनितास्रष्टृत्वप्रकारमदनधर्मिकसन्देहे शृङ्गारैकप्रधानत्वं निमित्तमित्युक्तं भवति।

तस्यामेव सहजसौकुमार्य सौरभ्यमार्दवादिकं विमृश्य तत्सृष्टौ मधुमासाधिदैवतं वसन्तः किं स्रष्टाऽभवदिति संशेते-**मास इति** पुष्पाणामाकरः उत्पत्ति-धारककालरूपेणावस्थितः मासःवसन्तः मासाधिदैवतम् अस्याः प्रजापतिः स्रष्टा अभूत् नु? अन्यथा एतादृशसौरभ्य-सौकुमार्य-मार्दवादिशालित्वं कथं भवेत् इति यावत्। एवं च सहजसौरभ्य सौकुमार्य-मार्दवादिकं वसन्तधर्मिकवनिता-स्रष्टृत्वसन्देहे निमित्तमित्युक्तं भवति।

ननु प्रथमतः-

ऊरुद्भवा नरसखस्य मुनेःसुरस्त्री
कैलासनाथमनुसृत्य निवर्तमाना।।

इति उक्तरीत्या नरनारायणयोर्मध्ये नरावतारस्य अर्जुनस्य सख्युः नारायणस्य ऊरुसंभवैव कुतो नभ वेदित्यत्राह-**वेदाभ्यासेति**।

यतस्सः वेदानां आत्मज्ञानाधिकरणानामभ्यासेन स्थानान्तरगमननिवृत्तिपूर्वकं क्वचित्स्थल एव निश्चलतया वारं वारं आम्भणसंशीलनेन, जडः सहृदयतायां

**चित्रमीमांसा-**

**तत्र चन्द्रदीनां सन्देहधर्मिणामेवानेकत्वम्। प्रकारस्तु सर्वत्र वर्णनीयवनितास्रष्टृत्वमेकमेवेत्यनेककोटिकत्वाभावात्।**

## तत्त्वालोकः

मन्दतामुपगतः। ज्ञानमार्गव्यतिरिक्तेषु विषयेषु चित्तं नितान्तं निरुध्य वर्तमान इतियावत्। अत एव विषयव्यावृत्तकौतूहलः विषयेभ्यः विशेषेण संसारबन्धहेतुभ्यः भोग्यपदार्थेभ्यः व्यावृत्तं स्वतएव निवृत्तं कौतूहलं उत्साहो यस्य सः इन्द्रियसन्निकर्षजन्यभोगेषु निवारितरसः, अपि च पुराणः पुराभवः वृद्धः। एतेन नवनवोन्मेषशालिशक्त्यभावः सूचितो भवति। अपि च मुनिः मौनव्रतधारितया क्रियासु मन्दः इदं लोकैकसुन्दरं, मनोहरं चित्ताकर्षकं रूपं तदेकध्याननिर्माणगोचरतया यद्दर्शनानन्तरं तदतिरिक्तपदार्थेषु मनो नैव लगेत् तादृशं परिदृश्यमानं सौन्दर्यं निर्मातुं स्रष्टुं कथं प्रभवेत् पारयेत् न कदापीत्यर्थः। तस्मात्नेयं मुनिसंभवा भवितुमर्हति **"यथा बीजं तथा प्रजा" इति न्यायात्** इति भावः। इत्थमेव शङ्कितं दुष्यन्तेनापि-"मानुषीषु कथं वा स्यादस्य रूपस्य संभवः। इति

इत्थंचात्र ऊर्वशीस्रष्टृत्वरूपैकधर्मप्रकारकः चन्द्र मदन-पुष्पाकर रूपनानाकोटिकः कान्तिप्रदत्व, श्रृङ्गारैकप्रधानत्व-सहजसौकुमार्यादिनिमित्तक स्संशयः। अथापि उक्तरीत्या विरुद्धानेककोटयवगाहित्वं नास्तीत्यव्याप्तिः। तामेवाव्याप्तिमुपपादयति **तत्रेत्यादिना।**

अत्र वनितास्रष्टृत्वमात्रप्रकारकः चन्द्र-मदन-वसन्तरूपनानाविशेष्यकः सन्देह इति प्रकारीभूतधर्माणामनेकत्वं नास्तीति कृत्वाऽव्याप्तिरिति भावः।

एवंच विरुद्धानेककोटयवगाहित्वरूपसंशयो न ग्राह्यः। अपि तु एकधर्मिकविरुद्ध ानेकविशेषावभासः संशयः इत्येवंरूपो ग्राह्यः तथा सति अत्र नाव्याप्तिप्रसर इत्यभिप्रायः।

नच चन्द्रत्व-मदनत्वरूप-परस्परासमानाधिकरणधर्मवैशिष्ट्यं वनितास्रष्टरि भासते। तावतैव न सन्देहालंकारता सादृश्यहेतुकत्वस्यापि लक्षणघटकतया उपादानात्। उक्तोदाहरणे च तदभावात् नाव्याप्तिरिति वाच्यम्।

**चित्रमीमांसा-**

**नच साम्यनिमित्तत्वाभावात् नात्र ससन्देहः।**

**चेलाञ्चलन्यस्तकुचाञ्चलं मामा-**
**लोकयन्ती नयनाञ्चलेन।**
**इतो गता सा क्व गता न जाने**
**गृहं गता मे हृदयं गता वा।।**

**इति सन्देहो न संग्राह्य इति वाच्यम्।**

तत्त्वालोकः-

वनितायां चन्द्रदिवृत्तिधर्मसाम्यं निमित्तीकृत्यैव तथा सन्देहोपनिबन्ध-नादिति व्यतिरेकदृष्टान्तमुखेन समाधत्ते **नचेत्यादिना**। साम्यनिमित्तकेऽपि सन्देहः परिदृश्यत इति तमुदाहरति **चेलाञ्चलेति**। अस्मिन्नुदाहरणे संशयःन साम्यमूलः अपि तु चिन्तामूल इति न सन्देहालंकारता।

प्रकृते तु न तथेति प्रतिपादयति-**वर्णनीयेत्यादिना**।

**अयं भावः**-अस्याः सृष्टौ चन्द्रः कारणभूतः उत मदनःउत वसन्त इति कान्ति श्रृङ्गार-सौरभ्यादिकं नायिकानिष्ठमुपादाय कः स्रष्टेति सन्दिह्यत इति ससन्देहस्योदाहरणं भवितुमर्हत्येवेति।

**वस्तुतस्तु**- अत्र राजा ऊर्वश्या रूपसम्पदं श्रृङ्गारप्रियताम्, सहजसौरभ्यं सौकुमार्यशालित्वातिशयं च विवक्षुः प्रथमतः स्थाने खलु नारायणमृषिं विलोभयन्त्यः तदूरुसंभवामिमां विलोक्य व्रीडितास्सर्वाः अप्सरसः इति कर्णाकर्णिकया श्रुतवानपि प्रत्यक्षीकृत्य विप्रतिपद्यमानः अथवेत्यादिविकल्पितवान्। अतश्च अत्र कान्तिप्रदत्व- श्रृङ्गारैकरसत्वाभ्यां वाच्याभ्यां-व्यङ्ग्येन सौरभसौकुमार्यादिना च परस्परं मदनवसन्तचन्द्रकोटिषु परस्पर प्रतिक्षेपकत्वं नानुभूयत इति वक्ष्यमाणरीत्यापि अनुदाहरणतैव स्यात्। अतश्च संशयस्थले "डोलावेगवदत्र स्फुरणक्रमः।

**चित्रमीमांसा-**

**वर्णनीयनायिकायाः कान्त्या चन्द्रसाम्यं, सौरभ्यसौकुमार्याभ्यां पुष्पसाम्यं च निमित्तीकृत्य किमस्यां कान्तिनिदानभूतश्चन्द्रः स्वकान्तिसंपदा स्रष्टा, उत पुष्पमासः स्वकीयपुष्पसंपदेति सन्देहनिबन्धनात् ''श्रृङ्गारैकरसः स्वयं नु मदनः'' इत्यंशस्य श्रृङ्गारविभ्रमबाहुल्यमात्रपर्यवसायित्वेन किंचित्साम्यनिमित्तत्वाभावेऽपि चन्द्रवसन्तधर्मिकांशयोः तन्निमित्तत्वावारणात्।।**

**एवं च प्रकृतार्थाश्रयेत्येतदप्ययुक्तम्। उदाहृतसन्देहस्य वर्णनीयनायिकानाश्रयत्वेनाव्याप्तिरिति चेत्।।**

तत्त्वालोकः-

एकस्मिन् युगपदन्योन्यक्षेपस्य अनुभवविरुद्धत्वाच्च चमत्कृतिजनक साहश्यनिमित्त कविरुद्धानेकवस्तुविषयकानवधारणं ससन्देहः'' इति लक्षिते न कोऽपि दोषः।

**यद्वा**-साम्यनिमित्तकनिश्चयभिन्नत्वे सति सम्भावनाभिन्नाया धीःतत्वं ससन्देहस्य लक्षणमिति प्राचीनलक्षणपरिष्कारे सत्यपि अव्याप्त्यादीनां निवारणसंभवात्दूषणाभिधानं शिष्यबुद्धिवैशद्यार्थम् लक्षणान्तरप्रणयन-प्रणालीपरिचयार्थं वा स्यादिति विभाव्यम्। इत्थं च पञ्चमीविभक्ति-तदेकवचनानवधारणापदार्थान् विशोध्य दूषणमभिहितम्। सम्प्रति प्रकृतार्थाश्रयेति पदोपादानम् अव्याप्तं भवति यथा पूर्वोदाहृते''अस्याः सर्गविधौ'' इत्यत्रैव प्रकृतार्थाश्रयत्वाभावादित्याह- **एवं चेत्यादिना।**

**अयं भावः**-''अस्याः सर्गविधौ '' इत्यत्र निरतिशयितलावण्यसौरभ्य मार्दवादिगुणगणमहिता ऊर्वशी वर्णयितुं प्रकृता। अथापि चन्द्राद्यनेककोटिकः धनितास्रष्टृत्वप्रकारकः खल्वत्र सन्देहः। अतः प्रकृतार्थाश्रयत्वं नास्तीत्यव्याप्तिरित्यर्थः।

**चित्रमीमांसा-**

**अत्र ब्रूमः-**

**बुद्धिस्सर्वात्मनान्योन्यक्षेपि नानार्थसंश्रया।**
**सादृश्यमूला वार्थस्पृक् सन्देहालंकृतिर्मता।।**

तत्त्वालोकः-

**वस्तुतस्तु-** प्रकृतार्थाश्रयेत्यस्य वर्ण्यमानमर्थं भित्तीकृत्य प्रवृत्तस्य सन्देहस्य ग्रहीतुं शक्यत्वेन सृष्टिविषयीभूता वनिता किं पुराणमुनिनिर्मिता आहोस्वित् चन्द्रादिनिर्मितेति सृष्टिविषयभूतवनिताविशेष्यकपुराणमुनिनिर्मितात्व, चन्द्रादिनिर्मितात्वान्यतरप्रकारकसन्देहे पर्यवसानात्प्रकृतार्थावलम्बित्वस्य न हानिः। अत एव "अप्रकृतसन्देहे विषयोऽपि सन्दिह्यत एवेति" **सर्वस्वकारोऽपि** आह। **विमर्शिनीकारोऽपि-**

किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी
लीलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविस्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य श्रृङ्गारिणः।।

इति उदाहरणमुपादाय अत्र प्रकृतायास्तन्व्याःसन्देहप्रतीतिविषयत्वाभावात् विषयिणां मञ्जर्यादीनामेवसन्देहइत्युपपादितवान्, यद्यप्यत्र "इयम्" इति इदमा प्रत्यक्षबुद्धि विषयशक्यार्थपरामर्शात् प्रकृताया नायिकायाः सन्देहविषयत्वाभावोक्तिःन युज्यते, तथापि इदमर्थस्य विषयिविशेषणत्वविवक्षामाश्रित्य तथोपपादितमिति बोध्यम्। अन्यथा "अनाकाशे कोऽयं गलितहरिणः" इत्यत्रेदमा विषयस्योपादानमस्तीत्यतिशयोक्तित्वं न स्यात्। अतश्चैतादृशस्थले सर्वनाम्ना प्रकृतपरामर्शविवक्षाराहित्यमेव शरणम्।एवं प्राप्ते सिद्धान्तलक्षणं स्वयमाह **अत्रब्रूम इति।**

सादृश्यमूला सर्वात्मनाऽन्योन्यक्षेपि नानार्थसंश्रया वार्थस्पृक् बुद्धिः सन्देहालंकृतिर्मता इत्यन्वयः।

चित्रमीमांसा-

**यद्यपि- अन्योन्यप्रतिक्षेपकविरुद्धनानार्थावलम्बित्वं विकल्पालंकारस्याप्यस्ति, तथापि तदर्थानां सर्वात्मना परस्परप्रतिक्षेपकत्वं नास्ति किन्तु पक्षे तत्प्राप्तिमनिरुध्य स्वप्राप्तिपक्षएव स्वपरिपन्थिप्राप्तिप्रतिक्षेपकत्वम्॥**

तत्त्वालोकः-

साहश्यमूला-साधारणधर्मसम्बन्धज्ञानजन्या सर्वात्मना अत्यन्तं अन्योन्यक्षेपि परस्परक्षेपिणः ये नानार्थाः अनेके पदार्थाः तत्संश्रया तदालम्बिनी, वार्थस्पृक् विकल्पावगाहिनी बुद्धिः ससन्देह इत्युच्यते इत्यन्वयार्थः। यथा-

किं तावत्सरसि सरोजमेतदारात्
आहोस्विन्मुखमवभासते तरुण्याः।
संशय्य क्षणमथ निश्चिकाय कश्चित्
बिब्बोकैर्बकसहवासिनां परोक्षैः॥

अत्र मुख-पङ्कजोभयसाधारणसौरभ्याह्लादकत्वधर्मज्ञानजन्या इदं सरोजमिति अनुसन्धानदशायाम् इदं मुखं नेति, इदं मुखमिति अनुसन्धानदशायां "इदं न सरोजमिति" प्रतिक्षेपकत्वमस्तीत्यन्योन्यक्षेपित्वम्, ताहशा ये नानार्थाः सरोज मुखाद्याः तदवलम्बिनी, वार्थस्पृक् इदमिदंवेति विकल्पग्राहिणी बुद्धिरस्तीति समन्वयः।

**नन्वेवमपि**-विकल्पालंकारेऽतिव्याप्तिः न परिहृता तत्रापि परस्परप्रतिक्षेप-कविरुद्धानेकपदावलम्बित्वस्य सत्वात् इत्याशंक्य समाधत्ते-**यद्यपीति**।

यद्यपीत्यस्यायमाशयः-

इह नमय शिरः कलिङ्गवद्वा समरमुखे करहाटवद्धनुर्वा।

अत्रापि शिरोनमनप्रसक्तौ, धनुर्नमनस्य निरोधः, धनुर्नमनप्रसक्तौ शिरोनमनस्य निरोधः प्रतिभाति। यथा-"किंतावादिति" पद्ये परिहश्यमानस्य वस्तुनः सरोजरूपत्वे, मुखस्य निरोधः, मुखरूपत्वे सरोजस्य निरोध एव।

## चित्रमीमांसा-

**नहि" व्रीहिभिर्यवैर्वा यष्टव्यं" इति विकल्पोद्देशे व्रीहयो यवान् यवाश्च व्रीहीन् सर्वात्मना यागात्प्रतिक्षिपन्ति। तथासति शास्त्रस्यानिर्णायकत्वेन अननुष्ठापकत्वेन चाप्रामाण्यप्रसङ्गात् किन्तुस्वस्वानुष्ठानपक्ष एव।।**

## तत्त्वालोकः-

अतश्चातिव्याप्तिर्विकल्पालंकारे-ऽपीति। तथापीत्यादेस्तु-विकल्पालंकारे अन्योन्यप्रतिक्षेपस्य विद्यमानत्वेऽपि नात्यन्तं प्रतिक्षेपः किन्तु शिरोनमनाप्राप्तिपक्षे धनुर्नमनस्य, धनुर्नमनाप्राप्तिपक्षे शिरोनमनस्यच प्राप्तिरस्त्येव। ससन्देहस्थलेतु पक्षे तत्प्राप्तिप्रसक्तिरेव नास्तीति वैलक्षण्यात्। एवं च अन्योन्यक्षेपितायां सर्वात्मनेति विशेषणात् नातिव्याप्तिरिति भावः। **एतेनैतदुक्तं भवति**-स्वाप्राप्तिपक्षे तत्प्राप्तिपक्षमनिरुध्यावस्थानं स्वप्राप्ति पक्षे तत्प्राप्तिपक्षे निरुध्यावस्थानं च यत्र तत्र **विकल्पालंकारः**। उभयथापि यत्रान्योन्यप्रतिक्षेपःअत्यन्तं क्रियते तत्र **ससन्देह** इति। अस्मिन् विषये **मीमांसक**सम्मतं दृष्टान्तं प्रदर्श्य संशयस्थलाद्विशेषं प्रतिपादयति **नहीति।**

**अयं भावः**-यदि व्रीहिभिर्यवानां यवैर्वा व्रीहिणां सर्वात्मना प्रतिक्षेपे उभयोपादानवैयर्थ्यम्। यद्यन्यतरप्रतिक्षेपस्तदा वाकारवैयर्थ्यम्। अतश्च स्वप्राप्तिपक्षे स्वसजातीय विरोधिप्रतिक्षेपः। स्वाप्राप्तौ स्वविरोध्यप्रतिक्षेप इत्युभयं विकल्पस्य विषय इति।

ननु-व्रीहिभिर्यवैर्वा इत्यादौ एकेनापरस्य सर्वात्मना प्रतिक्षेप एव अस्त्वितिचेदत्र समाधानमाह-**तथासतीति**।-

तथासति व्रीहि-यवान्यतरेण यवव्रीह्यन्यतरस्य सर्वात्मना प्रतिक्षेपे शास्त्रस्य एककार्योपयोगिनः "व्रीहिभिर्यजेत" इति व्रीहिनियामकस्य" यवैर्यजेतेति" यवनियामकस्य च वेदस्य अनिर्णायकत्वेन " व्रीहिभिरेव यष्टव्यमिति " मिति

## चित्रमीमांसा-

**अतएव "व्रीहिभिर्यवैर्वा यष्ठव्यमिति सन्देहेन पृष्टवन्तं प्रति व्रीहिभिर्यवैर्वा यष्टव्यमिति प्रश्नसमानाकारमेव वाक्यं निर्णायकं प्रश्नमूलसन्देहनिवर्तकमनुष्ठापकं च दृश्यते।।**

## तत्त्वालोकः-

निश्चितज्ञानाजनकत्वेन, अननुष्ठापकत्वेन च विहितकर्माचरणानुपयोगित्वेन च अप्रामाण्यप्रसंगात्। किन्तु तुशब्दः उक्तपक्षाद्विभिन्नतां सूचयति। **स्वस्वेति।** प्रातिस्विकरूपेण यत्रव्रीहिणामुपादानं तत्र तेषामेव पुरोडाशनिष्पादनक्षमत्वेन इतरेषां यवानां तस्मिन्नेव प्रयोगे यागात्प्रतिक्षेपः। एवं यत्र यवानामुपादानं तत्र तेषामेव पुरोडाशनिष्पादनक्षमत्वेन इतरेषां व्रीहीणां यागात्प्रतिक्षेपः। **एतेनैतदुक्तं भवति-** यत्रैककार्यकारिणोरेकैकेन कार्यसिद्धौ अपरस्यापरिग्रह एव न तु बाधःइति।

**किंच-** वेदे विधिनिषेधयोरेकविषयत्वे षोडशिग्रहणा-ग्रहणवद्विकल्प एवाभ्युपगतः न तु विधेः निषेधेन बाधः। अतश्च विकल्पालंकारस्थले सर्वात्मना नैकस्यापि प्रतिक्षेपः। अत एव **वेदान्तिभिरपि विकल्पाधिकरणे** उपास्यैकत्वे विद्याभेदप्रसक्तौ विकल्प एवाभ्युपगतः "विकल्पोऽ विशिष्टफलत्वात्" (ब्रह्म.सू.३.३.५९) इति।

उक्तरीत्याश्रयणेऽनुभवानुरोधोऽपीत्याह-**अत एवेति।** अत एव स्वस्वानुष्ठानपक्ष एव स्वपरिपन्थि प्राप्तिप्रतिक्षेपकत्वमित्यभ्युपगमादेवेत्यर्थः। व्रीहियवयोः कतरेण यष्टव्यमिति प्रष्टुःसर्वात्मना प्रतिक्षेप्यः क इत्यभिप्रायसत्वेऽपि तत्समानाकारं वाक्यं निर्णायकं, सन्देहनिवर्तनद्वारा अनुष्ठापकं, "व्रीहिभियवैर्वा यष्टव्यम्" इति प्रयुञ्जानस्योत्तरप्रदातुसर्वात्मना पक्षान्तरप्रतिक्षेपे तात्पर्यं यदि भवेत्तदा प्रश्नसमानाकारमुत्तरं न भवेत्, किन्तु व्रीहिभिर्यष्टव्यमिति, यवैर्यष्टव्यमितिव। प्रयुक्तं भवेत् न च तथोत्तरितम्। अतश्च न क्वचिदपि सर्वाकारतया प्रतिक्षेपतात्पर्यमिति भावः। एवं च प्रश्नोत्तरवाक्ययोस्समानाकारत्वे ऽपि

**चित्रमीमांसा-**

**प्रश्नवाक्ये वाकारः सर्वात्मना पक्षान्तरप्रतिक्षेपार्थः। उत्तरवाक्ये पक्षे तत्प्रतिक्षेपार्थ इति विशेषसद्भावात्।**

**एवं विकल्पालंकारोदाहरणेऽपि द्विविधस्यापि नीतिशास्त्रस्य प्रामाण्यात् तदुपदिष्टफलेच्छानुसारेण उभयमपि पक्षेऽनुष्ठातुं युक्तमिति शिरोधनुर्नमनयोः न सर्वात्मना परस्परप्रतिक्षेपकत्वमिति विकल्पालं-कारेनातिव्याप्तिः॥**

तत्त्वालोकः

तयोर्वाकारस्य प्रष्टृप्रतिवक्त्रभिप्रायभेदेन अर्थविशेषबोधकत्वमित्याह-**प्रश्नवाक्य इति**। स्पष्टोऽर्थः।

उक्तन्यायमेवविकल्पालंकारेऽनुभवानुरोधेन अतिदिश्य अतिव्याप्ति-परिहारस्सुकरः। अत एव लक्षणे वार्थस्पृगित्युपात्तमित्याशयेनाह-**एवमित्यादिना**। एवं "व्रीहिभिर्यवैर्वा" इति वाक्यद्वयवत्, "इह नमय शिरः कलिङ्गवद्धसमरमुखे करहाटवद्धनुर्वा इति विकल्पालंकृत्युदाहरणेऽपि, द्विविधस्यापि नीतिशास्त्रस्य "समाक्रान्तो बलवता", जयेन लभ्यते लक्ष्मीः" इत्यस्य, च प्रामाण्यात् -अनुष्ठापकत्वम्, तदुपदिष्टफलेच्छानु-रोधेन नीतिशास्त्रो पदिष्टनिजराज्यलक्ष्मीपरिभ्रंशपरिहार-सुराङ्गनालाभेच्छयोर्यस्ययस्य यत्रेच्छा तदनुसारेण, उभयमपि शिरोनमनधनुर्नमनद्वयमपि पक्षे एकतराप्रवृत्ति-पक्षेऽनुष्ठातुं युक्तमिति हेतोः शिरोनमनधनुर्नमनयोर्मध्ये, सर्वात्मना अत्यन्तं परस्परप्रतिक्षेपकत्वमिति "इह नमयेति" पद्ये नातिव्याप्तिरित्यर्थः।

**वस्तुतस्त्विदं-**

निन्दन्तु नीतिनिपुणाः यदि वा स्तुवन्तु
लक्ष्मीस्समाविशतु गच्छतु वा यथेष्टम्।

## चित्रमीमांसा-

**अपह्नवोदाहरणे सर्वात्मना परस्परप्रातिक्षेपसत्वेऽपि वाकारार्थस्पर्शाभावात् नातिव्याप्तिः। तत्र केचित् अन्ये इति मतान्तरोपन्यासेन पक्षाणां परस्परप्रतिक्षेपलाभः न तु वाकारार्थस्पर्शोऽस्ति।**

### तत्त्वालोकः

अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः।।

इत्यत्र उक्तलक्षणमतिव्यापकं भवति तत्र निन्दास्तुत्योः, लक्ष्मीसमावेश-गमनयोः, अद्यमरण-युगान्तरमरणयोः **"तुल्यनिन्दास्तुतिरिति न्यायेन"** एकरूपतया परिग्राह्यत्वनिबन्धनं साम्यम्, सर्वात्मना अन्योन्यप्रतिक्षेपि नानार्थसंश्रयणम् वार्थस्पर्शश्च विद्यत एव। अथापि चमत्कृतिजनकसादृश्यस्य विवक्षितत्वान्नदोष इति भाव्यम्।।

वार्थस्पृक्' इति विशेषणदानात् अङ्कं केऽपि शशङ्किरे'' इति पद्ये नातिव्याप्तिरिति अभिधत्ते-**अपह्नव इति**। अपह्नवोदाहरणे "अङ्कं केऽपि शशङ्किरे" इति पद्यप्रतिपाद्यार्थे, सर्वात्मना परस्परप्रतिक्षेपसत्वेऽपि इन्दौ परिदृश्यमानस्य नीलभागस्य अङ्करूपत्वे न कलङ्कादिरूपत्वम्, पङ्करूपत्वे नाङ्कादिरूपत्वम्, गोत्वाश्वत्वयोरिव अत्यन्तविजातीयवस्तुनिष्ठत्वात् अन्यतमपरिशेषेणैव भाव्यम् इत्थं च परस्परपरिक्षेपस्सिद्धः अथापि, वाकारार्थस्पर्शाभावात्तुलयबलकल्पान्तरोपस्थितिभावात् अतिव्याप्तिर्नास्ति। तुल्यबलवत्वेखलु विरोधः। विरोधेच सति विकल्पः स च नास्तीति भावः। विरोधद्योतकवाकाराद्यभावे परस्परप्रतिक्षेपश्च कथं लभ्यत इत्याशंकायामाह-**तत्रेति**। केऽपि, कतिचित् इत्याद्युपादानात् स्वस्वविरुद्ध अभिधातृत्वमितरेषु व्यक्तं भवति। तेन च स्वाभिमत व्यतिरिक्तपक्षाणां प्रतिक्षेप्यत्वं तदृष्ट्या च तदभिमतव्यतिरिक्तानां प्रतिक्षेप्यत्वमिति परस्परप्रति-क्षेपलाभ इति भाव।

### चित्रमीमांसा-

**उत्प्रेक्षायामपि नातिव्याप्तिः। तत्र हि उत्कटकोटिके संशयकोट्योः समबलत्वाभावेन वाकारार्थस्पर्शाभावात्।**

**''अस्याः सर्गविधौ'' इत्युदाहरणे परस्परप्रतिक्षेपकनानाकोटिसमाश्रयत्वाभावेऽपि तथाभूतनानाधर्मिरूपार्थसमाश्रयत्वसत्वात् नाव्याप्तिरिति सर्वमवदातम्॥**

### तत्त्वालोकः-

अपह्नववारकविशेषणेनैव उत्प्रेक्षायामप्यतिव्याप्तिर्वारिता भवतीत्याह- **उत्प्रेक्षायामपीति।**

यथा- दीपयन्नथ नभःकिरणौघैः कुंकुमारुणपयोधरगौरः।
हेमकुम्भ इव पूर्णपयोधेःउन्ममज्ज शनकैस्तुहिनांशुः॥

इत्यादौ यद्यपि-अप्रकृतहेमकुम्भनिष्ठारुणवर्णवत्वसंबन्धेन निमित्तेन प्रकृते तुहिनांशौ पर्वसमुद्रावधिकोन्मज्जनविशिष्टहेमकुम्भतादात्म्यंसंभाव्यते इति अन्यतरपरिशेषयोग्य साम्यमूलकान्योन्यप्रतिक्षेपि नानार्थसंश्रयबुद्धित्वं विद्यते। अथापि उपमानकोटौ औत्कटयं उपमेयकोटौ तदभावइत्येकतरपक्षानुकूलकारणदर्शनात् पक्षन्तरबाधनमिवात्रप्रतितिरिति नोत्प्रेक्षायां समबलत्वं अतएव न विरोधः अतएव च विकल्पस्य न प्रसक्तिरिति अतिव्याप्तेर्नप्रसक्तिरइत्याह- **तत्रहीति।**

इत्थमुत्प्रेक्षायामतिव्याप्ति परिहारं प्रदर्श्य सन्देहविशेषे अव्याप्ति-परिहारप्रकारमुपपादयति-**अस्याःसर्गविधाविति।**

**अयंभावः** अस्याः सर्गविधावित्यत्र वनितास्रष्टृत्वरूपैक धर्मप्रकारक-चन्द्राद्यनेकधर्मिकस्सन्देहः। तत्र यद्यपि चन्द्रो मदनो वसन्तो वा स्रष्टेति एककोटि-कनानाधर्मिकसंशये चन्द्रविशेष्यकसंशये सति मदनविशेष्यक संशयस्यानुदयात् मदनविशेष्यकसंशयः चन्द्रविशेष्यकसंशयं प्रतिक्षिपति, मदनविशेष्यकसंशयं च वसन्तविशेष्यकस्संशयः प्रतिक्षिपतीति, परस्परप्रतिक्षेपकत्वं विद्यते। अथापि

## -तत्त्वालोकः-

वनितास्रष्टृत्वकोटिःएकैवेत्यनेककोटिकत्वं नास्ति। अत एव विरुद्धानेककोटयवगाहित्वं परित्यज्य विरुद्धनानार्थसंश्रयत्वमुपात्तम्। एवं चैककोटिकनानधिर्मिकसंशयोदाहरणेषु नाव्याप्तिरितिभावः ॥

**वस्तुतस्त्वत्र**-"अस्याःसर्गविधौ" इत्यत्र नायकः पुरूरवाः नायिकायामूर्वश्यां नरसचिवस्य नारायणस्योरुसम्भवतां जानन्नपि तस्या रूपसम्पदं दृष्ट्वा रूपसम्पत्परिकल्पने चन्द्रः स्वयं किं निर्माता अभवत्? श्रृङ्गारप्रधानतां दृष्ट्वा मदनोऽस्याश्शृङ्गारित्वेन निर्माता किमभवत्? सौरभ्यसौकुमार्यादिकं दृष्ट्वा किं वसन्तोऽस्यास्सौरभादिप्रदाता सन् निर्माताऽभूदिति एकस्यामेवोर्वश्यां रूपसम्पद्धरितत्व-श्रृङ्गारप्रधानत्व सौरभ्यादिमत्वानामेकत्र क्रोडीकरणमभिसन्धायैव सन्दिदिहे। अतश्च चन्द्रादीनां धर्मिणां नान्योन्यप्रतिक्षेपकत्वम्,तथा विवक्षायां नायिकाया निरतिशयलावण्य सौरभ्यवत्वादीनां तत्पक्षयोः प्रतिक्षेपात्। अतश्च-एवं लक्षणं कार्यं-चमत्कारजनकसादृश्यमूलकविरूद्धानेकपदार्थ समाश्रयानियतोभयांशावलम्बिज्ञानत्वमिति। तथासति न क्वाप्यतिव्याप्त्यव्याप्ती भवतः॥

यत्तु **रसगंगाधरकृता**-अत्र हि 'अस्याः सर्गविधौ यः प्रजापतिरभूत् स किंनु चन्द्रः, किं नु मदनः, किंनु वा वसन्तः इति संशयः प्रजापतिधर्मिकः चन्द्रत्वादिनानाकोटिक एवेति कुत्राव्याप्तिः इति तदपि न चारुतरम्, एष्वन्यतमस्य प्रकृतनायिकास्रष्टृत्वमिति पर्यवसानप्रसक्त्या कविविवक्षितार्थालाभात्। यच्च **तेनैव**-नचात्र चन्द्रादिधर्मिकस्संशयो वक्तुं शक्यः। एवं च प्रजापतेः प्रथमोद्देशो न स्यात् इति सत्यमुक्तम् अथापि तत् "**अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत्**" **इति न्यायस्य** प्रसरमाशङ्क्योक्तम् तस्य च दोषस्य तत्र प्रसरः यत्र समासेन निर्देशे कृते विभज्य उद्देश्यविधेयभावस्य परिकल्पयितुमशक्यता। यथा-"द्वितीयमौर्वीमिव कार्मुकस्य" इत्यादौ। अत एव च **आदित्यादिमत्यधिकरणे** "पृथिवी हिंकारः"इत्यादिनिर्देशविपर्ययेऽपि हिंकारादिष्वेव पृथिव्यादिदृष्टिः" इति शङ्कराचार्यैरुक्तम् (ब्रह्म-४-१-६) संगच्छते। अत्रापि पौर्वापर्यविपयर्ययस्य कर्तुं शक्यत्वात्।

## -चित्रमीमांसा-

**सन्देहध्वनिर्यथा-अस्मत्कुलकूटस्थवक्षःस्थलाचार्यकृते वरदराजवसन्तोत्सवे-**

**काञ्चित्काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव श्रियम्।**
**वरदस्संशयापन्नो वक्षःस्थलमवैक्षत।। इति।**
**अत्र संशयस्य शब्दोपात्तत्वेऽपि तावन्मात्रस्यानलंकारत्वात्।।**

## -तत्त्वालोकः-

यद्वा-एकधर्मिकविरुद्धभावाभावप्रकारकज्ञानं संशयः" इति मते "अस्यास्सर्गविधावि"त्यत्रापि-अस्याः चन्द्रो निर्माता नवामदनो निर्माता न वा, वसन्तो निर्माता नवेतिरीत्या चन्द्रादिविशेष्यकनिर्मातृत्व-तदभावकोटिका नानासंशया इत्येव युक्तम्। नतु निर्मातृधर्मिक-चन्द्रादिनानाकोटिका चन्द्राद्यनेकधर्मिकनिर्मातृत्वकोटिको वा संशयः इति ,अन्यथा· **काव्यप्रकाशकारादिभिः** विशेषधर्मानुक्त्युदाहरणत्वेनोपादानमयुक्तं स्यात्। अतश्च **ग्रन्थकृता जगन्नाथेन चात्र** सन्देहोपपादनसरणिः चिन्त्यैवेति दिक्।।

सोदाहरणंवाच्यससन्देहंप्रतिपाद्य-तद्ध्वनिमुदाहरति **ससन्देहध्वनिरिति**।

अप्पय्यदीक्षितकुलस्य मूलपुरूषेण **वक्षःस्थलाचार्येण** काञ्च्यधिदैवतस्य अर्चारूपिणो वरदराजस्य विष्णोः वसन्तोत्सवसमयमधिकृत्य **प्रवृत्ते** **वरदराजवसन्तोत्सवाख्ये** स्तोत्रकाव्यपद्ये सन्देहालंकारध्वनिः प्रतीयत इत्यर्थः। **कांचिदिति** वरदः काञ्चीनगर्याःअधिदैवतं विष्णुः काञ्चन गौराङ्गीम् हिरण्यवर्णाम् काञ्चित्, साक्षात् प्रत्यक्षां श्रियमिव वीक्ष्य अवलोक्य संशयापन्नः सन्देहग्रस्तः वक्षःस्थलं श्रियः आवासभूतं स्ववक्षस्स्थलं अवैक्षत अपश्यत् इत्यर्थः।

अत्रः-वरदराजः वसन्तोत्सवसमागतायाः विजयनगराधीश्वरस्य कृष्णराजस्य पट्टमहिष्याः लावण्यराशिमवलोक्य तां साक्षाल्लक्ष्मीमेवावगत्य "वक्षस्स्थले स्थिता लक्ष्मीः ततोऽवतीर्य किं पुरः तिष्ठतिः" इत्येवंसन्दिदिहे।

## -चित्रमीमांसा-

## तदलंकारताप्रयोजकस्य "वक्षस्स्थले स्थितैव लक्ष्मीः

## -तत्त्वालोकः-

अत्र च संशयस्य शब्दतः उपादानेन कथं तद्ध्वनित्वम्? इत्याशङ्क्य समाधत्ते **अत्रेति।**

संशयपदवाच्यसन्देहमात्रस्याचमत्कारितया अलंकारत्वाभावात्। अयं भावः- अत्रोदाहरणे संशयशब्दप्रयोगमात्रेण नोक्तव्यङ्ग्यसंशयस्य प्रतीतिः परन्तु अनुवादमात्रम्। यथा-

याते द्वारवतीं तदा मधुरिपौ तद्दत्तझम्पानतां
कालिन्दीतटरूढवञ्जुलतामालिङ्ग्य सोत्कण्ठया।
तद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैप्युत्कमुत्कूजितम्।।

इत्यादौ विभावादीनां शब्दादनुवादमांत्र क्रियते। नतु तत्कृतैव रसादिप्रतीतिः। अपि तु विशिष्टविभादादिप्रतिपादनद्वारेणैव। नैतावता रसादीनां वाच्यप्रायत्वमुपपादयितुं युक्तम्। अत एव **ध्वनिकृता**-"यत्राप्यस्ति तत्रापि विशिष्टविभावादिप्रतिपादनमुखेनैवैषां प्रतीतिः स्वशब्देन सा केवलमनूद्यते। नतु तत्कृता। विषयान्तरे तथा तस्या अदर्शनात्। नहि केवलं श्रृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्वप्रतीतिरस्ति" इत्युक्तम्। एवं च अर्थसामर्थ्याक्षिप्तत्वमेव रसादीनां यथा अभ्युपगम्यते तथात्रापि न संशयपदोपादानमात्रेणाभिमतसंशयध्वननम्, अपि तु तदभिव्यञ्जकोपलम्भादेव। वाच्यस्य संशयस्य आकारानुल्लेखात् वाच्यसंशयालंकारत्वं न वक्तुं योग्यम् तस्याचमत्कारित्वात्।

यस्य च संशयालंकारताप्रयोजकत्वं तस्य व्यङ्ग्यत्वमेवेति तत्प्रयोज्यस्य सन्देहस्यापि व्यङ्ग्यानुगुणकल्पनयैव चारुत्वमिति ध्वनित्वमेवोचितमिति प्रतिपादयति-**तदलंकारतेति।**

## -चित्रमीमांसा-

**ततोऽवतीर्य किं पुरतस्तिष्ठतीत्येवं संशयाकास्य वक्षः स्थलमवैक्षतेत्यनेन व्यङ्ग्यत्वात् सन्देहालंकारध्वनिरत्र॥**

## -तत्त्वालोकः-

तदलंकारताप्रयोजकस्य-अलंकारभूतसंदेहप्रयोजकस्य, वक्षःस्थले स्थितैव लक्ष्मीः उरस्स्थले अवस्थितैवेन्दिरा, ततः- वक्षःस्थलात् अवतीर्य, पुरतः पुरोभागे किं तिष्ठति" इत्येवंरूपस्य संशयाकारस्य, वक्षस्स्थलमवैक्षतेत्यनेन वक्षः स्थलावेक्षणरूपार्थेन, व्यङ्ग्यत्वात् अत्र सन्देहालंकारध्वनित्वम्।

ननु-कथमिह-सन्देहालंकारस्य ध्वनित्वम्? "वरदः संशयापन्नः इति पदमुपादाय सन्देहस्य अभिधयैव प्रतिपादनात्। यस्य चाभिधया मनागपि प्रतिपादनं तत्र व्यज्यमानस्य गुणीभाव एवोचितः। न तु प्रधानता। अत एव-**ध्वनिकृता**-

शब्दार्थशक्त्याक्षिप्तोऽपिव्यङ्ग्योऽर्थः कविनापुनः।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालंकृतिर्ध्वनेः॥

इत्युक्तम्।

तथैव **लोचनकृतापि**-व्यङ्ग्यस्यार्थस्य यदि मनागपि उक्त्या प्रकाशनं तदा गुणीभाव एव शोभते। तस्मात् यत्रोक्तिं विना व्यङ्ग्योऽर्थः तात्पर्येण प्रकाशते तत्र तस्य प्राधान्यात् ध्वनित्वम्" इत्युक्तम्। अन्यथा-

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥

इत्यादौ प्रदोषसमयादेः गुणीभूतत्वाभिधानमयुक्तं स्यात्।

**इतिचेत्-उच्यते**-अयं वक्षःस्थलाचार्यः स्वाश्रयदातुः शिष्यस्य **च कृष्णराजस्य** पट्टमहिषीमालोक्य राज्ञ्यः आनुरूप्यं विचिन्त्य स्वगतं नायिकाविषयकं (प्रीतिलक्षणं) विस्मयस्थायिनं अद्भुतं परिपोषयितुकामः यो वरदः स्वयं लक्ष्मीं वक्षःस्थले अवस्थाप्यापि इमां महिषीं विलोक्य किमियमेव लक्ष्मीः उत अन्येति सन्देहं वरदकर्तृकस्ववक्षःस्थलावेक्षणमुखेन प्राचीकशत्। अत्र व्यज्यमानस्य वक्षः स्थले

## -तत्त्वालोकः-

स्थितैव लक्ष्मीः ततोऽवतीर्य पुरतस्तिष्ठतीत्येवं संशयाकारस्यानुरोधेन वाच्यसंशयस्य सामान्यस्योक्तव्यङ्ग्यविशेषे पर्यवसानमिति पर्यवसितो व्यङ्ग्यः संशयः वाच्यसंशयोपस्कृतः कविगतराजमहिषीविषयकविस्मय-स्थायिनोऽद्भुतस्य (नायिकायाः कीदृशी शोभा सम्पत् या वरदस्यापि सन्देहमुदपादयदिति) व्यङ्ग्यस्य रसस्य अङ्गभावतां प्रापितः इति। अत एव च प्राधान्यं ध्वनित्वमपि। तावता ध्वनित्वं नापोढमिति ग्रन्थकृदाशयात्। अत एव **ध्वनिकृता-**

प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्यपर्यालोचनया पुनः॥

इति सूत्रितम्। तत्रैव **वृत्तौ**-गुणीभूतव्यङ्ग्योऽपि काव्यप्रकारः रसभावादितात्पर्यपर्यालोचनेन पुनः ध्वनिरेव सम्पद्यते इत्युक्तम्। **लोचनकृतापि**- "रसादिव्यतिरिक्तस्य हि व्यङ्ग्यस्य रसाङ्गभावयोगित्वमेव प्रधान्यं नान्यत्किञ्चित् "इत्यभिहितम् ,एवं च प्रकृते वक्षः स्थलावेक्षणव्यङ्ग्यस्य वक्षः स्थले स्थितैव लक्ष्मीः ततोऽवतीर्य किं पुरः तिष्ठतीत्येवं संशयाकारस्य ध्वनित्व कथनं न ध्वनितत्वज्ञैः उपहसनीयं भवितुमर्हती त्यवधेयम्॥

एतेन **चित्रमीमांसाखण्डने-रसगंगाधरे**-च यदपीत्यादिना तदेतद्ध नितत्वज्ञैरूपहसनीयमित्युक्तं चिन्त्यम्।

**यच्च-तैरेव**-एवं च संशयमात्रस्य शक्त्याबोधनात् "वक्षःस्थलस्थितैव" इत्यादिना संशयविशेषस्य संशयसामान्ये पर्यवसानं यदुक्तं तदपि चिन्त्यं-यतः सामान्यस्य विशेषे पर्यवसानं दृश्यते। यथा-घटमानयेत्युक्ते नहि घटसामान्यमानयति, अपि तु कश्चन घटविशेषमेव तद्वदत्रापि संशयपदस्य सामान्यवाचिनः व्यज्यमाने संशयविशेषे पर्यवसानं युक्तं न पुनर्विशेषस्य सामान्ये पर्यवसानमिति। अतश्च अत्र विस्मयस्थाय्यद्भुतरसाङ्गतया व्यज्यमानस्य संशयविशेषस्य पूर्वोक्तरीत्या ध्वनित्वकथनं ग्रन्थकृतः नानुचितप्रतिपादयितृतां सम्पादयितुमलमिति दूषणोद्ध ाषणायैव केवलं रसगंगाधरकृतामभिधानमिति विद्वद्भिराकलनीयम्॥

-चित्रमामांसा-

**यथा**

**दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः**
**वीक्ष्य बिम्बमनुबिम्बमात्मनः कानि कान्यपि चकारलज्जया।।**

-तत्त्वालोकः-

एवमुक्तोदाहरणेऽभिव्यज्यमानाद्भुतरसानुगुण्येन व्यज्यमाने सन्देहे ध्वनित्वमेव न गुणीभूतव्यङ्ग्यत्वं तादृशस्थले व्यज्यमानसामान्याकारस्य वाच्यत्वेऽपि तस्यानुवाद्यत्वमभिव्यज्यमानविशेषोपस्कारकत्वं च कवीनामप्यभिमतमित्यत्र महाकविसम्मतिं प्रदर्शयितुं तादृशमेव श्रृङ्गारानुगुणभावस्य ध्वनित्वं पार्वतीपरिणयानन्तरभाविनं प्रसाधनविधिं दर्पणे पश्यन्त्याः पार्वत्याः दर्पणे स्वभर्त्रवलोकनात्परमभिव्यक्तायाः लज्जायाः शब्दतः सामान्यरूपेणोपात्तत्वेऽपि विशेषरूपेण तत्तद्विभावानुभावाभ्यामेवाभिव्यक्तत्वेन लज्जाविशेषस्य ध्वनित्वं **कालिदासस्या**पि सम्मतमित्यभिप्रयेण तदीयं पद्यमुदाहरति **यथेति**। पार्वती परिणयानन्तरं हरेणोपभुक्ता प्रभातसमये रात्रिवृत्तं प्रष्टुमुद्यतं सखीजनं ह्रिया अशंसन्ती रतसमयसञ्जातसंभोगाभिज्ञानान्यवलोक्य लज्जाभिव्यञ्जकचेष्टाविशेषाण्यन्वतिष्ठत्। तत्प्रकारमाह-**दर्पणे चेति**।

सा-पार्वती, चकिंच, दर्पणे-मुकुरे, परिभोगदर्शिनी-संभोगचिह्नावलोकनतत्परा, पृष्ठतः पृष्ठभागे, निषेदुषः-अवस्थितस्य, प्रणयिनः अनुरक्तस्य हरस्य, बिंम्बं-दर्पणे प्रतिफलितं, तथा अनु पश्चात् आत्मनः बिम्बं प्रतिफलितं, यद्वा-पृष्ठतो निषेदुषः प्रणयिनः अनुबिम्बं दर्पणप्रतिफलितं, यद्वा-पृष्ठतो निषेदुषःप्रणयिनः अनुबिम्बं दर्पणे प्रतिकृतिं वीक्ष्य विशेषतोऽवलोक्य, लज्जया ह्रिया, कानि कान्यपि चमत्कृतिजनकानि चेष्टाविशेषाणि वैवर्ण्या-धोमुखत्वादीनि इतियावत्। अत एव-

यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव।
निश्शङ्कमन्याः सममाहितेर्ष्या तत्रान्तरे जघ्नुरमुं कटाक्षैः।।

**चित्रमीमांसा-**

**इत्यत्र "कानि कान्यपि "इति सामान्यतो निर्दिष्टानुभाव-विशेषप्रतीत्यर्थं लज्जाशब्द प्रयोगेऽपि तस्याः स्वविभावानुभावाभ्यां रसानुगुणाभिव्यक्तिरूपो ध्वनिः।**

तत्त्वालोकः

इति **माघः**। चकार-अकार्षीत्। "कानि कानि न चकार लज्जया" इति पाठे तु सर्वाण्यपि चेष्टाचमत्कृतानि चकारेत्यर्थः। अस्मिन् पाठे तु काक्काक्षिप्तता लज्जाविशेषस्य स्यादिति गुणीभूतव्यङ्ग्यता प्रसज्येत। अत एव ग्रन्थकृता स एष पाठः नादृतः।

अत्र लज्जाध्वनन प्रकारमुपपादयति-**इत्यत्रेति**। अत्र इतिशब्दः स्वरूपबोधकः, कानि कानि इत्यनयोः सर्वनामत्वेन "**सर्वनाम्नां च बुद्धिविषयतावच्छेदकोपलक्षित-तत्तद्धर्मावच्छिन्ने शक्तिः**" इति नयेन प्रियावलोकनजनितस्य क्षताधरदर्शनजनितस्य नखक्षतस्थानावलोकनजनितस्य च चेष्टाविषेषस्य लक्षणया बोधः। एवं च सामान्यतः व्यापकरूपेण निर्दिष्टाः ये अनुभावविशेषाः चेष्टाविशेषव्यक्तयः '**निर्विशेषं न सामान्यम्**' **इति न्यायात्** तेषां प्रतीत्यर्थ अभिव्यञ्जनाय, लज्जाशब्दप्रयोगेऽपि अमुष्याः चेष्टाः लज्जामूलाः इति सूचयितुमेव तत्प्रयोग इति भावः। तस्याः लज्जायाः, स्वविभावानुभावाभ्यां, संभोगचिह्नानां दर्पणतलावलोकनावसरएव तत्प्रतिफलित-प्रियावलोकन स्वीयकुचक लशान्तर्वर्तिप्रियमृदुनखक्षतावलोकन जन्यहर्षावेद-तत्पुलकाद्यवलोकनरूपविभावेन, अधोमुखत्वतिर्यगवलोक-नादिरूपानुभावेन च रसानगुणाभिव्यक्तिरूपः श्रृङ्गाररसानुगुणाभिव्यक्ति-विषयीभूतलज्जारूपः ध्वनिः अत्रेति भावः।

यचात्र - दर्पणप्रतिबिम्बितप्रियावलोकनेन विभावितः, शिरोनमननयनवदन प्रच्छादनादिभिरनुभावितः, स्वच्छन्द क्रियासंकोचहेतुभूत-चित्तवृत्तिविशेषात्मकः तत्राभिव्यज्यमान पार्वतीपरमेश्वरावलम्बनश्रृङ्गारस्य अनुगुणः लज्जाख्यो व्यभिचारिभावो ध्वन्यत इत्युक्तं भवति। अत एव मल्लिनाथेनापि

## चित्रमीमांसा

## भ्रान्तिमान्

**अथ भ्रान्तिमान्।।**

तत्त्वालोकः-

### भ्रान्तिमान्

अभेद प्रधानेषु असम्यग्ज्ञानमूलकं सन्देहं निरूप्य भ्रान्तिमदलंकारं लक्षयति- **अथेति**। तत्र तावद् भ्रान्तिमत्पदार्थः कः? अन्यस्य अन्यथाध्यवसायो भ्रान्तिः। इयमेव विपर्यय इत्युच्यते। अयं च विपर्ययः त्रेधा संभवति। वस्तुनोऽप्रतिपत्तिरूपतया यथा-"रसो नालक्षि लाक्षायाश्चरणे सहजारुणे।" इत्यादिमीलितस्थले। वस्तुनो वस्त्वन्तरतया यथात्रैव-"कपालेमार्जरःपय"इति वक्ष्यमाणोदाहरणे। इन्द्रियदोषसहकृतसादृश्यादिना विपरीततया भानरूपतया च यथा 'पलाशमुकुलभ्रान्त्या' इति वक्ष्यमाणोदाहरणे। एवं चैवंविधाभ्रान्तिर्यस्मिन् भणितिविशेषे प्रकाशते स भ्रान्तिमान्। उक्तं च-प्रमात्रन्तर धीर्भ्रान्तिरूपा यस्मिन्ननूद्यते। स भ्रान्तिमान् इति ख्यातोऽलंकारे त्वौपचारिकः।।

इति। अस्यायमर्थः- अर्थालंकारस्य अर्थनिष्ठत्वेन भ्रान्तिमात्रे अलंकारता, तादृशालंकारयुक्ते वाक्ये भ्रान्तिमद्व्यवहारो गौणः आरोपित इति।

अत्र तावत्-**भामह-वामनो-द्भट-भोजराजप्रभृतयः** प्राचीनाः आलंकारिकाः अमुमलंकारं पृथङ् न न्यरूपयन्। **दण्डी तु-** मोहोपमेत्याह। तल्लक्षणं चान्यत्रैवं स्थितम्-

प्रतियोगिनमारोप्य तदभेदेन कीर्तनम्।
उपमेयस्य यन्मोहोपमासौ भ्रान्तिमद्वचः।।

## तत्त्वालोकः

इति तदपि न युक्तम्। यत अभेदप्रधानं रूपकं पृथक्प्रदर्श्य भ्रान्तेस्तथा अप्रतिपादनात्।

यदपि **रुद्रटः**-

अर्थविशेषं पश्यन् अवगच्छेदन्यमेव तत्सदृशम्।
निस्सन्देहं यस्मिन् प्रतिपत्ता भ्रान्तिमान् स इति॥

इति लक्षयामास तदपि रूपकादावतिव्याप्तम्। यथा-

विकसितताराकुमुदे, गगनसरस्यमलचन्द्रिकासलिले।
विलसति शशिहंसः, प्रावृड्विपदपगमे सद्यः॥

इत्यत्र तारा-गगन-चन्द्रिका-शशि-प्रावृट्सु, कुमुद-सरःसलिलहंस-विपद्रूपेण प्रतिपादनात्।

यच्च **मम्मटः**-

भ्रान्तिमानन्यसंवित् तत्तुल्यदर्शने।

इतिसूत्रं विवृण्वन् प्राकरणिकाप्राकरणिकयोर्दर्शने यदप्राकरणिकतया संवेदनं स भ्रान्तिमान् इत्यलक्षयत् तदपि परस्परभ्रान्तिमति-

पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः।
सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति॥

इत्यादावुभयोः प्राकरणिकत्वे- उभयोरप्राकरणिकत्वे वा उक्तलक्षणसमन्वया-भावादव्याप्तम्।

यच्चापि **रुय्यकः**-"सादृश्याद्वस्त्वन्तरप्रतीतिर्भ्रान्तिमान्" इति लक्षितवान् तदपि उत्प्रेक्षायां- सन्देहालंकारे चातिव्याप्तम्। तद्यथा-

रतेर्गृहीतानुनयेन कामं प्रत्यर्पित स्वाङ्गमिवेश्वरेण।
काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतीनिराशम् ॥

अत्र अजे राज्ञि मदनरूपत्वमुत्प्रेक्ष्यते। नह्यजो मदनः। तथापि मदनसादृश्यान्मदन-रूपमुत्प्रेक्ष्यत इति उक्तलक्षणातिव्याप्तिः।

**चित्रमीमांसा-**

**कविसम्मतसादृश्यात् विषये पिहितात्मनि।**
**आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः॥**

**तत्त्वालोकः-**

एवम्-

किं पङ्कजं, किमु सुधाकरबिम्बमेतत् किं वा मुखं क्लमहरं मदिरेक्षणायाः।
यद्दृश्यते मधुकराभकुरङ्गकान्ति नेत्रद्वयानुकृति कार्ष्ण्यममुष्य धत्ते॥

इत्यादि सन्देहोदाहरणेऽपि नायिकामुखं क्लमहरत्वसादृश्यात् पङ्कजादिरूपतया प्रतीतमिति अतिव्याप्तिः।

यदपि-**विद्याधरः**-

वस्त्वन्तरप्रतीतिर्विलसति सादृश्यहेतुका यत्र।
तं भ्रान्तिमन्तमेतं ब्रुवतेऽलंकारपारदृश्वानः॥

इति लक्षितवान् तदपि तदीय प्रतीपोदाहरण एवातिव्याप्तम्। यथा-

कान्तिः स्वभावसुभगैव तवाङ्गरागः प्रत्यग्रकुंकुमरसःखलु मङ्गलाय।
आसीः कलिङ्गनृपते भुवनोत्सवाय प्रीणातु कैरवकुलानि परं सुधांशुः॥

इत्यादौ कान्तेः आरुण्यादिसादृश्येन अङ्गरागत्वेन प्रतीयमानत्वात्। तथा **साहित्यदर्पणकारः**-

"साम्यादतस्मिन् तद्बुद्धिः भ्रान्तिमान्प्रतिभोत्थितः।"

इति लक्षणं प्रणिनाय तदपि प्रकृतस्य वस्तुनः वस्त्वन्तरेण आच्छदनवति मीलितोदाहरणे-

सदैव शोणोपलकुण्डलस्य यस्यां मयूखैररुणीकृतानि।
कोपोपरक्तान्यपि कामिनीनां मुखानि शङ्कां विदधुर्नयूनाम्।

इत्यत्रार्थ्या रीत्या उक्तलक्षणसमन्वयादतिव्याप्तिः अतः प्रायशो **विद्यानाथलक्षणं** निर्दुष्टमिति मत्वा तल्लक्षणमुपादत्ते **कविसम्मतेति**।

**चित्रमीमांसा-**

**''पिहिताऽमनि'' इत्यनेन आरोप्यमाणानुभवस्य स्वारसिकं कविप्रतिभया कल्पनं विवक्षितम्। तस्यैव विषयपिधानसामर्थ्यम्। अतः रूपकादौ नातिव्याप्तिः।**

तत्त्वालोकः-

कविसम्मतसादृश्यात् पिहितात्मनि विषग्रे आरोप्यमाणानुभवो यत्र तत्र भ्रान्तिमान् मतः इति योजना।

कविसम्मतसादृश्यात् कविप्रतिभाकल्पितं सादृश्यं निमित्तीकृत्य, पिहितात्मनि तिरोहितरूपे विषये-धर्मिणि आरोप्यमाणानुभवः उपमानभूतधर्म्य-न्तरप्रकारकोऽनाहार्यनिश्चयः यस्मात् वाक्यसन्दर्भात् प्रतीयते सोऽर्थः तादृशवाक्यसन्दर्भप्रतीतोऽर्थः भ्रान्तिमान् भ्रान्तिमत्पदव्यपदेश्य इति मतः इष्टः इत्यर्थः। तथाच ''चमत्कारजनककविसम्मतसादृश्यप्रयोज्यताद्रूप्य-सम्बन्धावच्छिन्नकिंचिद्धर्मिविशेष्यक धर्म्यन्तरप्रकार कानाहार्यनिश्चयोभ्रान्तिः साच कविना यत्र देवतिर्यङ्मनुष्यादिगतत्वेन प्रतिपाद्यते तत्र भ्रान्तिमान् अलंकारः। अत्र भ्रान्तिरेव अलंकारव्यपदेश्यः तद्वति तूपाचारादिति प्रागेवावेदितः।

अत्र कविस्मतेत्यनुपादाने ''रङ्गे रजति''मिति बुद्धेः रजतवृत्तिथाळ धळयरूपसादृश्य प्रयोज्यत्वसत्वात् भ्रान्तिमत्वं प्रसज्येत, तद्वारणाय कविसम्मतेति सादृश्यविशेषणमुपात्तम्। सादृश्यादित्युपादानं तदन्यनिमित्तक भ्रान्त्यादावतिव्या-प्तिवारणाय इत्युत्तरत्रोपपादयिष्यते। धर्मिणीत्यर्थकं विषये इति पदोपादानं ''स्वगुणपरित्यागेनान्यदीयगुणस्वीकारात्मके ''पद्मरागायते नासामौक्तिकं तेऽधरत्विषा।'' इति तद्गुणोदाहरणेऽतिव्याप्तिवाराणाय। पिहितात्मनि इति विषयविशेषणोपादानं रूपकेऽतिव्याप्तिवारणायेत्याह-**पिहितेत्यादिना** पिहितः दोषविशेषेण तिरोधापितः आत्मा स्वरूपं धर्मिणः आकारो यस्मिन् ज्ञाने दोषविशेषहेतुकतिरोधापनविषयीभूतधर्मिविशेष्यक इत्यर्थः। एवं चात्र प्रवृत्ति-पर्यन्तस्य सतः कविकल्पितस्य वा निश्चयस्योपनिबन्धनेन स्वारसिकस्यैव निश्चयस्य

## तत्त्वालोकः-

अनाहार्यत्वमेव भवेत्। अन्यथा तु विषयपिधानसामर्थ्यं न भवेत्। रूपके तु उपमेये उपमानतादात्म्यनिश्चयस्य आहार्यत्वमेवेति विषयतिरोधानं नास्ति अतश्च नातिव्याप्तिरित्यभिमानः।

**ननु-** अत्रैव- आरोप्यमाणानुभवः''इति विशेष्यमुपात्तम्। रूपके च नारोप्यमाणानुभवः अपि तु अनुभूयमानाभेद इति कथं रूपकेऽतिव्याप्तिः प्रसज्यते। यदर्थं पिहितात्मत्वं विषये विशेषणतयोपात्तम् इति शङ्क्यम्।।

**उच्यते-** उपमेये निश्चीयमानोपमानतादात्म्यं यथा रूपकं तथा उपमेये उपमानतादात्म्यनिश्चयोऽपि रूपकं भवितुमर्हति। यथा उपमेये उपमानतादात्म्यसंभावनुमुत्प्रेक्षा, तथा उपमेये संभाव्यमानोपमानतादात्म्यमपि तद्वदत्रापीति ''मुखं चन्द्रः'' इत्यादौ आह्लादकत्वादिधर्मप्रयोज्य ताद्रूप्यसंबन्धावच्छिन्न (मुखत्वावच्छिन्न) मुखविशेष्यकचन्द्ररूपधर्म्यन्तर प्रकारकनिश्चयस्य अनाहार्यतां सूचयितुं पिहितात्मनि इति विशेषणमुपात्तम्।

**एतेन** -''यच्चेत्यादिना अनुभवत्वघटितस्य भ्रान्तिलक्षणस्य अनुभूयमानाभेदात्मके रूपके कथमप्यप्रवृत्तेः'' इत्यन्तेन दूषणं यत् **चित्रमीमांसाखण्डने-रसगंगाधरे च जगन्नाथे**नाभिहितं तत्स्वोक्तिविरुद्धम्। यतो रसगंगाधरकृतैव रूपकप्रकरणे- ''तद्रूपकमभेदो य उपमानोपमेययोः'' इति **काव्यप्रकाशीय**लक्षणस्य ''नूनं मुखं चन्द्रः'' इत्युत्प्रेक्षायां अतिव्याप्तिर्नास्ति। यतो रूपके उपमेये उपमानाभेदः. उत्प्रेक्षायामुपमेये उपमानाभेदसम्भावनेति वैलक्षण्यात् इति पूर्वपक्षमुपन्यस्य उपमेये उपमानतादात्म्यसंभावनाया उत्प्रेक्षात्वं यथा तथा उपमेये संभाव्यमानाभेदस्यापि उत्प्रेक्षात्वमित्यभ्युपगमात्। एवं चात्रापि उपमेये निश्चीयमानोपमानाभेदस्य रूपकत्वमिव, उपमेये उपमानाभेदनिश्चयस्यापि रूपकत्वमिति, अत्रापि भ्रान्तिमति, सादृश्यप्रयोज्य तादात्म्य सम्बन्धावच्छिन्नोपमेयविशेष्यकोपमानाभेदप्रकारकनिश्चयस्य प्रतीत्या रूपकेअतिव्याप्तिरपरिहार्या। अतश्च पिहितात्मनीति विषयाविषेषणमुपादेयमेव।।

यदपि **रसगंगाधरकृता-** उक्तस्य भ्रान्तिलक्षणस्य''कमलमिति चञ्चरीकाः, चन्द्र

## तत्त्वालोकः-

इति चकोरास्त्वन्मुखमनुधावन्ति।"

इति भ्रान्तिसमुदायात्मन्युल्लेखेऽतिव्याप्तिरापादिता। तत्र **प्राचाम् इदं समाधानम्।**

"कमलमिति चञ्चरीकाः, चन्द्र इति चकोराः" इत्यादौ एकैकश उपादाने भ्रान्तिमदलंकारत्वम्, संहत्य उल्लेखत्वमिति, नचैतावताभ्रान्तिमतोऽतिव्याप्तिरिति वक्तुंयुक्ता विषयभेदात्। अत एव **सर्वस्वकृता**-एतादृशोदाहरणेषु सङ्कर एव परिगृहीतः उक्तं च "एवं हि तत्र विषये भ्रान्तिमदलंकारोऽस्तु। अतद्रूपस्य तद्रूपता प्रतीतिनिबन्धनात्, नैतत्, अनेकधाग्रहणस्यातिशयस्यापूर्वस्य भावात्। तद्धेतुकत्वाच्चास्यालंकारस्य। सङ्करप्रतीतिस्त्वङ्गीकृतैव" इति। तथा **विद्याधरोणापिएकावल्याम्**- नापि भ्रान्तिमति। अतद्रूपस्य तद्रूपताप्रतिभासेऽपि अनेकधोल्लेखलक्षणं विच्छित्यन्तरमुररीकृत्यास्य प्रवर्तमानत्वात् इत्युक्तम्।

**वस्तुतस्तु**-भावोदय-भावशान्त्योर्व्यज्यमानतायां सत्यामपि भावशान्तेः भावोदयस्य च लक्षणं भिन्नमेव। तथाहि विभावादिव्यज्यमानहर्षाद्यन्यतमनाशः **भावशान्तिः**। बिभावाद्यभिव्यज्यमानहर्षाद्यन्यतमस्य आस्वादगोचरत्वं-**भावोदय** इति तयोः स्वरूपं निश्चितम्। सत्यम् अथापि

तस्याः सान्द्रविलेपनस्तनयुगप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
सा श्लिष्टा रभसेन तत्सुखवशात्तन्व्या च तद्विस्मृतम्।

यत्र अमर्षभावस्य शान्तिर्यथा व्यज्यते तद्वत् मोहादयोऽपि अभिव्यज्यन्त [illegible]तावन्मात्रेण भावशान्ति भावादययोः लक्षणमन्यथा कर्तुं किं शक्यम् न। अपि तु [illegible]दयस्य भावशान्त्यङ्गतामुपगम्य **"प्राधान्येन व्यपदेशा भवन्ति" इति न्यायेन** [illegible]शान्तिव्यपदेशः भावोदयस्त्वङ्गतां गतः तद्वदत्रापि उल्लेखैकदेशे [illegible]तलक्षणसमन्वयेऽपि तत्समूहे सकृदेवोल्लेखलक्षणात् सकृदेव भ्रान्ति [illegible]स्यातिव्याप्तिर्नास्त्येव। किंच कविसम्मतसादृश्यादित्यत्र"आरोप्यणानुभवः"

**चित्रमीमांसा-**

**कपाले मार्जारः पय इति करान् लेढि शशिनः**
**तरुच्छिद्रप्रोतान् बिसमति करी सङ्कलयति।**
**रतान्ते तल्पस्थान् हरति वनिताप्यं शुकमिति**
**प्रभामत्तश्चन्द्रोजगदिदमहो विभ्रमयति।।**

तत्त्वालोकः-

इत्येकवचनेन निर्दिशता भ्रान्तिसमुदायात्मके उल्लेखेऽतिव्याप्तिर्नास्त्येव। **उपधेयसङ्करेऽप्युपाधेरसाङ्कर्यादिति न्यायात्** तथाचैकधर्मिकधर्म्यन्तर-प्रकारकैकनिश्चयात्मिका **भ्रान्तिः**। एकधर्मिकनाना-प्रकारकानेकनिश्चयात्मकः **उल्लेख** इति तयोर्भेदस्सुव्यक्त एव। अथापि खण्डनोद्यमो **जगन्नाथस्य** आग्रहमूल एवेति बोध्यमिति दिक्।

भ्रान्त्युदाहरणं प्रदर्शयति **कपाल इति**। कपाले (स्थितान्) कपालप्रसृतान्, शशिनः चन्द्रमसः करान् किरणान् "करो धनोपले-हस्ते-प्रत्याये रश्मिशुण्डयोः।दातुं भूषितकन्यायाम् ।। इति **वैजयन्ती** । मार्जारः बिडालः, पय इति दुग्धमिति अवगत्य लेढि आस्वादयितुं प्रवर्तते। तथा तरुच्छिद्रप्रोतान् द्रुमान्तराळप्रविष्टान्, शशिनः करान्, करी स्तम्बेरमः करःशुण्डा अस्यास्तीति मत्वर्थे इनिः। बिसमिति कमलनाळमित्यवगत्य सङ्कलयति तत्र तत्र पतितानेकीकर्तुं प्रयतते, तृणादिकं तत्र तत्र विक्षिप्तं क्रोडीकृत्य शुण्डया मुखे प्रक्षेपणं गजानां सहजो गुणः अतएव संकलयतीति कविनोक्तम्। तिर्यञ्चो भ्रान्त्या तथा प्रयतन्त इत्युक्तिर्घटेत न पुनर्मनुजेष्वित्यत्राह **वनितापीति**। वनितापि वन्यते याच्यते स्म इति भूतेक्ते वनिता, समुत्पादितात्यन्तानुरागा योषित् "वनिता स्निग्धनार्यां च " इति **वैजयन्ती**, वनिता जनितात्यर्थानुरागायां च योषिति" इति **अमरश्च**। सापि रतान्ते कामविहारावसाने, तल्पस्थान् शय्याया उपरिनिपतितान् शशिनः करान्, अंशुकमिति सूक्ष्मं शुक्लवस्त्रमिति अवगत्य हरति एषा कामविहारनिमग्नाऽभवदित्यन्ये जानीयुः तन्माभूदिति रहसि तद्वस्त्रं स्थापयितुं सहसा गृहीतुमिच्छतीति यावत्। रतस्य गोप्यत्वं-

## तत्त्वालोकः-

आयुर्वित्तं-गृहच्छिद्रंमन्त्रं मैथुन-भेषजे।

दान-मानावमानानि नव गोप्या मनीषिभिः॥

इत्यादि शास्त्रसम्मतमिति लज्जापारवश्यात्तथा प्रवृत्तिरिति च सूचितं भवति। अहो कियदद्भुतम् यत्प्रभामत्तः कान्तिमत्तः अतएव चन्द्रः आह्लादयिता सुधांशुः, इदंजगत् विभ्रमयति अनवस्थितमतिं करोति इत्यर्थः।

अत्र मार्जार-करि-वनितानां-इन्दुकिरणेषु पयो-बिसांशुकबुध्या लेहन-सङ्कलन हरण प्रवृत्तिपर्यन्ततोक्तेः स्वरससिद्धएव भ्रमः कविप्रतिभया चन्द्रिकोत्कर्षप्रतिपि-पादयिषयोपनिबद्ध इति इदं भ्रान्तेरुदाहरणम्। इदमुपलक्षम्-मार्जारकरि-वनिता रूपग्रहीतृभेदेन कपालतरुच्छिद्र-तल्परूपाश्रयभेदेन एक एव करः पयोबिसांशुकात्मना निश्चितः इति **मालारूपोऽप्ययं** भ्रान्तिमान् इत्यपि बोध्यम्।

ननु उल्लेखनिरूपणावसरे **रसगंगाधरकृता**-"अप्पय्यदीक्षितस्त्वि-त्याद्युपक्रम्य-यदि चैवंविधापह्नुतिवारणाय निषेधास्पृष्टत्वं विशेषणमुच्यते, तदा "कपाले मार्जारः" इत्यत्र भ्रान्तावतिप्रसङ्गः कथं नाम वार्येत मार्जाराद्यनेक गृहीतृकानेकधोल्लेखनस्यतत्रापि सत्वादिति "उल्लेखलक्षणस्य प्राथमिकस्य अतिव्याप्तिरिति आपादितम्, तदपि मन्दम्। नहि तत्र प्राथमिकस्य

निमित्तभेदादेकस्य वस्तुनो यदनेकधा।

उल्लेखनमनेकेन तमुल्लेखं प्रचक्षते ॥ इति

अस्य लक्षणस्यातिव्याप्तिः। ग्रहीतृणां मार्जारादीनामनेकत्वे सत्यपि अनेकधाग्रहणं नास्ति। यतश्च मार्जारेणैकेन पयस्त्वेन ग्रहणं, करिणा बिसमित्येव ग्रहणं, वनितया अंशुकमित्येवग्रहणम् न पुनः मार्जारादिनैकेनानेकप्रकारेण ग्रहणमिति सत्यम् तर्हि प्राथमिकोल्लेखस्यासंभव एव स्यात् सर्वत्रापि एकैकेन ग्रहीत्रा एकैकधाग्रहण नपुनरेकैकशः अनेकधाग्रहणमिति। अतश्च उल्लेखलक्षणस्यातिव्याप्तिरेवेति चेन्न

उक्तोदाहरणे कपाल-तरुच्छिद्र-तल्पेषु प्रसृतानां कराणांनै कत्वं वस्ततुः तेषां भेदादिति। एवंच एकस्य वस्तुनोऽनेकधा अनेकेनोल्लेखनं नास्ति किन्तु

**चित्रमीमांसा-**

**अत्र लेहनादिप्रवृत्तिपर्यन्ततोक्तेः स्वारसिक एव भ्रमः कवि प्रतिभया चन्द्रिकोत्कर्षद्योतनाय निबद्धः। क्वचिद् भ्रान्तेरुत्तरोत्तरं पल्लवेन चमत्कारः।**

**बल्लाल क्षेणिपाल! त्वदहितनगरे संचरन्ती किराती**
**कीर्णान्यादाय रत्नान्युरुतरखदिराङ्गारशंकाकुलाङ्गी।**
**क्षिप्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती**
**श्वासामेदानुधावन्मधुकरनिकरै धूमशंङ्का करोति।।**

तत्त्वालोकः-

आश्रयभेदाद्भिन्नेष्वेव करेषु मार्जारादीनामनेकेषां पयस्त्वाद्यनेकरूपतया भ्रान्तिरिति अतिव्याप्तिर्यथाकथंचिद्वारयितुं शक्येति **रसगंगाधरो**क्तदूषणं चिन्त्यमेव। उल्लेखलक्षणे ग्रहीतृभेदः, प्रकारभेदो, वस्त्वैक्यं, निमित्तभेदश्चेति, चतुष्टयमेपेक्ष्यते। नपुनः एकैकशो ग्रहीत्रा अनेकधाग्रहणमित्यदोषात्।।

अत्रोक्तां भ्रान्तिमुपपादयति **अत्रेत्यादिना**। क्वचित् अलंकारन्तरेणोपस्कृता एककर्तृका भ्रान्तिः उत्तरोत्तरं पल्लविता चमत्कृतिमाधत्ते इत्याचष्टे **क्वचिदिति**। उदाहरति **बल्लालेति**।।

हे बल्लाल क्षेणिपाल बल्लालनाम्ना विरव्यातप्रभो? त्वदहितनगरे भवतः शत्रुनगरे, सञ्चरन्ती अटाट्यमाना, किराती, भिल्ली तत्रैव कीर्णानि विक्षिप्तानि विकीर्णानिवा, रत्नानि पुष्यरागाणिक्य गोमेद मुक्ताविद्रुमानि एषां प्रायो रक्तवर्णतोक्ता। रत्नानि च "वज्रं-मुक्ता-प्रवालंच- गोमेदश्चेन्द्रनीलकः वैडूर्यं पुष्यरागश्च पाचिर्माणिक्यमेव च।महारत्नानि चैतानि नव प्रोक्तानि सूरिभिः।।" इति **शुक्रनीत्या**मुक्तानि, एतान्यादाय गृहीत्वा, उरुतराः बृहन्तः, ये खदिराङ्गाराः, खणखणायमानाः येदन्तधावनकाष्ठीयाः उल्मुकाः तच्छंकया भ्रान्त्या आकुलोव्याप्तोऽङ्गी आत्मायस्यास्तादृशी, रत्नेषु खदिराङ्गारबुद्धिं कुर्वतीति यावत्। तदुपरि रत्नानामुपरिष्टात

**चित्रमीमांसा-**

**क्वचित् भिन्नकर्तृकोत्तरोत्तर भ्रान्तिनिबन्धनेन चमत्कारः। यथा-**

**शिञ्जानैर्मञ्जरीति, स्तनकलशयुगं चुम्बितं चञ्चरीकैः**
**तत्त्रासोल्लासलीलाः किसलयमनसा पाणयः कीरदष्टा**
**तल्लोपायालपन्त्यः पिकनिनदधिया ताडिताः काकलोकैः**
**इत्थं चोलेन्द्रसिंह त्वदरिमृगदृशां नाप्यरण्यं शरण्यम्।**

तत्त्वालोकः-

श्रीखण्डखण्डं मलयचन्दनखण्डम् क्षिप्त्वा प्रक्षिप्य, मुकुलीभूतनेत्रा नेत्रयोर्धूमप्रवेशशंकया मुकुलितनेत्रा(सती) धमन्ती फूत्कुर्वती, श्वासामोदेन फूत्कारसमये बर्हिर्नस्सृतमुखनिश्वासनिस्सृत सौगन्ध्यलोभेन, अनुधावन्तः ये मधुकराः भ्रमराः तेषां निकरैः पङ्क्तिभिः समूहैर्वा, धूमशङ्कां धूमभ्रमं करोति, उत्पादयतीत्यर्थः। क्रियासामान्यवाचिनः कृञः क्रियाविशेषे पर्यवसानात् उक्तार्थलाभः।।

अत्र प्रभूताग्निसंपादनप्रयत्नात् रत्नेषु खदिराङ्गार भ्रान्तिः, तया च तदुपरि श्रीखण्डप्रक्षेपः ततो धमनं ततश्च मधुकरानुधावनम् मधुकरेषु च धूमभ्रम इत्येवमुत्तरोत्तरं भ्रान्तिः पल्लवितेति पूर्वोदाहरणाद्विशेषः। तथा -अत्यधिकानलसंपादनोद्देशेन प्रवृत्तायाः किरात्याः तदलाभेऽपि तल्लाभभ्रान्तिनिबन्धना दननुरूपघटनलक्षण विषमालंकारेणोपस्कृता चेत्यपरोऽपि विशेषः।

इत्थमेककर्तृकभ्रान्तेरुत्तरोत्तरं पल्लवतित्वेन अलंकारान्तरोपस्कृतत्वेन च चमत्कार इति तामुदाहृत्य अनेककर्तृकभ्रान्तिपरंपरोपनिबन्धनेनापि चमत्कार इति तामुदाहर्तुमवतरणिकामाह **क्वचिदित्यादिना**।

तामुदाहरति-**शिञ्जानैरिति**। हे चोलेन्द्रसिंह-चोल मण्डलसामन्तभूपतीनां श्रेष्ठः? त्वदरिमृगदृशां भवद्रिपुहरिणाक्षीणाम्, अरण्यमपि कान्तारमपि न शरण्यं न संरक्षकम् प्रायो रिपुभिः शत्रुराजेषु बन्दीकृतेषु आत्मसंरक्षणाय तद्योषितः अटवीषु निलीय अवतिष्ठन्त इति प्रसिद्धिः। प्रकृते तु भवद्रिपुरमणीनां अरण्यमपि विपरीतरूपतामुपगतम् यतस्तत्रत्या अपि चञ्चरीकाः उपद्रवन्ति कीदृशं तासां दौर्भाग्यम्, काले विपरीते सर्वं

## तत्त्वालोकः-

सर्वत्र सर्वस्य प्रतिकूलं भवति, यतश्च "विपद्विपदमनुबध्नाति" इत्यनुभवः। अत्र अरण्यस्याप्यरक्षकत्वं कुत इत्यत्राह-शिञ्जानैरित्यादिना। शिञ्जानैः अव्यक्तमधुरं स्वनद्भिः चञ्चरीकैः भ्रमरैः अरण्ये निलीना रिपुरमणी, मञ्जरी इति-म्दारमञ्जरीति बुध्या भ्रमरूपया, तस्याः स्तनकलशयुगं कलशोपमितं स्तनद्वयम्, चुम्बितं निसितम्, नायिकायां मञ्जरीभ्रान्त्या तदवयवस्तनकलशावच्छेदेन चुम्बनं कृतमिति यावत्। एवंच नायिकायामेव मञ्जरीति भ्रमश्चञ्चरीकाणां नपुनस्तदीयस्तनकलशयोः। एतेन-कविसमयाप्रसिद्धं स्तनकलशयुगे मञ्जरीसादृश्यमुपुनबद्धमिति तन्मूला भ्रान्तिरति नोपनिबद्धुं शक्येति रसगंगाधरकृता यद्दूषणमभिहितं तदयुक्तम्। यतश्चात्र कविःनायिकायामेव मञ्जरीसादृश्यात् तद्रूपाताध्यवसायः चञ्चरीकाणाम् तत एव स्तमकलशयोश्चुम्बने प्रवृत्तिः। यदि नायिकायां मञ्जरीभ्रमो न स्यात्तदा चञ्चरीकाणां स्तनकलशयोरुपरि निपतनं न स्यात्। मञ्जर्या उपरि विनिपत्य मधुपानं चञ्चरीकाणां स्वभावः न तु अन्येषामुपरि। तदर्थं च नायिकायां मञ्जरीभ्रान्तिरुपनिबद्धा। पश्चाच्च तस्याः प्रवृत्तिपर्थन्तत्वयूचनाय शिंशपान्यायेन स्तनकलशयोः चुम्बनाभिधानम्।

नन्वेवंतर्हि-स्तनयोःकलशरूपणे कृते एकजातीय धर्मनिबन्धना लंकारद्वयोपनिबन्धनंसहृदयानामुद्वेजकमिति वाच्यम् तथोपनिबन्धमात्रेणोद्वेग इत्यपि न वक्तुं युक्तम्। अन्यत्रापि तथाविधालंकारद्वयोपनिबन्धात्। यथा-

> परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः
> कथमपि परिवार प्रार्थनाभिः क्रियासु।
> कलयति च हिमांशोर्निष्कलंकस्य लक्ष्मी
> मभिनवकरिदन्तच्छेदपाण्डुः कपोलः।

इति **मालतीमाधवीयेपद्ये**-अभिलाषहेतुकविप्रलंभश्रृङ्गाररसानुगुणतया मालत्याः कपोले सद्यः कृत्तद्विरददन्तसादृश्यमूलतया उपमां परिकल्पयिष्यन्नपि, तस्मिन्कपोले अकलङ्केन्दुशोभासदृशशोभाकलनपूर्वकं पदार्थनिदर्शनामपि **भवभूतिः** उपनिबबन्ध। एतादृशोपनिबन्धनेन न कापिहानी रसस्य प्रसज्यते। तद्वदत्रापि न सादृश्यमूलकभ्रान्तिरूपकयो-रूपनिबन्धनमात्रेणाचमत्कारिता अनुभूयते। प्रत्युत प्रकृतवीररसानुगुणतादृशभ्रान्त्यु-पनिबन्धनेन तदुपस्कृतो भयानकः प्रकृतमेव वीररसं

## तत्त्वालोकः-

पुष्णात्येवेति कोवाउद्वेगस्यावकाशः।

किञ्च -अत्र भ्रान्त्यनुगुणतयातिशयोक्तिमुपनिबध्य रूपकं परित्यक्तवान् तत्त्यागे हेतुश्च रूपकविधया निबन्धनापेक्षया भ्रान्तिविधयोपनिबन्धनं चमत्कारकारीति मननमेव। उत्तरत्र स्तनकलशरूपणं तु प्रबन्धारम्भे प्रवर्तयितव्यमपि रूपकं परित्यक्तमिति सूचयितुमेव। क्वचिदादावेव परित्यागः, क्वचिन्मध्ये, क्वचिदन्ते। अत्रादौ रूपकपरित्यागः "रक्तस्त्वं नवपल्लवैः" इतिपद्ये श्लेषस्य अन्ते परित्यागः। अतएवच रसपरिपोष इत्युक्तं **ध्वनिकृता**-काले च ग्रहणत्यागौ नातिनिर्वहणौषिता।इत्यादिना **द्वितीयोद्योते**, उपपादितं च वृत्तिकृता। एतेन "अपिच धर्मिणि कलशरूपकानुवादेन मञ्जरीभ्रान्तिरूपमलंकारान्तरमुपनिबध्यमानमुद्वेगजनकमेव सहृदयानाम्" इत्यादिदूषणं यत् **रसगंगाधरकृता** अभिहितं तदयुक्तमेव। **तत्त्रासेति**। तेभ्यश्चञ्चरीकेभ्यः प्राप्तो यस्त्रासः उद्वेगः तस्य य उल्लासः समुत्पत्तिः, तत्प्रभवाः लीलाः श्रृङ्गारचेष्टाःयेषां ते पाणयः कराः कीरैः शुकैः किसलयमनसा=पल्लवबुध्या दष्टाः इत्यर्थः। अत्र पाण्युद्देशेन कीरदष्टत्वं विधीयत इत्युपगमेन, **सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायेन** वा पाणिषु दंशमात्रं विधेयमित्युपगमेन विधेयाविमर्शस्याप्रसरात्। एतेन-तत्त्रासेत्याद्युपक्रम्य अविमृष्टविधेयांशत्वं यदापादितं **रसगंगाधरकृता** तत्प्रकारान्तरेण समाहितम्।

**तल्लोपायेति**- तस्य कीरकर्तृकदंशस्य लोपाय=निवारणाय, आलपन्त्यः आभाषमाणाः शत्रुस्त्रियः, शत्रुस्त्रीणामालापेषु इत्यत्र तात्पर्यम्, पिकनिनदधिया कोकिलनिनादइति बुध्या, काकलोकैः वायसैः ताडिताः आहताः। तथाचात्रकोकिल कूजितत्वप्रकारकशत्रुनायिकास्वरविशेष्यकज्ञानात् शत्रुनायिकासु कोकिलज्ञानं तस्मात् ताडने प्रवृत्तिः काकानामिति बोध्यम्। एतेन "पिकनिनादानां ताडनकर्म त्वायोग्यत्वं, नायिकासुपिकभ्रान्त्युत्पादनद्वारा ताडनोपयोगप्रतीत्यभावापादनमित्यादि **रसगंगाधरकृता** अभिहितं दूषणमलग्नकमेवेति भाव्यम्।

स्तनयुग तत्पाणि-तत्कण्ठनादेषु-मञ्जरीसादृश्यादिनिमित्तभेदेन चञ्चरीक-शुक- काकलोकानां मञ्जरी- किसलयपिकतन्निनदभ्रान्तिपरम्परा निबद्धेति

**चित्रमीमांसा-**

**क्वचिदन्योन्यविषयभ्रान्तिनिबन्धनेन। यथा-**

**पलाशमुकुलभ्रान्त्या शुकतुण्डे पतत्यलिः।**
**सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति॥**
**विस्फूर्तिमत्यां कीर्तौ ते विधिवैकुण्ठशङ्कराः।**
**आरोढुं शयितुं वस्तुं आकाक्षन्ति महीतले॥**
**इत्यत्र भ्रान्तिमदलंकारो व्यङ्ग्यः।**

तत्त्वालोकः-

पूर्वोदाहरणाद्विशेषः। अथ परस्परं भ्रमोपनिबन्धोऽपि क्वचिदाधत्ते चमत्कृतिमित्याह- **क्वचिदिति**। अलिः-भ्रमरः, पलाशमुकुलभ्रान्त्या पलाशकोरकइति भ्रमेण, शुकतुण्डे कीरस्य आताम्रकुटिलेमुखाग्रभागे पतति, सोऽपि अर्थात् शुकोऽपीत्यर्थः जम्बूफलभ्रान्त्या जम्बूफलबुध्या तमलिं- तं भ्रमरम्, धर्तुं धृञ् धारणे तुमुन्, ग्रहीतुम् इच्छति कामयते इत्यर्थः अत्र शुकतुण्डे भ्रमरस्य किंशुककोरकभ्रान्तिः, भ्रमरशुकस्य जम्बूफलभ्रान्ति-श्चेति परस्परं भ्रान्तिरूपनिबद्धा। साच पतनजिघृक्षारूपपर्यन्त-तोक्त्या अनाहार्येति बोध्यम्।

इत्थं वाच्यं भ्रान्तिमदलंकारं सोदाहरणं प्रदर्श्य भिन्नकर्तृ-कभ्रान्तेर्व्यङ्ग्यतायामुदाहरणं प्रदर्शयति **विस्फूर्तिमत्यामिति**।

हे राजन्, तव कीर्तौ विस्फूर्तिमत्याम्-उन्मेषवत्यां सत्याम् विधिवै-कुण्ठशंकराः=ब्रह्म-विष्णु-महेश्वराः क्रमेण विधिः कमलमितिबुध्या आरोढुम्-उपरि स्थातुम् आकांक्षाति। वैकुण्ठः विष्णुः स्वस्य क्षीराब्धिशयत्वेन क्षीराब्धिः इति बुध्या शयितुंस्वापाय आकांक्षति। शङ्करः-रुद्रःस्ववासभूतो हिमालय इति बुध्या वस्तुं निवासाय आकांक्षति इत्यर्थः।

अत्र-ब्रह्म-विष्णु-महेश्वररूपानेककर्तृका विष्टरकमलक्षीराब्धि हिमालयात्मिका भ्रान्तिः सर्वतः प्रसरणस्वभावायां कीर्तौव्यज्यत इति भ्रान्तिमदलंकारस्य धवन्यमानतेति भावः।

**चित्रमीमांसा-**

**सादृश्यान्यमूलौ सन्देहविभ्रमौ ससन्देह-भ्रान्तिमदलंकारप्रयोजकौ न भवतः इति। यथा-**

**अमुष्य धीरस्य जयाय साहसी**
**शरासनज्यं विशिखैस्सनाथयन्।**
**निमज्जयामास यशांसि संशये**
**स्मरस्त्रिलोकीविजयार्जितान्यपि।।**

तत्त्वालोकः-

प्रसङ्गतः सादृश्यव्यतिरिक्तनिमित्तोत्थापितत्वे सन्देहालंकारता भ्रान्तिमदलंकारताच न भवति। तत्र प्राथमिकोपस्थितिविषयत्वेन अनलंकारभूतं ससन्देहमुदाहर्तुमाह-**सादृश्यान्येति**।

अयं भावः-चिन्तादिमूलकोऽपि सन्देहस्संभवति। तत्र चिन्तामूलकस्य सन्देहस्य-चेलाञ्चलं न्यस्य कुचाञ्चले मां आलोकयन्ती नयनाञ्चलेन।इतो गता सा क्व गता न जाने गेहं गता वा हृदयंगता वा।।

इत्युदाहृतम्। वितर्कमूलके-"सुप्ता किंनु मृता नु किं मनसि मे लीना विलीना नु किम्।"

इत्यादावपि न ससन्देहता। एवं-काम-शोकभयोन्मादचौरस्वप्नाद्युपप्लुताः।

अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव ।।

इत्युक्तावान्तरनिमित्तोत्थापिता भ्रान्तिरपि न भ्रान्त्यलंकारस्य विषयः इति।

तत्रापि-यत्र सादृश्यमूलकत्वं तत्र तादृशसन्देहस्य चमत्कृतिजनकत्व एवालंकारता। अन्यथा तु नेति प्रदर्शयितुंसाहससादृश्योभयनिबन्धनसन्देहस्याप्येकत्र दर्शनेऽपि तयोः अचमत्कारित्वमिति तदुदाहरणं प्रदर्शयति-**यथा अमुष्येति**।

स्मरः स्वहितानुशीलनपरस्सन् अन्येषां चिन्ताजनकत्वेन अन्वर्थनामधेयः, प्रथमः त्रयाणां लोकानां समाहारः = त्रिलोकी, तद्धितार्थोत्तरपदसमाहारे च (पा.सू. २-१-५१)इति तत्पुरुषसमासे- संख्यापूर्वो द्विगुः(पा.सू.२-१-५२) इति

चित्रमीमांसा-

दामोदरकराघातचूर्णिताशेषवक्षसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्स्थलम् ।।

आद्ये दुर्जयविजयोद्योगसाहसप्रयुक्तः कीर्तिभ्रंशसन्देहः। द्वितीये गाढमर्मप्रहारकृतचन्द्रविभ्रमः इति भ्रान्तिमदलंकार प्रकरणम्।।

इति श्रीमदद्वैतविद्याचार्य श्रीमद्भरद्वाजकुलजलधि
कौस्तुभश्रीरङ्गराजाध्वरिवरसूनोः श्रीमद
प्पय्यदीक्षितस्य कृतौ चित्रमीमांसायां
।।भ्रान्ति मत्प्रकरणं समाप्तम्।।

तत्त्वालोकः-

द्विगुत्वे"अकारान्तोत्तरपदो द्विगुस्त्रियामिष्टः" इति भाष्यकारेष्टचनुगुणतया द्विगोः(पा.सू.४.१.२१) इति ङीप्। अतश्च स नपुंसकम् (पा.सू.२.४.१७) इति नपुंसकत्वं न भवति। तस्याः विजयेन आर्जितानि संपादितान्यपि यशांसि कीर्तीः, संशये निमज्जयामास। यतःस्मरः सः तदा धीरस्य अचञ्चलमनोवृत्तितया मुक्तात्मश्लाघस्यापि अमुष्य नलस्य ज़याय विशिखैः बाणैः शरासने धनुषि ज्यां=मौर्वीं सनाथयन् योजयन् योजने प्रवृत्तः अतएव साहसी हिताहितनिपरेक्षतया कर्म कुर्वाणः अविमृश्यकारी जातइति यावत्।

अयमभिप्रायः- त्रैलोक्ये जितेऽपि यद्येनं जेतुं न शक्ष्यामि तदा सर्वापि कीर्तिः प्रतिष्ठां लभेत नवेति सन्देहः स्मरस्य जात इति। एवं चात्र नले पराक्रमातिशयदर्शनात् नलकामयोः सादृश्यप्रतिपत्तिद्वारा पञ्चशरस्वान्तावस्थितः नलीयपराक्रमातिशयदर्शनरूपासाधारणधर्मज्ञानजन्यः "मदीयं यशः प्रतिष्ठां प्राप्स्यति नवेति सन्देहो यद्यपि सादृश्यमूलः तथापि, तादृशसादृश्यमूलसंशयस्य, दुर्जयनलविजयोद्यमनिबन्धनस्यानुपयुक्तत्वाच्चात्र न सन्देहालंकारतेति पर्यवस्यति।

## तत्त्वालोकः-

एवं भयमूलस्यापि भ्रान्तेरनलंकारतायामुदाहरणं प्रदर्शयति-**दामोदरेति**।

दामोदरस्य कृष्णस्य करेण य आघातः-प्रहारः तेन चूर्णितं कणतां प्रापितं वक्षः वक्षास्थि यस्य तेन चाणूरमल्लेन चाणूरनाम्ना रव्यातेन कृष्णा प्रतिस्पर्धिना मल्लेन नभस्स्थलं आकाशः शतचन्द्रं शतं चन्द्राः यस्मिन् यथा तथा दृष्टमित्यर्थः।

अत्र भगवत्कृतगाढमर्मप्रहारसमुत्पन्नभीतिमूलकः आकाशे चन्द्रशतवत्व भ्रमः उपनिबद्ध इति न भ्रान्तिमदलंकारत्वमिति भावः।

पूर्वोक्तोदाहरणयोराद्ये अमुष्येतिपद्ये अनलंकारताप्रयोजकं सन्देहमुपपादयति -**आद्य इति**।

द्वितीये दामोदरेति पद्ये अनलंकारताप्रयोजिकां भ्रान्तिमुपपादयति-**द्वितीयेइति**।

इदमुपलक्षणं गाढानुरागकृत तत्तद्विभ्रमस्यापि-तद्यथा-

प्रासादे सा पथि पथिच सा पृष्ठतस्सा पुरस्सा
पर्यङ्के सा दिशिदिशि च सा तद्वियोगातुरस्य।
हं हो चेतः प्रकृतिरपरा नास्ति ते कापि सा सा
सासा सासा जगति सकले कोऽयमद्वैतवादः॥

इत्यत्रैकस्या एव क्वचिदवस्थिताया अपि प्रियायाः गाढानुरागकृतं तन्मयत्वानुसन्धानं प्रासादादावनेकत्र युगपत्प्रतीतौ निमित्तमिति न भ्रान्तिमानलंकार इति बोध्यमिति दिक्। भ्रान्तिमदलंकारमुपसंहरति- **इति भ्रान्तिमदिति**।

इति श्रीमदत्रिकुलतिलकश्रीराममिश्रवंश्येन शोभाञ्जनग्रामा (नुग्गेहल्य) भिजनेन सोमयाजियाण्डान्.जनार्दनाचार्यविदुषस्तनूजेन सीताम्बा गर्भसम्भवेन,श्रीमन्महीशूरपुरीमध्यविद्योतमान श्रीमन्महाराज संस्कृतमहापाठशालायां सरस्वतीप्रासादारव्यायांम् **अलंकार**

**शास्त्र प्राध्यापकेन न्यायालङ्कारव्याकरणविदुषा**

**पण्डितरत्नादि** बिरुदभाजा, आस्थानविदुषा **सो. रामस्वामि**

**ऐय्यङ्गार्यशर्मणा विरचिते चित्रमीमांसा**

**व्यारव्याने तत्वालोकारव्ये**

**भ्रान्तिमदलंकारप्रकरणं समाप्तम्॥**

॥शुभं भूयात्॥

## उल्लेखः

### अथेल्लेखालङ्कारः

**निमित्तभेदात् एकस्य वस्तुनो यदनेकधा।**
**उल्लेखनमनेकेन तमुल्लेखं प्रचक्षते।।**

तत्त्वालोकः-

-अथोल्लेखालंकारप्रकरणम्-

अभेद प्रधानेषु रूपक-परिणाम-ससन्देह-भ्रान्तिमतो निरूप्य उल्लेखमवतारयति- **अथेति।**

उल्लेखो नाम बुद्धिविषयीकरणम्। न तावन्मात्रमलंकारः अतिव्याप्तेः। अतः **रुय्यकेन**- "एकस्यापि निमित्तवशात् अनेकधाग्रहणमुल्लेखः" इति सूत्रितम्। यत्रैकं वस्तु नानाविधधर्मयोगितया अनेकधा गृह्यते तत्रोल्लेख इति सूत्रार्थः। इदं च लक्षणंसौजन्याम्बुमरुस्थली सुचरितालेरव्यद्युभिन्तिः।"इति पूर्वोदाहृते मालारूपकेऽतिव्याप्तम्। तत्रापि एकस्या एव राजावल्याः मरुस्थलीत्वाद्यनेक-प्रकारेणोल्लेखनात्। अभिन्नत्वेन निर्दिष्टानां सौजन्याम्ब्वादीनां निमित्तानां भेदाच्चेति **सर्वस्वकृल्ल**क्षणमव्यापकम्।

तथा- **साहित्यदर्पणकृता विश्वनाथेन**-

क्वचिद्भेदाद्गृहीतृणां विषयाणां तथा क्वचित्।
एकस्यानेकधोल्लेखः यस्स उल्लेख उच्यते।।

इति तत् द्विविधोल्लेखसंग्राहकमपि-

कीर्तौ विस्फूर्तिमत्यां ते मृणालक्षीरशङ्किनः।
द्वयेऽपि नागास्तन्वन्ति जिह्वान्तोल्लेखनं मुहुः।।

इत्यादि भ्रान्तिमति अतिव्यापकमतो लक्षणान्तरमाह-**निमित्तभेदादिति।**

एकस्य वस्तुनः निमित्तभेदात् अनेकेन (ग्रहीत्रा) यत् अलेकधोल्लेखनं तमुल्लेखं प्रचक्षत इत्यन्वयः। एकस्य पदार्थस्य कारणभेदात्, बहुभिः ग्रहीतृभिः अनेकधा-

## चित्रमीमांसा

**यत्र नानाविधधर्मयोग्येकं वस्तु ततद्धर्मयोगरूपनिमित्तभेदात् अनेकेन ग्रहीत्रा अनेकधोल्लिख्यते स उल्लेखः॥**

**कीर्ति-गङ्गा-हिमक्ष्माभृदोजस्सूर्योदयाचलः।**
**शत्रुसेनाब्धि-मन्थाद्रि गुणरत्नैकरोहणः॥**

**इति मालारूपके एकस्य राज्ञो यशस्वित्वादिधर्मयोगरूप निमित्तभेदात् तुषाराद्रित्वाद्यनेकप्रकारेणोल्लेखनमस्तीति तत्रातिव्याप्तिनिरासाय "अनेकेन" इत्युक्तम्। तत्र ग्रहीतृभेदनिबन्धनं न भवत्यनेकधोल्लेखनमिति नातिव्याप्तिः।**

### तत्त्वालोकः-

अनेकप्रकारेण, उल्लेखनं निर्धारणं इति यत् तं तादृशैकवस्तुविशेष्यकनानाधर्मप्रकारकम् नानानिमित्तकनानाग्रहीतृकमुल्लेखम्, उल्लेखालंकार इति प्रचक्षते बुधा इति शेषः।

मूलं विवृणुते-**यत्रेत्यादिना**। "नानाधर्मविशिष्टैक वस्तुविशेष्यकानेक-ग्रहीत्रुल्लिख्यमानानेकप्रकारत्वम् **उल्लेखः** इति निष्कृष्टंलक्षणम्। निमित्तभेदादित्युक्तिस्तु निर्निमित्त उल्लेखो नास्तीति ख्यापयितुमेव नतु तस्य लक्षणकोटौ निवेश इति मूल एव वक्ष्यते।

लक्षणघटकं ग्रहीतृविशेषणमनेकत्वं मालारूपके ऽतिव्याप्तिनिरासकतया सार्थकमित्यभिप्रायेण प्रत्युदाहरति-**कीर्तिगंगेति** अयं राजा, कीर्तिगङ्गायाः, नित्यस्वच्छाया कलुषशमन्याः यशोरूपेण स्थितायाः, गंगायाः, हिमक्ष्माभृत् तुषाराद्रिः गंगोद्गमस्थानमिति यावत्, ओजोरूपस्य सूर्यस्य उदयाचलः उदयपर्वतरूपः, शत्रुसेनैव दुरुत्तरत्वादब्धिः, तस्यापि मन्थाद्रिः मथनसाधनभूतमन्दरस्वरूपः। गुणाएव रत्नानि अभिनन्दनीयत्वात् तेषामेकोऽसदृशः रोहणः रत्नोत्पत्तिनिदानपर्वत-विशेषस्वरूपः।

अत्रएकस्मिन्नेवराज्ञि यशस्वित्वाप्रधृष्यत्व-सामर्थ्या-भिनन्दनीयगुणवत्व-

**चित्रमीमांसा-**

**विद्या-विक्रम-सौन्दर्य-तपसां निधिमागतम्।**
**पश्यन्ति विबुधाश्शूरास्त्रियो वृद्धाश्च कौतुकात्।।**

**इत्यत्रैकस्यैव वर्ण्यस्य विद्याद्यनेकधर्मयोगरूपनिमित्तभेदादनेकेन ग्रहीत्रोल्लेखनमस्तीति तत्रातिव्याप्तिनिरासायानेकधेत्युक्तम्।**

**तत्र कौतुकात् स्वरूपावलोकनमात्रनिबन्धनं नानेकधोल्लेखनमिति तद्व्याव्यावृत्तिः।।**

तत्त्वालोकः-

रूपधर्मवत्वं निमित्तीकृत्य एकेनैव हिमाद्रित्वोदयाद्रित्व-मन्दराद्रित्व-रोहणाद्रित्वेन रूपणात् मालारूपत्वाच्च मालारूपकम्। अथाप्युल्लेखलक्षणमतिव्याप्नुयादत अनेकेनेति विशेषणम्। तदुपादानेतु नातिव्याप्तिः। अनेकेन ग्रहीत्रा अनेकधो-ल्लेखनाभावात् तदेतदाह इतीति।

यदितु उक्तमालारूपकातिव्याप्तिपरिहारोपायुक्तरीत्या ग्रहीत्रनेकत्व-प्रयुक्तैकवस्तुविशेष्यकनिर्धारणम् उल्लेख इति परिष्क्रियते तदा एकस्यैव वस्तुनोऽनेकैः ग्रहीतृभिरेकेनैव प्रकारेणैव यत्र ग्रहणं तत्रातिव्याप्तिः स्यादिति प्रतिपाद्य तद्वारकतया अनेकधेति विशेषणं सा र्थ-कयितुमुदाहरति **विद्याविक्रमेति**।

विद्या-मोक्षज्ञानम्, विक्रमः अतिशयितं सामर्थ्यम्, सौन्दर्यम् अवयवशोभा, तपोवेदःतदध्ययनम्, अनुष्ठानंच, तेषां निधिमाश्रयम्, एनं राजानम्, विबुधाः विशेषज्ञाः शूराः पराक्रमिणः स्त्रियोवृद्धाश्च कौतुकात् कुतूहलतः पश्यन्ति इत्यर्थः।

अत्रातिव्याप्तिमुपपादयति-**इत्यत्रेति।**

एवं चात्र निमित्तभूतधर्माणां ग्रहीतृणामनेकतास्तीत्यतिव्याप्तिः स्यादिति भावः। अनेकधेति निवेशे तु उक्तोदाहरणेऽतिव्याप्तिः निवारिता भवतीत्युपपादयति-**तत्रेति।**

**वस्तुतस्तु-** विद्याविक्रमेति पद्ये विबुधैः विद्यानिधिरिति, शूरैः विक्रमनिधिरिति, स्त्रीभिः सौन्दर्यानिधिरिति, तपोवृद्धैः तपसां निधिरिति चैकस्मिन् राज्ञि गृहीतव्ये

**चित्रमीमांसा-**

**"शिञ्जानैर्मञ्जरीति स्तनकलशयुगं चुम्बितं चंचरीकैः" इत्युदाहृतायामनेककर्तृकभ्रान्तिपरम्परायां नायिका(स्तना)दीनां मञ्जरीसादृश्यादिनिमित्तभेदात् अनेकेन चञ्चरीकादिना मञ्जरीत्वाद्यनेकप्रकारेणोल्लेखनमस्तीति तत्रातिव्याप्तिवारणायैकस्य वस्तुन इत्युक्तम्।।**

तत्त्वालोकः-

रुचिलिप्सादिनिमित्तभेदात् विबुधादिभिरनेकैर्ग्रहीतृभिः विद्यानिधित्वाद्यनेकप्रकारक उल्लेख अस्त्येवेत्युदाहरणमेवेत्युच्यते तदा अन्यत्रातिव्याप्तिः। .यथा वा ममैव-

विपिनेऽपि विलोक्य नन्दसूनुं
द्विपवर्षामदिनां कुरम्बकम्।
जलसम्भृतमेघराशिबुध्या
नितरां माद्यति नृत्यति स्वयंहि।।

इत्युदाहरणे नन्दकुमारस्यैकस्य अनेकैः दन्ति-बर्हिकुलैः मेघराशित्वप्रकारेण ग्रहणमित्यतिव्याप्तिस्यात् तद्वारणाय **अनेकधेति** विशेषणमितिबोध्यम्।

इत्थ**मनेकेनेति-अनेकधेति** विशेषणयोः कृत्यमाविष्कृत्य "एकस्य वस्तुन"इत्यस्य कृत्यं प्रदर्शयति-**शिञ्जानैरिति**।

अयं भावः- शिञ्जानैरिति पद्ये- चञ्चरीक-शुक काकरूपानेककर्तृक भ्रान्तिपाम्परायां नायिकास्तनादौ मञ्जरीसादृश्यादिनिमित्तभेदादनेकेन चञ्चरीकादिना मञ्जरीत्वाद्यनेक प्रकारेण उल्लेखनमस्तीति अतिव्याप्तिस्स्यात्, एकस्य वस्तुनः इत्युपादाने तु शिञ्जानैरितिपद्ये मञ्जरीत्वाद्यनेकप्रकारेण उल्लेखनं नैकवस्तुविशेष्यकं,अपि तु अनेकवस्तुविशेष्यकम्। तथाहि--मन्दारमञ्जरीत्व प्रकारकोल्लेखे नायिकाया विशेष्यत्वम्,किसलयत्वप्रकारकोल्लेखे पाणीनां विशेष्यत्वम्, कोकिलकूजितत्वप्रकारकोल्लेखे नायिकास्वरविशेष्यकत्वमिति न भ्रान्तिमति अतिव्याप्तेरवकाश

**चित्रमीमांसा-**

**कीर्तौ विस्फूर्तिमत्यां ते मृणालक्षीरशङ्किनः।**
**द्वयेऽपि नागास्तन्वन्ति जिह्वन्तोल्लेखनं मुहुः।।**

**इति भ्रान्तिमदुदाहरणे एकस्या एव कीर्तेः अनेकेन कुञ्जर-भुजङ्गरूपेण ग्रहीत्रा मृणाल-क्षीर-रूपत्वाद्यने कप्रकारेणोल्लेख नमस्तीति तत्रातिव्याप्तिनिरासाय निमित्तभेदादित्युक्तम्।।**

**तत्र कीर्तिगतं धावल्यमेकमुल्लेखद्वयेऽपि निमित्तम्। यद्यपि गजभुजङ्गानां स्वस्वप्रियाहारलोभरूपनिमित्तभेदोऽप्यस्ति, तथापि निमित्तभेदादित्यनेनैकनिमित्तविरहः विवक्षित इति तद्व्यावृत्तिः।।**

तत्त्वालोकः-

इति।। लक्षणे निमित्तभेदादि त्यनुपादाने क्वचिद्भ्रान्तिमति एकस्यैव वस्तुनः एकेनैव निमित्तेनानेकधा अनेकोल्लेखनमस्तीति अतिव्याप्तिस्यादिति स्थूलदृष्टया अतिव्याप्तिमुद्भावयन्उदाहरति-कीर्ताविति। हे राजन्, ते तव कीर्तौ यशसि, विस्फूर्तिमत्यां प्रसरन्त्यां सत्याम्, द्वयेऽपि नागाः गजाःसर्पाश्च "ग्राहा-भ्रा-हि गजानागाः" इति **वैजयन्ती**। मृणलक्षीरशङ्किनः सन्तः मुहुःवारंवारं जिह्वान्तोल्लेखनं रसनाग्रभागेन चट्टनम्, तन्वन्ति विस्तारयन्ति जिह्वां प्रसारयन्तीति यावत्।

अत्रातिव्याप्तिमुपपाद्य तत्परिहारकं विशेषणमुपादत्ते-**इतीत्यादिना**।

एवंच उक्तोदाहरणे ऽनेककर्तृकैकविशेष्यकानेकप्रकारकोल्लेखस्य कुञ्जरभु-जङ्गरूपानेककर्तृककीर्तिरूपैकपदार्थ विशेष्यकमृणालक्षीरत्वाद्यनेकप्रकारकोल्लेखस्य सत्वेऽपि निमित्तभूतधर्मोधावल्यमेकमेव न तु नानेति अभिन्ननिमि-त्तकानेककर्तृ-कैकविशेष्यकानेक प्रकारकोल्लेखे सत्यपि नातिव्याप्तिः निमित्तभेदादितिविशेषणा-दित्याह-**तत्रेति**।

सम्प्रति सूक्ष्मया दृशा यद्यालोच्यते तदा निमित्तभेदोऽत्रापि सुलभ इत्यतिव्याप्तिः तदुपादानेऽप्यपरिहार्यैवेतिशङ्कते **यद्यपीति**। समाधत्ते-**तथापीति**।

चित्रमीमांसा-

**तस्य सङ्ग्राह्यत्वे निमित्तभेदादिति स्वरूपकथनमात्रम्।**

**एवमपि यदि-**

**कान्त्या चन्द्रं विदुः केचित् सौरभेणाम्बुजं परे।**
**वक्त्रं तव वयं ब्रूमः तपसैक्यं गतं द्वयम्।।**

**इत्यपह्नवोदाहरणविशेषेऽतिव्याप्तिः शङ्क्या।**

तत्त्वालोकः-

तथाच निमित्तभेदो नाम निमित्तनानात्वरूपः, प्रकृते च गजानां मृणाले रुचिः, सर्पाणां क्षीरे रुचिरिति निमित्तभेदेऽपि रुचित्वेन रूपेण द्वयोरप्येकरूपत्वान्न निमित्तनानात्वमिति तद्व्यावृत्तेः। एवं च निमित्तांशे रूपभेदोऽपि विवक्षितः। अत एव- **ईश्वरप्रत्यभिज्ञायां** काश्मीरक**श्रीमदुत्पलाचार्यैः**- रुच्यर्थित्वव्युत्पत्तीनां प्रयोजकत्वमुक्तम्।

यथारुचि, यथार्थित्वं, यथाव्युत्पत्ति भिद्यते।
आभासोऽप्यर्थ एकस्मिन् अनुसन्धानसाधिते।। इति।

**यदि तु**-गजानां जिह्वान्तोल्लेखने प्रवृत्तिः मृणालभ्रान्त्या, सर्पाणां जिह्वान्तोल्लेखने प्रवृत्तिः पयोभ्रान्त्येति काममभ्युपेया, अथापि तन्निमित्तकत्वादेव ज्ञानस्य भ्रान्तिसंवलितउल्लेखोऽप्यस्तीत्युच्यते तदा निमित्तभेदादित्यत्र भेदग्रहणमनुपादेयमेव। (किंच निर्निमित्तस्योल्लेखस्याचमत्कारित्वेन निमित्तपदोपादानमप्यप्रयोजकमेवेति विभाव्यते तदा निमित्तभेदादिति स्वरूपकथनमात्रपर्यवसितमित्याह-**तस्येति**।

एतेनैतावल्लक्षणमुक्तं भवति-अनेककर्तृकैकवस्तुविशेष्यकानेकप्रकारकोल्लेखनमुल्लेख इति। अथापि - उक्तनिमित्तकार्थसिद्धापह्नवेऽपह्नुतिविशेषेऽतिव्याप्तिरित्याशङ्कते-**एवमपि यदीति**।

केचिज्जनाः, तव वक्त्रं मुखं कान्त्या प्रकाशेन हेतुना चन्द्रं विदुः जानन्ति

**चित्रमीमांसा-**

**तदानीमनेकधोल्लेखनं निषेधास्पृष्टत्वेन विशेषणीयम्। तत्राद्योल्लेखनद्वयं परमतत्वोपन्याससामर्थ्याद्गम्यमाननिषेधमिति नातिव्याप्तिः।।**

तत्त्वालोकः-

परेऽन्ये जनाः तव वक्त्रं सौरभेण सौगन्ध्येन हेतुना, अम्बुजं विदुः। वयं तु तपसा व्रतानुष्ठानादिप्रभावेण, ऐक्यं तद्रूपतां गतं प्राप्तम्, द्वयं चन्द्रपङ्कजोभयात्मकं ब्रूमः अभिदध्मः। चन्द्र-पङ्कजगतकान्तिसौन्दर्ययोरेकत्रानुभूयमानत्वादिति भावः।

अत्र च एकवक्तृविशेष्यकानेककर्तृक चन्द्रत्व-पङ्कत्त्वान्यतर प्रकारकः, चन्द्रत्व-पङ्कजत्वोभयप्रकारक उल्लेख अस्तीत्यतिव्याप्तिः प्रसज्यत इति शङ्काशयः। परिहरति-**तदानीमिति**।

तथाच अनेककर्तृकैकवस्तुविशेष्यकनिषेधासंस्पृष्टानेक धर्मप्रकारको-ल्लेखनमिति फलति। एतेन आद्योल्लेखद्वयस्य मुखविशेष्यक चन्द्रत्वप्रकारक-कान्तिमत्वहेतुकरूपस्य, मुखविशेष्यक कमलत्वप्रकारकसौगन्ध हेतुकरूपस्य चोल्लेखद्वयस्य केचित् परे इत्यादिना विरुद्धमतोपन्यासादेकतरपक्षीयधर्मनिषेधः अर्थसिद्धइति निषेधस्पृष्टत्वमेव चन्द्रत्व-पङ्कजत्वयोरिति नातिव्याप्तिः।तथाप्युक्तरीत्या वारणंप्रयासमात्रपर्यवसायि,स्वोक्तिव्याहतं चेति **चित्रमीमांसाखण्डनरसगंगाधरयोः** प्रतिपादितं **पण्डितराजेन**। तद्यथा-"द्विविधश्चायमुल्लेखः। शुद्धोऽलंकारान्तरसंकीर्णश्च। यथा श्रीकण्ठजनपदवर्णने-"यस्तपोवनमिति मुनिभिः ---अगृह्यत इत्यादौ शुद्धः। यमनगरमिति शत्रुभिः, वज्रपञ्जरमिति शरणागतैः"इत्यादौ भ्रान्तिरूपकादिसंकीर्ण इति स्वयमनुपदं वक्ष्यमाणतया अस्यापि अपन्हुतिसंकीर्णोल्लेखोदाहरणत्वोक्तौ बाधकाभावात्। एतादृशापन्हुतिवारणाय निषेधास्पृष्टत्वं न विशेषयितुं शक्यम्। अन्यथा-"कपाले मार्जारः पय इति करान् लेढि शशिन": इति भ्रान्तिमति मार्जाराद्यने-कग्रहीतृकानेकप्रकारकोल्लेखस्यसत्वेन स्वस्वप्रियाहारलिप्सारूपनिमित्तवैविध्याच्च तत्रातिप्रसंगवारणाय यत्नान्तरमा-श्रयणीयं स्यादिति।

**चित्रमीमांसा-**

**स्त्रीभिः कामोऽर्थिभिःस्वर्द्रुः कालः शुत्रुभिरैक्षि सः।।**

**अत्र चानेकधोल्लेखने रुच्यर्थित्वभयादिकं यथायोगं प्रयोजकम्।**

**रुचिरभिरतिः। अर्थित्वं लिप्सा इति।**

**द्विविधश्चायमुल्लेखः। शुद्धः अलंकारान्तरसङ्कीर्णश्चेति।**

तत्त्वालोकः

**अत्रेदं समाधानम्**- अपन्हवोदाहृतिषु एकधर्ममात्रपरिशेषे इतरधर्म निवृत्तेः— फलितत्वमिति अनेकधर्मप्रकारकोल्लेखो नास्त्येवेति अतिव्याप्तेः प्रसक्तिरेव नास्तीति अतिव्याप्तिवारणप्रयासो ग्रन्थकृतः, तत्संकीर्णोल्लेखत्वसाधनप्रयासः **पण्डितराजस्य** च विफल इत्येवात्र वक्तुं युक्तमिति प्रतीमः।

इत्थं-दलकृत्यं प्रदर्शितम्। तत्र निमित्तानि कानिचित् **सर्वस्वकृता** परिगणितानि "तत्र रुच्यर्थित्वव्युत्पत्तयः यथायोगंप्रयोजिकाः" इति तान्यपि न्यूनानि, भयश्लेषादीनामपि तत्प्रयोजकत्वदर्शनादिति मत्वा रुच्यर्थित्वभयानां तत्प्रयोजकत्वे उदाहरणं प्रदर्शयति **स्त्रीभिःकामइति।**

सः प्रसिद्धः राजा, स्त्रीभिः कामिनीभिःकामः ऐक्षि मदन इति निश्चितः। तद्गतसौन्दर्यमुग्धा युवत्यः साक्षान्मन्मथ एवेति निश्चिक्युरिति भावः। अर्थिभिः असन्निहितधनैर्दीनैः स्वर्द्रुः कल्पवृक्षः ऐक्षि दृष्टः। तत्तदभीष्टार्थवितरणेन तृष्णामुपशमयतीति मत्वा कल्पतरुरिति दीनाः निश्चिक्युरिति भावः। तथा शत्रुभिः अरिभिः कालो यम ऐक्षि दृष्टः। तदीयतीव्रप्रतापसंजातभयपरवशाश्शात्रवः अयंकृतान्त एवेति निश्चिक्युः इति भावः।

अत्र चैकस्मिन्नेव राज्ञि स्त्रीभिः, अर्थिभिः शत्रुभिश्च, काम,-कल्पतरु-कालत्वप्रकारेणोल्लेखे सौन्दर्य-वितरण-पराक्रमशालित्वनिबन्धनरुच्यर्थित्व-भयादीनां प्रयोजकत्वम्। रुच्यादिपदार्थमाह-**रुचिरिति।**

एतेन-"स्वातन्त्र्येन विकल्पनं रुचिः। अर्थक्रियाभिलाषपरत्वं अर्थित्वम् इति

**चित्रमीमांसा-**

**तत्र शुद्धो यथा**

**गजत्रातेति वृद्धाभिः, श्रीकान्त इति यौवतैः।**
**यथास्थितश्च बालाभिः दृष्टः शौरिः सकौतुकम्।।**

तत्त्वालोकः-

यत् सर्वस्वसञ्जीविनीकृता विवृतं तत् नातीवयुक्तमित्युक्तं भवति। पूर्वं भयादिकमिति आदिशब्दोपादानात् व्युत्पत्तिरपि तत्प्रयोजिका ग्राह्या। यथा "नारायण इति परिणतवयोभिः" इत्यत्र-आपो नारा इति प्रोक्ताः "आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः।। इति व्युत्पत्तेः। श्लेषस्य यथा- "उग्रः सपत्नेषु गुणेषु भास्वान्" इत्यादौ ग्रहीतृभेदाभावेऽपि विषयभेदप्रयुक्तोल्लेखे प्रयोजकत्वम्। यथात्र- कपर्दित्व-क्रूरत्वयोः सूर्यत्वतेजस्वित्वयोः। अस्य च लक्षणमुत्तरत्र वक्ष्यते।

**अत्र केचिदाहुः**- एकस्यानेकैः ज्ञातृभिः अनेकप्रकारेण ज्ञातेऽप्यतिशयोक्तिरेव। यथा-"स्त्रीभिःकामः" इत्यादौप्रमदादिनिष्ठ-कामत्वादिप्रकारकज्ञानस्वरूपा-भिन्नावेदनविषयत्वादिति। एवमैकस्यैवार्थस्या श्रयभेदेन नानारूपतया प्रतीतावपि अभेदे भेद इत्येवंरूपा अतिशयोक्तिरेवेति। **यच्चाहुः**-

सर्वत्रोल्लेखे प्रकृतेऽ प्रकृततादूप्यमारोप्यत इति रूपकमेवास्तु नोल्लेखस्यातिरिक्ततेति। **यदप्याहुः**- अतस्मिंस्तद्ग्रहो भ्रान्तिः एवं ह्युल्लेखे सर्वत्र भ्रान्तिमानेवास्तु मा चोल्लेखः इति। तदेतत्सर्वमरमणीयम्। अतियोक्तिरूपकभ्रान्त्य

संकीर्णस्योदाहरणस्योपलंभसत्यप्यनेकधाग्रहणाख्यविशेषांशस्यानुभवगोचरत्वे च सति अलंकारान्तर्भाववाचो-युक्तेरयुक्तत्वात्। यत्र चालंकारान्तरस्य संभवस्तत्रानेनोल्लेखेन संकरोऽस्तु इति मन्वानः उल्लेखं विभजते-**द्विविधइति।** शुद्धमुल्लेखमुदाहरति **तत्र शुद्ध इति।** अयमपि चेतनकर्तृकः, अचेतनकर्तृकश्चेति द्विधा तयोराद्यमुदाहरति-**गजत्रातेति।** इदं पद्यम्-

णारा अणोत्ति परिणअवआहिंसिरिवल्लहोत्ति तरुणीहिम्।
बाला हिं उण कोदूहळेन एमे अ सच्च वि ओ।।

### चित्रमीमांसा-

**अत्र यस्तथा भीतं भक्तं गजं त्वरया त्रायते स्म सोऽयमादिपुरुष इति वृद्धाभिः संसारभीत्या तदभयार्थिनीभिः कृष्णः पुरं प्रविशन् दृष्टः।**

### तत्त्वालोकः-

इति **सर्वस्वकारोदाहृत**प्राकृतपद्यार्थानुवादरूपमिति बोध्यम्। **गजत्रातेति**। वृद्धाभिः ज्ञानवयोभ्यां परिणताभिःस्त्रीभिःगजत्रातेति- नक्राक्रान्तगजेन्द्रसंरक्षिता नारायण इति, यौवतैः युवतीनां समूहैः, ननु- कथमत्र यौवतैरिति प्रयुज्यते? युवतिशब्दस्य अनुदात्तादित्वात् "अनुदात्तादेश्च (पा.सू.४.२.४४)इत्यञिप्राप्ते भिक्षादिभ्योऽण् (पा.सू.४.२.३८) इत्यणि भस्याढे तद्धिते" "पुंवद्भावात् ति प्रत्ययस्य निवृत्तौ सत्याम् अन् (पा.सू.६.४.१६८) इति प्रकृति भावे सति नस्तद्धिते (पा.सू.६.४.१४४) इति टिलोपो न प्रवर्तत इति यौवनैरिति भाव्यम्। सत्यम्।

अथापि- शतृप्रत्ययान्तात् "अनुदात्तादेश्च (पा.सू.४.२.४४) इत्यञि यौवतमिति भविष्यति। **वृत्तिकार-हरदत्तौतु-काशिका-पदमञ्जर्योः**" भिक्षादिगणे युवतिशब्दपाठसामर्थ्यात्" "भस्याढ" इति पुंवद्भावो न भवति युवतीनां समूहोयौवतमिति। "**यदिस्यात्सिद्धत्वात्प्रत्ययविधौ**" इतिवचनात् अनुत्पन्न एव तद्धिते पुंवद्भावेन भवतिव्यम्। युवशब्दश्च **कनिन्युवृषेति** कनिन्प्रत्ययान्तत्वादाद्युदात्त इत्यौत्सर्गिकएवाण् सिद्ध इति तस्येहपाठोऽनर्थकःस्यात् इत्याहतुः। **श्रीकान्तइति**।

रमावल्लभ इति, बालाभिः यथावस्थितरूपवेषमात्रग्राहिणीभिः, यथास्थितश्च यादृशाकारादिविशिष्टः तादृशाकारविशिष्टः शौरिः शूरस्यापत्यं पुमान् इत्यर्थे अत इञ्(पा.सू.४.१.९५) इत्यपत्यार्थे इञ्। सकौतुकं सकुतूहलम् दृष्टः अवलोकितः ज्ञात इत्यर्थः।

अत्र एक एव श्रीकृष्णः अनेकाभिः वास्तविकसन्निवेशगुणादि विशिष्ट एवानेकधावलोकित इति नात्र अतिशयोक्तेः,रूपकस्य-भ्रान्तिमतो वा अनुप्रवेश इत्यलंकारान्तरासंकीर्ण इत्युपपादयति-**अत्र य इति**।

**चित्रमीमांसा-**

**यस्तथा चञ्चंलत्वेन प्रसिद्धाया लक्ष्म्याःकामोपचारवैदग्ध्येन नित्यवल्लभः सोऽयं दिव्ययुवेति युवतीभिः सोत्कण्ठाभिः दृष्टः। बालाभिः वालस्वभावाद्यथास्थितरूपवेषयुक्तो दृष्ट इति सर्वत्रैव वस्तुसता नानारूपेणोल्लेखादयं शुद्ध इति।**

**यथावा-हर्षचरिते- श्रीकण्ठजनपदवर्णने यस्तपोवनमिति मुनिभिः, कामायतनमिति वेश्याभिः, संगीतशालेति लासकैः, यमनगरमिति शत्रुभिः, चिन्तामणिरित्यर्थिभिः, वीरक्षेत्रमिति शस्त्रोपजीविभिः, गुरुकुलमिति विद्यार्थिभिः, गन्धर्वनगरमिति गायनैः (कैः),**

तत्त्वालोकः-

**स्थूणानिखननन्यायेनान्यत्रापि** द्विविधयोरुल्लेखयोः उदाहरणं दृश्यत इति **सर्वस्वकृतोदाहृते**ः शुद्धस्य संकीर्णस्य च मतभेदेन सम्भवमुपपादयितुं **हर्षचरितस्थंश्रीकण्ठजनपदवर्णनान्तर्गतं** गद्यभागमुद्धरति-**यथावेति**।

यः श्रीकण्ठाख्यो जनपदः, मुनिभिः ऋषिभिः तपोवनम् इति, विविक्तत्वात् तपोवनभूयिष्ठतया च आश्रमप्रदेश इति अगृह्यत। वेश्याभिः अनियतपुरुषाभिः तृतीयपुमर्थपराभिः कामायतनमिति कामोपभोगस्थानमिति (अगृह्यत)।

लासकैः नटनर्तकैः संगीतशालेति नाट्यशालेति(अगृह्यत) शत्रुभिः परिपन्थिभिः यमनगरमितिप्रेताधिपनगरीति(अगृह्यत)। अर्थिभिःलिप्सुभिः असन्निहितार्थ-वाचकादर्थशब्दात्- "अर्थाच्चासन्निहिते" इति वार्तिकात् इनिप्रत्ययः। सन्निहिते तु अर्थवान् इति मतुपा भाव्यं स्यात्। चिन्तामणि(भूमि)रिति तन्नामिकेष्टार्थप्रदादेवतेति (अगृह्यत) विद्यार्थिभिः ज्ञानलिप्सुभिः गुरुकुलमिति विद्योपदेशग्रहणस्थानमिति (अगृह्यत)।, गायनैः संगीतकलोपासकैः गन्धर्वनगरमिति देवजातिविशेषा-वासस्थानमिति (अगृह्यत)। वैदेहकैः वणिग्भिः लाभभूमिरिति अधिकफलप्रदप्रदेश

## चित्रमीमांसा-

**विश्वकर्ममन्दिरमिति विज्ञानिभिः, लाभभूमिरिति वैदेहकैः, धूर्तस्थानमितिवन्दिधिः, साधुसमागम इति सद्भिः, वज्रपञ्जरमितिशरणागतैः, विटगोष्ठीति विदग्धैः, सुकृतपरिणाम इति पथिकैः, असुरविवरमिति वातिकैः, शाक्याश्रमः इति शमिभिः, अप्सरःपुरमिति कामिभिः, महोत्सवसमाज इति चारणैः, वसुधारेति च विप्रैः अगृह्यत।**

## तत्त्वालोकः-

इति अगृह्यत। बन्दिभिः तस्करैः स्तुतिपाठकैर्वा धूर्तस्थानमिति वञ्चकस्थानं द्यूतस्थानमिति वा( अगृह्यत), सद्भिः सज्जनैः साधुसमागम इति सज्जनसमावेश-स्थानम् इति(अगृह्यत)। शरणागतैः रक्षापेक्षिभिः वज्रपञ्जरमिति लोहपञ्जरमिति (अगृह्यत)। विदग्धैः चतुरजनैः विटगोष्ठीति भुजङ्गगोष्ठीति (अगृह्यत)। पथिकैः कदाचिन्मार्गचारिभिः "पन्थानं गच्छति" इत्यर्थविवक्षायां पथःष्कन्(पा.सू.५.१.७५) इति ष्कन् प्रत्ययः। सुकृतपरिणाम इति पुण्यफलमिति (अगृह्यत)। वातिकैःसाधकैः देवजातिविशेषैर्वा" अथ वातिकः। विषवैद्यो जाङ्गलिकः व्यालग्राह्यहितुण्डकः।" इति तु **वैजयन्ती।** असुरविवरमिति पातालमिति (अगृह्यतः) शमिभिः बौद्धभिक्षुभिः शाक्याश्रम इति बौद्धविहारइति(अगृह्यत),शकोऽभिजनोस्य इत्यर्थे "शण्डिकादिभ्योञ्ञः(४-३-९२) इति ञ्ञप्रत्ययः"। कामिभिःकामिजनैः अप्सरःपुरमिति अप्सरसामावासइति (अगृह्यत)विप्रैः वेदाध्ययनप्रवणैः ब्राह्मणैः वसुधारेति धनपरीवाह इति च अगृह्यत इत्यर्थः।

**अत्रैक** एव जनपदः विविक्ततादिधर्मनिमित्तीकृत्य मुनिप्रभृतिभिः निजनिज-वासनानुसारेण तपोवनादिरूपत्वेन गृहीतःइति भावः।

**यत्तु कैश्चिदुक्तम्**-तपोवनमिति मुनिभिः, कामायतनमिति वेश्याभिः"इत्यादौ क्वचित् जनपदस्यैव तपोवनत्वादिरूपेणपरिणतौ सत्यां ऋषि प्रभृतीनां तत्तत्कार्योपयोगित्वमस्तीतिपरिणामसंकीर्णमुल्लेखोदाहरणमिति तदयुक्तम्,

**चित्रमीमांसा-**

**अत्र तपोवनादि भूयिष्ठत्वात्तपोवनाद्युल्लेखः शुद्ध इति। अत्रैव यमनगरमिति शत्रुभिः '' इत्यादौ यमनगरत्वाद्युल्लेखः संकीर्णः।।**

तत्त्वालोकः-

तपोवनभूयिष्ठतयापि तथोल्लेखसंभवात्प्रकृतकार्यस्य तदुपयोगस्य चानुक्तेः परिणामेन नस ङ्करस्यप्रसक्तिरिति तन्मतदूषणपर्यवसयितया उल्लेखस्य शुद्ध त्वमित्युपपादयति-अत्र तपोवनमिति।।

**अयं भावः**- श्रीकण्ठजनपदस्य विविक्तदेशबाहुळ्यादिगुणवत्तया स्वस्वभावनानुसारेण मुनिप्रभृतीनामेतादृशीप्रतीतिः। न तु तैः तपोवनत्वाद्यारोप्यते। वस्तुत एव मल्लग्रामादिवत् तपोवनादिव्यपदेशौचित्यात्। विषयिणा विषयस्य रूपवत्करणे ह्यलंकारता। साच आरोपविषयातिशायाधानेन भवेत्। नचात्रारोपविषये तपोवनत्वारोपेण कश्चनअतिशयःआहितो भवति। तपोवनसादृश्या तिशयपरि-कल्पनामपेक्ष्य तद्भूयिष्टत्वग्रहएव तपस्विशरणतां प्रत्यायतीति। अतएव **सर्वस्वकृता**- ''अस्ति तावत्तपोवनमित्यादौ रूपकविविक्तोऽस्य विषयः'' इत्युक्तं संगच्छते।

अत्रैव-यमनगरमिति शत्रुभिः, अम्बरविवरमिति वातिकैः इत्यादौ च **सर्वस्वकृता** रूपकसंकरः अभ्युपगतः। **साहित्यदर्पणकृतातु**- वस्तुतस्त्वित्युपक्रम्य 'अम्बरविवरमिति इत्यादौ भ्रान्तिमानेव न रूपकं भेदप्रतीतिपुरस्सरस्यैवारोपस्य गौणीमूलरूपकादिप्रयोगविषयत्वात् इति। **यदाहुः**- शारीरकमीमांसाभाष्यव्याख्यायां **वाचस्पतिमिश्राः**-'' अपि च परत्र परशब्दः लक्ष्यमाणगुणयोगेन वर्तत इति यत्र प्रयोक्तृप्रतिपत्तेः संप्रतिपत्तिः सगौणः। स च भेदप्रत्ययपुरस्सरः इति। इहतु वातिकानां श्रीकण्ठजनपदवर्णने भ्रान्तिकृत एवाम्बरविवराद्यारोपः इति। तयोः भ्रान्तिमानेवालंकारः इत्ययुक्तम्, अपि तु विवक्षाभेदेन रूपक भ्रान्तिमतोस्सङ्कर इत्येव वक्तुं युक्तत्वादिति मनसि निधायाह- **अत्रैवेति**। तयोः रूपकसांकर्योपपादिकां युक्तिमाह-**तत्र यदीति**।

**अयं भावः**- शत्रुप्रभृतिभिः श्रीकण्ठजनपदे वस्तुतोज्ञातेऽपि इच्छाजन्य-ज्ञानविषयत्वरूपोपरंजकत्वविवक्षायां रूपकत्वं तदङ्गक उल्लेखश्चेति।

चित्रमीमांसा-

**तत्र यदि यमनगरत्वादीनामुपरञ्जकत्वमात्रेणान्वयः तदा रूपकसङ्करः। यदि ताद्रूप्यानुभवगोचरतया तदा भ्रन्तिमत्संकरः।**

**अयं चोल्लेखः वर्ण्यगुणोत्कर्षख्यापनाय अचेतनकर्तृकोऽपि निबध्यते। यथा तत्रैव हर्षवर्णने-**

**निस्नेह इति धनैः, अनाश्रयणीयइति दोषैः, निग्रहरुचिरितीन्द्रियैः, दुरुपसर्प इति कलिना, नीरस इति व्यसनैः, भीरुरित्ययशसा, दुर्ग्रहचित्तवृत्तिरिति चित्तभुवा, स्त्रीपर इति सरस्वत्या, षण्ड इति परकलत्रैः, काष्ठामुनिरिति यतिभिः, धूर्त इति वेश्याभिः, विनेय इति सुहृद्भिः, कर्मकर इति विप्रैः, असहाय इति शत्रुयोधैः, एकमप्यनेकधा गृह्यमाणम् इति।**

तत्त्वालोकः-

भ्रान्तिमता सह साकंर्योपपादिकां युक्तिमाह-**यदि ताद्रूप्येति**।

**अयं भावः**- यदा श्रीकण्ठजनपद एव यमनगरीत्वबुध्या सकम्पप्रवृत्यादेः शत्रुगोचरस्यानुभाविकत्वे "अतस्मिन् अनाहार्य तद्ग्रहात्मिका भ्रान्तिरेवेति भ्रान्तिमता सह संकीर्ण उल्लेख इति। अत एव च **सर्वस्वकृता**-भ्रान्तिमदलंकारतामात्रं निराकृत्य भ्रान्तिमूलकत्वमभ्युपगतम्। उक्तं च- एवं हि तत्र विपय भ्रान्तिमदलंकारोऽस्तु अतद्रूपस्य तद्रूपताप्रतीतिनिबन्धनत्वात्। नैतत्। अनेकधाग्रहणाख्यस्या पूर्वातिशयस्याभावात्। तद्धेतुकत्वाच्चास्यालंकारस्य, संकरप्रतीतिस्त्वङ्गीकृतैव" इत्युक्तम्।

इत्थं चेतनकर्तृकमुल्लेखंशुद्धं संकीर्णं चोदाहृत्य अचेतनकर्तृकोऽ-प्युल्लेखो वर्ण्यविशेषप्रख्यापनाय प्रवृत्तोदृश्यते **भट्टबाणस्य हर्षचरिते**-इत्याह- **अयं चेति**।

अत्र श्रीहर्षस्य राज्ञो गुणोत्कर्षप्रत्यायनाय धन-दोषेन्द्रिय कलिव्यसनायशोरूपैः अचेतनैः कर्तृभिरनेकधोल्लेखः।-मन्मथ-सरस्वती-परस्त्री-यति-वेश्या-सुहृत्-विप्र-

**चित्रमीमांसा-**

**भ्रान्तिमदलंकारादयोऽप्येवमचेतनकर्तृकाः निबध्यन्ते यथा-**

**भिन्नेषु रत्नकिरणैः किरणेष्विहेन्दोः**
**उच्चावचैरुपगतेषु सहस्रसंख्याम्।**
**दोषापि नूनमहिमांशुरसौ किलेति**
**व्याकोच कोकनदतां दधते नलिन्यः ।।इत्यादौ।**
**मधुलुब्धा मधुकराः तृषिताश्च चकोरकाः।**
**सुगन्धि कान्तिसंपन्नं अनुधावति ते मुखम्।।**

**इत्यत्रोल्लेखो व्यङ्ग्यः।।**

तत्त्वालोकः-

शत्रुयोधरूपैः चेतनैः कर्तृभिः निःस्नेहत्वाद्यनेकप्रकारणोल्लेख इति चेतनाचेतनोभयकर्तृक उल्लेखो निबद्ध इति भावः।

न केवलमुल्लेखालंकार एवाचेतनानां कर्तृत्वमपि तु भ्रान्तिमदलंकारादिष्वपीति पूर्वमेवोदाहृतमिति स्मारयति **भ्रान्तिमदिति**। उदाहरति-भिन्नेषुइति।

-पद्यमिदं परिणामप्रकरणे व्याख्यातम्। अत्र चाचेतनेषु पङ्कजेषु रैवतकपर्वतसम्बद्धरत्नकिरणसम्पर्कात् असंख्यतामुपगतेषु इन्दुकिरणेषु सहस्रकिरणत्वभ्रमः उपनिबद्ध इति भावः। आदिग्रहणात् व्यतिरेकादीनामप्येचन कर्तृकाणां ग्रहणं तद्यथा-

आक्रन्दाः स्तनितैः ,विलोचनजलान्यश्रान्तधाराम्बु भिः,
तद्विच्छेदभुवश्च शोकशिखिनः तुल्याः तटिद्विभ्रमैः।
अन्तर्मे दयितामुखं तव शशी वृत्तिस्समैवावयोः
तत्किं मामनिशं सखे जलधर त्वं दग्धुमेवोद्यतः।।

इत्यत्राचेतने मेघे विरहानलज्वालनेन भस्मीकरणोद्यमस्य वर्ण्यमानतया नायिकाविरहखिन्नात् नायकान्मेघे व्यतिरेकोनिबद्ध इति भावः।

इत्थं वाच्यमुल्लेखं सोदाहरणमेकविधं निरूप्य तस्यैव व्यङ्ग्यत्वे उदाहरणं दर्शयति-**मधुल्लइब्धा इति**।

### चित्रमीमांसा-

**''विद्याविक्रम सौन्दर्य इति'' श्लोके विद्यादीनां स्वरूपावलोकनकौतुकमात्रे निमित्ततया यदि न विश्रान्तिः, किन्तु विद्वत्ताद्युल्लेख-वदवलोकनकौतुकनिमित्तायां पर्यवसानं तदा तत्राप्युल्लेखनगतानेकधात्वविच्छित्तिविशेषस्य गम्यत्वात् उल्लेखालंकारो गम्यः इति।।**

### तत्त्वालोकः-

मधुनि-पुष्परसे, लुब्धाः अभिलाषुकाः मधुकराः-मधुव्रताः,- ''लुब्ध आकांक्षिणि व्याधे''इति **हेमचन्द्रः**। मधु कुर्वन्ति क्रोडीकुर्वन्ति एकत्र ताच्छील्येन इति मधुकराः, ''कृञो हेतुताच्छील्ये (पा.सू.३.२.२०) इति टप्रत्ययः एवं तृषिताः पिपासिताः, चकोरा एव चकोरकाः चन्द्रिकाप्रियाः पक्षिणश्च, सुगन्धि घ्राणहारिगन्धवत् कान्तिसम्पन्नं द्युतिमच्च ते मुखमनुधावन्ति अनुवर्तन्त इत्यर्थः। अत्र एकमेव दयिताया मुखं मधुकरैः पुष्पमिति, चकोरैश्चन्द्र इति, गृहीतत्वात् उल्लेखः। एवमनेकैरनेकधाग्रहणे निमित्तं च सौगन्ध्यं द्युतिमत्वं च। चन्द्रत्वपद्मत्वादेश्शब्दादनुक्त्या परं व्यङ्ग्यत्वम्। अथच मुखे मधुकराणां कमलत्वभ्रान्त्या चकोराणां चन्द्रत्वभ्रान्त्या व्यज्यमानया समुदितः उल्लेखध्वनित्वं धत्त इति भ्रान्तिसंकीर्णः।

न चात्र प्रवृत्तिपर्यन्तं प्रयोजिकायाः भ्रान्तिध्वनेरेव चमत्कारित्वमिति कुत उल्लेखध्वनित्वमिति वाच्यम्। अनेक कर्तृकानेकप्रकारकग्रहणरूपस्यालंकारा-न्तरविविक्तस्य अतिशयस्यानुभविकत्वेनोल्लेखध्वनि-त्वस्यापलापानर्हत्वात् इति भावः।

**ननु-** उक्तोदाहरणे उल्लेखध्वनित्वं चेत् ''विद्याविक्रमेति'' प्रागुदाहृतपद्येऽपि एतद्ध्वनित्वं वक्तुं शक्यम्, तत्रापि विद्यादीनां न स्वरूपावलोकनकौतुकमात्र निमित्तत्वे विश्रान्तिः, किन्तु वैदुष्यविशिष्टव्यक्तिताद्रूप्यानुभवगोचरताप्रयोजक कौतुकनिमित्ततायां पर्यवसानमिति उल्लेखनगतनानात्वकृतविच्छित्तिविशेषस्य जागरूकत्वादुल्लेखध्वनित्वमेवेत्युपपादयति **विद्येत्यादिना।**

अयं भावः- अत्र विद्या- विक्रम-सौन्दर्यतपसां प्रभवं कञ्चित् राजानमवलोक्य

## चित्रमीमांसा-

**परिव्राट् कामुकशुनां एकस्यां प्रमदातनौ।**
**कुणपः, कामिनी, भक्ष्यं इति तिस्रो विकल्पनाः।।**
**इत्यत्राप्युल्लेख इष्यते इति लक्षणस्य नातिव्याप्तिः।**

## तत्त्वालोकः-

विबुधाः बृहस्पतिरिति, शूराः अर्जुन इति, स्त्रियो मन्मथ इति, वृद्धाः नारायणारव्यः ऋषिरिति च कुतूहलात्पश्यन्ति तत्र च निमित्तानि विद्या-विक्रम-सौन्दर्यतपांसि। एवंचात्रापि एक एव नरपतिः, विद्यादिनिमित्तभेदात्, विबुधादिभिरनेकैः बृहस्पतित्वादिनानाप्रकारेण दृष्ट इति भवत्युल्लेखः। परन्तु बृहस्पतित्वादिप्रकाराणामर्थसामर्थ्यलब्धत्वेन ध्वनित्वमिति।।

लक्षणघटकं- उल्लेखनमितिपदं भावना-वासनानुभवसाधरणार्थकमिति एकस्यैव वस्तुनः वासनामात्रपरिकल्पितविकल्पनास्थलेऽप्युल्लेख इष्यत एवेति तत्र

लक्षणसमन्वयो नदोषायेत्युदाहरति- **परिव्रडिति**।

अयमभिप्रायः- उपप्लववादिभिः **बौद्धैः** मनुष्य-मृगादीन्द्रियभेदादेकस्मिन्नेव वस्तुनि हेयत्वोपादेयत्वभेदःपरिदृश्यते, अतश्च एकमेव वस्तु अनुकूलस्वभावं, प्रतिकूलस्वभावं च न भवितुमर्हं **विरोधात्**। सर्वेषामविशेषेण सर्वकालेऽपि उभयरूपत्वेनानुपलब्धेः। हेयोपादेयभावना च कल्पितैव। नचैते बौद्धा अनेकान्तवादं जैनाभिमतमभ्युपयन्ति। एवं चात्रैकस्यां प्रमदातनौ न हि कुणपत्व-कामिनीत्व-भक्ष्यत्वानां स्वाभाविकत्वम् यतश्च जीवन्त्यां योषिति कुणपत्वं विरुद्धम्, तथा कुणपत्व सामानाधिकरण्येन कामिनीत्वम्, तदन्यतरसामानाधिकरण्येन पिष्टकृतापूपादिरूपभक्ष्य रूपत्वं. विरुद्धम् अत एव काल्पनिकत्वमित्युत्यते। उक्तं च-

बुध्या विविच्यमानानां स्वभावो नावधार्यते।
अतो निरभिलप्यास्ते निस्स्वभावाश्च दर्शिताः।।

इत्येतावता एकस्यामेव योषिति भिक्षु-कामुक-शुनां शव-कामिनी- भक्ष्य-बुद्धिः कल्पनारूपा अत एव मिथ्याभूतेति।

**चित्रमीमांसा-**

**अथापरः उल्लेखप्रकारः**

**ग्रहीतृभेदाभावेऽपि विषयाश्रयभेदतः।**
**एकस्यानेकधोल्लेखमप्युल्लेखं प्रचक्षते॥**

**तत्र विषयभेदादनेकधोल्लेखः शुद्धः संकीर्णश्चेति।**

**शुद्धो यथा-**

**अकृशं कुचयोः कृशं विलग्ने**
**विपुलं चक्षुषि, विस्तृतं नितम्बे, ।**
**अधरेऽरुणमाविरस्तु चित्ते**
**करुणाशालिकपालिभागधेयम् ॥**

तत्त्वालोकः-

तथा चात्रैकस्यामेव योषिति अनुपभोग्यत्वोपभोगयोग्यत्वाभ्यवहार्यत्वरूप वासनवतां त्रयाणां परिव्राट्-कामुक-शुनामनेकेषां पूर्वोक्तवासनाविशेषरूपनिमित्त भेदात् कुणपत्वाद्युल्लिरव्यमानानेक प्रकारत्वमस्तीत्युदाहरणमेवेति गम्यनिमित्तकोऽयमुल्लेखः कल्पनामात्रगोचरः॥

इत्थं प्राथमिकमुल्लेखप्रकारं निरूप्य ग्रहीतृ-भेदाभावेऽपि विषयानेकत्वप्रयुक्तै कविशेष्यकोल्लिरव्यमाननानाप्रकारत्वे सत्यपि उल्लेखः, अकृशं कुचयोः,

"गुरुर्वचसी"त्यादौ च दृष्टः तत्सङ्ग्रहो **विद्यानाथेन** न प्रदर्शितः तदनुगुणं लक्षणमपि न लक्षितम्। एवं - "यस्य वह्निमयो हृदयेषु" इत्यादि **बाणभट्टाद्युक्तिषु** एकस्यैवाश्रयभेदेनानेकधोल्लेखो दृष्टः स च **सर्वस्वकृता** न संगृहीत इत्युभयसंग्राहकं लक्षणं स्वयमाह - **अथापर इति।**

(१) एकग्रहीतृकविषयानेकत्वप्रयुक्तैकविशेष्यकोल्लिरव्यमाननानाप्रकारत्वम् एकः।
(२) "एकग्रहीतृकाश्रयानेकताप्रयुक्तैकविशेष्यकोल्लिरव्यमानानेकप्रकारत्वमइत्यपरः।

**चित्रमीमांसा-**

**"गुरुर्वचसि, पृथुरुरसि, विशालो मनसि, जनकस्तपसि, सुमित्रस्त्तेजसि,सुमन्त्रो रहसि, बुधः सदसि, अर्जुनो यशसि,भीष्मो धनुषि'' इत्यादौ श्लेषसंकीर्णः।।**

तत्त्वालोकः-

एवं च **जयदेवेनापि** आश्रयभेदनिवन्धनः उल्लेखः न लक्षितस्सोऽपि स्वेन लक्षित इति निगूढाभिप्रायः।

तयोः विषयभेदाद्य उल्लेखस्सोऽपि शुद्धः अलंकारान्तरसंकीर्णश्चेति द्विप्रकारः। तदाह- **तत्रेति**। तत्रालंकारान्तरासंकीर्णरूपं **शुद्धमुदाहरति शुद्धोयथेति। अकृशमिति** कपालिभागधेयम् कपालं ब्रह्मकपालमस्यास्तीति कपाली तस्य भागधेयम् एकदेशाभूता अर्हा भाग्यरूपिणी वेत्यर्थः, एकदेशवाचिनो भागशव्दात् "भागरूपनामभ्यो धेयः" (का.वा.३३३०) इति स्वार्थे धेयप्रत्ययः।

"भाग्यैकदेशयोर्भागः" इति **रुद्रः**। अथ च करुणाशाली करुणया दयया शालते शोभत इति करुणाशालि पार्वतीस्वरूपम्। यद्वा- करुणया शालि श्लाध्यं मनोरमं चेत्यर्थः। शलृ=श्लाघायामिति धातोः कर्मण्यौणादिकः।" शालि श्लाध्यं शालि मनोरमम्" इति केशवः।" शालिश्रेष्ठौ समावुभौ" इति शब्दरत्नाकरश्च। पार्वत्याः एकदेशत्वं भाग्यरूपत्वं च महाकविना कालिदासेन स्फुटीकृतम् - प्रेम्णा शरीरार्धहरां हरस्य" केनापि कामेन तपश्चचार"--- इत्यादिना। चित्ते मनसि आविरस्तु प्रकाशताम्। किं भूतं भागधेयमित्यत्राह- अकृशमिति। कुचयोः (विषये) अकृशं-स्थूलम्, विलग्ने मध्ये कृशं तनु, चक्षुषि(विषये) विस्तृतम् विशालं दीर्घंच, नितम्बे अपरभागे(विषये) विस्तृतं-ततम्, अधरे- अधरोष्ठे(विषये) अरुणं-सन्ध्याभम्। अस्य कपालिभागधेयमि-त्यनेनान्वयः। एवंच स्थूलस्तनवत्व-कृशोदरत्व-विशालचक्षुष्ट्व-विस्तृतनितम्बत्व अरुणाधरवत्वरूपधर्मगणमहनीया ईश्वरस्यार्धशरीरभूता मम मनसि सन्निधत्तामित्युक्तं भवति।

अत्र पार्वतीरूपं वस्तु एकमेव कुचादिविषयाणामनेकत्वात् अकृशत्वाद्यनेक प्रकारतया वर्णितम्। अयंचोल्लेखः पार्वतीविषयक कविगतरतिभावोपस्कारकः।

अलंकारान्तरसंकीर्णमुल्लेखं प्रकृतमुदाहरति- **गुरुरिति** गुरुरित्यादीनां

**चित्रमीमांसा-**

**"हंसमयीव गतिषु, परपुष्टमयीवालापेषु, चक्रवाकमयीव पति प्रेम्णि, प्रावृण्मयीव पयोधरोन्नतौ, कमलमयीव कोशसंग्रहेषु कुसुममयीव फलदानेषु" इत्याद्युत्प्रेक्षासंकीर्णः। (हर्षचरितम्)**

तत्त्वालोकः

पुष्पभूतिर्नाम राजाऽऽसीदित्यनेन सम्बन्धः। वचसि विषये गुरुः- गुर्वर्थगर्भितवाक्यप्रयोक्ता, बृहस्पतिश्चः, "गुरुर्गीष्पतिपित्राद्योः" इति वैजयन्ती। उरसि वक्षसि विषये विशालः विस्तीर्णः विशालवक्षाः, आदिराजः पृथुचक्रवर्तीच, मनसि विषये विशालः, उदारमनाः अथ च ऐक्ष्वाको विशालो नाम राजाच, तपसि विषये जनकः, तपसां स्रष्टा, उपनिषत्प्रसिद्धो जनकश्च, तेजसि विषये सुमित्रः सम्प्रतिपन्नसुहृद्युतः अथ च सूर्यः, रहसि एकान्ते सुमन्त्रः समीचीनकर्तव्यावधारणवान्, दशरथमन्त्रि सत्तमश्च, सदसि सभायां विषये बुधः वादकुशलः बुधग्रहश्च, यशसि विषये ऽर्जुनः स्वच्छः पाण्डुकुमारश्च, धनुषि विषये भीष्मः शत्रूणां भयंकरः शान्तनवो भीष्मश्च इत्यर्थः। अत्र च एकएव पुष्पभूतिः गुरुरित्यादिभिः वचःप्रभृतिविषयभेदप्रयुक्तं गुरुत्वाद्यनेकप्रकारेण वर्णितः। गुर्वादिपदात् बृहस्पतित्वाद्यपरार्थप्रतीत्या तत्तादात्म्यस्य च श्लेषमुखेन प्रतीत्या श्लेषसंकीर्ण उल्लेखः।

श्लेषसंकीर्णमुल्लेखमुदाहृत्योत्प्रेक्षासङ्कीर्णं तमुदाहरति **हंसेति**। यशोमत्याःवर्णने

गतिषु विषये संचारे हंसमयीव हंसस्वरूपिणीव, हंसगमनेति भावः। आलापेषु आभाषणेषु विषये परपुष्टमयी कोकिलेव मधुरभाषिणी, पति प्रेम्णि पत्यौ प्रेमविषये चक्रवाकमयीव रथाङ्गनामेव, परस्पराश्रयसुदृढभावबन्धनाम्। प्रेम च" इशब्दव च्यो मदनः मतिर्यत्र प्रकर्षतः। तन्प्रेम तदधिष्ठानं रति यूनोःपरस्परम्।। परस्पराश्रयघनं निरूढं भावबन्धनम्।यदेकापायतापायि तत्प्रेमेति निगद्यते"।। इति **भावप्रकाशने शारदातनयेन** लक्षितं प्रेम। पयोधरौ(मेघः) स्तनौ तयोः उन्नतौ परिपूर्णत्वे प्रावृण्मयीव वर्षा इव, पयोधरोन्नतौ मेघोन्नतिविषये इत्यपि श्लेषलभ्योऽर्थः। कोशसङ्ग्रहेषु अर्थसंग्रहविषये कर्णिकासंग्रहेषु च कमलमयीव कमलस्वरूपिणीव, फलदानेषु अभीष्ट-प्रदानेषु विषयेषु सस्योत्पादनेषु च कुसुममयीव कुसुमस्वरूपिणीव प्रभाकरवर्धनस्य

## चित्रमीमांसा

**पयोधरोन्नतावित्यादौ विषयांशे श्लेषसंकीर्णः। "युधिष्ठिरः सत्यवचसि" इत्यादौ रूपकसंकीर्णः। युधिष्ठिरसमः सत्यवचसि" इत्यादावुपमासंकीर्णः इत्याद्युन्नेयम्।।**

**अधिकरणभेदेनानेकधोल्लेखो यथा-**

**वर्धिष्णोरुपरि क्षणं रविरभूच्छत्रं बलिध्वसिनः**
**रत्नं मूर्ध्नि, ललाटसीम्नि तिलकं, कर्णान्तिके कुण्डलम्।**
**अंसे चक्रम्,उरस्स्थले मणिवरः, नाभौ सरोजासनः**
**यस्यांघ्रौ कटकस्त्रिविक्रमगतेः पायादपायात्स वः।।**

### तत्त्वालोकः

यशोमतीनाम देवी अवर्तत इत्यनेनैकान्वयः। अत्र एकस्यामेव यशोमत्यां नायिकायां हंसत्वाद्यनेकधर्मवत्वं गत्यादि-विषयभेदात्संभाव्यत इत्युत्प्रेक्षासंकीर्ण उल्लेखः। अत्रैव पयोधरोन्नतावित्यत्र विषयांशे श्लेषसकीर्णः उल्लेखः। युधिष्ठिरः सत्यवचसि इत्यादौ रूपकसंकीर्ण उल्लेख इत्याह- **पयोधरेति**।युधिष्ठिर इत्यादौ समशब्दयोगे उपमासंकीर्णतेत्याद्युन्नेयमित्याह - **युधिष्ठिरेति**। आदिपदांदुपमाव्यतिरेक संकीर्णादीनां परिग्रहः। अथ आश्र यभेदादनेकधोल्लेखो दृष्ट इत्याह **अधिकरणेति**।उदाहरति-**वर्धिष्णोरिति**-सः सकलानिष्टनिवारयिता रविः सूर्यः, अपायात् संकटं परिहृत्य पायात् रक्षेत्,। कीदृशो रविः यः बलिध्वंसिनः वलिं विरोचनसुतं चक्रवर्तिनं ध्वंसयति निगृह्णाति ताच्छील्येनेति बलिध्वंसी तस्य वामनस्य, वर्धिष्णोः त्रिविक्रमगतेः लोकत्रयाक्रमणाय प्रवृत्तस्य भगवतो विष्णोः, क्षणं कश्चित्कालम् उपरि शिरोभागे, छत्रं =आतपत्रम् अभूत्।

"क्षणो व्यापारशून्यत्वमुहूर्तोत्सवपर्वयोः" इति रुद्रः।

छादयति आतपात् त्रायते इति छत्रम् छदेः ण्यन्तात् ष्ट्रन्प्रत्ययः। मस्तकोपरिदेशावच्छेदेन विधतेः रविः छत्रत्वेनगृहीत इति यावत्। तथा स एव सूर्यः यस्य मूर्ध्नि मस्तक-

## चित्रमीमांसा

**अत्र रूपकसंकीर्णः। भगवल्ललाटमध्य-कर्णान्तादि तत्तदवयवाभिमुखस्थितगृहीतृभेदनिमित्तोल्लेखसंकीर्णश्च। एकस्यैव द्रष्टुः ललाटमध्ये कर्णान्तिके च रविदर्शनासंभवात्।**

**''यस्य वह्निमयो हृदयेषु, जलमयो लोचनपुटेषु, मारुतमयः श्वसितेषु, क्षमामयोऽङ्गेषु, आकाशमयः स्वान्तेषु,**

### तत्त्वालोकः

प्रदेशावच्छेदेन रत्नं शिरोऽलंकारभूताभरणरूपेणाभूत् शिरोभूषणत्वेन गृहीत इति यावत्, तथा यस्य भगवतो ललाटसीम्नि ललाटतटावच्छेदेन तिलकं विशेषकमभूत् तिलकरूपेण दृष्ट इति यावत्। तथा यस्य कर्णान्तिके, कर्णप्रदेशाच्च्छेदेन रविः कुण्डलं कर्णवेष्टनमभूत्। कर्णकुण्डलत्वेन दृष्टः इति यावत्। यस्य भगवतः अंसे स्कन्धप्रदेशावच्छेदेन स एव रविः चक्रं सुदर्शनम् अस्त्रविशेषोऽभूत्।

चक्रं सैन्ये जलावर्ते रथाङ्गे चयराष्ट्रयोः।
संसारे मण्डले वृत्ते छद्मभेदास्त्रभेदयोः।। इति **वैजयन्ती।**

सुदर्शनात्मना गृहीत इति यावत्। तथा यस्य उरस्स्थले वक्षःप्रदेशावच्छेदेन स एव रविः मणिवरः कौस्तुभाख्यो रत्नविशेषोऽभूत् उरस्स्थले कौस्तुभरूपेणगृहीतः। तथा यस्य भगवतो नाभौ नाभिप्रदेशावच्छेदेन स एव रविः सरोजासनः ब्रह्मा अभूत् पद्मासनात्मना गृहीतः। तथा यस्य अंघ्रौ पादावच्छेदेन कटकः पादवलयः अभूत् पादवलयरूपेण गृहीतः। अत्र रूपकसंकीर्ण उल्लेख आश्रयभेदादनेकधोल्लिखितः इत्युपपादयति - अत्रेति। अत्र कविना एक एव रविः छत्र-रत्न-तिलक-कुण्डल-सुदर्शन-कौस्तुभ- कमलासन-कटकात्मनारूपितइतिरूपकम्। भगवतो मस्तकोर्ध्वादिदेशाभि-मुखावस्थितानां ग्रहीतृणां भेदात् छत्रत्वादिभिरनेकै धर्मैरुल्लेखनात् प्राथमिकोल्लेखालंकारेणच संकीर्णः आश्रयानेकत्वप्रयुक्तउल्लेख इति भावः। " हेतुमतासह हेतोरभिधानमभेदकृद्भवेद्यत्र। सोऽलंकारो हेतुस्स्यादन्येभ्य पृथग्भूतः।।" इति हेत्वलंकारमतिरिक्तं लक्षयतो **रुद्रटस्यानुरोधेन** हेतुसंकीर्णोऽप्युल्लेख परिदृश्यत इति तदुदाहरति - **यस्येति** यस्य प्रभाकरवर्धनस्य राज्ञः प्रतापः

## चित्रमीमांसा

**"यस्य वह्निमयो हृदयेषु, जलमयो लोचनपुटेषु, मारुतमयः श्वसितेषु, क्षमामयोऽङ्गेषु, आकाशमयः स्वान्तेषु,**

**पञ्चमहाभूतमयो मूर्त इवादृश्यत निहतप्रतिसामान्तान्तः पुरेषु प्रतापः (हर्षचरितस्यचतुर्थोच्छ्वासे)**

**अत्र वह्निजलादिशब्दगृहीततापबाष्पादिरूपाणां प्रतापकार्याणां प्रतापस्य चाभेदकथनं हेत्वलंकार इति तत्संकरः। मतान्तरे रूपकसंकरः।**

### तत्त्वालोकः

शौर्योष्मा, "प्रतापौ पौरुषातपौ" इति **वैजयन्ती**।

निहतप्रतिसामन्तान्तःपुरेषु निषूदितानां शत्रुभूपतीनां सम्बन्धि यदन्तःपुरं तदवच्छेदेनावस्थितानां शत्रुवनितानां हृदयेषु हृदयावच्छेदेन वह्निमयोऽनलस्वरूपः तत्तत्प्रियहननशोकानलदग्धहृदयत्वाद्वह्निमयत्वम्, (शोषस्य)दाहस्य वह्निकार्यत्वात् लोचनपुटेषु नयनान्तरावच्छेदेनजलमयः तोयस्वरूपः। श्वसितेषु दुःखकालोद्भवोच्छ्वासनिश्वासेषु मारुतमयः वायुस्वरूपः, अङ्गेषु अवयवावच्छेदेन क्षमामयः सहनस्वरूपः अथच पृथिवीस्वरूपः, स्वान्तेषु मनःप्रदेशावच्छेदेन आकाशमयः अवकाशस्वरूपः विषयान्तराग्रहणात् शून्यत्वम् इत्येवं प्रकारेणावस्थितः प्रतापः पञ्चमहाभूत इव पृथिव्यप्तेजोवाय्वाकाशानीव अदृश्यत अज्ञायि।

प्रभाकरवर्धनेन शत्रुसामन्तेषु निहतेषु तेषामन्तःपुरस्त्रियः ज्वलितहृदयाः, बाष्पवर्षिण्यः, उच्छ्वसन्त्यो, निश्वसन्त्यः, सहिष्णवः शून्यहृदयाश्वासन् इति यावत्।

अत्र च वन्हिकार्यस्य तापस्य, जलकार्यस्य बाष्पस्य, वायुकार्ययोः उच्छ्वासनिश्वासयोः, पृथिवीकार्यभूतायाः क्षमायाः, अवकाशरूपस्य अवकाशकार्यस्यच प्रतापकार्यस्य प्रतापस्य चाभेदः प्रतिपादित इति **हेत्वलंकारः** तत्संकीर्णश्च हृदयलोचनश्वासावयव- स्वान्तरूपाश्रयभेदेन एक एव प्रतापः पञ्चमहाभूतमयत्वेन गृहीत इति तादृशग्रहणविषयप्रकारसमुदायात्मा उल्लेखः। तस्यैव चमत्कारित्वादित्यभिप्रेत्य आह - **अत्रेति**।

**चित्रमीमांसा-**

**कस्तूरीतिलकन्ति भालफलके, देव्या मुखाम्भोरुहे**
**रोलम्बन्ति, तमालबालमुकुलोत्तंसन्ति मौलावपि।**
**याः कर्णे विकचोत्पलन्ति, कुचयोरंसेच कालागुरु**
**स्थासन्ति, प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः॥**
**अत्रोपमा संकीर्णः।**

तत्त्वालोकः-

हेतुहेतुमतोरप्यैक्यै प्रतीते रूपकमेवेति वादिनाम् **अलंकाररत्नाकरकारादीनांमतेन** तु रूपकसंकरः इत्याह - **मतान्तरे इति।** रूपकत्वेएकएवप्रतापः ताप-बाष्पोच्छ वासनिश्वासक्षमा शून्यतारूपकार्य-जनकत्वसादृश्यात् वह्नि-जल-मारुत-क्षमाकाशत्वेन रूप्यते ततश्च रूपकं तेनचायं संकीर्ण इति भावः। मतभेदेन एकस्मिन्नेवोदाहरणे उपमोत्प्रेक्षान्यतरसंकीर्णतोल्लेखश्च दृश्यत इत्युदाहरति - **कस्तूरीति।** याः प्रसिद्धाः इतरविलक्षणा वा, श्रीकण्ठकण्ठत्विषः श्रीः कालकूटजनिता शोभा तद्वान् कण्ठो यस्य सः, तथा कालकूटजनितमपि मालिन्यम् - "विकारोऽपि श्लाघ्यः भुवनभयभंगव्यसनिनः।" इतिन्यायेन ईश्वरस्य शोभैव। यद्वा- "श्रीर्वेषरचनाशोभासम्पत्सरलशाखिषु। वाणी लक्ष्मीलवंगेषु विषे बिल्वेप्यथ त्रिषु॥" इति **नानार्थरत्नमाला।** एतदनुरोधेन श्रीःविषं, तत् कण्ठे यस्य सः, श्रीकण्ठः शंकरः तस्य यःकण्ठः कन्धरा तस्य त्विषः भासः, देव्याः पार्वत्याः भालफलके ललाटफलके, कस्तूरीतिलकन्ति, मृगमदविशेषकमिवाचरन्ति, मुखाम्भोरुहे मुखपङ्कजे रोलम्बन्ति - भ्रमरा इवाचरन्ति, मौलावपि-किरीटेऽपि तमालस्य कालस्कन्धस्य, ये(लोलाः) बालमुकुलाः सद्यस्समुद्भूक्तकोरकाः त एव उत्तंसः शिरोभूषणं तदिव आचरन्ति।कर्णे श्रोत्रदेशावच्छेदेन विकचोक्पलन्ति विकसितकुवलयानीव आचरन्ति। कुचयोः अंसे च पयोधरस्कन्धप्रदेशावच्छेदेन कालागुरुस्थासन्ति कृष्णागुरु-चन्दनानुलेपनवदाचरन्ति, ताः तादृश्यः अस्य श्रीकण्ठकण्ठत्विषः इत्यनेनान्वयः, तव भवतः शिवं मङ्गलं प्रथयन्तु विस्तारयन्त्वितियावत्। अत्र "कस्तूरीतिलकन्ती"-

**चित्रमीमांसा-**

**केचित्तु- तत्तदधिकरणौचित्यात् कस्तूरीतिलकादितादात्म्य-संभावनायामुपमार्थे विहितोऽपि क्विप् उत्प्रेक्षायां पर्यवस्य-तीत्युपमोपक्रमोत्प्रेक्षेयमिति आहुः। तन्मते उत्प्रेक्षासंकीर्णः**

तत्त्वालोकः

त्यादौ उपमानवाचकेभ्यः "सर्वप्रातिपदिकेभ्यः क्विप्" इति कर्तरि क्विप् बोध्या। कस्तूरीतिलकादेः कण्ठत्विषश्चोपमानोपमेयभावोऽवगम्यतइत्युपमा। एकस्याः त्विषः भालफलकादिरूपाश्रयभेदेन कस्तूरीतिलकत्वाद्युल्लेखनादुल्लेखः। स चोपमया संकीर्णः।

अस्मिन्नेवोदाहरणेऽ **लंकारसर्वस्वकृता** - उपमोपक्रमोत्प्रेक्षोल्लिखिता, साच न समीचीनेति अस्वरसं ध्वनयितुं तन्मतमनुवदति - **के चित्त्विति**।

केचित्तु **सर्वस्वकारादयस्तु-** तत्तधिकरणरूपाश्रयौचित्यात् पार्वत्याः भालफलकादिषु कस्तूरीतिलकादि जातेः विषयिणः प्रकृते संभवो यथा तथा विषयस्य श्रीकण्ठकण्ठत्विषःप्रकृतेन संभवः।तथाचभालफलकादिविषय विशेष-निबन्धनौचित्यमिति श्रीकण्ठकण्ठत्विषि विषये, भालादिस्थान-विशेषसम्बन्धित्वे सति नैल्यं निमित्तीकृत्य कस्तूरीतिलकादितादात्म्यं संभाव्यत इत्युपमार्थे विहितस्य क्विपः उत्प्रेक्षायां पर्यवसानं भवति। उत्प्रेक्षाया अपि उपमावत् सादृश्योपजीवित्वात् उपमोपक्रमोत्प्रेक्षेति।

**अयं भावः-**

प्रयास्यन्तं हरिं दृष्ट्वा गोविन्दं व्रजयोषिताम्।  
तत्क्षणाज्जातमौनानां (ऊर्मिकात्वङ्गदायिता।।)कंकणायितमङ्गदैः।।

इत्यत्र यथोपमार्थे विहितेन क्यङ्प्रत्ययेन उपक्रमे उपमायाः प्रतीतावपि दोर्मध्ये कंकणस्थितेरसंभवात् तत्संभावनायां पर्यवसानं तद्वत् अत्रापि उपमाने कस्तूरितिलकादौ प्रकृते संभवौचित्यात् संभावानोत्थितौ उत्प्रेक्षायां पर्यवसानमिति।।

अतएव **दर्पणकृता विश्वनाथेनापि**

चित्रमीमांसा-

एवमलंकारान्तरसंकरोऽप्युन्नेयः।

इतिश्रीमदद्वैतविद्याचार्यश्रीमद्भरद्वाजकुलजलनधि कौस्तुभ श्रीरङ्गराजाध्वरिवसूनोःश्रीमदप्पय्य-दीक्षितकृतौ चित्रमीमांसायाम् उल्लेखालंकार प्रकरणं समाप्तम् ॥

तत्त्वालोकः

पारे जलं नीरनिधेरपश्यन् मुरारिरानीलपलाशराशीः ।
वनावलीरुत्कलिकासहस्र प्रतिक्षणोत्कूलितशैवलाभाः॥

इति **शिशुपालवधस्थं** पद्यमुदाहृत्य, अत्र आभाशब्दस्य उपमावाचकत्वादुपक्रमे उपमा, पर्यवासाने तु जलाशयतीरेषु शैवालस्य प्रायशस्संभवेऽपि जलधितीरे तस्यासम्भवात् संभावनोत्थानमित्युत्प्रेक्षेति उपपाद्य सर्वस्वकृन्मतमुपोद्धलितम्।

**नच-** दृष्टान्ते "प्रयास्यन्तमिति" पद्ये, "पारेजलमिति" पद्येच क्यङ्प्रत्ययस्य आभाशब्दस्योपमाप्रतिपादकस्य च सद्भावात् तथोक्तावपि प्रकृते क्विपः सर्वलोपित्वाद्वाचकमेव नास्तीति नोत्प्रेक्षात्वामिति वाच्यम्। नहि वाचक सद्भावासद्भवमात्रमलंकाराणां सदसद्भावनियामकम्। अन्यथा व्याजस्तुतौ निन्दादेर्वाच्यत्वेऽपि स्तुत्यादेः प्रतीतौ अलंकार पर्यवसायिता न स्यात्। तस्माद्वाक्यार्थ एव प्ररूढोऽलंकारणां स्वरूपप्रतिष्ठापकं प्रमाणम् इति।

अत्र 'आहुः'इत्यभिधानं तूक्तोदाहरणे भालादिस्थानविशेषसंबन्धस्य कस्तूरीतिलकादि तादात्म्यमात्रे औचित्यं चेत् तदा रूपके पर्यवसानं वाच्यं नपुन उत्प्रेक्षायाम्। अन्यथा-

## तत्त्वालोकः

अथाजिनाषाढधरः प्रगल्भवाक् ज्वलन्निव ब्रह्ममयेन तेजसा।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा॥

इत्यादावपि प्रथमतः उपमा प्रतीयते अथापि पर्यन्ते प्रथमाश्रमतादात्म्यसंभावनोपयुक्त विशेषणनिबन्धनस्य सद्भावात् यथा उत्प्रेक्षायां पर्यवसानं तथा रूपकप्रतीतिस्थलेऽपि तादृशविशेषण निबन्धे सत्युत्प्रेक्षायां पर्यवसानमुपगन्तव्यं स्यात् इत्यस्वरसात्।

**वस्तुतस्तु**- औचित्यसंभवे तदानुगुण्येन उपमोपक्रमोत्प्रेक्षात्वमेव युक्तं अत्रैव बहुसंवादसद्भावात् अत एव ग्रन्थकृता तन्मते उत्प्रेक्षासंकीर्णइत्युक्तम्। उपसंहरति - **एवमिति।**

एवमपह्नुत्या-सन्देहेन च संकीर्णः उल्लेखः उन्नेयः यथा **ममैव** -

अस्मिन् भुवं रक्षति राज्ञि सम्यक् मनुष्यमेनं कतिचिद्विदन्तु।
अथापरे दण्डधरं विदन्तु वयं तु नारायणमेव विद्मः॥

अत्र राज्ञः मनुष्यत्वादेः परमतत्वेन निषेध्यतयोपन्यासात् अपह्नुत्या संकीर्णः। ससन्देहेन संकीर्णो यथा-

किं भानुः किमुचित्रभानुरिति यं निश्चिन्वते वैरिणः
किं चिन्तामणिरेषकल्पविटपी किंवेति चाशारताः।
किं पुष्पाकर एष पुष्पविशिखः किं वेति रामाजनः
किं रामः किमुजामदग्न्य इति वा यं धन्विनो मन्वते॥

इति अत्रैकस्यैव राज्ञः सन्दिह्यमानत्वेनानेकधोल्लेखनम्। एवं हेतुफलोल्लेखावप्युदाहार्यौ॥

इति श्रीमदत्रिकुलतिलकश्रीराममिश्रवंश्येन शोभाञ्जनग्रामा (नुग्गेहल्य) भिजनेन सोमयाजियाण्डान्.जनार्दनाचार्यविदुषस्तनूजेन सीताम्बा गर्भसम्भवेन,श्रीमन्महीशूरपुरीमध्यविद्योतमान श्रीमन्महाराज संस्कृतमहापाठशालायां सरस्वतीप्रासादारव्यायांम् **अलंकार**

शास्त्र प्राध्यापकेन न्यायालङ्कारव्याकरणविदुषा
पण्डितरत्नादि बिरुदभाजा, आस्थानविदुषा सो. रामस्वामि
ऐय्यङ्गार्यशर्मणा विरचिते चित्रमीमांसा
व्यारव्याने तत्वालोकारव्ये
उल्लेखालंकार प्रकरणं समाप्तम्॥

॥शुभं भूयात्॥

# तृतीय भागः

## अपह्नुति प्रकरणम् 1 - 33



## उत्प्रेक्षा प्रकरणम् 34 - 307

॥ इति शम् ॥

# अपह्नुतिः

**अथापह्नुतिः।**

तत्त्वालोकः

अपह्नुति प्रकरणम्

अभेदप्रधानान् रूपकादीन् निरूप्य अभेदप्राधान्ये सति आरोप गर्भांल्लक्षयति - ' **अथेत्यादिना।**

काव्यालंकारसूत्रकृता **भामहेन-**

अपह्नुतिरभीष्टाच किञ्चिदन्तर्गतोपमा।
भूतार्थापह्नवादस्याः क्रियते चाभिधा यथा।।

इति लक्षितम्। तदपि-

नागरिक समधिकोन्नतिरिह महिषः कोऽयमुभयतः पुच्छः।
नहि नहि करिकलभोऽयं शुण्डादण्डोऽयमस्य न तु पुच्छम्।।

इति भ्रान्तापह्नुतौ असत एव महिषत्वादेः नतु वास्तवस्य इत्यव्याप्तम्।

**तथा वामनेन - "समेन वाक्यार्थेन अन्यस्य वाक्यार्थस्य अपलापः अपह्नुतिः"** इति लक्षितम्। तदपि -

नेदं नभोमण्डलमम्बुराशिः नेमाश्च ताराः नवफेनपुञ्जाः।
नायं शशी कुण्डलितः फणीन्द्रः नायं कलङ्कश्शयितो मुरारिः।।

इति सावयवापह्नवपूर्वकापह्नुत्युदाहरणे अम्बुराश्यादिना पदार्थेन नभोमण्डलादिपदार्थस्यापह्नव एव.न वाक्यार्थापह्नवइत्यव्याप्तम्।

एवं **काव्यप्रकाशकारेण-**

"प्रकृतं यन्निषिध्यान्यत्साध्यते सात्वपह्नुतिः"। इति लक्षितम्। तदपि-

**चित्रमीमांसा-**

**प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्।**
**साम्यात् अपह्नुतिर्वाक्य भेदाऽभेदवती द्विधा।।**

तत्त्वालोकः-

मन्थानभूमिधरमूलशिलासहस्र-
सघंट्टनव्रणकिणः स्फुरतीन्दुमध्ये।
छायामृगः शशक इत्यतिपामरोक्तिः
तेषां कथञ्चिदपि तत्र हि न प्रसक्तिः।।

इत्यत्र समुद्रमथनकालभवमन्दरशिलासंघट्टनव्रणकिणं (त्वं) चन्द्रमध्ये आरोप्य पश्चाच्छायादीनां निषेधः क्रियते। नत्वपह्नवपूर्वक आरोप इति आरोपपूर्वकापह्नुतौ अव्याप्तम्।

तथैव- **अलंकारसर्वस्वकृता** "विषयस्यापह्नवेऽपह्नुतिः" इति लक्षितं तदपि-

हालाहलो नैव विषं, विषं रमा
जनाःपरं व्यत्ययमत्र मन्वते।
निपीय जागर्ति सुखेन तं शिवः
स्पृशन्निमां मुह्यति निद्रया हरिः।।

इत्यत्र हालाहलस्यैव विषत्वेन प्रसिद्धिः न रमायाः। अतो विषयिण एवापह्नुतिः न विषयस्येत्यव्याप्तम् तत्र दृढारोपरूपकत्वस्येष्टेरव्याप्त्यभावात्। एवं तदनुयायिना **विद्यानाथेन-**

निषिध्य विषयं साम्यादन्यारोपे ह्यपह्नुतिः।

इति लक्षितमपि पूर्वोक्तोदाहरण एवाव्याप्तमिति मत्वा निर्दुष्टमपन्हुतिलक्षणं स्वयमाह **-प्रकृतस्येति।**

"प्रकृतनिषेधविशिष्टाप्रकृतारोपकल्पनमपह्नुतिः"इतिलक्षणं फलति। तत्रयदि "साम्यनिमित्तकाप्रकृतारोपकल्पनमपह्नुतिरिति" लक्षणं क्रियेत तदा-

**चित्रमीमांसा-**

**अन्यत्वमात्रं रूपके, विषयनिषेधमात्रम्-''नाहं दूतीवरतनोरङ्गतापोतिभास्वरः''इत्याक्षेपे,**

**उभयमपि साम्य विशेषणरहितम्-**

**''न पंचविशिखः कामः कित्वपञ्चशिलीमुखः।''**
**इत्यतिशयोक्तौ चातिव्याप्तमिति विशिष्टोपादानम्।**

तत्त्वालोकः

अयं हि धूर्जटिः साक्षात् येन दग्धाः पुरःक्षणात्।

इति रूपके पुरदाहकत्वं सम्यं निमित्तीकृत्य प्रकृते राज्ञि अप्रकृतशिवाभेद आरोप्यत इत्यतिव्याप्तिस्स्यात्। अतः प्रकृतनिषेधः विशेषितःतेन रूपके नातिव्याप्तिः, तत्र प्रकृतनिषेधाभावात्। नन्वेवं तर्हि- ''साम्यनिमित्तकप्रकृतनिषेधोऽपह्नुतिः'' इत्येतावल्लक्षणमेवास्त्तामिति चेत्-

''नाहं दूती वरतनोः अङ्गतापोतिभास्वरः।''

इत्यत्र दूत्या उक्तौ प्रकृताया दूत्याः नाहं दूतीति निषेधःबाधितत्वादाभासरूपः संघटनाकालोचितकैतववचनपरिहारेण यथार्थवादित्वे पर्यवस्यन् इदानीमेवागत्य नायिकोज्जीवनीयेति विशेषमाक्षिपतीति वक्ष्यमाणप्राकरणिकविशेष प्रतिपत्तिफलकः निषेधाभास आक्षेप इति **सर्वस्वकाराद्यभिमते** आक्षेप-विशेषेऽतिव्याप्तिः, प्रकृतायां दूत्यां दूतीत्वनिषेधात्।

यदि- विषयनिषेधविशिष्टाप्रकृतारोपकल्पनम् इत्येतावदेवलक्षणं स्यात्तदा-

''न पञ्चविशिखः कामः किन्त्वपञ्चशिलीमुखः''। इत्यत्र साम्यनिमित्तके ''प्रकृतस्य यदन्यत्वम्''इति **प्रकाशकृद**भिमतातिशयोक्तिविशेषेऽतिव्याप्तिः। अतः ''साम्यनिमित्तकप्रकृतनिषेधविशिष्टाप्रकृतकल्पनम्'' इति विशिष्टमुपात्तमित्याह - **अन्यत्वमात्रमिति।**

**चित्रमीमांसा-**

**नचैवं "नपद्मं मुखमेवेदम्" इति तत्वारव्यानोपमायां विषये पद्मत्वनिषेधस्य मुखत्वप्रकल्पनस्यच सत्वादतिव्याप्तिः। प्रकल्पनपदस्यारोपपरत्वात्।**

तत्त्वालोकः

एवमपि इदं लक्षणं तत्वारव्यानोपमायामतिव्याप्तमित्याशंक्य निराचष्टे - **नचेति।**

**अयंशङ्काशयः** यद्यत्र "साम्यनिमित्तक प्रकृतनिषेधविशिष्टाप्रकृतत्वपरिकल्पनम्" इत्येतावन्मात्रं लक्षणं स्यात् तदा

न पद्मं मुखमेवेदं न भृङ्गे चक्षुषी इमे।
इति विस्पष्टसादृश्यात् तत्वारव्यानोपमैव सा।

इत्यत्र मुखे पद्मत्वं निषिध्यते अथच मुखत्वं परिकल्प्यत इत्यतिव्याप्तिः।

**परिहारस्तु** - प्रकल्पनस्यारोपार्थत्वविवक्षणात् तत्वारव्यानोपमायां भ्रमनिरासपूर्वकं तत्वारव्यानस्य संमतत्वात् "न पद्ममि" त्यत्र च मुखं दृष्ट्वा पद्ममिति भ्राम्यतः इदं पद्मं न, किन्तु मुखमिति वस्तुतत्वं प्रतिपाद्यते, अतश्च नात्र मुखत्वारोप प्रसरः। असतः खल्वारोपः मुखे च वस्तुतो मुखत्वं विद्यत एवेति नातिव्याप्तिरिति समाधानाशयः। तथा च "साम्यनिमित्तकप्रकृतनिषेधविशिष्टाप्रकृतारोपः" अपह्नुतिः इति लक्षणं फलति।

**अत्रेदं चिन्त्यते -**

"न पञ्चविशिखः कामः किंत्वपञ्चशिलीमुखः।"

इत्यत्र कोऽलंकारः? नन्वतिशयोक्तिरित्युक्तमेव, सत्यम् का सा अतिशयोक्तिः? उक्तमेव **काव्यप्रकाशकृता** -प्रस्तुतस्य यदन्यत्वम् इति। तदीयलक्षणार्थश्च कः?..उक्तएव प्रकाशं विवृण्वता वृत्तिकृता - यच्च तदेवान्यत्वेन अध्यवसीयते सा परा इति।

## तत्त्वालोकः

उदाहृतं च-

अन्यत् सौकुमार्यं अन्यैव कापि वर्तनच्छाया।

श्यामा सामान्यप्रजापतेः रेखैव च न भवति॥

इति यच्च तदेव वस्तु वर्णनीयमेव यद्वस्तु, अन्यत्वेन वर्णनीयादन्यत्वेनेत्यर्थः। स्वस्मिन् स्वाभेदस्य प्रसिद्धत्वात्, स्वस्मिन् स्वभेदस्य चाहार्यत्वात्। तथा कल्पनस्यच लोकविलक्षणत्वद्योतनफलकत्वात्।

**काव्यप्रदीपकारस्तु** - यच्च तदेव वस्तु अन्यत्वेन विविक्ताकारवस्त्वन्तरत्वेन अध्यवसीयते सा द्वितीया इति विवृतवान्। अन्यत्सौकुमार्य इत्यत्र च वस्तु धर्मरूपम्, प्रकृतनायिकावृत्ति सौकुमार्यादिधर्मरूप एव वस्तुनि स्वभेदःप्रतिपाद्यते। यदेव धर्मिरूपं तदेवान्यत्वेनापि क्वचिद्वर्ण्यते। यथा-

ततश्चिरवियोगतनुकः सदा बाष्पावमृष्ट मृदुकजीवाघातः।

जातोऽन्य एवास्य विगलित धनुर्मात्रव्यापृतो वामभुजः॥

इत्यत्र समुद्रभेदात्पूर्वं धनुषि गृहीते यादृशो वामभुजः तादृशो भुजः स्वाभाविकतनुत्वमृदुत्ववति वीररसोद्रेकात् उत्पुलकत्वेन पुष्टः कठिनश्च जातः इत्युक्त्या अवस्थाभेदेन तस्मादेव अन्यत्वं वर्णितमिति धर्मिणि भुजे भुजान्यत्वं वर्तत इति अतिशयोक्तौ वस्तुनो वर्ण्यमानस्य धर्मधर्म्यन्यतररूपवत्वं भवेदित्युक्तंभवति।" न पचंविशिखः कामः" इत्यत्र कामे पञ्चशिलीमुखत्वं निषिध्य अपंचशिलीमुखत्वं वर्ण्यते। । लक्षणघटकान्यत्वंच भेद एव। सच अन्यार्थकेन नञा सूचितः। उक्तंच **हरिणा**-

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।

अप्राशस्त्यं विरोधश्च नञर्थाष्षट् प्रकीर्तिताः।इति

तेषु अन्यत्वस्येदमुदाहरणम् अमनुष्यमानयेति "अत्र च" अमनुष्यमानयेत्युक्ते नहि लोष्टमानीय कृतीभवति, किन्तु मनुष्यभिन्नं मनुष्यसदृशं प्राणिनमानीय कृतीभवतीति भाष्याशयानुरोधेन पञ्चशिलीमुखभिन्नः पञ्चशिलीमुखसदृशः प्रतीयते

## तत्त्वालोकः

**"नञ् इवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः"** इति न्यायात्। तेन च पञ्चशिलीमुखे तद्भिन्नत्वे सति सादृश्यप्रतिपादनं कामिजनानां दुःखातिशयजनकत्व - जगद्वशीकरणपटुत्वादिप्रतिपत्त्यर्थम्। इत्थं च साम्यं प्रतीयत एवेति साम्यनिमित्तक प्रकृतनिषेधविशिष्टाप्रकृतारोपः प्रतीयत एवेत्यतिव्याप्तिः।

**ननु-**" न पञ्चविशिखः कामः" इत्यत्र, "नेदं मुखं किन्तु चन्द्रः" इतिवत् विषयविषयिणोरुभयोरुपादानं नास्तीति प्रकल्पनपदस्य आरोपपरत्वेन अध्यवसायप्रधानातिशयोक्त्युदाहरणेऽतिव्याप्तेः का प्रसक्तिः।

**न चात्र-** पंचविशिखत्वस्य निषेधेऽपि तस्याहार्यत्वेन विषयतिरोधायकत्वाभावात् अध्यवसायप्रधानातिशयोक्तिरेव कथं युज्यते? इति वाच्यम्।

"निगीर्याध्यवसानंतुप्रकृतस्यपरेणयत्"। इति **काव्यप्रकाशो**क्तप्रथमातिशयाक्तावेव विषयनिगरणस्य विषयिणेष्टत्वात्। अत एव च "प्रस्तुतस्य यदन्यत्वम्" इति द्वितीयं लक्षितम्, अत्रचाध्यवसानमाहार्यनिश्चयमात्रं विवक्षितं **काव्यप्रकाशकृतोऽपि**। अन्यथा-"विषय्यन्तः कृतेऽन्यस्मिन् सास्यात्साध्यवसानिका"। इति लक्षणप्रघट्टक एव विषयनिगरणांश-घटितत्वेनाध्यवसायस्य निश्चितत्वात् पुनरत्र निगीर्येत्युपादानं व्यर्थं स्यात्। तादृशाहार्यनिश्चयस्य "न पञ्चविशिखः कामः" इत्यत्रापि विद्यमानत्वात्, नञ्युक्तत्वेन साम्यप्रतीतिसद्भावाच्च उक्तलक्षणातिव्याप्तिर्दुर्वारेति विशिष्टोपादानमात्रेण उक्तातिशयोक्तौ अतिव्याप्तिवारणं चिन्त्यमेव।

**यदि तु-** "अघटः" इतिवत् अपञ्चशिलीमुखः इत्यत्र पञ्चसंख्यातो भिन्नाः (असंख्याः) शिलीमुखा यस्येति भेदमात्रं प्रतीयेत तदा साम्यं न प्रतीयत इति निवारितोऽयं दोषः।

**सत्यं-** दुरुक्तं तु तत्- यद्यत्र पञ्चशिलीमुखविशिष्टकामे पञ्चशिलीमुखो नेति भेदविवक्षा भवेत्तदा,'न पंचविशिखःकामः' इत्येतावतैव प्रकृतार्थसिद्धिरिति पुनरपि"किन्त्वपञ्चशिलीमुखः" इत्युपादानमनर्थकं स्यात्।

**चित्रमीमांसा -**

**"निषिध्य विषयं साम्यादन्यारोपः" इति क्त्वाप्रत्ययेन लक्षणं नोक्तम्। वक्ष्यमाणोदाहरणे आरोपपूर्वकापह्नवे अव्याप्ति (अतिव्यप्ति) प्रसंगात्।।**

तत्त्वालोकः -

**किञ्च** - पंचशिलीमुखभेदस्य प्राधान्यविवक्षायां पर्युदासोनोचितः। तत्करणे च नञर्थस्य विशेषणत्वात् विधित्वानुपपत्तेः समासाकरणप्रसंगात्। तदुक्तम्-

नञर्थस्य विधेयत्वे, निषेध्यस्य विपर्यये।
समासो नेष्यतेऽर्थस्य विपर्यासप्रसंगतः।

इति एवं चात्र अपंचसंख्याकाःशिलीमुखाः यस्येति विगृह्येत तदा नञर्थस्या प्राधान्यं विधेश्च प्राधान्यं समासकरणंचयुज्यत इति पंचशिलीमुखविशिष्टकामव्यतिरिक्ता-संख्यशिलीमुखवतः कस्यचिदप्रसिद्धत्वेन विषयभूत एव कामे असंख्य-शिलीमुखत्वरूपो धर्मः आहार्यतयानिश्चीयते। अतश्चात्र साम्यं न प्रतीयत इति अतिव्याप्तिः स्यादेव। अतश्च विशिष्टोपादानं युक्ततरमेव।

**नच** -"निषिध्य विषयं साम्यादन्यारोपे ह्यपह्नुतिः" इति **विद्यानाथलक्षणे** विषयनिषेधस्य अन्यारोपस्य,साम्यस्य चोपादानमस्त्येवेति तदीयलक्षणमेव पर्याप्तं स्यादिति लक्षणान्तरप्रणयनप्रयासोव्यर्थ एवेति वाच्यम्। अपह्नवपूर्वकारोपोदाहरणेषु-

सीत्कारं शिक्षयति व्रणयत्यधरं करोति रोमाञ्चम्।
नागरकः किं मिलितः नहि नहि हैमनःपवनः।।

इत्यादावव्याप्त्यभावेऽपि "मन्थानभूमिधरमूलशिल" इति उदाहरिष्यमाणे अव्याप्तेः तत्र प्रथममारोपः पश्चान्निषेध इत्यारोपनिषेधयोः पूर्वापरभावस्य प्रतीतेः लक्षणे च निषिध्येति लयबन्तप्रयोगात् निषेधस्य प्राथमिकत्वम्, आरोपस्य उत्तरकालिकत्वं च प्रतीयत इत्यतो **विद्यानाथाभिमतं** लक्षणं परिहृतमित्याह - **निषिध्येति।** **अयमभिप्रायः**-"निषिध्य विषयं"इत्यत्र निपूर्वकषिधधातूत्तरः क्त्वा "समानकर्तृकयोः पूर्वकाले" (पा.सू. ३.४.२१) इति एककर्तृकक्रियाद्वयप्रतीतौ पूर्वकालिकक्रियावाचिनो धातोः क्त्वाप्रत्ययो भवति इत्यर्थकेन पूर्वकालिकक्रियावाचकात् षिधेः क्त्वा दृश्यत

**चित्रमीमांसा-**

**इयं च साक्षान्निषेधकनञादिप्रयोगे, परपक्षत्वाद्युपन्यासे, निषेधस्यार्थाद्गम्यत्वे च वाक्यभेदेन प्रवर्तते।**

**विषयासत्यत्वप्रतिपादकछद्म-निभ-कपट-व्याजादिशब्द-प्रयोगे,**

तत्त्वालोकः

इति निषेधस्य पूर्वकालिकत्वमारोपस्योत्तरकालिकत्वं च विवक्षितमिति ज्ञायते। अन्यथा निषिध्येति लयबन्तप्रयोगोऽनुपपन्नस्स्यात्। "मन्थानभूमिधरेति" वक्ष्यमाणोदाहरणेच इन्दुमध्यपरिदृश्यमानेऽर्थेऽ र्णवमथनकालिकमन्दरशिला संघट्टनजातव्रणकिणस्य प्रथममारोपः पश्चाच्च छायाया परमतसिद्धत्वोपन्यासद्वारा विषयस्य निषेधः क्रियत इत्यव्याप्तिःस्यादिति।

**एतेन**- किंचिदपह्नुत्य यदन्यार्थप्रदर्शनं सापह्नुतिः इत्याद्य**लंकारशेखरकारादीनां** लक्षणानि न समीचीनानीत्युक्तं भवति।

**विद्यानाथाद्य**भिमतलक्षणपरिहारहेतुमुपन्यस्य, इयमपह्नुतिः वाक्यभेदेन, एकवाक्यतयाच संभवति तत्र वाक्यभेदेन प्रवृत्तौ निबन्धनमाह- **इयंचेति**।

इयं च अपह्नुतिश्च साक्षान्निषेधकनञादिप्रयोगे "नेदं नभो मण्डलम्," "नहि नहि करिकलभोऽसौ", इत्याद्युदाहृतौ निषेधस्य वाच्यत्वं, परपक्षत्वाद्युपन्यासे-" अङ्कं केऽपि शशङ्किरे" इत्यादौ केऽपीत्याद्युक्त्या परमतसिद्धत्वोपन्यासात् निषेधस्य न साक्षाद्वाच्यत्वम्, अपि तु व्यवधानेन निषेधस्य गम्यत्वमिति एतादृशस्थले प्रायेण वाक्यभेदः। एतादृशोदाहरणेषु एकस्मिन् वाक्ये आरोपस्यापह्नवस्यच विधातुमशक्यत्वादिति भावः।

यत्र विषयासत्यत्वप्रतिपादकमिषादिशब्दयोगे, विषयासत्यत्वपर्यवसायिरूप-वपु-र्नाम भङ्ग्यादिशब्दैः निषेधावगमे तु एकवाक्यत्वमित्याह - **विषयेति।**

**अयं भावः**-छद्मादिशब्दप्रयोगे निषेधस्यानुवाद्यतया प्रतिपादकत्वे एकवाक्यत्वम्, यथा-'बत सखि' इति वक्ष्यमाणपद्ये सभृङ्गे सहकारे तत्वनिषेधमनूद्य कालकूटविष

**चित्रमीमांसा-**

**विषयासत्यत्वपर्यवसायि रूप -वपु-र्नाम-भङ्ग्यादिशब्दप्रयोगे च तदभेदेन।**

**अत्र वाक्यभेदेऽपह्नवपूर्वक आरोपः, आरोपपूर्वकापह्नवश्चेति द्वैविध्यम्। क्रमेणोदाहरणमानि-**

**अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये**
**कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि।**
**अमुष्येऽयं मन्ये विगलदमृतस्यन्दशिशिरे**
**रतिश्रान्ता शेते रजनिरमणी गाढमुरसि।।**

तत्त्वालोकः

घटितशरत्वं विधीयतइत्युद्देश्यविधेय भाव इत्येकवाक्यतेति। **विषयासत्यत्वपर्यवसायीति**। "अमुष्मिल्लावण्यामृतेति पद्ये"शिखा धूमस्येदं परिणमति रोमावलिवपुः" इत्यादौ वपुरादिशब्दानां नासत्यत्वप्रतिपादकत्वम्, अपि तु स्वरूपादिप्रतिपादकत्वम्। अथापिरोमावल्यां धूमशिखास्वरूपत्वप्रतिपादने रोमावल्यां विरुद्धयोः रोमवलीत्व-धूमशिखात्वयोरसामानधिकरण्यात् एकतररूपत्वे पर्यवसिते तदितररूपत्वनिषेधः फलतीति निषेधस्यानुवाद्यत्वम् अर्थान्तररूपत्वस्य विधेयत्वं चेति एकवाक्यतेति। भङ्ग्यादीति आदिशब्दादात्मादिशब्दाःग्राह्याः।

मूले कारिकायां वाक्य भेदाभेदवती द्विधेति द्वेधा विभागः प्रदर्शितः। तयोराद्योऽपि द्विविधः। अपह्नवपूर्वक आरोपः आरोपपूर्वकापह्नवश्चेति। तत्रापह्नवपूर्वके आरोपे निरवयवापन्हुतिमुदाहरति - **अत्रेत्यादिना।**

आरोपश्च आहार्यताद्रूप्यप्रतीतिः। **अवाप्तइति**। इयं शरद्रात्रिषु शैलदुहितरं प्रति विस्रम्भरसिकस्य शिवस्योक्तिः। हे शैलतनये- पर्वतराजपुत्रि परिणतरुचः प्रौढप्रकाशस्य, शशाङ्कस्य चन्द्रमसः, वपुषि शरीरे, प्रागल्भ्यं प्रौढिम् अवाप्तः परिपूर्णप्रकाशत्वेन पूर्णमण्डले स्फुटोपलक्ष्यतामवाप्तः। अयं कलंङ्कः परिदृश्यत इति

## चित्रमीमांसा-

### यथावा-

तत्त्वालोकः-

यत्प्रतिपद्यसे नैतदेवम् यतः- अमुष्य चन्द्रमसः विगलदमृतस्यन्दशिशिरे, परिस्रवत्पीयूषद्रवसलिले, उरसि मध्यभागरूपे वक्षसि रतिश्रान्ता इयं रजनिरमणी रात्रिरूपा नायिका, गाढम् तीव्रम्- एकान्तं नितान्तं वा शेत इति मन्ये इत्यर्थः। अत्र वाक्यभेदेन चन्द्रमसि कलङ्कं निषिध्य तत्र तत्प्रतिवस्तुभूता हृदयाधिशायि निशानायिकात्वं आरोप्यते। अतश्चात्रापह्नवपूर्वकः आरोप इत्यपह्नुतिरत्रेतिभावः।

ननु- उक्तोदाहरणे- अपह्नुतेः प्रतीतौ सत्यामपि न तस्याः प्राधान्येनावस्थानम् अपि तूत्प्रेक्षायाः, मन्ये शब्दप्रयोगादिति वाच्यम्।

अत्रोत्प्रेक्षा वक्तुमशक्या। "कलंको नैवायं विलसति" इति कलङ्कपक्षस्य निराकृतत्वात् अन्यस्य कस्यचिदनुल्लेखनादन्यस्मिन् अन्यतादात्म्यसंभावनाया अप्रतीतेः। प्रत्युत मन्ये इत्यनेन शयनकर्त्र्याःरात्रिनायिकायाः निश्चयस्यैव प्रतीतेः अपह्नुतावेव पर्यवसानम्।

किञ्च- यत्र कविप्रौढोक्तिकल्पितार्थविषयसंभावनायाःप्रतीतिः तत्रैवोत्प्रेक्षा। नपुनस्संभावनामात्रपरत्वेऽपि। यथा **वाल्मीकेः**-

"मन्ये प्रीतिविशिष्टा सा मत्तो लक्ष्मण शारिका"।

इत्यत्र नोत्प्रेक्षात्वम्, अपि तु संभावनामात्रत्वम्। अत एव वाक्यभेदे मन्येशब्दप्रयोगेऽपि नोत्प्रेक्षा अपह्नुत्युत्प्रेक्षयोः **सर्वस्वकृतापि**- "अत एव वाक्यभेदे मन्येशब्दप्रयोगे नोत्प्रेक्षेति च वक्ष्यत इत्यपह्नुतौ, किन्तूत्प्रेक्षासामग्रयभावे मन्येशब्दप्रयोगो वितर्कमेव प्रतिपादयति। यथोदाहृतं प्राक् "अहं त्विन्दुं मन्ये त्वदरिविरह" इत्यादि इत्युत्प्रेक्षायाम्" इत्युक्तम्, अत एव 'अवाप्तः प्रागल्भ्यम्' इदि पद्यं **काव्यप्रकाशकृता**- अपह्नुतावेवोदाहृतं न पुनरुत्प्रेक्षायामिति। अत एवात्र अपह्नुतित्वं मन्यमानैः **दीक्षितैः** अत्रैवोदाहरणत्वेन उपन्यस्तमिति विभाव्यमिति दिक्।

अपह्नवपूर्वकारोपे सावयवापह्नुतिमुदाहरति- **यथावेति**। इदं परिदृश्यमानं नभोमण्डलं न भवति आकाशमण्डलं न भवति, अपि तु अम्बुराशिः सरस्वान्

**चित्रमांसा-**

**नेदं नभोमण्डलमम्बुराशिः,नेमाश्च ताराःनवफेनपुञ्जाः।**
**नायं शशी कुण्डलितः फणीन्द्रो, नायं कलङ्कश्शयितो मुरारिः।।**

**पूर्वत्र निरवयवापह्नुतिः अत्र सावयवेति भेदः।**

**अङ्कं केऽपि शशङ्किरे, जलनिधेः पङ्कं परे मेनिरे,**
**सारङ्गं कतिचिच्च संजगदिरे, भूच्छायमैच्छन् परे।**

तत्त्वालोकः

क्षीरार्णव इति यावत्। इमाः परिदृश्यमानाश्च तारा नक्षत्राणि न भवन्ति, अपित नवफेनपुंजाः सद्य एकत्रितडिंडीरप्रकराः, अयम् उपरि प्रकाशमानः शशी शशाङ्कः न अपि तु कुण्डलितः सञ्जातवर्तुलाकृतिः फणीन्द्रः महाशेषः। अयं परिदृश्यमानः इन्दुबिम्बमध्यवर्ती कलङ्कः लाञ्छनं न भवति, किन्तु शयितः सुप्तः मुरारिः अनन्तशायी इत्यर्थः।

अत्र इन्दुमध्यपरिदृश्यमाने कलङ्के कलङ्कत्वंनिषिध्य क्षीरार्णवमध्यसुप्तमुकुन्दत्वमारोप्यते। तदर्थंच-नभोमण्डलतारा-शशिषु तत्वं निषिध्य क्षीरार्णव-फेनतति फणीन्द्रत्वमारोप्यत इति सावयवापह्नुतिः।

उदाहरणद्वयोपादाने हेतुं प्रदर्शयन्नेवोपपादयति **पूर्वत्रेति।** अयं भावः- इयं **सर्वस्वकृता** त्रेधा विभक्ता। नपुनरनयोः सावयवत्व- निखयवत्वादि भेदः प्रदर्शितः। **साहित्यदर्पणकृता** इदमुदाहरणं प्रदर्शितम् अथापि सावयवत्वमुपपादितं, सावयवत्वादिघटनापि चमत्कृतिमाधत्ते अचश्चैवंप्रदर्शनमुपपादनं च उचितमिति। पद्यद्वयेऽपि निषेधस्य साक्षादेव प्रतीत्या वाक्यभेदश्च।

एवं साक्षन्निषेधकनञादियोगे वाक्यभेदेचापह्नुवपूर्विकामपह्नुतिमुदाहृत्य परपक्षत्वाद्युपन्यासे निषेधोऽर्थसामर्थ्यात् गम्यत इत्यत्रोदाहरणं प्रदर्शयति- **अङ्कंकेऽपीति।** इन्दौ चन्द्रमसि, दलितेन्द्रनीलशकलश्यामं- दलितः विशीर्णः य इन्द्रनीलः महारत्नम्। " हितश्शनेरिन्द्रनीलो ह्यसितो घनमेघरुक्। " इति शुक्रनीतौ। अन्यत्र च-

चित्रमीमांसा-

इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे।।

अत्र अपह्नवपूर्वक आरोपः अपह्नवस्तु परपक्षोपन्यासात् अर्थसिद्धः।।

विकसदमरनारीनेत्रनीलाब्जषण्डा-
न्यधिवसति सदायस्संयमाधःकृतानि।
न तु रुचिरकलापे वर्तते यो मयूरे,
वितरतु सकुमारो ब्रह्मचर्यश्रियंवः।।

तत्त्वालोकः-

क्षीरमध्ये क्षिपेन्नीलं क्षीरञ्नीलतांव्रजेत्।
स इन्द्रनीलो विज्ञेयो रत्नतत्वपरीक्षकैः।।

इति च तल्लक्षणमुक्तम्। उक्तलक्षणस्य महारत्नस्य शकलमिव खण्डमिव श्यामं यत् दरीदृश्यते पुनःपुनः अतिशयेन वा दृष्टिगोचरं भवति। दृशोः क्रियासमभिहारे यङ्। सनादित्वात् धातुत्वम् कर्मणि लकारश्च। तत् केऽपि केवयः अङ्कं कलङ्कमिति शशङ्किरे, संशिश्यिरे परे अन्ये कवयः जलनिधेः अर्णवस्य पङ्कं कर्दम इति मेनिरे अज्ञासिषुः, कतिचित् पुनः सारङ्गं हरिणं सञ्जगदिरे व्यक्तमूचुः, परे इतरे भूच्छायम् ऐच्छन् ईषुः। विभाषासेनासुराच्छायेति (पा.सू. २-४-२५) पाक्षिकी क्लीबता। वयं तु सान्द्रम् घनीभूतम् निशि निशायाम् पीतम् अतएव कुक्षिस्थमन्धतमसम् गाढतमसम् आचक्ष्महे-ब्रूमहे। अत्र- औत्प्रेक्षिकाणां धर्माणामपह्नवः केऽपि, परे, कतिचित् इत्यादिभिः स्वानभिमतपक्षान्तरोपन्यासादर्थसिद्धः अङ्कत्वादीनर्थतो निषिध्य अन्धतमस्त्वमारोप्यत इत्यपह्नवपूर्वक आरोप इत्याह- **अत्रेति।**

**विकसदिति।** यः कुमारः स्कन्दः संयमाधःकृतानि धारणाध्यान--
समाधिभिस्तिरस्कृतानि विकसदमरनारीनेत्रनीलाब्जषण्डानि व्याकोचा-

**चित्रमीमांसा-**

**मन्थानभूमिधरमूलशिलासहस्र**
**संघट्टनव्रणकिणः स्फुरतीन्दुमध्ये।**
**छायामृगश्शशकइत्यतिपामरोक्तिः**
**तेषां कथंचिदपि तत्र हि न प्रसक्तिः।।**

**अत्राप्यारोपपूर्वकोऽपह्नवः। सच पामरवचनोपन्यासादर्थसिद्धः।। एतानि वाक्यभेदेनोदाहरणानि।**

तत्त्वालोकः

प्सरोनयनरूपाणि नीलोत्पलानि अधिवसति-अधितिष्ठति। नतु रुचिरकलापे मञ्जुलकोमलबर्हयुजि मयूरे वर्ततेऽधितिष्ठति। मयूरवाहनो यदा न भवतीत्यर्थः, सः स्कन्दः वः युष्माकम् ब्रह्मचर्यश्रियं वीर्यप्रतिष्ठाप्रयुक्तशोभां, ब्रह्मतेजस्संपत्तिं वा-

श्रीरिन्दिरायां शोभायां स्यात्संम्पत्तिलवङ्गयोः।

इति नानार्थार्णवसंक्षेपात्। वितरतु विश्राणयतु अधिकं तु परिणामालंकारनिरूपणे द्रष्टव्यम्।

अत्र आविर्भवद्बर्हतयोज्वलकोमलश्श्रयो मयूरः तदधिष्ठातरि कुमारे मयूराधिष्ठानं निषेद्धुं ततः पूर्वमेव संयमाधःकृतामरनारीनेत्राधिष्ठानमारोप्यत इति आरोपपूर्वकश्च प्रकृतनिषेध इत्यपह्नुतिः।

यद्वा- अमरनारीनेत्रनीलोत्पलनिकररूपं वस्त्वन्तरं विधाय पश्चात् ललितकलापस्य मयूरस्यापह्नव इत्यारोपपूर्वकापह्नुतित्वम् अपह्नवस्यशाब्दत्वं वाक्यभेदश्च।

तत्रैवारोपपूर्वकापह्नवस्य परपक्षोपन्यासादिनार्थसिद्धत्वे उदाहरणं प्रदर्शयति- मन्थानेति। मन्थानः मन्थनदण्डः 'मन्थस्तु मन्था मन्थानो वैशाखः खजनकेऽपि च।' इति वैजयन्ती। तदात्मकतां प्राप्ते यो भूमिधरो मन्दरः तस्य मूले अधोभागे स्थितं यत् शिलासहस्रं पाषाणसहस्रं, तेन यत्संघट्टनमाघातः तस्माद्व्रणं क्षतं तस्य किणः रूढव्रणस्थाने परिदृश्यमानं लक्षणं, इन्दुमध्ये स्फुरति प्रकाशते। छाया भूच्छायम् मृगो

**चित्रमीमांसा-**

**एकवाक्यतायां तु-**

**बत सखि कियदेतत्पश्य वैरं स्मरस्य**
**प्रियविरहकृशेऽस्मिन् कामिलोके तथाहि।**
**उपवन सहकारोद्भासि पुष्प (भृङ्ग) च्छलेन**
**प्रतिविशिखमनेनोट्टंकितं कालकूटम्।।**

तत्त्वालोकः-

हरिणः शशकः शश इति अतिपामरोक्तिः अपशब्दोक्तिमप्यतिक्रम्यवचनरूपा, अपशदा अप्येवं नाभिदधतीति भावः। "पामरोऽपशदेऽज्ञे चेति **वैजयन्ती**। तेषां तदुक्तप्रकाराणां छायात्वादीनां कथंचिदपि केनापि प्रकारेण तत्र इन्दुमध्ये न प्रसक्तिः नावस्थानम्।

अत्रामृतमथनकालसमापतित मन्दर मूलभाग स्फुटितपाषाण सहस्रसमाहति समुत्पन्नरूढव्रणस्थानपरिदृश्यमानचिह्नत्वमारोप्य छायात्वाद्यपह्नवः क्रियते। अतश्चात्रारोपपूर्वकोऽपह्नवः। सच न शाब्दोऽपितु छायात्वादीनां गड्डुरिकाप्रवाहन्यायादविमृष्टत्वोक्त्या सिद्धः।। तदाह **अत्रापीति**।

वाक्यभेदेनोदाहृतानीत्युपसंहरति **एतानीति**। "अवामः प्रागल्भ्यं "नेदं नभोमण्डलम् अंकं केऽपि "विकसदमरनारी," मन्थानभूमिधरेति पंचोदाहरणानि वाक्यभेदेन अपह्नवस्योदाहरणानि इत्यत्र तात्पर्यम्

इत्थं वाक्यभेदेनोदाहरणानि प्रदर्श्य एकवाक्यतायामुदाहरणं प्रदर्शयति- **एकवाक्यतायामिति**।

तत्रापि विषयासत्यत्वप्रतिपादकच्छलादिप्रयोग उदाहरति **बतसखीति**।

सखीं प्रति विरहिण्या उक्तिरियम्। अस्मिन् कामिलोके कामिजने, स्मरस्य-मदनस्य, वैरं प्रतीकारबुद्धिः, कियत् किं प्रमाणं निरवधि इत्यर्थः। तदेतत् पश्य-अवेक्षस्व। बतेति खेदे। कीदृशे कामिजने इत्यत्राह -**प्रियेति**। प्रियस्य- इष्टजनस्य विरहेण असंनिधानेन तद्बुध्या वा कृशे दुर्बले "दुर्बलस्तु कृशस्तनुः इति **वैजयन्ती**। वैरमिति कथमवगतमित्यत आह- **तथाहीति**। अनेन मदनेन- उपवनेषु-उद्यानेषु यानि

**चित्रमीमांसा-**

**अमुष्मिल्लांवण्यामृतसरसि नूनं मृगदृशः**
**स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः।**
**यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे**
**शिखा धूमस्येयं परिणमति रोमावलिवपुः॥**

तत्त्वालोकः

सहकारीणि अतिसुरभीणि आम्रपुष्पाणि तेषुउद्भासिनः स्फुटप्रकाशाः ये भृङ्गाः रोलम्बाः तच्छलेन तद्व्याजेन, प्रतिविशिखं सर्वेषु बाणेषु, एकैकस्मिन्नपि शरे इति यावत् वीप्सायां प्रतिः। कालकूटं तीक्ष्णविषम् उट्टङ्कितम् निहितम् यद्वा एवंपाठः- उपवने ये सहकाराः अतिसुरभिणः आम्रवृक्षाः तेषु उद्भासीनि यानि पुष्पाणि तच्छलेन (प्रतिविशिखं) कालकूटं पुष्परूपेणावस्थितं क्ष्वेडविशेषं प्रतिविशिखम् एकैकबाणरूपम्, उट्टङ्कितम् आविष्कृतम्। एवंविधपाठादरेऽस्तिनिदानम्- कालकूटादि विषं मूलपुष्पफलात्मकमिति प्रतीतिः। एवंचोक्तरीत्या नेमानि सहकारपुष्पाणि, अपि तु कालकूटविषरूपेणावस्थिताः शरा इति अनुभवानुरोधेन अपह्नवे सौकर्यम्॥

विषयासत्यत्वप्रतिपादकछलशब्दप्रयोगेऽपह्नुतिमुदाहृत्यविषयासत्यत्वपर्यवसायि वपुश्शब्दयोगेऽपह्नुतिमुदाहरति-**अमुष्मिन्निति**।

**वेश्यामुद्दिश्य समृद्धं कामिनं प्रति दास्या उक्तिरियम्। शर्वप्लुष्टः-स्मरः, मृगदृशः** अमुष्मिन् लावण्यामृतसरसि पृथुजघनभागे नूनं निपतितः यदङ्गाङ्गाराणां प्रशमपिशुना इयं धूमस्य शिखा नाभिकुहरे रोमावलिवपुः परिणमति इति वाक्ययोजना।

शर्वेण- हरेण प्लुष्टः दग्धः स्मरः मदनः, मृगस्य दृशाविव दृशौ यस्याः तस्याः हरिणेक्षणायाः, अमुष्मिन् लावण्यामृतसरसि समुदायशोभात्मकेऽ मृत सरसि पृथुजघनभागे विशालकटिपुरोभागे, नूनं सत्यं निपतितः पतनमनुभूतः। तत्कथं ज्ञायत इत्याह-**यदिति**। यस्य कामस्यअङ्गे कलेवरे संसक्ताःये ऽङ्गाराः उन्मुकाः तेषाम्, प्रशमस्य निर्वापणस्य पिशुना सूचिका इयं धूमस्य शिखा रेखा धूमराजिरित्यर्थः। नाभिकुहरे नाभिरन्ध्रे रोमावलिवपुः रामावलिस्वरूपेणत्यर्थः, परिणमति

**चित्रमीमांसा-**

**पूर्वत्र न भृङ्गाणि सहकाराणि अपि तु सकालकूटाश्शराः। इत्यसत्यत्वाभिधायिच्छलशब्दवशात्प्रतीयते। उत्तरत्र नेयं रोमावलिः**

तत्त्वालोकः

विकारं प्राप्नोति।

अत्र वपुश्शब्दस्य शरीराभिधायकत्वे सत्यपि व्याजार्थपर्यवसायित्वमिति तादृशवपुश्शब्दबलात् आरोपविषयस्य प्रकृतस्य रोमावलिरूपस्य निषेधे सत्यारोप्यमाणस्य धूमशिखात्वरूपस्य प्रतीत्या विषयासत्यत्व पर्यवसायिनी अपह्नुतिरिति भावः।

अत्र **कैश्चित्** - धूमशिखा रोमवलिरूपतामापद्यत इति व्याख्यातं, तदयुक्तम्। तथासति उपमानभूतायाः धूमशिखायाः रोमावलीरूपतया परिणतौ परिणामालंकारतायाः प्रसङ्गात्। एवं प्रसङ्गे ऽयंहेतुस्स्यात् यद्वपुश्शब्दस्य शरीरार्थकत्वमिति।

सत्यम् उपमानस्योपमेयरूपत्वेन परिणतौ सत्यां प्रकृतकार्योपयोगे च सति परिणामत्वम्, तदेवतु न विवक्षितम्। विवक्षितं च रोमावल्याः धूमशिखात्वम्। यतश्चात्र शर्वदग्धमदननिपतनानुमापकत्वेन रोमावलिमपलप्य धूमशिखाताद्रूप्यमारोप्य तस्या एव प्राधान्यमिति, अतश्च न परिणामता नापि रूपकालंकारता वा अत एवात्र वपुश्शब्दः व्याजार्थे पर्यवस्यति। तद्बलाच्च प्रकृतस्य निषेधोऽन्यत्वप्रकल्पनं चेत्यपह्नुतित्वं स्वारसिकम् प्रकृतस्यापह्नवे च रूपकस्य प्रसक्तिरेव नास्ति।

अत एव च **काव्यप्रदीपकृता**- अत्र धूमशिखा रोमावलिवपुः परिणमति इति परिणामशब्दार्थवशात् नेयं रोमावलिः किन्तु धूमाशिखेति प्रतीयत इत्युपपादितम्।

**साहित्यचूडामणिकृतापि**- प्रकृतवस्त्वन्तररूपताभिधायिशब्दनिबन्धनोऽपह्नव इत्युक्तम् परिणमतीत्यस्य वस्त्वन्तररूपताभिधायित्वे सत्यपि वपुरिति पदान्तरमेव असत्यत्वपर्यवसायीत्यभिप्रेत्य बतसखीति प्रथमपद्येऽपह्नवप्रतीतिरीतिमुपपादयति **पूर्वत्रेति।**

अमुष्मिन्निति पद्ये ऽपन्हुति प्रतीति प्रकारमुपपादयति - **उत्तरत्रेति।**

**चित्रमीमांसा-**

**किन्तु धूमशिखेत्यसत्यत्व पर्यवसायिवपुश्शब्दबलात् प्रतीयते केचित्तु- सादृश्यव्यक्तये अपह्नववत् अपह्नवाय साश्यमपि अपह्नुत्यलंकारं वदन्ति।**

**यथाहुः-**

**सादृश्यव्यक्तये यत्रापह्नवोऽसावपह्नुतिः।**
**अपह्नवाय सादृश्यं यत्रास्त्येषाप्यपह्नुतिः।। इति।**

**उदाहरन्तिच-**

तत्त्वालोकः-

इत्थं वाक्यभेदेन, एकवाक्यतया च सादृश्यफलिकामपह्नुतिं सोदाहरणमुपन्यस्य व्याजोक्तेरतिरिक्तालंकारत्वमनङ्गीकुर्वतामुद्भटादीनां मतेन भूतार्थापह्नववर्ती अपह्नुतिं लक्षयितुं तन्मतमनुवदति केचित्त्विति।

**केचित्तु-** उद्भटमतानुयायिनो ये व्याजोक्तिमलंकारेषु न परिगणयन्ति ते. सादृश्याभिव्यक्त्यर्थं यत्रापह्नवः क्रियते तत्र, यत्र च अपह्नवाभिव्यक्तये अर्थात् सादृश्यपर्यवसायी अपह्नवः क्रियते तत्रापि अपह्नुतिरलंकारः इति वदन्ति इत्यर्थः। अयमेवार्थः सर्वस्वकृता सङ्गृहीतः इत्याह- यथाहुरिति। कारिकामुद्धरति सादृश्येति। तद्रीत्या सादृश्यव्यक्ति फलिकामपह्नुतिंप्रदर्शयितुं सर्वस्वकारेदाहृतं पद्यमेव अत्राप्युद्धरति उदाहरन्ति चेति। मुग्धा स्वपादपतनपर्य-न्तेनाऽपि व्यापारेण अनुनीयमाना नायिका स्वप्रियकृतं व्यापारनिचयं सख्यै निवेदयति। तदा सख्या साकूतं पुनःपृष्टा सती मुग्धतां परित्यज्य विदग्धोचितरीत्या प्रतिपाद्य वस्तुतत्वं निगूहति- आकृष्यादाविति। यः अनेकव्यापाराश्रयः मे प्रियः इष्टः।

सत्यवाक् आर्जवरतिः उपकुर्वन् प्रियंवदन्।
भजते यःस्वयं प्रीतः प्रियस्सभवति स्त्रियाः।।

**चित्रमीमांसा-**

**आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे**
**कण्ठे लग्नः सुकण्ठः प्रसरति कुचयोर्दत्तगाढाङ्गसङ्गः।**
**बद्धासक्तिर्नितम्बे पतति चरणयोः यस्स तादृक्प्रियोमे**
**बाले लज्जा निरस्ता नहि नहि सरले चोलकः किं त्रपाकृत्॥**

तत्त्वालोकः-

इति लक्षितः। स. तादृक् तादृशगुणगणैर्जुष्टः। तादृशगुणयुक्त इति कथं त्वया ज्ञात इत्याह -**आकृष्येत्यादिना॥**

आदौ= मदीयमानापनोदनार्थव्यापरोपक्रमे, अलकचयम्=चूर्णकुन्तलनिचयम्, अमन्दग्रहम्-गाढम्, आकृष्य मुखचुम्बनाय स्वमुखदेशं प्रापय्य, पश्चात् मम वक्त्रे वक्त्रम् आसज्य=संसृज्य, तत. कण्ठे-ग्रीवायां लग्नः-कृतकण्ठाश्लेषः। अत एव सुकण्ठः शोभनकण्ठः, पश्चात् कुचयोः=स्तनयोः दत्तगाढाङ्गसङ्गः-स्तनोपपीडमाश्लिष्य तदनु नितम्बे नायिकायाः कटिपश्चाद्भागे, बद्धासक्तिः बद्धादरः प्रसरति, तावतापि अहं मानं न त्यक्तवती, तदा मम चरणयोःपतति "**पादप्रणामान्तो मानः** इत्युक्तरीत्यनुसारेण पादपतनेनपि मामनुनेतुं प्रसरति। अतश्च तादृक्प्रियस्स इति कथिते सति, सखी पृच्छति **बाले इत्यादिना।** बाले-कस्य समीपे कया कीदृक् कियत्कथं वक्तव्यं, कीदृक् कथं कियद्वा न वक्तव्यमिति विशेषानाभिज्ञे! वक्तव्यावक्तव्यविवेचनारहिते इति यावत्, लज्जा=व्रीडा, प्रियेण, निरस्ता किम्? दूरतो निरसिता किम्? अन्यथा एवंविधगोप्यविषयप्रकाशनं सहजलज्जाधनानां विदग्धानामनुचितमेवेति भावः। तदा ज्ञातसखीहृदया विदग्धा उचितमुत्तरमाह- **नहिनहीति।** प्रियेण लज्जाया निरसन प्रसक्तिरेव नास्तीत्याह **चोलकः किं त्रपाकृत् इति।**

हे सरले ऋजुबुद्धे- मया पूर्वं आकृष्यादावित्यादिना आकर्षणादिक्रियाश्रयः प्रियः सत्यवचनत्वादिधर्मविशिष्टः पुरुषः न अपि तु चोलकः कूर्पासकः, सच त्रपाकृत्

**चित्रमीमांसा-**

**अत्र वीक्षितं प्रियमपह्नुत्य चोलकत्वारोपः तदर्थंच प्राक् प्रिय चोलसदृशधर्मोपन्यासः।**

तत्त्वालोकः

किमिति पृच्छति चोलक इत्यादिना। कूर्पासकोऽपि अवमुञ्चनसमये अलकचयं गाढमाकर्षति. वक्त्रे च संसृजति, कण्ठे लगति स्तनसंसर्गं प्राप्नोति, नितम्बेन सम्पृजति, ततश्चरणयोः पतति, इष्टश्च भवति,इति प्रिये यादृशव्यापाराः तादृशा व्यापाराः चोलकेऽपीति प्रियो यथा लज्जां कृन्तति तथा चोलकः नलज्जां कृन्तति,न लज्जामपनयति नापि लज्जां करोति। अचेनस्य कूर्पासकस्य कथं वा लज्जापहारित्वं लज्जाकरत्वं वा भवेत्। एतेन कूर्पासकस्य न लज्जोत्पादकत्वं, न वा लज्जापहारित्वमिति उभयमपि न सम्भवतीति भावाविष्करणात् नायिकायाः वैदग्ध्यमाविष्कृतम्। अत्र च प्रथमं "तादृक्प्रियो मे" इत्युपन्यस्य सखीप्रश्नानन्तरं "नहि नहि" इति प्रियोऽपह्नुतः तस्मिन्नेव चोलकत्वारोपश्च कृतः सच किमर्थ इति चेत् प्रियसदृशश्चोलक इति सादृश्याभिव्यक्तये इत्युपपादयति, तथा **सर्वस्वकारेण** श्लेषप्रकरणे इदं पद्यमुदाहृत्य अत्र "सादृश्यार्थमपह्नवस्य प्रतीतेर्नात्रापह्नुतिरित्याशङ्क्य सादृश्यपर्यवसायिना वा अपह्नवेन अपह्नव पर्यवसायि ना वा सादृश्येन भूतार्थापह्नवस्योभयत्र विद्यमानत्वात् इत्युपपाद्यापि उत्तरत्र- "सादृश्यव्यक्तये" इति कारिकां विधाय आद्या स्वप्रस्तावएवोदाहृता, द्वितीया तु सम्प्रतिदर्शिता इत्युक्तम्।तत्र आद्यस्यैवेदमुदाहरणं प्रिये चोलकत्वारोपार्थं प्रियोऽपह्नूयते"प्रियोमे" इत्युक्त्वा स एव प्रियः "नहिनहि"इति निषिद्धः पश्चाच्च तस्मिन्नेव चोलकत्वारोपः कृतः। अतश्च "सादृश्यव्यक्तये यत्रापह्नवोऽसावपह्नुतिः" इति लक्षितत्वात् न द्वितीयस्य तत्र अपह्नवाय सादृश्यपरिकल्पना आवश्यकी साचात्र पद्ये न प्रतीयत इति **सर्वस्वकारनिरूपणसरणिः** पूर्वोत्तरवाक्य सन्दर्भाननुगुणेति मनसि निधाय व्यवस्थितरीत्योपपादयति - **अत्र वीक्षितमित्यादिना।**

**चित्रमीमांसा-**

**अत्रेदमपह्नुतिकथनं व्याजोक्त्यलंकारं पृथगनङ्गीकुर्वताम् उद्भटादीनां मतमनुसृत्य।**

**ये तु - "उद्भिन्नवस्तनिगूहनं व्याजोक्तिः।" इति व्याजोक्त्यलंकारं पृथगिच्छन्ति तेषामिह व्याजोक्तिरेव, नापह्नुतिरिति रुचकादयः।।**

तत्त्वालोकः

ननु चोलके प्रियसादृश्याभिव्यक्तौ प्रियचोलकोभयानुगत साम्य प्रयोजकधर्मस्यावगतिरपेक्ष्यते तादृशं च धर्मं नात्रावगच्छाम इति चेत्तत्राह - **तदर्थंचेति।**

तदर्थं च प्रकृतनिषेधेनाप्रकृततादूप्यारोपद्वारा अपह्नुत्यलंकारतासम्पादनायैव, प्राक् प्रकृत प्रियनिषेधतः पूर्वं, प्रियचोलसदृशधर्मोपन्यासः, प्रियस्य -कूर्पासकस्य च अनुरूपः साधारणो यो धर्मः तस्य आदावलकाकर्षणस्य,कण्ठस्थितेः, कुचयोः उपरिप्रसरणस्य, गाढा ङ्गसङ्गस्य, नितम्बसंसर्गस्य, चरणयोरुपरिपतनस्य चेत्येषां धर्माणमुपन्यासः उपादानं कृतम्, एवंच प्रकृताप्रकृतयोः प्रियचोलकयोः साधारणानां धर्माणामुपादानं कृतमित्यपह्नुतिरत्रेति।

आहुःइत्यनेनायमस्वरसःसूचितोभवति। यत **उद्भटमतानुरोधेनात्रापह्नुति-मुपपादयता सर्वस्वकृता** सादृश्याभिव्यक्तये अपह्नवकरणेऽपि अपह्नुतेः अनपलप्यत्वादित्युक्तम्। अथापि उक्तोदाहरणे "नहि नहि सरले चोलकः" इत्युक्त्यैव प्रियगोपनं कृतमिति व्याजोक्तिरेव युक्तेति। एवं **चोद्भटादिभिः** व्याजोक्तेरतिक्तत्वाकथनं न्यूनमेव। अत एव **सर्वस्वकृतापि** मतभेदः प्रदर्शित इत्याह- **अत्रेदमित्यादिना।**

अत्र- आकृष्यादाविति पद्ये इदं सादृश्यपर्यवसायि अपह्नवलक्षणापह्नुतिकथनम् व्याजोक्त्यलंकारं तन्नामकमलंकारम्, पृथक् अपह्नुतेः पृथक् अनङ्गीकुर्वताम् अनभ्युपगच्छताम् उद्भटादीनामित्यत्र आदिशब्दात् **भामहादयो** ग्राह्याः। मतं नाम अभिप्रायः।

अत्रैव **सर्वस्वकारेणः** व्याजोक्तिरुक्तेति तन्मतमनूद्य आह- **येत्विति।**

## तत्त्वालोकः

(राजानकरुय्यकःततःप्राचीनोवामनश्च) **मम्मटादयः** व्याजोक्ते-रतिरिक्ततामभ्यधुः। तेषु **रुय्यकः** व्याजोक्तेर्लक्षणम्- "उद्भिन्नवस्तुनिगूहनं व्याजोक्ति" रित्यसूत्रयत्। तदर्थश्च - **यत्रनिगूढं वस्तु कुतश्चिन्निमित्तादुद्भिन्नं प्रकटतां प्राप्तं सत्** वस्त्वन्तरप्रक्षेपेण निगूह्यते अपलप्यते सा वस्त्वन्तरप्रक्षेपरूपस्य व्याजस्य वचनाद् व्याजोक्तिरिति रुय्यकशिष्येण **मङ्खुकेन** विवृतः। एवंचात्र प्रकृतं प्रियमेवोत्कर्षयितुम् अप्रकृतस्य चोलकस्य न प्रक्षेपः अपि तु अनुरागवशादवशतः उद्भिन्नस्य प्रियस्य निगूहनार्थमेव तत्प्रक्षेप इति **व्याजोक्तिरेव** नापह्नुतिरिति।

**ननु-** अपह्नुतिनिरूपणावसरे आकृष्यादाविति इदमेव पद्यमुदाहृत्य अत्रैव अलंकारान्तरविविक्तश्लेषस्संभवतीत्याशंकां निरसितुम्- अपह्नुतेरत्र विद्यमानत्वात् वस्तुतोऽपह्नवस्य सादृश्यार्थमत्र प्रवृत्तेः इति नायमपह्नुत्यलंकार इति चेन्न, उभयथाप्यपह्नुतिसंभवात्। सादृश्यपर्यवसायिना वा अपह्नवेन अपह्नवपर्यवसायिनावा सादृश्येनभूतार्थापह्नवस्योभयत्र विद्यमानत्वात् इतिस्फुटमपन्हुतिः **सर्वस्वकारेणोपगतेति** तेनैव व्याजोक्तिरुपगतेत्युक्तिः व्याहतेति नाशङ्कनीयम्। उत्तरत्र **सर्वस्वकृतैव** उक्तोदाहरणे अपह्नुत्यभिधानमुद्भटसिद्धान्ताश्रयेणोक्तमित्यभिधानात् **सर्वस्वकारानुरोधेन** तु अत्र व्याजोक्तिरेवेत्यवधेयम्।

**ग्रन्थकृतस्तु-** यत्र प्रकृताप्रकृतोभयनिष्ठस्य साम्यस्यासंभवः तत्र **व्याजोक्तित्वम्,** यत्र तत्संभवस्तत्रा**पह्नुतित्व**मिति वदतो **मम्मट** स्यानुरोधेन आकृष्यादाविति पद्ये अपह्नुत्या भाव्यम्। प्रियचोलसदृशधर्मोपन्यासात्।

तथा- **छेकापह्नुतेः** अपह्नुतिभेदतां वदतो **जयदेवस्यापि** मते "आकृष्येति पद्ये अपह्नुतिर्युक्ता। यतश्च-

> छेकापह्नुतिरन्यस्य शंकातस्तथ्यनिह्नवे।
>
> प्रजल्पन्मत्पदे लग्नः कान्तः किं नहि नूपुरः।।

इति तेनैव लक्ष्यलक्षणयोः प्रदर्शनात्।।

**नन्वेवंतर्हि-** छेकापह्नुतेः व्याजोक्तेश्च को भेदः?उच्यते व्याजोक्तौ आकारस्य

**चिमीमांसा-**

**दण्डीत्वपह्नुतेः साधार्म्यमूलत्वनियममनादृत्य किञ्चिदपह्नुत्य कस्यचित्प्रदर्शनमात्रमपह्नुतिरिति लक्षयित्वोदाजहार-**

**तत्त्वालोकः**

हेत्वन्तरवर्णनेन गोपनम्। छेकापह्नुतौ वचनस्यान्यथा नयनेनापह्नवः। अतएव जयदेवेन-

व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनम्।
सखि पश्य गृहारामपरागैरस्मि धूसरा॥

इति लक्षितम् उदाहृतंच। सत्यम् अथापि उक्तपद्ये व्याजोक्तिरेव ग्रन्थकृदभिमतेति प्रतिभाति। यतोत्र नायिकया नर्मसखीं प्रति अलकचयाकर्षणादिरूपायां चर्यायां कथितायां तामाकर्ण्य प्रियेण किं लज्जा निरस्तेति नर्मसख्या शङ्किते चोलकः किं लज्जानाशकः लज्जाकरोवा इति हेतूपन्यासपूर्वं प्रियापह्नुतेरिति। एवं प्रकृताप्रकृतसाधारणधर्मोपादाने सत्यसति वा यत्र सहेतुकं वचनस्यान्यथा नयनं तत्र **व्याजोक्तिः**। यत्र च हेतुमनुपन्यस्य वचनस्यान्यथानयनं तत्र **छेकापह्नुतिरिति** विषयविभागः कार्य इत्यभिप्रायात्।

**एतेन**-व्याजोक्त्यपह्नुत्योः प्रकृताप्रकृतोभयनिष्ठसाम्यासंभव-तत्संभवाभ्यां वैलक्षण्यं **प्रकाशकृता** प्रतिपादितं न युक्तमित्यपि ध्वनितं भवति। अतश्चोक्तपद्ये व्याजोक्तिरेवास्य अभिमता **सर्वस्वकारवत्**। न पुनरपह्नुतिः॥ अत एव **ग्रन्थकृता** स्वकीये **कुवलयानन्दे** अनुपन्यस्तहेतुकान्येव पद्यानि छेकापह्नुतेः उदाहृतानि व्याजोक्तेस्तु सहेतुकानीत्यप्यवधेयम्।

इत्थं सादृश्यघटितत्वमपह्नुतेः प्रतिपादयतां मतमभिधाय-

अपह्नुतिरभीष्टाच किञ्चिदन्तर्गतोपमा।
भूतार्थापह्नवादस्याः क्रियते चाभिधा यथा॥

इति साधर्म्यनियममपह्नुतेर्वदतो **भामहस्य** मतमनादृत्येव साधर्म्य-तदितरान्यतरमूलकत्वेऽप्यपह्नुतिः इत्यभिप्रयतो **दण्डिनो** मतमुल्लिखति - **दण्डीत्विति।**

**चिमीमांसा-**

**अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम्।**
**न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणामिति।।१।।**
**चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिणः।**
**सेयमग्निमयी सृष्टिः शीता किल परान्प्रति।।२।।**

तत्त्वालोकः

**अपह्नुतिरिति-** इदं च लक्षणं तदभिमतत्रिविधापह्नुति साधारणम्। त्रिविधापह्नुतिश्च -(१) विषयापह्नुतिः(२) स्वरूपापह्नुतिः (३) उपमापह्नुतिरिति। उक्तलक्षणार्थश्च किञ्चित्- किमपि प्रकृतम् अपह्नुत्य -अपलप्य. अन्यार्थस्य धर्मान्तरस्य दर्शनं- व्यवस्थापनम् आरोपणम् अपह्नुतिरिति। तदुदाहरणं "न पञ्चेषुरिति-" स्मरः कामः पञ्चेषुर्न तन्मात्रेषुभिर्जगतामीदृशापीडनासम्भवात्। अतस्तस्य पत्रिणां बाणानां सहस्रमस्तीति शेषः। अत्र कामस्य पञ्चेषुत्वं निषिध्य सहस्रेषुत्वरूपधर्मान्तरारोपरूपापह्नुतिः। अथापि नात्र सादृश्यं प्रतीयते विषयिणः अत्र सिद्धत्वात्। यतश्चात्र पञ्चविशिखत्वस्य कामे प्रसिद्धेः पञ्चविशिखशब्देन कामस्य योगरूढिभ्यामवगतौ सत्यामपि सहस्रपत्रिसंबन्धमात्रबोधकपदानां कामादन्यस्मिन् संकेताभावेन तादृशस्य वस्तुनः अभावात् सहस्रपत्रसम्बन्धमात्रस्य काम एव वक्तुं कवेरभिप्रायात्। एवं च विषयभूते कामे सहस्रपत्रवत्वरूपधर्मान्तरस्य भेदेनारोप इत्यत्राप्यापह्नुतिरिति साम्याभावेऽप्येषेति **दण्डिनो**ऽभिसन्धिः।।

**चन्दनमिति-** विषयापह्नुत्युदाहरणतयेदमुदाहृतं तेनैव। तदर्थश्च-चन्दनम् अतिशीतलत्वेन प्रसिद्धं मलयचन्दनम्, चन्द्रिका ज्योत्स्ना, मन्दो गन्धवाहश्च दक्षिणः मलयमारुतं चेति सेयं मयि विरहिणि अग्निमयी वह्निस्वरूपा सृष्टिः, दाहकत्वात्, परान् अविरहितान् प्रति, शीता शीतला सृष्टिः तेषां अत्यन्तं सुखजनकत्वादिति भावः।

अत्र कामिना परान् प्रति शैशिर्यमभ्युपगम्य आत्मानंप्रति औष्ण्यप्रकाशनद्वारा वह्निमयत्वारोपणात् चन्दनादीनां शीतलत्व-दाहकत्वयोः विषयभेदस्य कीर्तनात् विषयापह्नुतिः। उपपादिता च तेनैव-

**चिमीमांसा-**

**अमृतस्यन्दिकिरणः चन्द्रमा नाम नो मतः।**
**अन्य एवायमर्थात्मा विषनिष्यन्ददीधितिः।।३।। इति**
**साधर्म्यमूलात्वपह्नुतिरिति तेन व्याहृता।**

तत्त्वालोकः

शैशिर्यमभ्युपेत्यैव परेषु आत्मनि कामिना।
औष्ण्य प्रकाशनात्तस्य सेयं विषयनिह्नुतिः।। इति

**अमृतस्यन्दीति**- स्वरूपाऽपह्नुतेरिदं **दण्डिनोदाहृतम्**। अस्यायमर्थः- चन्द्रमाःनामतः नाममात्रतः अमृतस्यन्दिनः किरणाः यस्य सःअमृतस्यन्दिकिरणइति रव्यातः प्रसिद्धः नतु अर्थतः इत्यर्थः। अथवा-चन्द्रमाः मम मदनुभवानुरोधेन अमृतस्यन्दिकिरण इति नो मतः न सम्मतः,यतश्च तत्किरणानां अमृतस्यन्दित्वस्य प्रत्यक्षविरुद्धत्वात् इति भावः। विरहावस्थायां इन्दुकिरणानां अतीवोद्दीपकत्वात् असह्यत्वम् अतश्चायं चन्द्रमाः अर्कात्मा सूर्यस्वरूप एव अन्यएव चन्द्रमश्शब्द-व्युत्त्पत्तिलभ्यादाह्लादजनकतारूपाद्भिन्न एव अतएव च विषनिष्यन्ददीधितिः विषनिष्यन्दिन्यो दीधितयो यस्य स इति विग्रहः, दुस्सहविषज्वालास्रविण्य इति भावः।

अत्र कामार्तो विरही इन्दौ आह्लादकत्वरूपं चन्द्रत्वं अपलप्य वस्त्वन्तर-रूपतामारोपितवान्। अतश्चात्र स्वरूपापह्नुतिरिति भावः। उक्तं च-

इति चन्द्रत्वमेवेन्दौ निवर्त्यार्थान्तरात्मना।
उ क्ता स्मरार्तेनेत्येषा स्वरूपापन्हुति र्मता।।

इत्थं साधर्म्यमूलत्वमेवापह्नुताविति नियमस्य व्यभिचारं प्रदर्श्य उदाहरणं यद्दत्तं तत्प्रदर्शितम्। परन्तु साधर्म्यमूलकमुदाहरणं तु नात्रोद्धृतं ग्रन्थकृता। यतश्च तेनापि-

उपमापह्नुतिः पूर्वमुपमास्वेव दर्शिता।

इत्युक्तत्वेनापह्नुतिनिरूपणेऽकथनात् उपमापह्नुतिरित्यप्येकापह्नुतिर्विद्यत इति तेनोवोक्तमिति सूचयति-**साधर्म्यमूलात्विति**।

## तत्त्वालोकः-

**अयंभावः**- उपमामध्ये उपमापह्नुतिं परिगणयता **दण्डिना इयं प्रतिषेधोपमेति** व्याहृता। उक्तं च-

न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम्।
कलङ्किनो जडस्येति प्रतिषेधोपमैव सा॥

इति अत्र सादृश्यं प्रतिषिध्यते। सचार्थः वैचित्र्यावह इति भावः। साधर्म्येति- साधर्म्यमूला तु सादृश्यमूलापीत्यर्थः। व्याहृता उक्ता इत्यर्थः। मूले **दण्डीतु** इति तुशब्दमुपयुञ्जतो ग्रन्थकृतः अयमस्वरसो निहितः। यत्र प्रकृतं शब्दतोऽर्थतो वा निषिध्य तत्सदृशा- प्रकृततादूप्येण वर्तते तत्रैवापह्नुतिः।

न पञ्चेषुः स्मरः तस्य सहस्रं पत्रिणां यतः।

इति दण्डयुक्तोदाहरणे तु स्मरे सहस्रेषुमत्वारोपे सादृश्यं न हेतुरिति नापह्नुतिः, अपि तु "**प्रकृतस्य यदन्यत्वम्**" इति **काव्यप्रकाशानुरोधेन** अतिशयोक्तिविशेषएवेति। एतेनात्र **भामहानुवर्तित्वं** ग्रन्थकृतो व्यक्तं भवति। **दण्डिमतमपि**-

गोपनीयं कमप्यर्थं द्योतयित्वा कथंञ्चन।
यदि श्लेषेणान्यथा वा प्रथयेत्सात्वपह्नुतिः॥

इति लक्षयता **साहित्यदर्पणकृता** उपष्टम्भितमेव, नचैतावता **काव्यप्रकाशकारस्य** सादृश्यामूलकापह्नुतिर्नास्तीति अभिसन्धिरित्यपि न वक्तुं शक्यम्। यतः **प्रकाशकारेणैव** चतुर्थोल्लासे वस्तुना अलंकारध्वनिमुदाहरता-

केशेषु बलात्कृत्य तथा तेन रणेन जयश्रीर्गृहीता।
यथा कन्धराभिर्विधुराः तस्य दृढं कण्ठे स्थापिताः॥

इत्यत्र सादृश्याप्रतीतावपि न पलाय्य गताः तद्वैरिणः अपितु ततः पराभवं संभाव्य तान् कन्दराः नत्यजन्तीत्यपह्नुतिश्च व्यज्यत इत्युक्तम्। एवं **दण्डिवत्सादृश्याभावेऽप्यपह्नुतिः प्रकाशकारस्यापि** सम्मतेत्यकामेनापि उपेयमेव।

इत्थं सति व्याजोक्तिनिरूपणावसरे व्याजोक्तौ अपह्नुतेः पार्थक्यं प्रतिपादयता

**चित्रमीमांसा-**

**अन्यया तु तस्याप्येतादृशं रूपं न सम्भवति इत्याशयेन नायं पुण्डरीकाक्षोऽपि, किन्तु मन्मथ इति तदुभयमुन्मृज्य पुष्पचाप-मकरध्वजलेखनेन व्यञ्जितम्।।**

**इति श्रीमदद्वैतविद्याचार्य श्रीमद्भरद्वाजकुलजलधिकौस्तुभ श्रीरङ्गराजाध्वरि वरसूनोः श्रीमदप्पय्यदीक्षितस्य कृतौ चित्रमीमांसायाम्**

**।।अपह्नुति प्रकरणम् समाप्तम्।।**

तत्त्वालोकः

इत्येतावन्मात्रम् एततकृतालेरव्येन व्यक्तं भवति। न चैतावता तृप्यति मे मनः। अपि तु पुरुषोत्तम एवेत्यनेनेति मत्वा साधारण पुरुषनिषेधः प्राथमिकया नायिकयाभिव्यञ्जितः। ततश्चैकया च -सुपर्णलेखनव्यापाररूपचेष्टया पुण्डरीकाक्षभेदव्याप्यचक्राद्यभावस्य साधारणपुरुष धर्मस्य च अपसारणं कृतम्। अतश्चसाधारणपुरुषत्वनिषेधः पुण्डरीकाक्षताद्रूप्यं च व्यज्यते। असाधारणपुरुषधर्मस्य चक्रसुपर्णादिर्लेखनेन तादृशपुरुषगतं साधारण्यमपि स्वत एव व्यावृत्तं भवति। तादृशसाधारण्यव्यावृत्तिमन्तरेण असाधारणधर्म्य न्तरतादात्म्यस्य व्यञ्जयितुमशक्यत्वात्प्रकृतनिषेधः अप्रकृतारोपश्चेत्युभयमपि अभिव्यज्यत इत्यपह्नुतिध्वनित्वमिति।-

एवमपराप्यपह्नुतिरभिव्यज्यत इत्याह- **अन्ययात्विति** एकया पुण्डरीकाक्ष इति चक्रसुपर्णलेखनद्वाराभिव्यञ्जितस्सोऽपि न युक्तः। पुण्डरीकाक्षेऽप्येवंविधरूपातिरेकस्याप्रसिद्धत्वात् एवंविधरूपातिरेकस्तु मन्मथे प्रसिद्धः। अत एव च नन्दकिशोरमवलोक्य गोप्यः साक्षान्मन्मथमन्मथ ''इत्युपमानभूतमन्मथत्वेन अनुसन्दधिरे। एवं च पुण्डरीकाक्षादप्ययं सुन्दरो मन्मथ इति व्यञ्जनाय करे पौष्पं चापं उपरि मकरध्वजं च चित्रयां चक्रे। मन्मथासाधारणलाञ्छनचित्रणे

## तत्त्वालोकः

तदन्यलाञ्छनस्थितिरनुचितेति मत्वा नायं पुण्डरीकाक्ष इतिस्फोरयितुं चक्रं सुपर्णं च ममार्ज। इत्थं चोत्तरार्धेऽपि चक्रसुपर्णौ सुतापमार्जनात्पुण्डरीकाक्षनिषेधः। पुष्पचाप मकरध्वजलेखनान्मन्मथ इति चाभिव्यञ्जितं भवतीति द्वितीयापह्नुतिः । अनयोरपह्नुतिध्वन्योः अङ्गाङ्गिभावेन संकीर्णतेति।

**एतेन**- अत्र च सुपर्णादिलेखनस्य पुण्डरीकाक्षोऽयमित्यारोप्यभागमात्राभिव्यञ्जकत्वं, नपुनः उपमेयपुरुषगतस्य साधारणधर्मस्यापीति नापह्नवध्वनित्वमिति रसगंगाधरकृतायदुक्तं दूषणं तदलग्नकम्॥

**यच्च तेनैव**-"चक्रादिलेखनस्य पुण्डरीकाक्षारोपमात्रव्यंजकतया निषेधाभिव्यञ्जने सामर्थ्याभावात्" इति यदुक्तं तदपि न युक्तम् । यस्यैव च चक्रसुपर्णादिलिखनस्य पुण्डरीकाक्षाभिव्यञ्जकत्वं तेनैव पुण्डरीकाक्षत्वपूर्वभावितया साधारणपुरुषनिषेधोऽप्यभिव्यज्यत एव। न हि अभिधालक्षणावत् मुख्यार्थ-तत्संबद्धार्थमात्राभिव्यञ्जकत्वंव्यञ्जनाया अभिमतमालंकारिकाणाम्। येन आरोप्यांशमात्रमभिव्यज्य क्षीणसामर्थ्या व्यञ्जना भवेत्। अन्यथा-

पश्यात्र नलिनीपत्रे बलाका परिदृश्यते।
रम्ये मारकते पात्रे शुक्तिकेव च निर्मला॥

इत्यत्रापि निश्चलत्वस्य आश्वस्तत्वाभिव्यञ्जकत्वेऽपि परंपरया निश्चलत्वाद्यभिव्यञ्जकत्वमपीति अकामेनाप्युपेयमेव॥

यदितु "पश्यात्र" इति पद्ये अर्थस्यैवाभिव्यञ्जकत्वं, न शब्दस्येत्युच्यते तदापि शब्दैकप्रमाणके ध्वनौ शब्दस्य सहकारितयापि व्यञ्जकत्वमनिवार्यम्।

**किञ्च**- "त्वादालेख्ये" इति पद्ये वक्त्र्याः सख्याः वैशिष्ट्यात् , आलेख्यरूपदेशवैशिष्ट्यात्, "विधायैका चक्रमि"त्यादि सखीवाक्यवैशिष्टात्, प्राथमिकयोर्ध्वननं द्वैतीयकयोस्तु चक्र- सुपर्णापमार्जनरूपचेष्टायाः तदनन्तरकृतपुष्पचाप मकरध्वजलिखनरूपचेष्टायाश्च वैशिष्ट्येन ध्वननमित्युपगमे बाधकाभावात्॥

## तत्त्वालोकः-

**यच्चापि-** पुरुषतादात्म्यनिषेधं विना पुण्डरीकाक्षताद्रूप्यारोपानुपपत्या निषेधोऽभिव्यज्यत इत्युपगमे रूपकेऽपि तत्समानमिति रूपकोच्छेदप्रसंग इति तदपि न युक्तम्-

यतश्च रूपके साधारणधर्मो पस्थानमस्ति। अत्र तु साधारणधर्मस्य निषेधाय असाधारणधर्म उपादीयते -यथा "ज्योत्साभस्मेत्यादि" पद्ये, "अवाप्तः प्रागल्भयमित्यादिपद्ये" च साधारणासाधरणधर्मयोरुपादानमिति रूपकोच्छदस्य प्रसक्त्यभावात्। यदा च असाधारणधर्मोपादानमेकत्र तदा व्यतिरेकादिवत् अलङ्कारान्तरत्वमिति भेदस्यैव जागरूकत्वात्। अत एव च नात्र रूपकध्वनित्वस्याप्युक्तिसंभव इति प्रकारान्तरेण लक्षणकरणद्वारा अपह्नुतिध्वनित्वसाधनप्रयासो विफल एवेति दिक्॥

**नन्वत्र ग्रन्थकारेण जयदेवादिवत्** भ्रान्तापह्नुतिपर्यस्तापह्नुती न लक्षिते नाप्युदाहृते, परन्तु **जयदेवेन** शुद्धापह्नुतिर्यालक्षिता, या च हेत्वपह्नुतिः ते उभे अपि प्रकृतस्य निषेधेनेति लक्षणेनैव संगृहीते। या च छेकापह्नुतिस्सापि हेत्वनुक्तौ उक्तलक्षणसंग्राह्यत्वम्, तदुक्तौ व्याजोक्तित्वमित्यभिप्राय आविष्कृतः, शिष्येते परं भ्रान्तापह्नुतिपर्यस्तापह्नुती। एतयोः प्रकृतनिषेधो न क्रियत इति "प्रकृतस्य निषेधेन" इत्यस्य नेमे विषये। अतश्चान्यत्रान्तर्भावोऽभिप्रेतः।

तथाहि- भ्रान्तापह्नुतौ भ्रान्तिमान् उपमा चेत्युभयं ध्वनितं भवति। यथा-

तापं करोति सोत्कम्पं ज्वरः किं न सखि स्मरः।

इत्यादौ 'तापं करोति' इति स्मरवृत्तान्ते कथिते ज्वरसाधारण्यात् ऋजुबुध्या "ज्वरः किमितिपृष्टे "न सखि स्मरः" इति तत्वोक्त्या भ्रान्तिवारणं कृतम्, नैतावतापह्नुतित्वम्, अपितु ज्वरनिषेधाक्षिप्तप्रसक्तितया भ्रान्तिमान्, तदुपपादकतयोपमा चेत्युभयं व्यङ्ग्यम्, **दण्डिमतानुरोधेन** तु अत्र तत्वाख्यानोपमा। यथा च लक्षितं तेनैव-

न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे।
इति विस्पष्टसादृश्यात्तत्वाख्यानोपमैव सा ॥ इति।

## तत्त्वालोकः

**दर्पणकारस्तु-**

"अन्यं निषिध्य प्रकृतस्थापनं निश्चयःपुनः।"

इति लक्षयित्वा **निश्चयाख्यमतिरिक्तमलंकारमाह।** उदाजहारच-

वदनमिदं न सरोजं नेत्रे नेन्दीवरे एते।

इह सविधे मुग्धदृशो मधुकर मुधा न परिभ्राम्य॥ इति

**नचात्र**- निश्चयान्तस्सन्देहोऽलंकारः।" किं तावत्सरसिसरोजमि" तिवदिति वाच्यम्, ससन्देहे संशयनिश्चययोःसामानाधिकरण्यदर्शनात्। अत्र तु सख्याः सन्देहः, नायिकायाः निश्चय इति वैयधिकरण्यात्। तर्हि भ्रान्तिमानेवास्त्विति वाच्यम्। सख्यादेः भ्रान्तिसत्त्वेपि तत्कृतचमत्कारस्यानुभवागोचरत्वात्, प्रत्युत तन्नि वारकतत्वाख्यानस्यैव चमत्कारित्वात्। तर्हि रूपकध्वनित्वम् अस्त्विति वाच्यम्। स्मरे ज्वरबुद्धेरनिश्चयात्। अतो निश्चयस्यातिरिक्तत्वभ्युपगमापेक्षया भ्रान्तिमदुपमयोः व्यङ्ग्यत्वमिति ग्रन्थकृदाशयात्। एवंचैतादृशोदाहरणे भ्रान्तिमदुपमयोः व्यज्यमानतोक्तिः युक्ता। भ्रान्तिमत्व स्वारसिकप्रवृत्तिपर्यन्तस्य युक्तत्वसंभवात्। अत एव-

"जटा नेयं वेणीकृतकचकलापो न गरलम्"

इति **कुवलयानन्दोदाहृत** पद्ये पुराराति (क्रोध) भ्रान्तिनिमित्तक प्रहारप्रवृत्तिपर्यन्तता भ्रान्तिमतो व्यज्यमानतां स्फुटयति॥

अन्यत्र तस्यारोपार्थः पर्यस्तापह्नुतिस्तु सा।

नासं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम्॥

इति **कुवलयानन्दे** ग्रन्थकृता लक्षिता पर्यस्तापह्नुतिः रूपकमध्ये निवेशिता **विमर्शिनीकारेणेति** नपुनः वक्तव्यमिति अत्र तत्परिग्रह- परित्यागविषयो न निरूपितः। अस्या रूपकान्तर्भावप्रकारस्तु **जयरथेनोक्तः।**

तथाहि- 'विषयस्यापह्नवेऽपह्नुतिः' इति **सर्वस्वाभिमतं** अपह्नुतिलक्षणम्। इदं च लक्षणं "हालाहलो नैव विषं, विषं रमा" इत्यत्र न व्याप्नोति। अथ चोपमेयायांरमायां उपमानभूतविषसामानाधिकरण्यं भासत इति रूपकत्वमेव युक्तमिति।

## तत्त्वालोकः

अत एव **विमर्शिन्याम्** -"आरोपेत्यादिनेति प्रतीकमुपादाय " विषयस्यापह्नवे विषयिणोऽन्यस्य विधिरित्यर्थः।

तेन - न विषं विषमित्याहुः ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं( तु ससन्ततिम्)।पुत्रपौत्रकम्।

इत्यत्र विषस्य निषेधपूर्वं ब्रह्मस्वविषये आरोप्यमाणत्वात् दृढारोपं रूपकमेव नापह्नुतिः। अपह्नुतेर्हि निषेध्यविषयभित्तितयैवान्यस्य विषयिणो विधानं लक्षणम्। अत्रतु निषेध्यस्यैव विषस्य ब्रह्मस्वविषये आरोप्यमाणत्वाद्विधानम् इति। ब्रह्मस्वस्य दार्ढ्येन विषसाम्य प्रतिपिपादयिषया तत्र निषेधपूर्वं विषत्वमारोपितमिति दृढारोपरूपकत्वं युक्तम्। न ब्रह्मस्वं विषमिदमिति पुनरुच्यमानेऽ पह्नुतिस्स्यात्। इति॥

**एतेन** - अपह्नुतिप्रकरणे **रसगंगाधरकृता** - यत्तु कुवलयानन्दे इत्यादिना प्रकृतस्य निषेधेनेति चित्रमीमांसागतस्यापह्नुतिलक्षणस्याव्याप्तत्वाभिधानं अयुक्तमेव, पर्यस्तापह्नुतौ सर्वत्र रूपकत्वस्य ग्रन्थकृतोऽप्यनुमतत्वेनाव्याप्तिप्रसक्तेरभावात्॥

ननु अत्र **विमर्शिनीकारस्येव** ग्रन्थकर्तुरपि रूपकत्वमभिमतमिति कथमवगतमिति चेत्., उच्यते- **विमर्शिनीकृता** दृढारोपरूपकंद्विविधं प्रदर्शितं "क्वचिदभेदमेव द्रढयितुं विषणिो निषेधपूर्वमारोप्यमाणत्वेन, तदीयस्य वाभेदहेतोर्धर्मस्य हानिकल्पनेन आधिक्येन वा दृढारोपत्वेनापीदं दृश्यते" इति रूपकप्रकरणे। तत्रैव अत्रच यदन्ये इत्युपक्रम्य आधिक्येन यथा-

दृढतरनिबद्धमुष्टेः कोषनिषण्णस्य सहजमलिनस्य।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः।

इत्यत्रापि दृढारोपरूपकमित्युक्तम्। तयोः प्रथमे रूपकत्वं न निराकृतम्। द्वितीयभेदयोराद्ये न्यूनताद्रूप्यरूपकत्वमुपगतमुपपादितमुदाहृतं च यथैव "अचतुर्वदनेत्यादिना। आधिक्ये तुपरं यदुदाहृतं **विमर्शिनीकारेण** (दृढतरेति तत्र दृढारोपं रूपकम् इति असहमानैः दीक्षितैः व्यतिरेकप्रस्तावे- अनुभयपर्यवसायी व्यतिरेकोऽभ्युपगतः। **एतेन** " अप्रतिषिद्धमनुमतं भवतीति"न्यायेन पर्यस्तापह्नुतिस्थले रूपकत्वमिष्टमेव ग्रन्थकृत

## तत्त्वालोकः

इति विभाव्यम्। दृढतरेति पद्ये न रूपकत्वं नापि व्यतिरेकोऽपितुश्लेषमूलिकोपमेति तु पण्डितराजः इत्यन्यदेतत्। इति दिक्।।

इति श्रीमदत्रिकुलतिलकश्रीराममिश्रवंश्येन शोभाञ्जनग्रामा (नुग्गेहळ्य)
भिजनेन सोमयाजियाण्डान्.जनार्दनाचार्यविदुषस्तनूजेन सीताम्बा
गर्भसम्भवेन,श्रीमन्महीशूरपुरीमध्यविद्योतमान श्रीमन्महाराज
संस्कृतमहापाठशालायां सरस्वतीप्रासादारव्यायां अलंकार
**शास्त्र प्राध्यापकेन न्यायालङ्कारव्याकरणविदुषा**
**पण्डितरत्नादि बिरुदभाजा, सो. रामस्वामि**
**ऐय्यङ्गार्यशर्मणा विरचिते चित्रमीमांसा**
**व्यारव्याने तत्वालोकारव्ये**
**।।अपह्नुति प्रकरणं समाप्तम्।।**

इति शुभम्

## -तत्त्वालोकः-

निशासु मूर्ध्नि स्फुरता यत्सौधो राजतीन्दुना।
श्रीकण्ठो भक्तरक्षार्थं, सन्निधानं भजन्निव॥

इत्यत्र बाणासुरसदनस्य शिवरूपत्वोत्प्रेक्षायां मूर्ध्नि स्फुरन् इन्दुर्निमित्तमिति तयोर्गुणक्रियारूपत्वाभावादव्याप्तिः ॥

**एवम्** अतद्रूपस्य अन्यथाध्यवसानमतिशयार्थमुत्प्रेक्षा इति सूत्रयता **वामनेन** धर्मिस्वरूपोत्प्रेक्षामात्रं लक्षितम् तच्च

किंशुकव्यपदेशेन तरुमारुह्य सर्वतः।
दग्धां दग्धामरण्यानीं पश्यतीव विभावसुः ॥

इत्यादौ दावानलरूपे धर्मिणि तादृशदर्शनक्रियारूपधर्मोत्प्रेक्षा क्रियत इति एवमादौ धर्मिणि धर्मोत्प्रेक्षास्थलेऽव्याप्तम्।

**एवम्**

अतिसारूप्यादैक्यं विधाय सिद्धोपमानसद्भावम्।
आरोप्यते च तस्मिन् अतद्गुणादीति सोत्प्रेक्षा ॥

इति या उत्प्रेक्षा **रुद्रटेन** लक्षिता सापि धर्मिणि धर्म्यन्तरतादात्म्योत्प्रेक्षा यत्र क्रियते तत्र-

अनतिलम्बिदुकूलनिवासिनी बहुभिराभरणैः प्रतिभाति मे।
उडुगणैरुदयोन्मुखचन्द्रिकागतहिमैरिव चैत्रविभावरी ॥

इत्यादौ अव्याप्ता। यतोऽत्र मालविका, चैत्रविभावरीरूपतया उत्प्रेक्ष्यते। नपुनर्धर्मिणि धर्मः उत्प्रेक्ष्यत इति।

एवमतिरिक्तमपि उत्प्रेक्षाद्वयं लक्षितं तदपि तत्रतत्राव्याप्तम् अननुगतं च ॥

**एवम्-**

अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्यवा।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्यथा ॥

**इत्याचार्यदण्डिना** लक्षितं तदपि धर्मिणि धर्म्यन्तरतादात्म्योत्प्रेक्षायां प्रागुदाहृतायामव्याप्तम्। तथा-

## तत्त्वालोकः

यद्यनुष्णो भवेद्वह्निः यद्यशीतं भवेज्जलम्।
मन्ये दृढव्रतो रामस्तदा स्यादप्यसत्यवाक्॥

इत्यत्र सत्यवादिन्यपि रामेऽसत्यवाक्त्वं संभाव्यत इत्यतिव्याप्तं च भवेत्।

**एवम् अलंकारसर्वस्वकृतः** "अध्यवसाये व्यापारप्राधान्ये उत्प्रेक्षा" इति सूत्रं व्याख्यास्यता **मङ्खुकेन** विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः इति विशदयित्वा अध्यवसायस्य सिद्धत्व-साध्यत्वाभ्यां द्वैविध्यं प्रदर्शितम्। तदयुक्तम्। साध्याध्यवसाये कल्पकाभावात्। यदि तथाविभागस्तदा साध्याध्यवसाये विषयस्योपलब्धिरस्तीति रूपकमप्यध्यवसायमूलं भवेत्। अध्यवसानं च लक्षणाप्रभेदः। तच्च- **सरस्वतीकण्ठाभरणोक्त** रूपकलक्षणनिराकरणावसरे "वस्तुतस्तु अतिशयोक्तावेव लक्षणा न तु रूपके इति प्रतिपादितवता उत्प्रेक्षायां साध्यवसानलक्षणायाः अभ्युपगन्तमशक्यत्वात्। अतश्च **राजानकरुय्यककृतं** लक्षणं- "बालेन्दुवक्राण्यविकासभावात्" इत्यादिधर्मिस्वरूपोदाहरणेषु प्रकृतानां पलशकुसुमादीनामुपादानमस्त्येवेति अव्याप्तम्। **यद्वा** - उत्प्रेक्षायां साध्यवसानलक्षणोपगमेऽपि साध्याध्यवसाये मानाभावादित्यत्रैव नैर्भर्यात्॥

**एवम्**- " अन्यनिमित्तके वस्तुनि अन्यनिमित्तकत्वारोपणम् उत्प्रेक्षेति **अलंकारशेखरकृता केशवमिश्रेण** या लक्षिता सा हेतूत्प्रेक्षामात्रसंग्राहिका नपुनर्वस्तुफलोत्प्रेक्षयोः। अतएव च तेन-

गमनमलसयातैः कुम्भलक्ष्मीं कुचाभ्यां अविकलकरशोभामूरुकाण्ड द्वयेन।
यदियमहरदेषां हेतुनानेन नूनं निजवपुषि करीन्द्राः पांसुपूरं क्षिपन्ति॥

इति गजकर्तृकस्वशरीरोपरिपांसुप्रक्षेपणस्य नायिकापहृत गमन-कुम्भशोभा-करशोभाहरणमहेतुरपि हेतुत्वेन संभावितमिति उत्प्रेक्षेत्यभिप्रायेणोदाहृतम्। नपुनस्स्वरूपफलोत्प्रेक्षयोरुदाहरणं प्रदर्शितमित्यव्याप्तिरिति मत्वा **विद्यानाथोक्त** लक्षणस्य आपाततोऽव्याप्त्यादिग्रस्तत्वावभासेऽपि अर्थविशेषपरिकल्पनेन निर्दुष्टं

**चित्रमीमांसा-**

**यत्रान्यधर्मसम्बन्धादन्यत्वेनोपतर्कितम्।**
**प्रकृतं हि भवेत्प्राज्ञाः तामुत्प्रेक्षां प्रचक्षते।।**

तत्त्वालोकः-

भवतीति मत्वा विद्यानाथोक्तलक्षणमेव गुणग्राहिणामुपादेयं भवतीति तदेवोल्लिखति **यत्रेति।**

उत्प्रेक्षाविषये महती भावना **अलंकारशेखरकारस्य।** अतएवानेनैवमुक्तम्-

सर्वालंकारसर्वस्वं कविकीर्तिविवर्द्धिनी।
उत्प्रेक्षा हरति स्वान्तमचिरोढा स्मितं यथा । इति

एवं चास्यामपि ग्रन्थकृताउदाहरणप्रदानचातुरी विचारचातुरी च अनन्यसामान्यतया प्रदर्श्यत इति बोध्यम्।।

यत्र-अर्थे प्रकृतं विषयत्वेनाभिमतम्, अन्यधर्मसम्बन्धात् अन्यस्य विषयिणो यो धर्मः तत्सम्बन्धरूपात् निमित्तात्, अन्यत्वेन विषयितादात्म्येन प्रकारान्तरेण च उपतर्कितम्- उपतर्कः संभावना, तां प्राज्ञाः बुधाः अलंकारस्वरूपवेदिनः उत्प्रेक्षां प्रचक्षते।।

**यद्यपि-** विषयिधर्माः विषये समासङ्क्तुं न शक्याः अथापि साजात्यनिबन्धनमभेदमध्यवस्य कविः प्रकृतं उत्कर्षयितुं विषयिधर्मानेव विषये समासक्तान् मनुते। अत एव प्राज्ञा इत्युक्तिः उत्प्रेक्षायाः अध्यवसायगर्भतोक्तिश्च घटते। तथा च उपमानवृत्तिधर्मसम्बन्धनिमित्तकोपमेयविशेष्यकतादात्म्यसंसर्गकोपमानविधेयकाहार्यसम्भावनम् उत्प्रेक्षेति निष्कृष्टं लक्षणम्।।

'मुखं चन्द्रं मन्ये' इत्युत्प्रेक्षायां चन्द्रवृत्त्याह्लादजनकत्वादिधर्मसम्बन्ध प्रयुक्तं मुखे चन्द्रतादात्म्यसंभावनमाहार्यमस्तीति लक्षणानुगतिः।

सम्प्रति इवशब्दयोगे उपमैव प्रथमं बुध्युपारूढा भवति। नचैषा युक्ता। यत्र प्रकृततादात्म्यसंभावनोपयुक्तविशेषणानुपादानं तत्रोपमा कामं भवतु यदि नानौचिती। यत्र तु- सादृश्यापेक्षया तत्तादात्म्यनिश्चयप्रायतां प्रतिपिपादयिषता कविना

## चित्रमीमांसा

**बालेन्दुवक्राण्यविकासभावाद्**
**बभुः पलाशान्यतिलोहितानि।**
**सद्यो वसन्तेन समागतानां**
**नखक्षतानीव वनस्थलीनाम्।**

**अत्र प्रकृतानि पलाशकुसुमानि अप्रकृतनखक्षतधर्मवक्रत्वलौहित्यसम्बन्धात् नखक्षतत्वेनोपकल्पितानि।**

तत्त्वालोकः

अप्रकृततादात्म्यसंभावनोपयुक्तविशेषणकल्पना तत्रोत्प्रेक्षैव नोपमेति प्रदर्शयितुं तदनुगुणमुदाहरणमाह-**बालेन्द्विति।**

अविकासभावात्-मुकुलीभावेनावस्थितेः, बालेन्दुरिव वक्राणि, अतिलोहितानि- अत्यरुणानि, पलाशानि-किंशुकपुष्पाणि, वसन्तेन-मधुना समागतानां-संगतानां वनस्थलीनां अकृत्रिमवनोद्देशरूपनायिकानां सद्योदत्तनक्षतानीव बभुः-चकाशिरे इत्यर्थः।।

अत्र यद्यपि वसन्तवनस्थल्योः विशेषणानां साधारण्यमिति नायिकानायक-व्यवहारः प्रतीयत इति समासोक्तिरस्ति। तथापि उत्प्रेक्षायाः चमत्कारातिशयाधायकत्वात् तस्योपस्कारिका सा अतश्च समासोक्त्यनुप्राणि तोत्प्रेक्षा। तथा" बालेन्दुवक्राणि इत्यत्र वाचकलुमोपमोपस्करोतीति उपमासमासोक्त्योः उत्प्रेक्षायाश्च अङ्गाङ्गिभावसङ्करः। तमेवोपपादयति **अत्रेत्यादिना।**

**अयं भावः-** मधुमासस्य वर्ण्यत्वेन पलाशकुसुमानां तत्सम्बन्धित्वेन प्रकृतत्वमुपमेयत्वंच तानि नखक्षतगतवक्रत्वलौहित्यसम्बन्धं निमित्तीकृत्य नखक्षततादात्म्येन संभावितानीति उत्प्रेक्षात्वम्, उत्प्रेक्षानिमित्तस्यानुगामिता चेत्यपि बोध्यम्।

## चित्रमीमांसा-

## तर्कः संभावनामात्रं नत्ववधारणम्।

### तत्त्वालोकः

लक्षणे 'उपतर्कितम्' इति निविष्टं दृश्यते। तत्रतर्कः संभावनात्मकः, अवधारणात्मकश्चेति द्वेधा। तयोः कतरस्यग्रहणमिति संशये आह -**तर्क इति**।

नच- ज्ञानं तावन्निश्चयानिश्चयभेदेन द्विविधम्। निश्चयश्च अर्थाव्यभिचारि सम्यग्ज्ञानम्। तद्भिन्नोऽनिश्चयः।सच संशय-तर्करूपत्वेन द्विविधः। अनयोराद्यः- ''अयं स्थाणुर्वा पुरुषो वेति'' सामान्यतः पक्षद्वयोल्लेखगोचरस्संशयः। द्वितीयः-'दूरे तिष्ठन्देवदत्तइवाभाति'इति एकतरपक्षानुकूलकारणदर्शनेन पक्षान्त-रासंपर्शेनै-कतरपक्षनिर्णयरूपः।

एवं चेह सन्देह निश्चयान्तरालवर्ती तद्विलक्षणः संभावनाप्रत्ययस्त्रिशङ्कुरिव वर्तमानो ज्ञानविशेषः तर्कपदव्यपदेश्यः उत्प्रेक्षोत्थानमूलम्। इत्थं सति तर्कस्य अवधारणस्वरूपत्वप्रसक्तिरेव नास्तीति तन्निवारणप्रयासो व्यर्थएवेत्रेति वाच्यम्।

अवधारणात्मकस्यापि तर्कस्य दृष्टेः यथा-''यदि सः सविषमन्नं भक्षयिष्यति तदा परेष्यति'' इत्यादीनां निश्चयरूपत्वात्। अन्यथा प्रसङ्गरूपव्यति-रेक्यनुमानरूपतर्कस्य मृषावादताप्रसंगात्। अतस्सुष्ठूक्तं तर्कस्संभावनामात्रं नत्ववधारणमिति। एवं च- साधारणधर्मनिमित्तकः प्रकृत-विशेष्यकः उत्कटाप्रकृतप्रकारकस्संशयः संभावना पदार्थः। सम्भावनापदस्य दार्शनिकैरपि ''उत्कटैकतरको-टिकस्संशयस्सम्भावने''त्यर्थाभ्युपगमात्। नपुनः **साहित्यदर्पणकाराभिमतः**'' निगीर्णस्वरूपस्य अन्यतादान्म्य प्रतीतिरूपः। अतिशयोक्तौअतिव्याप्तेः। उक्तरीत्युपगमेतु अस्यां सन्देहः अतिशयोक्तौनिश्चय इति भेदस्य स्फुटं भानादतिव्याप्त्यनवकाशादितिभावः।।

प्रकृतोदाहृतिषु सर्वत्र उपमानवृत्तिधर्मसजातीयधर्मयोः अभेदाध्यवसायद्वारा उपमेये उपमानतादात्म्यमात्रं संभाव्यते नपुनः अनुमानवत् पक्षे साध्यनिश्चयः

**चित्रमीमांसा-**

**तदीयधर्मोहि तत्तादात्म्यसंभावनाहेतुः न व्याप्तिपक्षधर्मता वल्लिङ्गवदवधारणहेतुः।नचात्र इवशब्दस्य सादृश्यपरत्व मित्युपमाशंका कार्या,**

तत्त्वालोकः

अतश्च नावधारणात्मकः तर्क इति प्रदर्शयति- **तदीयेति**।

तदीयधर्मो हि-अप्रकृतधर्मो हि, तत्तदात्म्यसंभावनाहेतुः- अप्रकृततादात्म्य संभावनाहेतुः। **व्याप्तीति**। व्याप्तिश्च पक्षधर्मता च व्याप्तिपक्षधर्मते ते अस्मिन् स्त इति व्याप्तिपक्षधर्मतावत्, व्याप्तिपक्षधर्मतावच्चतत् लिङ्गंच व्याप्तिपक्षधर्मतावल्लिङ्गं, तदिव व्याप्तिपक्षधर्मतावल्लिङ्गवत् इति विग्रहः। अवश्यंभाविसाध्यसामानाधिकरण्यं हेतुनिष्ठंव्याप्तिः। व्याप्तिविशिष्टस्य हेतोः पक्षवृत्तित्वं पक्षधर्मता। तद्वत् यत् लिङ्गं लिङ्गज्ञानमित्यर्थः। एवंचसाध्यव्याप्यहेतुमान्पक्षःइत्येवंरूपं यद्धेतौ साध्यव्याप्यताज्ञानम्, व्याप्यस्य पक्षवृत्तित्वज्ञानं च तदुभयं परामर्शात्मकं ज्ञानं तत्सत्वे पक्षे साध्यवत्तानिश्चय उपजायते। न चेह तथाविधःपरामर्शः। यमाश्रित्य उपमेये उपमानतादात्म्यनिश्चयस्स्यात्। अतश्चेदं संभावनात्मकमेव ज्ञानं ननिश्चयात्मकमिति भावः। अत एव च **वात्स्यायनीये न्यायभाष्ये-**

तर्कस्यानवधारणात्मकत्वमपि सूचितम् - "अनुजानात्ययमेकतरं धर्मं कारणोपपत्त्या नत्ववधारयति, न व्यवस्यति, न निश्चिनोति एवमेवेदमिति। अयमेवचोह इत्यप्युच्यत" इति

**नच** "बालेन्दुवक्रत्राणिति" पद्ये इवशब्दश्रवणात् "इव वद्वा यथा तथेति" कोशपर्यालोचनया च सादृश्यपरत्वमेवेवशब्दस्येतिकुतः सम्भावनापरत्वं, यमालम्ब्य अत्रोत्प्रेक्षोपपादितेत्याशंकां परिहर्तुं शंकते- **न चेति**।

## चित्रमीमांसा-

**उपमायाः यत्र क्वचित्स्थितैरपि नखक्षतैस्सह वक्तुं शक्यतया वसन्तनायकसमागत वनस्थलीसम्बन्धित्वविशेषण कल्पनानपेक्षत्वात्। पलाशमुकुलानां नखक्षततादात्म्यसंभावनायामेव तथाविधविशेषणस्योपयुक्तत्वात्।।**

तत्त्वालोकः

अत्र **वक्रोक्तिजीवितकारेण**- उपमालंकार इति स्फुटमनभिहितमपि तत्रैव तत्कटाक्षइत्युन्नीय तां निराकृत्य उत्प्रेक्षैवेति स्थापयितुं युक्तिमुपादत्ते- **उपमाया इति।**

**अयं भावः** उदाहृतपद्ये नखक्षतेषु सद्योवसन्तनायकसमागत वनस्थली सम्बन्धित्वं विहाय यस्याः कस्याश्चित् नायिकायास्सम्बन्धित्वं नखक्षतेषु परिकल्पितं भवेच्चेत्तदा उपमापि वक्तुं शक्येत, तथासति कविना एवंकृतस्यात्

बालेन्दुवक्राण्यविकासभावात् बभुः पलाशान्यतिलोहितानि।
व्यक्तं वनान्तेष्ववलोकितानां नखक्षतानीव नितम्बिनीनाम्।। इति

न चात्र तथा कृतं कविना। अतश्चात्रोत्प्रेक्षैवोचिता नोपमा।

**किंच**-वसन्तसमागतवनस्थलीसम्बन्धस्य नखक्षतेषु परिकल्पनात् समासोक्तिविधया नायिकानायकव्यवहारसमारोपस्यापि प्रतीतेः समासोक्तिः उत्प्रेक्षामनुप्राणिति। एवंच विशेषणसाम्यमूलया समासोक्त्या उत्प्रेक्षासिद्धिः। समासोक्त्यभावे नितम्बिनीनां नखक्षतानीव बभुरिति उपमैव सिध्येत् नोत्प्रेक्षा। अत उक्तोपमानविशेषणानां समासोक्तिसिद्धिद्वारोत्प्रेक्षाङ्गत्वमेव युक्तम्। अन्यथा तदुपादानवैयर्थ्यप्रसङ्गात् इति।

**किञ्च**- उक्तोदाहरणे तु इवशब्दस्य संभावनार्थकत्वे अन्यत्र वर्तमानानां नखक्षतानां वनस्थलीषु संभावनानुपपत्त्या तन्निष्ठत्वं वाच्यम्। तन्निष्ठत्वंच न नायकसम्बन्धं विनेति वसन्तेनेत्यादिविशेषणं सार्थकं भवति।

**चित्रमीमांसा-**

**एवमन्यत्रापि यत्रयत्र अप्रकृततादात्म्यसंभावनोपयुक्तविशेषण कल्पना तत्र सर्वत्राप्युत्प्रेक्षावगन्तव्या। यथा-**

**उवाह या तनुलता भृङ्गालीरोमवल्लरीम्।**
**पश्चाद्विमुक्तां वैमल्याद्बिम्बितामिव वेणिकाम्।।**

तत्त्वालोकः

उक्तोदाहरण इव अन्येष्वप्युदाहरणेषु तादात्म्यसंभावनोपयुक्तोपमानविशेषणकल्पना कविना क्रियते तत्र सर्वत्रोत्प्रेक्षैवेति बोध्यमिति प्रतिपाद्य उदाहरणदिशं प्रदर्शयति-**एवमन्यत्रेति। उवाहेति।**

इदं च पद्यं अविशिष्टोत्प्रेक्षाया उदाहरणम्। पार्वत्याः लावण्यसम्पद्वर्णनमनेन क्रियते। तनुलता या पूर्वं प्रक्रान्ता पार्वती, तन्वी लतेव कृशाङ्गयष्टिः, यद्वा तन्वी च सा लता च तनुलता तत्वेनाध्यवसिता नायिका, भृङ्गालीरोमवल्लरीम् मधुपश्रेणीव परिदृश्यमानां रोममञ्जरीम् उवाह बभार कीदृशाकारेण संभाव्यमानामित्यत्राह-**पश्चादिति।** पश्चात् पश्चिमाङ्गे विमुक्तां स्रस्ताम्, अथच वैमल्यात् स्फटिकवदतिस्वच्छताया हेतोः बिम्बितां प्रतिबिम्बितां वेणिकामिव केशबन्ध इव स्थितां (उवाह)।

अत्र पार्वतीशरीरस्याच्छाच्छतया पश्चिमाङ्गे लम्बमाना वेणी पुरस्तात् प्रतिफलितेवोदरमध्यभागादूर्ध्वमुखेनोद्गता रोमराजिश्चकासे। तादृशी तस्याश्शोभा रोमराजिश्च तावत्स्फुटेति भावः।

इह च तादृशरोमवल्लर्यां विषयविषय्युभयानुगतनैल्यवक्रत्वदैर्घ्यादि धर्मसम्बन्धेन निमित्तेन वैमल्यप्रयोज्यपुरोभागप्रतिबिम्बितवेणिकातादात्म्यं संभाव्यते। अत एव धर्मिणि धर्म्यन्तर तादात्म्योत्प्रेक्षा। धर्मिस्वरूपोत्प्रेक्षायां च विषयविषय्यनुगतधर्मस्य प्रयोजकत्वात्। निमित्तस्य विषयिधर्मत्वं" यत्रान्यधर्मसम्बन्धादिति वदतां सर्वेषामभिमतमेव। अत एव चात्र'' वैमल्यस्य नोत्प्रेक्षाप्रयोजकत्वम्। तस्य उपमानकोटि प्रविष्टतनुधर्मत्वे सत्यपि उपमानभूत

**चित्रमीमांसा-**

**उपमा यत्र क्वचिन्स्थितयापि वेणिकया वक्तुं शक्येति तत्र अनुपयुक्ता, वैमल्यात् पुरोभागप्रतिबिम्बितत्वरूपविशेषणकल्पना तादात्म्यसंभावनार्था॥**

**यत्र तु संभावनोपयुक्तविशेषणकल्पनारहितमुपमानं निबध्यते, तत्र परम् इवशब्दः सादृश्यपर इत्युपमालंकारः॥**

तत्त्वालोकः

वेणिकाधर्मत्वाभावात्॥

अत्र विषयिविशेषणानां उपमानपक्षेऽनुपयोगम्, उत्प्रेक्षापक्षे उपयोगं चोपपादयति- **उपमेति**।

तर्हि इवघटितोपमाया निरवकाशता स्यात् सर्वत्र उपमानांशे यस्य कस्यचिद्विशेषणस्योपादानसंभवात्। सर्वस्यामप्युपमायां साधारणधर्मस्यापेक्षितत्वेन उपमानस्य निर्विषयस्यानुपलम्भात् इति प्राप्ते उपमाया विषयं प्रदर्शयति- **यत्रत्विति**।

यत्र तु परं निमित्तं न प्रतीयते, प्रतीतमपि वा नोपमानानन्वयि तदा उपमानोपमेयंसाधारणधर्ममात्रस्योपादानं, यत्र वा उपमानगतविशेषणराहित्यं तत्रपरम् इवशब्दः सादृश्यवाची न सम्भावनावाची। अत एव तत्रोपमा। यथा-

नितान्तपारिप्लवतारतारके रसेन सा नर्तयति स्म लोचने।
परिभ्रमद्भर्भगभृङ्गसङ्गते निशावसाने नलिनीव पङ्कजे॥

इत्यादौ नायिकानलिन्योरुपमैव नोत्प्रेक्षा। तत्प्रयोजकस्योपमानविशेषणान्तरस्य निमित्तभूतस्यानुपादानात्।

**चित्रमीमांसा-**

**अमुमेव च विभागमभिप्रेत्य चक्रवर्तिनोक्तम्-**

**''यदायमुपमानांशो लोकतस्सिद्धिमृच्छति।''**

**इत्यादि।।**

तत्त्वालोकः

अत्र य उत्प्रेक्षोपमयोः विषयविभागः प्रदर्शितः सः **चक्रवर्तिनो**ऽप्यभिमतः इति तदुक्तिं पूर्वमनूक्तां स्मारयति **अमुमेवेति। यदायमिति।**

यदायमुपमानांशो लोकतस्सिद्धिमृच्छति।
तदोपमैव येनेवशब्दः साधर्म्यसूचकः।।

इति। इयं च कारिका उत्प्रेक्षायाः अविषयतां उपमाया विषयतां च प्रदर्शयति। अस्या अर्थश्च -कविना उपादीयमानोंऽशः उपमानरूपेण तद्धर्मरूपेण विशिष्टरूपेणवा लोकप्रसिद्धिगोचरतां प्राप्नोति न पुनः प्रौढोक्तिमात्रगोचरतां तदा उपमैवालङ्कारः यत इवशब्दः साधर्म्यमाचष्टे।

यदा पुनरयं लोकादसिद्धःकवि कल्पितः।
तदोत्प्रेक्षैव येनेवशब्दस्संभावनापरः।।

इति। इयं च कारिका उपमायाः अविषयतां उत्प्रेक्षायाश्च विषयतां प्रदर्शयति। अस्या अर्थश्च-कविना यत्रोपमानं तद्विशेषणं वा निमित्तभूतं कविप्रौढिक्तिनिष्पन्नं, तत्र उत्प्रेक्षैवालंकारः। यत इवशब्दस्संभावनामात्रमाचष्टे इति।।

यद्यपि चक्रवत्युस्लिलखितरीत्या उपमानांशस्य लोकानुभवसिद्ध त्वमात्रेणोपमेत्यभ्युपगम्येत- तदा-

ज्ञाने मौनं, क्षमा शक्तौ, त्यागे श्लाघाविपर्ययः।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव।।

इत्यादौ ज्ञानादिसाहित्येन मौनादीनां सप्रसवत्वमुत्प्रेक्ष्यते। सप्रसवत्वं च लोकसिद्ध मेव अथापि नोपमात्वं, अपि तु उत्प्रेक्षात्वमेवेष्यते। सा न स्यात्।

## तत्त्वालोकः-

किञ्च-

**न नित्यमस्मिन् परिपूर्णतेति त्यक्त्वा नभः क्षोणितलावतीर्णः।**
**आनन्दयन्निन्दुरिव स्वधाम्ना विभाति लोके नवकाकतीन्द्रः।**

इत्युत्प्रेक्षामुदाहरतो **विद्यानाथस्यापि** उपमानांशमात्राप्रसिद्धिमात्रं नोत्प्रेक्षाया प्रयोजकमित्यभिमतम्। उक्तोदाहरणे इन्दोः उपमानस्य लोकसिद्धत्वात्। यदि उपमानांशशब्देन उपमानविशेषणीभूतस्य धर्मस्य ग्रहणं तदा **विद्यानाथोदाहरणे** इन्दुविशेषणस्य क्षोणितलावतीर्णत्वस्य लोकसिद्धत्वं नास्तीति उत्प्रेक्षा अव्याहता।

तथापि- "दूरे तिष्ठन् देवदत्त इवाभाती"त्यादौ देवदत्तस्य उपमानस्य तद्विशेषणस्य वा दूरेऽवस्थानस्य चाप्रसिद्धत्वाभावेन उत्प्रेक्षा न स्यात्, इष्यते चात्राप्युत्प्रेक्षा। यत्रोत्प्रेक्षात्वं तत्र तत्र चमत्कारोऽपेक्षित इति नाशङ्कनीयम्। चमत्कार सत्वे अलंकारत्वं, तदभावे उत्प्रेक्षामात्रमित्यवश्याश्रणीयम्। अन्यथा-"आत्मानं रथिनं विद्धि" इत्यादावपि रूपकता न स्यात्। अभ्युपगताच तत्ररूपकता **वेदव्यासेन**- "आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयतिच" इति। **ग्रन्थकृतापि** उपमोपक्रमे "गौर्वाहीक इति न रूपकम्"इत्युक्तम्। तदपि न रूपकनिरासाभिप्रायं, अपि तु रूपकस्यालंकारतामात्रनिरासाभिप्रायम्।। अत एव रूपकनिरूपणावसरे- "उपमेयतावच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकम्।। तदेवोपस्कारकत्वविशिष्टमलंकारः इति **रसगंगाधरकृता** रूपक-रूपकालंकारयोर्भेदः प्रदर्शितः। तुल्यन्यायेनात्रापि उपमानवृत्ति धर्मसम्बन्धनिमित्तकोपमेयधर्मिकोपमानविधेयकाहार्य सम्भावनमुत्प्रेक्षा। सैवोपस्कारकत्वविशिष्टा अलंकारः इत्यभ्युपेय एव।

अतश्चात्र "यदायमुपमानांश" इत्यस्य उपमानतावच्छेदकविशिष्टोपमानं यत्र प्रसिद्धं तत्रोपमा। यत्र तदप्रसिद्धं तत्र उत्प्रेक्षेत्यभिप्रायपरिकल्पनेन **विद्यानाथचक्रवर्तिनोः** विरोधं परिहृत्य विषयविभागसामञ्जस्यं विधेयम्।

**एवंचविद्यानाथीये** "न नित्यमिति"पद्ये क्षोणितलावतीर्णत्वरूपोपमानतावच्छेदकविशिष्टस्येन्दोर्विशेषणाप्रसिद्धि प्रयुक्तविशिष्टाप्रसिद्धिरित्युत्प्रेक्षा।

**चित्रमीमांसा-**

**दण्डिनापि इवशब्दस्योत्प्रेक्षाव्यञ्जकत्वमुक्तम्।**

**मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।**
**उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः।।**

तत्त्वालोकः

प्रकृते-"उवाह या तनुलता" इति पद्ये वेणिकायाः प्रसिद्धत्वेऽपि पश्चिमाङ्गविमुक्तायाः पुरःप्रतिफलनरूपविशेषणांशस्य कविप्रौढोक्तिमात्रनिष्पन्नेत्वेन विशिष्टाया अपि वेणिकाया अप्रसिद्धत्वमिति "यदा पुनरयं लोकादसिद्ध" इति चक्रवर्त्युक्तरीत्यापि सामञ्जस्यमिति दिक्।।

नचेवशब्दस्योत्प्रेक्षाव्यञ्जकत्वं प्राचामभिमतं येनात्रोत्प्रेक्षा प्रतिपादनमुचितं स्यादिति वाच्यम्। **भामाहानन्तरेण दण्डिनापि** इवशब्दस्योत्प्रेक्षाव्यञ्जकत्व मुक्तमित्याह-**दण्डिनेति**।

अयं भावः-

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।

इति पद्ये परेषामुपमाभ्रान्तिं परिहरता इवशब्दोपादानेऽपि यत्रोपमा न संभवति तत्रोत्प्रेक्षात्वम्। नपुनरिवशब्दो पादानस्थले सर्वत्रोपमेति निष्कृष्य, उत्प्रेक्षाव्यञ्जकान् परिगणयता **दण्डिना स्वकीये काव्यादर्शे** इवशब्दस्यापि उत्प्रेक्षव्यञ्जकत्वमुक्तम्। मन्ये इत्यादीनां यथोत्प्रेक्षाव्यञ्जकत्वं तथा इवशब्दस्यापि, "दूरेतिष्ठन्देवदत्त इवाभाति" इत्यादिप्रयोगप्रामाण्यादिति।

**दण्डिनापीति** अपिशब्दः**भामहं** समुच्चिनोति। तर्हि भामहोक्तमेव कुतो न प्रथमतोऽभिहितमिति चेद्। उच्यते **भामहेन**-तद्व्यञ्जकत्वं न साक्षादभिहितम्। अपितु

किंशुकव्यपदेशेन तरुमारुह्य सर्वतः।
दग्धां दग्धामरण्यानीं पश्यतीव विभावसुः।।

इत्युदाहरणप्रदर्शनमात्रेण सूचितम्। अत एव ग्रन्थकृतापि भामहादर्वाचीनस्य दण्डिनो ग्रहणम् अपिशब्द प्रयोगश्च संगतो भवतीति बोध्यम्।

**चित्रमीमांसा-**

**अत्रादिशब्देन तर्कयामि, संभावयामि, जाने, उत्प्रेक्षे, स्यात् इत्येवमादीनां सङ्ग्रहः॥**

**अत्रच-**

तत्त्वालोकः

मन्ये शङ्के ध्रुवमिति दण्डि पद्ये आदिशब्दसंग्रह्यान् उत्प्रेक्षाव्यञ्जकान् उपलक्षणविधया सूचयति- **अत्रादिशब्देनेति।**

यथा वा गन्थकृतो **वरदराजस्तवे**

लावण्यसागरभुवि प्रणयं विशेषात् दुग्धाम्बुराशिदुहितुस्तव **तर्कयामि।**
यत्तां बिभर्षि वपुषा निखिलेन लक्ष्मीम्-अन्यां तु केवलमधोक्षज वक्षसैव॥
इत्यत्र **तर्कयामीति** उत्प्रेक्षाव्यञ्जकः।

यथावा- **ममैव यदुशैलदीपस्तोत्रे-**

श्रीयादवाद्रि शिखरस्थितदिव्य मूर्ते **संभावयामि** वदनं तव देव पद्मम्।
यस्माद्रमा सततमेव कुतूहलाढ्या संक्रीडते कुमुदबान्धव सोदरास्या।
इत्यत्र **संभावयामीति** शब्दः

**यथावा-**

**जाने**तिरागादिदमेव बिम्बं बिम्बस्य च व्यक्तमितोऽधरत्वम्।
द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोः जनानाम्॥
इत्यत्र **'जाने'** इति शब्दस्य। एवमेवोदाहरणान्यूह्यानि। अत्रापि आदिशब्दात्- ऊहे, अवैमि, इत्यादीनां सङ्ग्रहः।तद्यथा-

"अस्यां मुनीनामपि मोहमूहे।,
"विकस्वरीभूतमवैमि चन्द्रम्।"
इत्यादाविति बोध्यम्॥

इत्थमुदाहरणविशेषं प्रदर्श्य सम्प्रति दलकृत्यं प्रदर्शयति-**अत्रचेति।**

**चित्रमीमांसा-**

**कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय।**
**यदि पुनरहं विधिःस्यां खलजिह्वायां निवेशयिष्यामि॥**
**यद्यनुष्णो भवद्वह्निः यद्यशीतं भवेज्जलम्।**
**मन्ये दृढव्रतो रामस्तदा स्यादप्यसत्यवाक्॥**
**इत्यादिष्वतिव्याप्तिवारणाय धर्मसम्बन्धादित्युक्तम्**

तत्त्वालोकः-

अत्रैव पूर्वं मन्ये, स्यात् इत्यादिनां उत्प्रेक्षाव्यञ्जकत्वमभिहितं, तदपि सति निमित्ते इति अस्धातुयोगेऽपि संभावनायाः प्रतीतावपि नोत्प्रेक्षात्वम्, अत एव धर्मसम्बन्धादिति विशेषणमुपात्तमिति अस्धातुयोगे तदभावं प्रदर्शयितुमुदाहरति **कस्तूरिकेति।**

अहं पुनः विधिः स्यां यदि तदा कस्तूरिकामृगाणाम् अण्डात् गन्ध-गुणमखिलमादाय खलजिह्वायां निवेशयिष्यामि इत्यन्वयः।

अहं पुनः विधिः, स्रष्टा, स्यां यदि उत्पत्स्यामि चेत्, तदा तस्मिन् समये, कस्तूरिकामृगाणां गन्धमृगाणाम् अण्डात् अण्डकोशतः, गन्धगुणमखिलम्-गन्धरूपं गुणसर्वस्वम् आदाय उद्धृत्य खलजिह्वायां, दुर्जनरसनायां निवेशयिष्यामि आपूरयिष्यामि इत्यर्थः। मन्येशब्दयोगेऽपि संभावनायाः निर्निमित्तकत्वे नोत्प्रेक्षात्वमिति तत्प्रत्युदाहरति-**यद्यनुष्ण इति।**

वन्हिः अनलः सहजतयैवोष्णः, यदि अनुष्णो भवेत् शीतो भवेत्, जलं वा सहजशीतस्पर्शगुणं वह्न्याद्युपाधिं विना यदि अशीतं भवेत् उष्णं भवेत् चेत्, तदा दृढव्रतः व्यवस्थितनियमसंरक्षिता, रामः दाशरथिः, असत्या अतथ्या मिथ्याभूतावाक् यस्य सः असत्यवाक् मिथ्यावादी स्यादपीत्यर्थः॥

उक्तोदाहरणयोर्मतभेदेन यद्यर्थातिशयोक्तेस्संभावनालंकारस्य वा विषयत्वम्।

**चित्रमीमांसा-**

**तेषु हि ''यद्यर्थोक्तौ च कल्पनम्'' इत्यतिशयोक्त्यलंकार विषयेषु॥**

तत्त्वालोकः

अनयोश्च निर्निमित्तमेव तथा संभावनमिति प्रतिपादयितुं प्रथमं **प्रकाशकाराद्यनु**रोधेन अतिशयोक्तिविषयत्वमुपपादयति- **तेषु हीति।**

**काव्यप्रकाशकारेण**- दशमोल्लासे-चतुर्विधाम् अतिशयोक्तिं लक्षयता- ''यद्यर्थोक्तौ च कल्पनम्''इति सूत्रितम् विवृतंच- यद्यर्थस्य यदिशब्देन, चेच्छब्देन वोक्तौ यत् कल्पनं अर्थादसंभविनोऽर्थस्य सा तृतीया इति। एषांमते संभावनालंकारस्यानभ्युपगमात् अत्रातिशयोक्ति विशेषः॥

तयोः ''कस्तूरिकामृगाणा''मिति पद्ये खलजिह्वायां कस्तूरीगन्धनिवेशनस्य तत्कर्तृत्वस्य च स्वस्मिन् असंभवेऽपि, स्वस्मिन् विधित्वसंभावनया तादृशगुणनिवेशनसम्बन्धः यदिशब्देन कल्पितः। तेन च स्वस्य विधित्वं यथा न संभवति तथा दुर्जनरसनासु परगुणकथनं न संभवतीत्युक्तं भवतीति **यद्यर्थातिशयोक्ति**रत्रेति भावः।

यद्यनुष्ण इति पद्ये वह्नौ शैत्यस्य, जले अनोपाधिकौष्ण्यस्य च सम्बन्धेऽसत्यपि संभावनामात्रेण तत्सम्बन्धंपरिकल्प्य सत्यवाक्ये रामे असत्य वचनसम्बन्धाभावेऽपि तत्सम्बन्धः संभावितः। तेन च वह्निजलयोः शीतोष्णे यथा न संभवतः तथा रामेऽपि मिथ्यावादित्वमसंभावितमिति भावः॥

असम्बन्धे सम्बन्धकल्पनात्मिकातिशयोक्तिरिति या **सर्वस्वकृता प्रकाशकारेण** च लक्षिता सैव यद्यर्थातिशयोक्तिरिति सा भिन्नैव। यतः **चन्द्रालोके।** सम्बन्धातिशयोक्तिस्तत्र भवति यत्र असम्बन्धे सति यद्यादिशब्दमनुपादाय सम्बन्धसंभावनया कस्यचित्कार्यस्य परिनिष्पत्तिः ''यत्रतुपरं पर्यवसाने'' उभयोरप्य

**चित्रमीमांसा-**

**"संभावनं यदीत्थं स्यादित्यूहोन्यस्य सिद्धये।"**

**इति संभावनालंकारविषयेषु वा निर्निमित्तमेव तथा तथोपतर्कणमिति।।**

**तथापि-**

तत्त्वालोकः

संभवस्तत्र **संभावनालंकारः** इति मन्यमानस्य सम्बन्धातिशयोक्तेः संभावनालंकारःपृथगेवेतिवादिनो **जयदेवादे**रनुरोधेन संभावनालं - कारविषयेऽतिव्याप्तिस्स्यादतः धर्मसम्बन्धादित्युक्तमित्याह **संभावनमिति**।

**अयंभावः**-"कस्तूरिके"त्युदाहरणे खलेषुगुणानां वक्तृत्वमसंभवीत्यस्य सिद्ध ये स्वस्मिन् विधित्वं सम्भाव्य खलजिह्वायां तादृशगुणनिवेशोऽपि संभावितः।

द्वितीये-" यद्यनुष्ण" इति पद्ये दृढव्रते रामे मिथ्यावादित्वासंभवित्वसिद्धये वह्नौ शैत्यसंभावनं. जले औष्ण्यसंभावनं च कृतमित्युभयत्रापि निर्निमित्तमेव संभावनमित्यतिव्याप्तिस्स्यात् अतः धर्मसम्बन्धोपादानम्। सति तु तस्मिन् नातिव्याप्तिरिति।तर्हि धर्मसम्बन्धादित्येतावतैवालम्। धर्मेऽन्यदीयत्वविशेषण-मनुपादेयमिति शङ्कायाम्, यत्र स्वधर्मेणैव संभावनं न पुनः विषयिविषयसाधारणेन तत्र अतिव्याप्तिस्स्यादिति तद्वारणाय धर्मे विषयसम्बन्धो निवेशित इत्याह-**तथापीति**।

सत्यवतः द्युमत्सेनसुतस्य, मुखं वदनम्, सर्वान् अतिशेते ताच्छील्येनेति सर्वातिशायि सर्वाधिकं सौन्दर्यम्=सुघटितसन्धिवन्धविशिष्टान्यूनानधिकाङ्ग-प्रत्यङ्गसौष्ठवम्, उक्तं च **शारदातनयेन-**

अन्यूनानतिरिक्तं यदङ्ग प्रत्यङ्गसौष्ठवम्।

सुश्लिष्टसन्धिबन्धंच तत्सौन्दर्यमिति स्मृतम्। इति।

**चित्रमीमांसा-**

**सर्वातिशायि सौन्दर्यं शङ्के सत्यवतो मुखम्।**
**येन सा मृगशावाक्षी सावित्री तरलीकृता।।**

**इत्यादातिव्याप्तिस्स्यादिति तद्वारणायान्यधर्म सम्बन्धादित्युक्तम्।।**

**तत्र सावित्रीहृदयतरलीभावकारकत्वादिना स्वधर्मेणैव वितर्कणमिति नातिव्याप्तिः।।**

तत्त्वालोकः--

यस्य तत् इति शङ्केसन्दिग्धे तर्कयामि वा। कुत इत्यत्राह- **येनेति**। येन लोकातीसौन्दर्यवता सत्यवतो मुखेन, सा निरतिशयितसौन्दर्या सावित्री, कीदृशी मृगशावाक्षी मृगशावनेत्रा, तरलीकृता पारिप्लवमनः कृता। एतेन सत्यवदपेक्षया सावित्री अक्ष्णासुन्दरी, सावित्र्यपेक्षया सत्यवांस्तु अक्षिनासिकादि यावदवयवैरपि सुन्दरतमः आसीदितिव्यज्यते। अत्र निमित्तभूतधर्मस्य उपमाननिष्ठत्वा विवक्षणादतिव्याप्तिस्स्यात्। अत्रातिव्याप्तिपरिहारप्रकारमाह- **तत्रेत्यादिना**।

अत्र सत्यवन्मुखमुपमेयम्, तत्र सर्वातिशायिसौन्दर्यरूपोधर्मः तादृशसौन्दर्यवदभेदो वा वितर्क्यते। तत्र च निमित्तंसावित्रीहृदय तरलीभावकारकत्व रूपस्सत्यवन्मुखरूपोपमेयवृत्ति धर्मः नत्वन्यवृत्तिधर्म इति नातिव्याप्तिः। अन्यत्वविशेषणानुपादाने तु अतिव्याप्तिः स्यादिति भावः।।

अत्र तु **काव्यलिङ्गमलङ्कारः**। सावित्रीमुखापेक्षया सत्यवतोमुखे लोकातीतसौन्दर्यसद्भावसमर्थनाय सावित्रीहृदयतरलतासम्पादकत्वाकारेण समर्थकमुपन्यस्तमिति बोध्यम्।।

**चित्रमीमांसा-**

**विरक्तसन्ध्यापरुषं पुरस्तात्-**
**यतो रजः पार्थिवमुज्जिहीते।**
**शङ्के हनूमत्कथित प्रवृत्तिः**
**प्रत्युद्गतो मां भरतस्ससैन्यः।।**

**इत्यत्रातिव्याप्तिवारणाय अन्यत्वेवेति विशेषणम्।**

तत्त्वालोकः

यद्यत्र- अन्यत्वेनेति विशेषणं संभावनायां नोपदीयेत तदा वस्तुसद्रूपेण यत्र सम्भावनं तत्रातिव्याप्तिस्स्यात्, तदुपादाने तु नेति प्रदर्शयितुं प्रत्युदाहरति- **विरक्तेति।** विरक्तसन्ध्यापरुषं पार्थिवं रजः पुरस्तात् यत उज्जिहीते तत् हनूमकथितप्रवृत्तिः भरतः ससैन्यः प्रत्युद्गत इति शङ्के इत्यन्वयः। विरक्तसन्ध्यापरुषम्-विरक्ता-अतिरक्ता या सन्ध्या सेव परुषं रूषितं ताम्रवर्णमित्यर्थः, पार्थिवं पृथिव्या इदं रजः धूलिः पुरस्तात् अग्रतः यतो यस्मात्करणात् उज्जिहीते उद्गच्छति तत् तस्मात्, हन्मान्-हनुरस्यास्तीति हनूमान् शरादीनां च (पा.सू.६.३.१२०) इति दीर्घः। तेन कथिता प्रवृत्तिः अस्मदागमनवृत्तान्तः यस्मै सः, भरतः कैकयीसुतः, ससैन्यः सैन्यानुयातः प्रत्युद्गतः प्रत्युत्थित इति शङ्के संभावयामिइत्यर्थः।।

अत्र अग्रे रजउद्गमनस्य ससैन्यभरततदितरराजसाधारणत्वेन भरतागमन-व्याप्यतासंभावनावस्थायां व्याप्तिनिश्चयादिसामग्र्यभावेन अनुमितेरनुत्पत्त्या अन्यत्र ससैन्ये प्रत्युद्गन्तरि दृष्टेन रजोभरोद्गमेन निमित्तेन प्रायशोभरतेन प्रत्युद्गन्त्रा भाव्यमित्युपतर्कित इति कविप्रौढोक्तिसिद्धत्वाभावेऽपि उत्प्रेक्षालंकारता स्यादित्यतिव्याप्तिः प्रसज्यते। तत्परिहाराय सम्भावनायां आहार्यतासूचकमन्यत्वेनेति विशेषणं देयमेव। अयं चांशःउत्तरत्र ग्रन्थकृतैव अन्यत्वेनेत्यस्य" अन्यत्वेनावगतपरतया तस्यैवाहार्यत्वविशेषणपर्यवसायित्वात्" इति वक्ष्यते।

एवंचात्र प्रत्युद्गन्तरि भरते प्रत्युद्गन्त्रन्तरतादात्म्यं न सम्भाव्यते। किन्तु अन्यत्र ससैन्ये

**चित्रमीमांसा-**

**तत्र ससैन्ये प्रत्युद्गन्तर्यन्यत्रापि दृष्टस्याग्रे रजोशमनस्य सम्बन्धेन निमित्तेन भरतः प्रत्युद्गतत्वेन वस्तुसद्रूपेणैव उपतर्कितो नत्वन्यत्वेनेति नातिव्याप्तिः॥**

**नरसिंह महीपाल विद्मस्त्वां मकरध्वजम्**
**मार्गणास्तव संजाताः कथं सुमनसोऽन्यथा॥**
**इत्यत्रातिव्याप्तिवारणाय उपतर्कितमित्युक्तम्॥**

तत्त्वालोकः

प्रत्युद्गन्तरि दृष्टं रजोभरोद्गमं दृष्टवा तन्निमित्तेन भरतो वस्तुसद्रूपेणैव संभावित इति नातिव्याप्तिरित्याह- **तत्रेति।**

अतएव-

"मन्ये प्रीतिविशिष्टा सा मत्तो लक्ष्मण शारिका।"

इत्यत्रापि संभावनामात्रपरत्वमुपगतं व्यारव्यातृभिः। नपुनः उत्प्रेक्षालंकारता॥

**अत्रेदमवधेयम्**- काव्यानुशासनकृता **वाग्भटेन** "अत्यन्तसादृश्यादसतोऽपि धर्मस्य कल्पनमुत्प्रेक्षा" इति लक्षयित्वा- "विरक्तसन्ध्यापरुषम्" इति इदमेव पद्यमुत्प्रेक्षोदाहरणतयोपन्यस्तं यत् तदयुक्तम्। कविप्रतिभानिर्वर्तितस्यैव चमत्कारजनकत्वात् वास्तविकस्य तदजनकत्वात्। अत एव अत्र ग्रन्थकृता प्रत्युदाहरणत्वेनोपन्यस्तमिति॥

ननु- उत्प्रेक्षालक्षणे उपतर्कितमिति मास्तु क्वाप्यव्याप्तेरभावात्। तथाच अप्रकृतपदार्थनिष्ठधर्मसम्बन्धनिमित्तकप्रकृतपदार्थविषेष्यकोपमानधर्मिक ज्ञानमुत्प्रेक्षा इत्येवास्त्विति चेदन्यत्रातिव्याप्तिपरिहाराय तद्दत्तमित्याह - **नरसिंहेति।**

श्लेषानुप्राणितानुमानालंकारस्य इदमुदाहरणम्। हेनरसिंह्म महीपाल! हे नृसिंह भूपते त्वाम् वयं मकरध्वजं-मन्मथं विद्मः जानीमः अनुमिनुमः निश्चिनुमो वा

**चित्रमीमांसा-**

**तत्र अनुमानालंकारविषये सुमनोमार्गणत्वेन मन्मथत्वव्याप्त-लिङ्गेन राज्ञि मन्मथत्वमवधृतं न संभावना मात्रम्।**

तत्त्वालोकः

मन्मथत्वानुमितौ मन्मथत्वव्याप्यस्य लिङ्गस्यावगतिर्हि अपेक्षितेति चेत् तत्राह- **अन्यथेति**। अन्यथा मन्मथानात्मकत्वे, सुमनसः पुष्पाणि मार्गणाः याचकाःशराः कथं सञ्जाताः तत्वेन परिणताः। अथ च श्लेषेण सुमनसो देवाः मार्गणाः याचकाः कथं संजाताः देवाः सेनापतिमभीप्सन्तः मन्मथं पार्वतीपरमेश्वरसमागमाय अयाचन्तेति प्रसिद्धिः।

मार्गस्य दातरि त्रिस्तु मार्गणो याचकेऽथ ना।
बाणेचस्त्रीनपोः याच्त्राद्वेषयोः मार्गणार्थना।।
सुमना तु स्त्रियां ज्ञेया मालत्यां कुसुमे पुनः।
स्त्रीभूम्नि स्यात्सुमनस स्त्रितु स्याच्छुभचेतसि।।
पण्डिते च द्वयोस्तु स्यात् देवे,क्लीतु शुभे हृदि।

इति **नानार्थार्णवसंक्षेपे**।। इत्थं चात्र राज्ञि मन्मथतादात्म्यमनुमीयत इति अतिव्याप्तिः स्यात् तद्वारणायोपतर्कितमिति, तदुपादानेतु नातिव्याप्तिरिति भावः।

अत्र निश्चयात्मिकानुमितिरेव नपुनस्संभावनेत्याह **तत्रानुमानेति**।

अत्र राज्ञि पक्षे सुमनोमार्गणत्वेन हेतुना मन्मथत्वं साध्यते। पक्षे श्लेषमूलकाभेदाध्यवसायेन बाणाभिन्नयाचकवत्वं पुष्पाभिन्नदेवत्वम्, पुष्पाभिन्नपूर्णमनोरथत्वेन प्रसन्नमनस्त्वं, सपक्षे पुप्पबाणवत्वम्, विपक्षेच तदभाव इति त्रिरूपोपेत नरसिंहदेवनिष्ठं मन्मथत्वमनुमापयतीति व्याप्याद्व्यापकानुमानमिति **अनुमानालङ्कारस्य** विषयः। इदं चानुमानं अवधारणात्मकम्। अनवधारणात्मकं खलु उपतर्कणमत्राभिमतमिति नातिव्याप्तिरिति भावः।

इत्थमुपर्कितमिति विशेष्यदलकृत्यं प्रदर्श्य "प्रकृतम्" इत्यस्यानुपादानेऽप्रस्तुतप्रशंसोदाहरणेऽतिव्याप्तिः स्यात् ,

**चित्रमीमांसा-**

**इन्दुर्लिप्त इवाञ्जनेन, जडिता दृष्टि र्मृगीणामिव**
**प्रम्लानारुणिमेव विद्रुमलता, श्यामेव हेमप्रभा।**
**कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं**
**सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव।।**
**इत्यत्रातिव्याप्तिवारणाय प्रकृतमित्युक्तम्।**

तत्त्वालोकः

तत्र अप्रकृते कस्यचिद्धर्मस्यसंभावनादित्यभिप्रायेण प्रत्युदाहरणमाह- **इन्दुर्लिप्त इवेति।**

सीतायाः सर्वाङ्गसुन्दरीत्वेन विदितायाः ,जनकसुतायाश्चः अन्यादृशरूपसम्पत्तिः वाल्मीकिनापि गृहीता। अतएव **श्रीमद्रामायणे-सुन्दरकाण्डे** त्वमेव त्वत्सदृशीत्यनन्वयध्वनिरीत्योक्ताच-

त्वां कृत्वोपरतो मन्ये रूपकर्ता स विश्वसृट्।
न हि रूपोपमात्रान्या तवास्ति जगतीतले इति।।

पुरतः वदनस्य पुरस्तात्, इन्दुः कान्तिधनोऽपि चन्द्रः, अञ्जनेन कज्जलेन लिप्त इव उपदिग्ध इव दृश्यते। एतेन सीतावदनापेक्षया चन्द्रमसि निकर्षस्सम्भावितो भवति। तथा सीतायाः दृष्टेः पुरतःमृगीणां दृष्टिः जडितेव संजातजाड्येव दृश्यते। एतेन उपमानभूतास्वपि हरिणानां दृष्टिषु निकर्षस्संभावितोभवति। तथा सीतायाः अधरकान्तेः पुरतः विद्रुमलता प्रवालवल्ली प्रम्लानारुणिमेव न्यूनारुणवर्णेव दृश्यते। एतेन सीताया अधरकान्तिदृष्ट्या विद्रुमेषु निकर्षस्संभावितो भवति। तथा सीतायाः देहसौन्दर्यस्य पुरतः हेमप्रभा षोडशवर्णशोभा श्यामेवदृश्यते। सीतायाः कण्ठस्वरे (श्रुते) कोकिलवधूकण्ठेषु पिकीकण्ठेषु कलया मात्रयापि कार्कश्यं कठिनता प्रस्तुतमिव आपतितमिव ज्ञायते। एतेन सीताया कण्ठनादापेक्षया कोकिलाकूजितेषु निकर्षस्संभावितो भवति। तथा सीतायाः केशपाशस्य पुरतः प्रत्यक्षं चकारात्परोक्षेऽपि शिखिनां मयूराणां बर्हाः पिच्छानि सगर्हा इव सनिन्दा इव ज्ञायन्ते। एतेन सीतायाः

## तत्त्वालोकः

केशपाशेऽ वलोकिते बर्हेष्वपि निकर्षस्संभावितो भवति॥

अत्र सीतायाः वदनादिषु वर्णनीयत्वेन प्रस्तुतेषु इन्द्वादिगताञ्जनलेपनादिरूपाणि कार्याणि औचित्येन संभाव्यमानानि अभिहितानि। अतश्चात्राप्रकृतेन्द्वादिगतत्वेन संभाव्यमानैः अञ्जनलिप्तत्वादिभिः कार्यरूपैः लोकोत्तवदनादिगतः सौन्दर्यविशेषः कारणरूपः प्रस्तुतः प्रतीयत **इत्यप्रस्तुतप्रशंसा।**

नच-अत्र सीतावदनादिगतलोकोत्तरसौन्दर्यवर्णने प्रस्तुते तत्परित्यज्य तस्यैव गमकमिन्द्वादौ अञ्जनलिप्तत्वादिकम् अभिहितमिति पर्यायोक्तमस्त्विति शङ्क्यम्। यदेवं गम्यं विवक्षितं तस्येव भङ्ग्यन्तरेण विवक्षितरूपादपि चारुतरेण केनचिद्रूपान्तरेणाभिधाने खलु प्रर्यायोक्तता। यथा-

"नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ।"

इत्यत्र गम्यो वासुदेव एव राहुवधूकुचवैयर्थ्यकारित्वाकारेणाभिहितः। अत्र तु इन्द्वादौ अञ्जनलिप्तत्वादिकं सीतावदनादिसौन्दर्यादिकं च नैकमिति कथं पर्यायोक्तस्यावकाशः।

**किञ्च**- "यत्र कारणवत् कार्यस्यापि वर्णनीयत्वात् प्रस्तुतत्वं तत्र कार्यमुखेन कारणस्योक्तौ पर्यायोक्ततेति **सर्वस्वानुरोधेनापि** पर्यायोक्तता न वक्तुं शक्या। अत्र हि इन्द्वादयः अप्रकृता इति स्फुटमेव। तत्प्रतिच्छन्दभूतानां सीतावदनादीनामेव प्राकरणिकत्वात्। तेन इन्द्वादिगतेन अञ्जनलिप्तत्वादिना अप्रकृतेन कार्येण सीतामुखादिगतं लोकोत्तरसौन्दर्यं सहृदयहृदयहारि गम्यत इत्यप्रस्तुतप्रशंसैवात्र।

**एतेन इदमुक्तं भवति**-यत्र वाच्योऽर्थः यादृशःतादृशमेव अर्थान्तरं स्वोपस्कारकतया आगूरयति तत्र पर्यायोक्तता। यत्रपुन रप्रकृतोऽर्थः प्रकृतमर्थान्तरं प्रति समर्पयति तत्र अप्रस्तुत प्रशंसेति विषयविभागः॥

**यत्तूक्तं कौस्तुभकृता**- अत्र इन्द्वादीनामपकृष्टत्वरूप एको धर्मः प्रतिवाक्यं भिन्नेनाञ्जनलिप्तत्वादिनोक्तइति प्रतिवस्तूपमेति। तच्चिन्त्यम्। उपमानोपमेयपरवाक्ययोः समानधर्मस्य पृथगनुपादानात्।

नच- अञ्जनलिप्तत्वादिकमुपात्तमिति वाच्यम्। तस्य

**चित्रमीमांसा-**

**तत्र निरतिशयसौन्दर्यसीतावदनादि सन्निधानेन तद्वदनाद्युपमानेष्वपि निकर्षापादकेन प्रशस्योपमानेष्विन्द्वादिष्वप्रकृतेष्वञ्जनलेपादिनिकर्षसंभावना क्रियत इति नातिव्याप्तिः।**

तत्त्वालोकः

चकोर्य एव चतुराः चन्द्रिकापानकर्मणि।
आवन्त्य एव निपुणास्सुदृशो रतकर्मणि।।

इत्यत्र यथा कुशलरूपोऽर्थ एव चतुरनिपुणशब्दाभ्यां पृथङ्निर्दिष्टः तथात्र निर्देशाभावात्।

नच-अञ्जनलिप्तत्व,-जाड्य, म्लानता, श्यामता, कार्कश्य-गर्हाणां, अप्रकृष्टरूप एव धर्मे पर्यवसानादेकस्य धर्मस्य पृथगुपादानमस्तीति वाच्यम्। अप्रकृष्टत्वस्य उपमानवाक्यमात्रासाधारणत्वेन उपमेयवाक्यार्थान्वयित्वाभावात्। अन्यथा सीतावदनादिष्वपि अप्रकृष्टताप्रतीत्या विवक्षितार्थाप्रतीतिप्रसङ्गात्। उभयान्वयप्रतिपादनमपि दुष्करमेवेति।

प्रकृते च प्रकृतमित्युपादानेऽप्रकृतविशेष्यकान्यधर्मप्रकारक संभावनायामुत्प्रेक्षालक्षणमतिप्रसक्तं स्यात् तदुपादाने तु नोक्ताप्रस्तुतप्रशंसोदाहरणेऽतिव्याप्तिरिति प्रकृत एव धर्मसंभावनादिति प्रतिपादयति **तत्र निरतिशयेति**।

**एतेन-** "भवेत्संभावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति **दर्पणोक्त्या** उत्प्रेक्षालंकार इति केनचिदुक्तमयुक्तमिति भाव्यम्। प्रकृतेऽप्रकृतसंभावनाया अभावात् प्रत्युत अप्रकृत एव अपकर्षप्रयोजकस्य धर्मस्य संभावनात्। तथाच प्रकृते उत्कर्षः प्रतीयत इतित्वन्यदेतत्।

"यत्रान्यधर्मसम्बन्धादिति लक्षयता **विद्यानाथेन** निमित्तं न सहृदयहृदयाह्लादित्वेन विशेषितम्, अतश्च, अर्थान्तन्यासानुग्राहिकायां सम्भावनायामतिव्याप्तिस्स्यात्।

**चित्रमीमांसा-**

**नन्वेवमपि-**

**अस्मद्विक्रमयेष्टितानि निखिलत्रैलोक्यहेलाजय**
**प्रह्वीभूतसुरासुराणि भवतो भूमेः सुता शृण्वती।**
**पत्यौ द्वेषकषायितेन मनसा स्निग्धा मयि स्थास्यति**
**स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलम्॥**

तत्त्वालोकः

यदि तु (चमत्कारजनकत्वं) सहृदयहृदयाह्लादित्वं सर्वालंकारसाधारणं विशेषणमुपादीयते तदा चनातिव्याप्तिरित्युच्येत, अथापि अनाहार्य-संभावनायामतिव्याप्तिरपरिहार्येत्याशङ्कते- **नन्वेवमपीत्यादिना।**

वीर्यशुल्कां सीतामुद्वोढारं रामं प्रति उन्मत्तस्यदशाननस्योक्तिरियम्-

भूमेः पृथिव्याः सुता जानकी, भवतः मायामयनाम्नः तव सकाशात्, निखिलस्य समग्रस्य त्रेलोकचस्य हेलया अनायासेन यो जयः तेन प्रह्वीभूताः वशङ्गताः सुराश्च असुराश्च येषु तानि,अस्माकं विक्रमचेष्टितानि मदीयातिशक्तिताप्रकाशकव्या-पारविशेषान् "विक्रमस्त्वतिशक्तिता" इत्यमरः। शृण्वती जानती सती, पत्यौ राघवे, द्वेषकषायितेन अप्रीतिकलुषितेन मनसा उपलक्षिता, मयि रावणे स्निग्धा प्रौढस्नेहा, तल्लक्षणं च **भावप्रकाशे-शारदातनयेन** उक्तम्-

विदेशस्थे मृते वाऽ पि दुर्बले प्रतियोगिनि।
धर्मिणः क्लेशकारी यः स प्रौढः स्नेह उच्यते॥ इति।

स्थास्यति स्थिरचित्ता भविष्यति। यत् यस्मात्, स्त्रीणां प्रेम अन्योन्याश्रयतया स्थिरा पृथक्पृथक्संकल्परहिता अन्यतरविश्लेषापायिनी रतिः, उत्तरोत्तरगुणग्रामः उत्तमोत्तमगुणप्रकरः तस्मै या स्पृहा तया चञ्चलम् अस्थिरं खलु, व्यक्तिभेदेन शौर्यवीर्याधिक्ये श्रुते दृष्टे वा तादृशं पुरुषं कामयन्ते हि स्त्रियः। अतश्च सीतापि रामापेक्षया मयि विक्रमं श्रृण्वती मां कामयेत् " इति कामोन्मत्तस्य रावणस्याभिसंधिमात्रमिदम्॥

## चित्रमीमांसा-

**इत्यत्र चाञ्चल्यसहचरितत्वेन अन्यत्र दृष्टस्य स्त्रीत्वस्य सम्बन्धेन निमित्तेन वस्तुतः पत्येकस्थिरचित्ता देवी सीता चञ्चलत्वेनोपतर्किता। नच तत्रोत्प्रेक्षालंकारः रावणकृततदीप्सितसंघटनानुकूलविचारमात्रस्य निवद्धत्वेन विच्छित्तिविशेषाभावात्॥**

## तत्त्वालोकः

अत्र च एकत्र स्निग्धायाः सीतायाः अन्यत्र स्नेहप्रदर्शनं कथमिति समर्थकापेक्षायां तत्समर्थनाय उत्तरोत्तरगुणग्रामस्पृहाचाञ्चल्यसहचरितं स्त्रीसामान्यमिति इयमपि तथेति विशेषे प्रस्तुते तेन सह अप्रस्तुतसामान्यस्य न्यसनमत्रेति अर्थान्तरन्यासोऽ लंकारः॥ अत्रोत्प्रेक्षामाशङ्क्य निराचष्टे- **इत्यत्रेत्यादिना।**

अत्र "पत्येकस्थिरचित्ता इत्यस्य स्थाने 'प्रत्येकस्थिरचिता' इति दृश्यते, तदा च एकैकस्मिन्नपि देशकालभेदेन गतमनस्केति अनुचितार्थस्समापतेत् अतः पत्येकस्थिरचित्ता इत्येव पाठः परिगृहीतः। अत एव-" एकस्थहृदया नूनं राममेवानुपश्यति।" इति वाल्मीकिसूक्तिस्संगच्छते इति बोध्यम्॥

नच अन्यासु चाञ्चल्यसहितासु दृष्टं यत्स्त्रीत्वं तदस्यामपीति यदि चञ्चलत्वेनोपतर्क्यते तदास्तु उत्प्रेक्षेति वाच्यम् पतिव्रताशिरोमणित्वेन प्रसिद्धायां सीतायां तादृशस्त्रीत्वं निमित्तीकृत्य उक्तसंभावनायाः सहृदयाह्लादजनकत्वाभावेन अलक्ष्यतायाएवोचितत्वात्। उन्मत्तरावणमनःपरिकल्पिततदीप्सित-संघटनोपयुक्तविचारमात्रस्य कविनोपनिबद्धत्वात् इत्याह- **रावणेति।**

नन्वेवं तर्हि निमित्तभूतो धर्मः चमत्कारित्वेन विशेषणीयः, तथा सति अत्र नातिव्याप्तिरिति चेन्न, अलंकारसामान्यलक्षणे सहृदयहृदयाह्लादिनो धर्मस्य ग्रहणं

**चित्रमीमांसा-**

**नचअन्यधर्मसम्वन्धादित्यत्र धर्म उपमायामिव सहृदय-हृदयाह्लादी विवक्षितः न तु साधारणधर्ममात्रम् तथा च नोक्तातिव्याप्तिः। स्त्रीत्वादेश्चांचल्यादिसंभावनाप्रयोजकत्वेऽपि सहृदयहृदयाह्लादि साधारणधर्माभावेन उत्प्रेक्षालंकारप्रयोजकत्वाभावादिति वाच्यम्।**

**तथासति-**

**स्तनाभिरामस्तबकां नूनं सीतेति वल्लरीम्।**
**संभावयन् रघुपतिः धावति स्म दिदृक्षया।।**

**इत्त्रातिव्यप्तेरवारणात्।।**

तत्त्वालोकः

स्वतःप्राप्तमिति नपुनः तद्वचनापेक्षेत्यतिव्याप्ति परिहारोपायो विवक्षितइत्याह- **नचेति।**

एवमपि- यत्र प्रकृतेऽप्रकृततादात्म्संभावना अनाहार्या तत्रातिव्याप्तिरित्याह **-तथासतीति।** तथासति चमत्कारिसाधारणधर्मविवक्षायां सत्यामपीत्यर्थः। स्तनाभिरामेति रघुपतिः रामचन्द्रः, स्तनाविवाभिरामौ मनोहरै स्तबकौ गुच्छौयस्यास्तां वल्लरीं मञ्जरीं सीतेति जानकीति संभावयन् वितर्कयन् दिदृक्षया द्रष्टुमिच्छया धावतिस्म आधावत् इत्यर्थः।।

यद्यप्यत्र मञ्जर्यां सीतातादात्म्य संभावनायां स्तनाभिरामस्तबकत्वं सहृदयहृदयाह्लादी साधारणो धर्मः. अथापि नोत्प्रेक्षा, तथा संभावनायाः-

कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः।
अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव।।

इत्युक्तरीत्या सीताविरहजोन्मादनिमित्तकत्वेन वास्तवत्वात्। अत्रतु कविप्रौढोक्तिपरिनिष्पन्नायाः चमत्कारकारिण्याः संभावनाया एवोत्प्रेक्षास्पदत्वात्।

**चित्रमीमांसा-**

**न चाहार्यत्वं तर्कविषेषणम् इहतु अनाहार्यसम्भावनेति वाच्यम्। तथासति "शङ्के हनूमत्कथितप्रवृथिः " इति संभावनाया अप्यनाहार्यत्वेन तद्व्यावृत्त्यर्थस्य अन्यत्वेने त्यस्य वैयर्थ्यप्रसङ्गात्।**

**मैवम्। अन्यत्वेन इत्यस्यान्यत्वेनावगतपरतया तस्यैवाहार्य-त्वविशेषणपर्यवसायित्वात्।।**

तत्त्वालोकः

न चात्राहार्यत्वं संभावनायां विशेषितमिति चेत्। तथासति नात्रातिव्याप्तिः इति समाहितेऽपि **'एकामसिद्धिं परिहरतो द्वितीयापत्तिः' इति न्यायेन** संभावनायां अन्यत्वेनेति यद्विशेषणमुपात्तं तत्व्यर्थंस्यात्। आहार्यसंभावनयैवोक्ताति-व्याप्तिवारकेण-"शङ्के" हनूमत्कथितेति पद्येऽप्यतिव्याप्तिवारणसंभवात्। इत्याशंकते-**नचैत्यादिना।**

एवं च एकेनैव विशेषणेन दोषे परिहृते तदर्थं विशेषणान्तरोपादानं व्यर्थमन्यथासिद्धत्वात्। "**एकाक्रिया द्व्यर्थकरीबभूवेति "न्यायादिति** भावः।

पूर्वोक्तामाशङ्कां निराकरोति **मैवमित्यादिना।** अयंभावः सम्भावनंच-उत्कटकोटिकस्सन्देहः। अयमेव उत्प्रेक्षेत्युच्यते। उत्कटा प्रकृष्टस्योपमानस्य ईक्षात्रेतिव्युत्पत्तेः। एवंचउपमेये उत्तकटोपमानकोटिकस्सन्देहः खलुउत्प्रेक्षा। अन्यस्य अन्यत्वेन संभावनं नाम अर्थात् बाधकालिकेच्छाजन्यं ज्ञानम् अत एवान्यत्वेन कीर्तनं कृतम्। तथाचान्यप्रकारकाहार्यसँभावनमेवान्यत्वेनोपतर्कितमित्यस्यार्थ इति "स्तनाभिरामे"त्याद्यनाहार्यसंभावनास्वतिव्याप्तिपरिहारायतर्कपदार्थे आहार्यत्व-विशेषणं नोपादेयम्।।

तथाचैवं लक्षणं फलति-अप्रकृतनिष्ठचमत्कारजनकधर्मसम्बन्धप्रयुक्तं प्रकृतधर्मिकं तादात्म्यसंसर्गकं अप्रकृतविधेयकमाहार्यसंभावनमुत्प्रेक्षा इति।

## चित्रमीमांसा-

**ननु तथापि नैतल्लक्षणम्, अव्याप्तेः, तथाहि यत्र स्वमात्रधर्मात् अन्यमात्रधर्माद्वा किञ्चिदुत्प्रेक्ष्यते तत्र अन्यधर्मसम्बन्धादिति लक्षणांशाभावादव्याप्तिः।**

## तत्त्वालोकः-

**विद्यानाथेन-** "यत्रान्यधर्मसम्बन्धा"दितिउत्प्रेक्षा लक्षणेऽनुप्रवेशितं, परंतु प्रकृतेऽन्यधर्मसम्बन्धः किमनुगामित्वेनैव विवक्षितः उत प्रकारान्तरेणापि इत्ययमंशः न विचारितः।

नन्वत्र प्रकृतेऽप्रकृतधर्मसम्बन्धोऽनुगामितयैवास्तु कुतोऽनुक्तानां प्रकारान्तराणां परिग्रहः। "बालेन्दुवक्राण्यविकासभावात्" इत्यादौ वक्रत्वलौहित्ययोरनुगामिनोः धर्मयोः सम्बन्धं निमित्तीकृत्य उत्प्रेक्षाया निर्वाहात् इति चेन्न। अन्यत्राव्याप्तिप्रसंगात्। ननु क्वाव्याप्तिः? यत्र प्रकृतमात्रधर्मात् किञ्चिदुत्प्रेक्ष्यते तत्र,यत्रान्यमात्रधर्मादेववा किञ्चिदुत्प्रेक्ष्यते तत्रच धर्मेऽनुगामित्वा-भावादव्याप्तेः,तयोराद्ये निमित्तभूतधर्मस्य प्रकृतमात्रवृत्तित्वमिति अव्याप्तेः। प्रकृताप्रकृतोभयवृत्तित्वे खल्वनुगामितेष्टा। अतश्चोपमायामनुगामित्व बिम्बप्रति बिम्बभावादीनां सर्वेषामपि प्रकाराणां यथाश्रयणं तद्वदत्रापि सर्वेषां साधारण्यसम्पादकानामाश्रयणमावश्यकमिति सिद्धान्तयिष्यन् अनुगामि-त्वमात्रविवक्षायामव्याप्तिमुद्भावयति-**ननु तथापीति**।

तथापि उक्तरीत्यालक्षणपरिष्कारेऽपि। **स्वमात्रेति**। प्रकृत-मात्रवृत्तिधर्मंनिमित्तीकृत्येत्यर्थः **अन्येति**। अप्रकृत मात्रवृत्तिधर्मंवा निमित्तीकृत्येत्यर्थः। तत्रेति उभयविधोदाहरणेषु अन्यधर्मसम्बन्धादिति लक्षणांशाभावादिति।

**अयं भावः**-यत्र प्रकृतमुपादाय तदन्वयानुसारितया धर्मस्योपादानं अप्रकृतस्यानुपादानं च तत्रानुगामिनो धर्मस्य अलाभादव्याप्तिः प्रसज्यते। यत्रच अप्रकृतमात्रवृत्तिधर्ममुपादायोत्प्रेक्ष्यते तत्र प्रकृतेऽप्रकृतवृत्तिधर्मस्या-संभवादननुगामित्वमिति अन्यधर्मसम्बन्धो नोपपद्यते इत्यव्याप्तिरिति॥

**चित्रमीमांसा-**

**यथा-**

**अङ्गुलीभिरिव केशसञ्चयं**
**सन्निगृह्य तिमिरं मरीचिभिः।**
**कुड्मलीकृत सरोजलोचनं**
**चुम्बतीव रजनीमुखं शशी।।**
**भूयस्तराणि यदमूनि तमस्विनीषु**
**ज्यौत्स्नीषु च प्रविरलानि ततः प्रतीमः।**

तत्त्वालोकः

प्रकृतमात्रवृत्तिधर्मनिमित्तिकामुत्प्रेक्षामुदाहरति-**यथेति।**

चन्द्रोदयवर्णनमनेन क्रियते। शशी अङ्गुलीभिरिव मरीचिभिः केशसंचयमिव तिमिरं सन्निगृह्य कुड्मलीकृतसरोजलोचनं रजनीमुखं चुम्बतीवेत्यन्वयः।

शशी चन्द्रः अङ्गलीभिरिव मरीचिभिः करशाखोपमाभिः रश्मिभिः केशसंचयमिव तिमिरं केशपाशमिव स्थितं तमः सन्निगृह्य हठादाकृष्य कुड्मलीकृतसरोजलोचनं कुड्मलीकृलोचनमिव सरोजं यत्र तादृशं रजनीमुखं चुम्बतीव प्रतिभाति इत्यर्थः।

अत्र अङ्गुलीभिरिव मरीचिभिः, केशसंचयमिव तिमिरम् कुड्मली-कृतसरोजलोचनम्, इत्येषु आद्यद्वये वाक्योक्तोपमा, अन्त्ये समासोक्तोपमा। रजनी-मुखमित्यत्र प्रारम्भ-वदनाख्ययोर्मुखयोः अभेदाध्यवसायादतिशयोक्तिः। साच मुखशब्दश्लेषमूला। श्लेषातिशयोक्त्योरङ्गङ्गिभावः वाक्योक्तसमासोक्तोपमाभ्यां निशाशशिनोः दाम्पत्यव्यवहारसमारोपरूपसमासोक्तिघटिता शशिनि निशामुखचुम्बनोत्प्रेक्षा क्रियत इत्यभिप्रायः। विशेषांशस्तु **कुवलयानन्दे** संकरालंकारनि-रूपणावसरे द्रष्टव्यः।

प्रकृतमात्रवृत्तिधर्मनिमित्तिकामुत्प्रेक्षामुदाहृत्य-अप्रकृतमात्रवृत्ति धर्मनिमित्तिकामुत्प्रेक्षामुदाहरति- **भूयस्तराणीति।**

## चित्रमीमांसा

**सन्ध्यानलेन भृशमम्बरमूषिकाया-**
**मावर्तितैरुडुभिरेव कृतोऽयमिन्दुः॥**

तत्त्वालोकः

अत्र अमूनि उडुभिः इत्यनयोः आवृत्तयोः विभक्तिविपरिणामेनान्वयः अमूनि उडूनि नक्षत्राणि, तमस्विनीषु तमः प्रचुरासु रात्रिषु इत्यर्थः अत्र असन्तात् तमश्शब्दात् मत्वर्थे विवक्षिते "अस्मायामेधास्रजो विनिः (पा.सू. ५-२-१२१) इति विनिप्रत्यये नान्तत्वात् ऋन्नेभ्यः (पा.सू.४.१.५ इति ङीप्इति बोध्यम् "तमी तमस्विनी रात्रिः" इति **वैजयन्ती**। भूयस्तराणि बहुलानि परिदृश्यन्ते, तान्येव ज्यौत्स्नीषु प्रशस्ता ज्योत्स्ना अस्यामस्तीति ज्यौत्स्नी चन्द्रिकयाऽन्विता रात्रिः तासु, अत्र "ज्योत्स्ना तमिस्रा" (पा.सू.५-२-११४) इत्यादिना ज्योतिष उपधालोपो नश्च प्रत्ययः ,ज्योत्स्ना = चन्द्रप्रभेति **काशिका,** ज्योत्स्ना विद्यते अस्मिन् पक्षे रात्रिषु वा ज्यौत्स्नीति "अणप्रकरणे ज्योत्स्नादिभ्य उपसंरव्यानम् (वार्ति ३१९७) इति वार्तिकात् अणप्रत्यये "टिड्ढाण् "इति ङीपि ज्यौत्स्नीति रूपम् ,अतश्च "ज्योत्स्नीषु इति मूलपाठः अशुद्ध इति परित्यक्तः। अतएव "ज्यौत्स्नी ज्यौतिष्मती निशा" इतिं **यादवप्रकाशेन वैजयन्त्यामुक्तं** संगच्छते। ज्योत्स्नासु चेति पाठेतु ज्योतिरवयवःचन्द्रप्रभा अस्यां रात्रौ इति ज्योत्स्ना इति विग्रहे ज्योत्स्ना-तमिस्रा- इति निपातनात् ज्योतिष उपधालोपो न श्चप्रत्ययः इति तमस्विन्या सह सामानाधिकरण्यं घटते परन्तु "ज्योत्स्ना च शशिनः प्रभा इति कोशानुसारात्

"ज्योत्स्नांशुकं द्विजपतिः परिधाय नूनं"।
"ज्योत्स्नात्मिकां हरिवधूसहजेन दत्ताम् "।

इत्यादिप्रयोगानुसारेण ज्योत्स्ना शब्दः शशिनः प्रभावचक इति रात्रौ ज्योत्स्नाशब्दो नातीव स्वरस इति भाति। चस्त्वर्थे प्रविरलानि सान्तराणि यतः प्रतीयन्ते, ततः वयमेवं प्रतीमः संभावयामः। किमिति, अम्बरमूषिकायां- मूषैव मूषिका तेजसावर्तनी,अम्बरमेव मूषिका अम्बरमूषिका तस्यां स्वर्णादिद्रवीकरणाय नाडिन्धमैरग्नौ प्रतापार्थमुपयुज्यमानं नानालोह्मयममत्रं मूषेति **कौटलीयाः** अत एव

**चित्रमीमांसा**

**इत्यत्राद्योदाहरणे अङ्गुलीसदृशीभिर्मरीचिभिः केशसंचसदृशस्य तिमिरस्य ग्रहणात् स्वमात्रधर्मादेव शशिनश्चुम्बनमुत्प्रेक्षितम्।।**

**द्वितीये ताराविरलत्वाविरलत्वरूपेणान्यधर्मेण चन्द्रस्य सन्ध्यानलमध्यगाम्बरमूषिकावर्तिततारानिर्मितत्वमुत्प्रेक्षितम्।।**

तत्त्वालोकः

कौटिलीये **अर्थशास्त्रे आकरकर्मान्तप्रवर्तनाधिकरणे-** किट्टमूषाङ्गारभस्मलिङ्गंवाऽऽकरं भूतपूर्वं परीक्षेतेति प्रयुज्यते। सन्ध्यानलेन आवर्तितैः द्रावितैः क्वाथितैर्वा इत्यर्थः "आवर्तनं क्वाथनं इति **वैजयन्ती**। उडुभिरेव नक्षत्रैरेव अयं पुरः परिदृश्यमान इन्दुः कृत इति (प्रतीमः) इत्यर्थः।

अङ्गुलीभिरिवेति "प्रथमोदाहरणे प्रकृतमात्रवृत्तिधर्मादिवोत्प्रेक्षणं नाप्रकृत वृत्तिधर्मादित्युपपादयति **इत्यत्राद्येति**।

**अयं भावः** उत्प्रेक्षासामान्ये प्रकृताप्रकृतसाधारणगुणक्रियारूप निमित्तसापेक्षत्वमिति कथमत्रोत्प्रेक्षा? यतोऽत्र वाक्योक्त समासोक्तोपमाभ्याम् अङ्गुलीसदृश-मरीचिकरणककेशसंचयसदृशतिमिरकर्मकग्रहणरूपात्प्रकृतचन्द्रमात्रवृत्ति धर्मादेव चुम्बनं संभाव्यते। न पुनरप्रकृतनायकनिष्ठादपि धर्मात् । तादृशग्रहणस्य-चन्द्रमात्रवृत्तित्वस्यैव कविनाविष्करणादव्याप्तिरिति।

समाधानं तूत्तरत्र द्रष्टव्यम् "अन्वयभेदेनापि धर्मे साधारण्यं संपाद्याभेदाध्यवसायेनान्यधर्मसम्बन्धः सुसंपाद" इति वक्ष्यति। **कुवलयानन्दे** तु अन्यथापि समर्थितः । वस्तुतस्तु अयमेव पक्षो ज्यायान् इत्युपपादयिष्यते।

भूयस्तराणीति द्वितीयपद्ये, अन्यमात्रधर्मं निमित्तीकृत्य उत्प्रेक्ष्यत इत्युपपादयति- **द्वितीय इति**।

**अयं भावः** तमःप्रचुरासु रात्रिषु अविरलत्वं ताराधर्मः। ज्योत्स्नामयीषु रात्रिषु विरलत्वमपि ताराणामेव धर्मः। तत्र ज्योत्स्नाप्रचुरासु रात्रिषु ताराणां विरलत्वं निमित्तीकृत्य चन्द्रे सन्ध्यारूपानलमध्यवर्त्यम्बरात्मकमूषाद्रावितताराानिकरनिर्मितत्वं

**चित्रमीमांसा-**

**किं च हेतु फल- धर्मस्वरूपोत्प्रेक्षासु अन्यत्वेनेति लक्षणांशाभावादव्याप्तिः।।**

तत्त्वालोकः

सम्भाव्यते। अथापि ताराचन्द्रोभयसाधारणधर्मत्वं विरलत्वाविरलत्वयोः न सम्भवतीत्युत्प्रेक्षा न स्यादित्यव्याप्तिः। अतश्च अस्यामाक्षिप्तस्यापि धर्मस्योपादानद्वारा तयोरभेदाध्यवसायेन साधारणधर्मतां सम्पाद्योत्प्रेक्षालंकारता निर्वाह्येति इदमेव समाधानमुत्तरत्र ग्रन्थकृतैव वक्ष्यते।

इत्थम् अन्यधर्मसम्बन्धादिति विशेषणांशमव्यापकमितिप्रतिपाद्य अन्यत्वेनेत्यंशोऽपि उत्प्रेक्षाविशेषेऽव्यापकइति प्रतिपादयति -**किचहेतुफलेति।**

"धूमस्तोमं तमश्शङ्के" इत्यादिधर्मिस्वरूपोत्प्रेक्षोदाहरणे तमः प्रभृतिषु वस्तुषु धूमस्तोमरूपसदृशवस्त्वन्तरतादाम्यं संभाव्यत इति तत्र नाव्याप्तिरित्य-भिसन्धिना धर्म्युत्प्रेक्षां परित्यज्य हेतु फल धर्मस्व-रूपोत्प्रेक्षाणामुपादानम्। तेषु "कस्मिंश्चिद्वस्तुनि कस्यचिद्धर्मान्तरस्यैव हेतुत्वेन फलत्वेन स्वरूपेण वा उत्प्रेक्षणं क्रियत इति वस्त्वन्तरसंभावनाभावादव्याप्तिरिति भावः।

इयं चाव्याप्तिः स्वरूपोत्प्रेक्षायां धर्म्युत्प्रेक्षा, धर्मोत्प्रेक्षा चेत्येवं विभज्य सम्बन्धान्तरेणाप्युत्प्रेक्षां वदतोऽ**लंकारसर्वस्वकारस्य** मतेनेति मन्तव्यम् **प्रकाशकारानुरोधेन** तुनात्राव्याप्तेः प्रसरः तेन सर्वत्राभेदेनैवोत्प्रेक्षणमिति सिद्धान्तितत्वेन धर्मिस्वरूपोत्प्रेक्षायां धर्मिणि धर्म्यन्तरस्य, हेतुफल-धर्मस्वस्वरूपोत्प्रेक्षोदाहरणेषु अहेतौ-अफले-विभिन्नधर्मेच हेतुफलधर्माणां तादात्म्येनैवोत्प्रेक्षणात्।।

सर्वस्वानुरोधेऽपि विद्यानाथलक्षणस्य अन्यत्वेनेत्यस्य उभयसाधारण-प्रकारार्थत्वमुपगम्याव्याप्तिः परिहरिष्यत एव कथं चिदुत्तरत्र। अथापि अत्र **विद्यानाथेन** वक्ष्यमाणार्थविवक्षा मनसि न कृता भवेत्तदा अव्याप्त्युद्भावनमिति मन्तव्यम्।

**चित्रमीमांसा-**

**यथा- सैषा स्थली यत्र विचिन्वता त्वां**
**भ्रष्टं मया नूपुरमेकमुर्व्याम्।**
**अदृश्यत त्वच्चरणारविन्द**
**विश्लेषदुःखादिव बद्धमौनम्।।**

**इति हेतूत्प्रेक्षोदाहरणे नूपुरगतेन दुःखिसाधारणेन मौनित्वेन निमित्तेन नूपुरे तद्धेतुभूतदुःखमेव धर्मतयोत्प्रेक्ष्यते,**

तत्त्वालोकः

हेतूत्प्रेक्षायां वस्त्वन्तरतादात्म्यरूपमन्यत्वं नास्तीत्युपपादयितुमुदाहरति- यथा- **सैषास्थलीति**। यत्र प्रदेशे, त्वाम्-सीताम्, विचिन्वता, अन्वेषमाणेन, मया-रामेण, त्वच्चरणौ अरविन्दे इव चरणारविन्दे ताभ्यां विश्लेषः सम्बन्धराहित्यं तेन यद्दुःखं व्यथा तस्मादिव बद्धमौनं निश्शब्दं यथा भवति तथा उर्व्यां- भूमौ भ्रष्टं विच्युतमेकं नूपुरं मञ्जीरः अदृश्यत ऐक्षिष्ट। सा= पूर्वमनुभूता, स्थली=अकृत्रिमंस्थलम्= पुरुषव्यापारेणानिर्मितः प्रदेशः, (देवनिर्मितः) दृश्यते तां पश्य "जानपद कुण्डगोणस्थल" (पा.सू. ४.१.४२)इतिनिपातितः) अत्र धर्मिणि धर्मएवोत्प्रेक्ष्यते न पुनधर्म्यन्तर मित्युपयादयति- इति **हेत्विति**।

अत्र नूपुरे विषये निश्शब्दत्वं निमित्तीकृत्य दुःखरूपो धर्मः विषयी संभाव्यते। नूपुरगतनिश्शब्दतांप्रति अनिमित्तमपि दुःखं निमित्तत्वेन संभावितमिति अहेतौ हेतुत्वसंभावनात् हेतूत्प्रेक्षा। नूपुरगतं यन्निश्शब्दताख्यं मौनित्वं तत्दुःखिष्वप्यनुवर्तमानमनुभूयते। एवं च मौनित्वस्य नूपुरदुःखिरूप विषयविषयिसाधारण्यं दर्शितं भवति। धर्मस्येत्यस्य प्रकारतयेत्यर्थः।

**नन्वत्र**-नूपुरे दुःखरूपोगुण उत्प्रेक्ष्यत इत्युपगमे खल्वव्याप्तिः। न चात्र तथोच्यते। किन्त्वन्यथैव तथाहि- अत्र दुःखशब्दो गुणवाची "गुणे शुक्लादयः" इत्यनुरोधेन गुणवाचिनोऽपि दुःखशब्दस्य अर्शसादिशब्दवत् दुःखविशिष्टव्यक्तिवाचि-

## चित्रमीमांसा

**नतु दुःखितादात्म्यम्, दुःखशब्दस्योपरि मतुबाद्यश्रवणात्॥**

**एवम्- चोलस्य यद्भीतिपलायितस्य**
**भालत्वचं कण्टकिनो वनान्ताः।**
**अद्यापि किं वानुभविष्यतीति**
**व्यपाटयन् द्रष्टुमिवाक्षराणि॥**

तत्त्वालोकः

त्वमुपगम्यते तथाच नूपुरे दुःखिरूपवस्त्वन्तरतादात्म्यमेव संभावितं भवतीति नाव्याप्तिरिति शङ्क्यम्। यतश्चात्र बद्धमौनतां प्रति हेतुत्वप्रतिपादकपञ्चम्यन्तश्रवणात् पञ्चम्याश्च जनकत्वरूपहेतुत्वे जन्यत्वरूपहेतुमत्वे वा "हेतौ" इति सूत्रेणपञ्चम्याः अनुशिष्टत्वात्। तेन सहान्वयश्च नोपपद्येत मधुरादिशब्दवत् दुःखादिशब्दानां गुणवाचकत्वस्यादृष्टेः।

**किञ्च**-अभिन्नशब्देन यत्र तद्वतोऽभिधानमन्तरा प्रकृतार्थोनोपपद्यते तादृशशब्दप्रयोगवद्वाक्यमन्तरा अगतिकगत्या आश्रयणीयस्य अर्शआदित्वस्या श्रयितुमयुक्तत्वाच्चात्र दुःखशब्दस्य दुखविशिष्टार्थप्रतिपादकत्वं नाभ्युपगन्तुमलम्, नवा दुःखशब्दात् मत्वर्थीयप्रत्ययः श्रुतः। अतश्च नात्र नूपुरे दुःखितादात्म्यं संभाव्यत इत्यतिव्याप्तिरेवेत्याशयेनाह- **नतु दुःखितादात्म्यमिति।**

**समाधानन्तु**- अन्यत्वेनेत्यस्य अन्यप्रकारेणेत्यर्थः। यत्र कश्चिद्धर्म एव किञ्चित्प्रति हेतुतयोत्प्रेक्ष्यते, तत्र सएव धर्मः प्रकारः इत्यव्याप्तेरभावात् इति उत्तरत्र ग्रन्थकृतैव वक्ष्यते॥

हेतूत्प्रेक्षायामव्याप्तिमुपपाद्य- फलोत्प्रेक्षायामव्याप्तिमुद्भावयितुमुदाहरति- **एवम् -चोलस्येति।**

यस्मात् विक्रमाङ्कदेवनृपतेः समुत्पन्ना या भीतिः तस्याः पलायितस्य प्रपलाय्य वनंश्रितस्य चोलस्य चोलनरेशस्य भालत्वचं ललाटचर्म, कण्टकिनः सकण्टकाः

**चित्रमीमांसा-**

**इति फलोत्प्रेक्षोदाहरणे द्रुमगतेन ललाटाक्षरदर्शन-प्रवृत्तपुरुषसाधारणेन ललाटपाटनेन निमित्तेन द्रुमाणां यत्फलं ललाटाक्षरदर्शनमुद्देश्यमिति धर्मतयोत्प्रेक्ष्यते, नतु ललाटाक्षरदर्शन-प्रवृत्तधर्मितादात्म्यम्। द्रष्टुमित्यस्य धर्मिपर्यन्तत्वाभावात्।।**

तत्त्वालोकः-

वनान्ताः काननमध्यभूमयः, अद्यापि इदानीमपि, पूर्वम् अनुभूतानेव कष्टान् अनुभविष्यतीति शङ्कया, अक्षराणि=विधिलिखितानि वर्णानि द्रष्टुमिव दर्शनोद्देशेन इव काननद्रुमाः व्यपाटयन् उत्पाटयामासुः किम् इत्यर्थः। अत्र वनान्तद्रुमविषये विपाटनक्रियां निमित्तीकृत्य ललाटाक्षरदर्शनं फलमुत्प्रेक्ष्यते। तच्च फलं धर्म एव नतु धर्मिरूपम्। अतश्चात्र धर्मिणि फलरूपोधर्मोत्प्रेक्षा। तदेतदुपपादयति- **इतिफलोत्प्रेक्षेति।**

**द्रुमगतेनेति।** अनेन काननवृत्तीनां कण्टकिद्रुमाणामेव विषयत्वं नपुनः **समुद्रबन्धो** क्तरीत्यां वनान्तानामिति ध्वनितं भवति। **ललाटाक्षरेति।** अनेन निमित्तभूतस्य धर्मस्य विषयविषयिसाधारण्यं दर्शितं भवति। एवं चात्र वस्त्वन्तरतादात्म्यं नास्तीति अव्याप्तिरिति भावः।

**नन्वत्र-** कण्टकिद्रुमेषु द्रष्टृपुरुषतादात्म्यमेव संभाव्यतां मास्तु च तादृशदर्शन मात्रमित्यव्याप्तिर्नास्तीति शङ्क्यम् नच तथोत्प्रेक्षितुं शक्यं मानाभावादित्याह- **न तु ललाटेति।**

**अयं भावः-** नहि द्रष्टुमिति तुमुन्नन्तश्शब्दः धर्मिबोधनसमर्थः तावत्यर्थेऽनुशासनाभावात्। अनुशिष्यते परं क्रियारूपधर्मवाचकात् दृश्धातोः " तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् (पा.सू. ३-३.१०) इति। एवं च दर्शनरूपक्रिया-न्तरफलकविपाटनरूपक्रियोपपदकात् दृशेः तादर्थ्ये तुमुन् विहितः न पुनः द्रष्टरीति काननद्रुमेषु तादृशदर्शनमेव फलत्वेनोत्प्रेक्ष्यं न पुनर्द्रष्टृतादात्म्यमित्यव्याप्तिरिति।।
**समाधानंतु-** अन्यत्वेनेत्यस्य प्रकारान्तरार्थत्वमभ्युपगम्य अत्र भालत्वग्विपाटनस्य फलं ललाटाक्षरदर्शनमिति काननद्रुमेषु ललाटाक्षरदर्शनरूपं फलमेव प्रकारः स

**चित्रमीमांसा-**

**तथा- पिनष्टीव तरङ्गाग्रैः समुद्रः फनेचन्दनम्।**
**तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः।।**

**इति धर्मस्वरूपोत्प्रेक्षोदाहरणे समुद्रस्य चन्दनघर्षणशिला-प्रान्तस्थानीये तटे हस्तस्थानीयतरङ्गाग्रैः फेनचन्दनपेषकत्वेन (तत्प्रांतगत फेनचन्दनपुञ्जीभवनेन प्रतीयमानेन निमित्तेन) शशाङ्कस्य करैः दिगङ्गनादिधवलीकरणेन च प्रतीयमानेन निमित्तेन तत्कर्तृकंपेषण-लेपनमात्रमुत्प्रेक्ष्यते, न तु तयोः पेषण-लेपन-कर्तृतादात्म्यम्**

तत्त्वालोकः

एवोत्प्रेक्ष्यत इति नाव्याप्तिरिति। अयं चांशो ग्रन्थकृतैवोत्तरत्र वक्ष्यते।

फलोत्प्रेक्षायामव्याप्तिमुपपाद्य, धर्मस्वरूपोत्प्रेक्षायामप्यव्याप्तिम् उद्भावयितुमुदाहरति- **तथा पिनष्टीवेति**। समुद्रः तरङ्गाग्रैः तरङ्गाणामग्रभागैः, फेनरूपं चन्दनम् पिनष्टीव, तत् फेनचन्दनम् आदाय-गृहीत्वा, इन्दुः करैः किरणरूपैः हस्तैः, दिगङ्गनाः दिग्वधूः लिम्पतीव उपदेग्धीवेत्यर्थः।

धर्मिणि धर्मसंसर्गोत्प्रेक्षेति वदतां **सर्वस्वकारादीनां** मते समुद्रे धर्मिणि समुद्रकर्तृकतरंगाग्रकरणक फेनचन्दनलेपन संसर्गश्चन्द्रे उत्प्रेक्ष्यत इति धर्मिणि धर्मस्वरूपोत्प्रेक्षा उभयत्र निमित्तं क्रमेण समुद्रप्रान्तगतफेनचन्दनपुञ्जीभवनम्, दिगङ्गनाधवलीकरणं च निमित्तम्। तदेतदुपपादयति- **इति धर्मस्वरूपेति**।

ननु- पिनष्टीव, लिम्पतीव "इत्याद्युत्प्रेक्षासु समुद्रे-चन्द्रे च धर्मिणि पेषणलेपनकर्तृतादात्म्यमेव संभाव्यतां तिङां कर्त्रभिधायकत्वस्य "लः कर्मणि च भावे चाकर्मकेभ्यः (पा.सू.३.४.६९) इति अनुशासनसिद्धत्वात्। "फलव्यापारयोः धातुः आश्रये तु तिङस्स्मृताः।" इति **भट्टोजिदीक्षितैः** ,फलाश्रये (कर्मणि) व्यापाराश्रये (कर्तरि) च तिङस्स्मृताः इति **वैयाकरणभूषणसारे-कौण्डभट्टेन** च व्याख्यातत्वाच्च तिङां कर्त्राद्यभिधायकत्वं नानुपपन्नमिति शङ्क्यम्, सत्यम् । नात्रास्माभिः तिङां कर्त्रभिधायकत्वं निषिध्यते, अपि तु तस्याख्यातार्थकर्तुः प्राधान्यं नास्तीति तत्र

**चित्रमीमांसा-**

**पिनष्टि लिम्पतीत्यारव्यातयोः कर्तृवाचकत्वेऽपि "भाव-प्रधानमारव्यातम्" इति न्यायेन कर्तुः प्रधानभूतक्रियोपसर्जनस्य अन्यत्रान्वयासंभवात्।।**

तत्त्वालोकः

इवार्थस्यान्वयो नोपपद्यते **एकत्र विशेषणतया अन्वितस्य अपरत्र तत्वेनान्वयस्य अव्युत्पन्नत्वात्।** आरव्यातान्त समभिव्याहारे धात्वर्थारव्यातार्थयोः धात्वर्थस्यैव प्राधान्यं निरुक्तकारेण यास्केनापि प्रतिपादितमिति आरव्यातार्थो पसर्जनत्वमर्थसिद्धमिति। अतश्च नात्र समुद्रे चन्द्रे च पेषण लेपनकर्तृतादात्म्यं सम्भावयितुमलमिति उपपादयति- **पिनष्टीति।**

'पिनष्टि लिम्पति' इत्यारव्यातयोः, पिष्लृ (पेषणे) लिप (उपदेहे) इति धातूत्तरश्रूयमाणस्य तिङः, कर्तृवाचकत्वेऽपिधातूपात्तव्यापाराश्रयशक्तत्वेऽपि इत्यर्थः। **भावेति।** भावो व्यापारः धात्वर्थक्रिया प्रधानं विशेष्यं यस्यतत् भावप्रधानम्- आरव्यातम्- तिङ् इत्यर्थः। आरव्यातार्थकर्तृ प्रकारकशाब्दबोधं प्रति धातुजन्यव्यापारोपस्थितिः विशेष्यतया कारणम् इति कार्यकारणभावाभ्युपगमेन **वैयाकरणमते** तिङर्थस्य कर्तुः व्यापारेविशेषणतया तस्यइवार्थसम्भावनायां स्वप्रतियोगिकत्वसम्बन्धेनान्वयायोगादिति भावः।।

**नन्वेवंतर्हि-** भावप्रधानमित्युपगमे- "**प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थःप्रधानं प्रकृत्यर्थो विशेषणम्**" इत्यनेन विरुध्यते इति शङ्क्यम्।

उदाहृतन्यायस्यासार्वत्रिकत्वात्। अत एव अजा, छागी अश्वा इत्यादौ प्रकृत्यर्थछाग्यादेः प्राधान्यं , नपुनः प्रत्ययार्थस्य, अन्यथा प्रकृत्यर्थान्वयोऽन्यत्र न स्यात्।

**किञ्च-** प्रत्ययार्थप्राधान्यवादोऽपि तद्धितादि मात्रविषयः, अत एव " औपगवमानय"इत्युक्ते उपगुविशिष्टं अपत्यमानयन्ति नोपगुं नापत्यमात्रं नोभौ वा इति

**चित्रमीमांसा-**

**अत एव -**

**''लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः'' इत्युत्प्रेक्षामुदाहरता दण्डिना उक्तोदाहरणयोः इव शब्दश्रवणात् लेपनवर्षकर्तृभ्यां तमोनभसोरुपमामाशङ्क्य-**

तत्त्वालोकः

तद्धितान्ताद्येवोदाहरणं प्रदर्शितं **काशिकावृत्तौ वामनेन-** प्रधानप्रत्ययार्थवचनम् (पा.सू. १-२-५६) इति सूत्रे।

यद्यपि-प्रथमान्तमुख्यविशेष्यक शाव्दबोधवादिनामपि **नैयायिकानाम्-** ''पश्य मृगो धावति'' इत्यादौ एकवाक्यतानुरोधेन आख्यातार्थ(भाव) यत्नविशेष्यकोऽपि बोधः क्वचिदिष्ट एव। तथा सति मृगनिष्ठा या धावनानुकूला कृतिः तत्कर्मकदर्शना-श्रयस्त्वमिति बोधः। अन्यथात्र तिङा कर्मणोऽनभिहितत्वात् कर्मणि द्वितीया (पा. सू. १.३.१.) इत्यस्य जागरूकत्वात् मृगशब्दात् द्वितीयापत्तिः।

तथापि '' **सर्वत्र प्रत्ययार्थः प्रधानमिति न यास्कस्याप्यभिमतम्।** अन्यथा-सत्वप्रधानानि नामाख्यातानि इत्येववक्तव्यं स्यात्। नतु **सत्वप्रधानानि नामानि, भावप्रधानमाख्यातमिति** पृथक्सूत्रणेन। तेनानुपयोगात्।

**अन्यच्च-** ''किं करोतीति'' पृष्टे ''पचती''त्युत्तरबलेन धर्मिनिष्ठव्या-पारविषयकजिज्ञासानिवृत्तिरेवेति अख्यातस्थले व्यापारप्राधान्यवादो युक्त एव। एवं च पिनष्टीवेत्युदाहरणे स्वयमपि पेषणकृ तादात्म्यं, लेपनकर्तृतादात्म्यं च क्रमेण समुद्रे चन्द्रेच संभावयितुं न शक्यमिति तयोः पेषण लेपनमात्रमुत्प्रेक्ष्यमिति च गूढाभिप्रायः।

उक्तार्थे सम्मतिं प्रदर्शयितुं आलंकारिकस्य **आचार्यदण्डिनोऽपि** सम्मतिं प्रदर्शयति- **अतएवेत्यादिना।**

**अत एवेति।** आख्यातान्तसमभिव्याहृतेवादिस्थले आख्यातार्थस्य कर्तुः प्रकृत्यर्थव्यापारे विशेषणतयान्वितस्य इवार्थसादृश्ये प्रतियोगितासम्बन्धेन अन्वयासम्भवादेवेत्यर्थः । **लिम्पतीवेति।**

## तत्त्वालोकः-

अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां प्रचक्षते॥

इति उत्प्रेक्षां लक्षयित्वा-। 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।'' इति **भासकृतचारुदत्तनाटकीय** पद्येउपमेति भ्राम्यतां केषाञ्चिद्भ्रान्तिं निराकुर्वता **दण्डिना-**

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
इतीदमपि भूयिष्टमुत्प्रेक्षालक्षणान्वितम् ॥ २२६॥
केषांचिदुपमाभ्रान्तिरिव श्रुत्येह जायते ।
नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम् ॥२२७॥

इत्युक्तम् ,अस्याभिप्रायं- **केचिदेवमाहुः**-यत्र मन्ये, शङ्के, ध्रुवं प्राय इत्येवमादि प्रयोगस्तत्रोत्प्रेक्षा। यत्र इवशब्दप्रयोगस्तत्रोपमैवेति। तन्नयुक्तं- यतश्च **व्याकरणमहाभाष्ये पतञ्जलिना**-धातोः कर्मणः समानकर्तृकादिति (पा.सू.३.१.७) सन्विधायके- अश्मा लुलुठिषते, कूलं पिपतिषति इत्यत्राचेतनस्य पाषाणादेः इच्छाया असंभवात् सन्प्रत्ययो न स्यात् इत्याशङ्क्य लुलुठिषत इव लुलुठिषत इति समाधानं पूर्वपक्षयित्वा नवै तिङन्तेन उपमानमस्तीति सिद्धान्तितम् । व्यारव्यातं च कैयटेन **तिङन्तेनेति**। तिङन्तार्थेनेत्यर्थः। क्रियायाः साध्यैकस्वभावत्वेनानिष्पन्नरूपत्वात्, इदं तदिति परामर्शगोचर वस्तुविषयत्वादुपमानोपमेयभावस्य। अत्र च इदं तदिति परामर्शाभावादिति भावः। इवशब्द प्रयोगेतु अध्यारोपस्तु विद्यते, रोदितीवगायति, नृत्यतीव गच्छति देवदत्तः इति।

अत एव **कैयटकारादपि प्राचा भर्तृहरिणा वाक्यपदीयेऽपि-**

सिद्धमेव समानार्थमुपमानं विधीयते।
तिङन्तार्थस्तु साध्यत्वादुपमानं न जायते।

इति भाष्याशयस्संगृहीतः॥ सिद्धत्वं च क्रियान्तराकांक्षानुत्थापकतावच्छेदकरूपवत्त्वमिति सामान्यत उक्तम्।

**तथाच**- उपमायां उपमानस्य सिद्धत्वमावश्यकम्। इह तु साध्यत्वम्। अतश्च

**चित्रमीमांसा-**

**कर्ता यद्युपमानं स्यात् न्यग्भूतोऽसौ क्रियापदे।**
**स्वक्रिया साधनव्यग्रो नालमन्यद्व्यपेक्षितुम्।।**

**इति दूषितम्।।**

तत्त्वालोकः

तिङन्त पद प्रतिपाद्यस्य लेपनस्य वर्षणस्य च साध्यत्वान्नोपमाशङ्केत्युक्तं भवति।। अतश्च अत्र उत्प्रेक्षैव नोपमेति सिद्धम्।।

पुनरपि लेपन-वर्षणरूपव्यापाराश्रयस्योपमानतास्त्वित्याशङ्कां मनसि निधाय तां निराकरोति - **कर्तायदीति**। कर्ता आख्यातार्थः लेपनादिव्यापाराश्रयः। उपमानं यदि स्यात् तमसः प्रतियोगि चेत् तदा उपमा निर्व्यूढा भवेत् (तत्वमेव न घटते इति शेषः) यतःअसौ कर्ता, क्रियापदे धात्वर्थव्यापारे न्यग्भूतः विशेषणतां प्राप्तः, इत्यर्थः।

**ननु** अस्त्वत्र आख्यातार्थकर्तुर्धात्वर्थान्वयः इवार्थसादृश्ये प्रतियोगितयान्वयोऽप्यस्त्विवतिचेत्तत्र बाधकमुपन्यस्यति -**स्वक्रियेति**। स्वस्य कर्तुः विशेष्यभूता या क्रिया तस्यास्साधने व्यग्रः व्यापृतः, अन्यत् इवार्थं सादृश्यादिकम्, व्यपेक्षितुम् स्वप्रकारकान्वयबोधे विशेष्यतामापादयितुम् न अलं न समर्थः इत्यर्थः।

**अयंभावः**-लोकेयथा एकस्याधी पुरुषः एककालावच्छेदेन इतराधीनतामामुं न प्रभवति तद्वत् धात्वर्थेऽन्वितः, तिङर्थःकर्ता, तदैव इवार्थेऽन्वयं नाकांक्षते। अतश्चेवार्थसादृश्ये स्वीयविशेष्यतामपिादयितुं नाख्यातार्थकर्तुस्सामर्थ्यमस्तीति कर्तुरुपमानत्वं नास्तीति।।

अत एव **सर्वस्वकृता**- लिम्पतीवेति पद्ये तमोनभसोः लेपनवर्षणकर्तत्वमुत्प्रेक्ष्यते इति। एतेन **यत्कुवलयानन्दचन्द्रिकाकारेण**- एतेन तमसि लेपनकर्तृत्वमुत्प्रेक्ष्यमित्य**लंकारसर्वस्वकार**मतमपास्तमितियत् दूषणाभिधानं तत्सर्वस्वकारग्रन्थानालोकन निबन्धनमिति भाव्यम्।

**यद्यपि**- सर्वस्वग्रन्थे धर्म्युत्प्रेक्षायां निमित्तोपादानानुपादानाभ्यां भेदद्वयं सोदहरणं प्रदर्श्य धर्मोत्प्रेक्षायां निमित्तस्य अनुपादानं यथेत्युपक्रम्य-" लिम्पतीव तमो

## तत्त्वालोकः

ऽङ्गानि'' इत्यत्र तमोगतत्वेन लेपनक्रियाकर्तृत्वोत्प्रेक्षायां व्यापनादिनिमित्तं गम्यमानं ''इति पाठःदृश्यते। सच पाठः पूर्वोपपादितसर्वस्वग्रन्थेनासंगतः। अतश्च तत्रैवं पाठो भवेत्- '' अत्र तमोगतत्वेन लेपनक्रियोत्प्रेक्षायां व्यापनादिनिमित्तमिति। एवं च सर्वस्वग्रन्थे कतृत्वेतिपदंप्रमादपतितं वा भवेत्। यतश्च तस्य ग्रन्थभागस्य प्रकाशग्रन्थखण्डनाय प्रवृत्तत्वात्।।

अतएव **विमर्शिनीकृतापि** -''लेपनक्रियाकर्तृत्वोत्प्रेक्षायामित्य पपाठंपरिगृह्य लेपनक्रियाकर्तृत्वोत्प्रेक्षायामाशंकितायामिति पक्षान्तराभिप्रायपरत्वं वर्णितम्।।

**एतेनात्र**-प्रामादिकपाठपरिग्रहमूलकं सर्वस्वकारोक्तिखण्डनाय प्रवृत्तौ **प्रदीपकार-रसगंगाधरकारावुभावपि** सर्वस्वकारीयपूर्वग्रन्थानवलोकिनौ अत एव **प्रदीपकृता**-''अत एव तमसो लेपनकर्तृत्वमुत्रोत्प्रेक्ष्यमित्यलंकार सर्वस्वकारमतमपास्तम्। विवक्षितविवेकेन लेपनमात्रस्यैवोत्प्रेक्षणीयत्वात्'' इति दूषणमभिहितम्।

**रसगंगाधरकृतापि**- सर्वस्वकारोपरि कटाक्षेणेव ''राज्याभिषेकमाज्ञाय'' इति स्वीयं पद्यमुदाहृत्य '' अत्रापि चन्द्रे विषये तादृशलेपनकर्तृत्वरूपधर्मोत्प्रेक्षा इत्येकं दर्शनम् इति क्रियोत्प्रेक्षोदाहरणप्रसङ्गेऽभिहितम् एवमुत्तरत्र सर्वस्वमतनिराकरणप्रसङ्गे ''एवं यत्र धर्म एव धर्मिगतत्वेन इत्यादिना धर्मोत्प्रेक्षाप्रसङ्गे'' लिम्पतीव तमोऽङ्गानि इत्यत्र लेपनक्रियाकर्तृत्वेत्प्रेक्षणे व्यापनादिनिमित्तम् इत्युक्तम् तदेतत्सर्वंपरस्परविरुद्ध मिति ज्ञेयम्।

**यद्यपि**- क्रिययोर्नोपमानोपमेयभाव इति सिद्धान्तोऽपि ''रोदितीव गायति'' इत्यादि प्रयोगप्रामाण्यात्, तेन तुल्यं क्रियाचेद्वतिः (पा.सू. ५-१-११५) इति क्रिययोः सादृश्ये वतिविधानाच्च अनुपपन्नः। अत एव '' ब्राह्मणवदधीतेक्षत्रियः'' इत्यादौ अध्ययनक्रिययोरेव सादृश्यं विवक्षितम्। अत एवच-ब्राह्मणेन सदृशः क्षत्रियः'' इत्यर्थे ब्राह्मणवत् क्षत्रिय इति प्रयोगोऽसाधुरेवेति **तत्वबोधिन्यां ज्ञानेन्द्रसरस्वतीभिरभिहितं** सगंच्छते।

अत एव च- **वैयाकरणैः** ब्राह्मणक्षत्रियाध्ययनयोः सादृश्यं सिद्धान्तितम्।

## तत्त्वालोकः-

अन्यथा तेन तुल्यमिति सूत्रे क्रियाग्रहणंनोपयुक्तं स्यात्। "नवै तिङन्तेन उपमानमस्तीति सन्प्रकरणस्थभाष्यं तु तिङन्तार्थेन कर्त्रादिना अन्यस्यसुबन्तार्थस्य सादृश्यं न समस्तीत्यभिप्रायकम्। नपुनः क्रिययोरूपमा नास्तीति। अन्यथा "तैलपाकेन तुल्यो. घृतपाकऽ" इत्यत्र रोदतीव गायतीत्यादौच अनुभूयमानंसादृश्यं अपलपितंस्यात्।

ननु- क्रिययोरुपमाभ्युपगमे तयोस्साधारणधर्मोऽपेक्ष्यत इति चेत् सौष्टवादिकं गम्यमानमस्त्येवेत्यदोषात्। अयमेवपक्षो **दण्डिनो**ऽप्यभिमतो भवेत्। यतश्च-कर्ता यद्युपमानं स्यातइत्यादिना तादृशकर्त्रोरेवोपमा निषिद्धा। न पुनः धात्वर्थयोः तथा- लिम्पतीवेत्यत्रापि नोपमानं तिङन्तेनेत्युक्तं नपुनः तिङ्प्रकृत्यर्थेनेति। एवं च यत्र इवशब्दोपादानेऽपि उपमा न सम्भवति तत्रोत्प्रेक्षात्वमित्यभिप्राय इति दण्ड्युक्तिः निर्वाह्या अन्यथा सादृश्यमूला क्रियोत्प्रेक्षा, सवत्राभेदेनैवोत्प्रेक्षेति वदतां **प्रकाशकारादीनां** मतमत्यन्तमसंगतं स्यादिति दिक्॥

यदपि- **चन्द्रिकाचकोरकारैः** लिम्पतीव तमोङ्गानि इति पद्ये **ग्रन्थकृता**-नभसो भूपर्यन्तं गाढनीलिमव्याप्तत्वेन निमित्तेन अञ्जवर्षणकर्तृतादात्म्योत्प्रेक्षा चेत्युक्तविषयैवास्तु इति **कुवलयानन्दोक्ताशङ्का**ऽसंगतेति प्रतिपादिता। तत्रत्योऽयं ग्रन्थः-

"विषयिविषयोभयनिष्ठ धर्मस्यैव निमित्तत्वम् व्यापनं नाम अनेकदेशसंयोगः। स च संभावनाविषयभूते तमसि यद्यपि वर्तते, तथापि विषयिणि लेपनकर्तरि नास्ति। लेपनकर्तुः पुरुषस्यैकदेशत्वात्। एवं विषयभूते नभसि गाढनीलिमव्याप्तत्वे सत्यपि अञ्जनवतिपुरुषे नीलिमव्याप्तत्वं नास्ति नहि सुधालेपकः पुरुषः स्वदेहमपि प्रासादमिव सुधया (धवलयति) लिम्पति। वृक्षसेचको वा वृक्षमिव स्वदेहमपि जलेन सिञ्चति अतश्च अन्यधर्मसम्बन्धरूपनिमित्तस्य विषयिणि लेपनकर्तरि वर्षणकर्तरि चाभावेन लक्षणस्यैवाभावात् उक्तशंकाग्रन्थ एवासङ्गतः" इति।

**तर्ह्यत्र प्रतिबन्द्या वच्मः-**

**अस्या दोहदशालिन्याः मुखमापाण्डुरप्रभम्।**
**सत्यं राजेति मन्येऽद्य यद्ध्रुवं भोक्तुमिच्छति॥**

**चित्रमीमांसा-**

**वृत्तानुपूर्वे च नचातिदीर्घे**
**जङ्घे शुभे सृष्टवतस्तदीये।**
**शेषाङ्गनिर्माणविधौ विधातुः**
**लावण्य उत्पाद्य इवास यत्नः॥**

तत्त्वालोकः-

इत्युत्प्रेक्षायां मुखं विषयः चन्द्रः विषयी, भूभोगाभिलाषोनिमित्तम्। अत्र भूभोगाभिलाषः मुखगतोऽपि न विषयिभूतचन्द्रगत इति अन्यधर्मसम्बन्धरूपनिमित्तस्य विषयिणि चन्द्रे अभावादव्याप्तिः प्रसज्यत इत्युभयत्रापि समानोऽयं दोषः।

अथापि " उपमायां साधारणधर्म इव बिम्बप्रतिबिम्बभावादिभिः सर्वैरपि प्रकारैः विवक्षितः इति वक्ष्यमाणरीत्या यथा "अस्या दोहदशालिन्या" इति पद्ये राजशब्दश्लेषेण चन्द्रस्य धर्माश्रय ताद्रूप्य सम्पादनेन धर्मस्य तदीयतानिर्वाहः तथात्रापि लेपनकर्तृविशेषणे लेपने, वर्षणकर्तृविशेषणे वर्षणे विद्यमानं व्यापनं तत्कर्तृषु औपचारिकमिति अन्यधर्मसम्बन्धस्य "**प्रत्ययार्थः प्रधानं प्रकृत्यर्थो विशेषण इति न्यायं** सार्वत्रिकमिति वदतां **नैयायिकानामनुरोधेन** तादृशशङ्कायाः संगतत्वादिति असंगतोत्वोक्तिः तेषांचिन्त्यैव॥

यदपि- **विमर्शिनीकारेणोक्तं**- उत्प्रेक्षासामग्र्यभावे इवशब्दोऽपि क्वचिद्वितर्कमेव प्रतिपादयति यथा वृत्तानुपूर्वेच नचाति दोर्घे इति तदपि मन्दम् अत्र उत्प्रेक्षासामग्र्याः निमित्तादेः अनुमातुं शक्य त्वादुत्प्रेक्षोदाहरणत्वस्यैव वक्तुं युक्तत्वात् सुशकत्वाच्चेति सूचियितुम्, **विद्यानाथलक्षणस्थस्यान्यत्वेनेत्यंशस्य** आपाततः प्रतीयमानस्याव्याप्तत्वं च सकृदेव स्फुटयितुम् वृत्तानुपूर्वे चेत्युपन्यस्यति-

**वृत्तानुपूर्वेचेति।**

वृत्तानुपूर्वे नातिदीर्घे च तदीये शुभे जङ्घे सृष्टवतः विधातुः शेषाङ्गनिर्माणविधौ उत्पाद्ये लावण्ये यत्न इवास इत्यन्वयः।

वृत्ते वर्तुले, पूर्वमनुगते अनुपूर्वे गोपुच्छाकारे इत्यर्थः, वृत्ते च ते अनुपूर्वेच

## तत्त्वालोकः-

वृत्तानुपूर्वे, नातिदीर्घे अनतिदीर्घे च तस्याः पार्वत्याः इमे तदीये- तच्छब्दस्य त्यदादीनि चेति (पा.सू.१.१.७४) वृद्धसंज्ञायां वृद्धाच्छः (पा.सू.४.२.११४) इति छप्रत्ययः। शुभे जङ्घे प्रसृते (मीनखण्ड इति कर्णाटभाषायाम्) सृष्टवतः निर्मातुः विधातुः ब्रह्मणः शेषाङ्गनिर्माणविधौ जंघाव्यतिरिक्तावयव निर्मितौ उत्पाद्ये पुनस्सम्पाद्ये लावण्ये (कान्ति) समुदमायशोभाविषये यत्न इवास प्रयत्न इव बभूवेत्यर्थः।।

उपादानकारणमन्तरेण कार्यस्यासिध्या तदङ्गनां च लावण्योपादानकत्वात् प्रथमतस्सम्पादितलावण्यनिचयस्य जङ्घार्थमेव कात्स्न्र्येन विनियोगात् पुनरव शिष्टावयवसृष्ट्यै लावण्यं सम्पादयितुं यत्न इव वभूवेति भावः।

**नन्वत्र**- कविना बभूवेत्यर्थे आस इति प्रयुक्तं तत्कथं घटते अस्तेर्भूः (पा.सू-२-४-५२) इति अस्धातोरार्धधातुकेभूभावविधानात्। इतिचेत् न। आसेति बभूवेत्यर्थे तिङन्तप्रति रूपकमव्ययमिति **शाकटयनेनोक्तत्वेनादोषात्।**

**वल्लभस्तु**- अस्मि इत्यहमर्थे अव्ययवत् प्रयोगाभावात् आस इति प्रयोगः कवेः प्रामादिकः एव न पुनस्तिङन्तप्रतिरूपकमव्ययमिति।

**वामनश्च- काव्यालंकारे** - आसेत्यसतेः (का.सू.५-२.२७) इति सूत्रयित्वा व्यवृणोत्। लावण्य उत्पाद्य इवास यत्नःइत्यत्र आस इत्यसतेर्धातोः अस गतिदीप्त्यादानेषु इत्यस्यप्रयोगः न अस्तेः तस्य भूभावविधानात् इति।

**तदुभयमप्यसमञ्जसम्। यतो यत्र क्वापि अस्तेः बभूवेत्यर्थे आसेति प्रयोगाभावे तत्प्रतिरूपकत्वं वक्तुं अयुक्तं स्यात् न च तथात्र। यतः कठोपनिषदि-**"तस्य ह नचिकेता नाम पुत्र आस" इति श्रुतत्वात् तस्य प्रयोगस्य **कठोपनिषद्भाष्ये** तस्य यजमानस्यह नचिकेता नाम पुत्रः किल आसः बभूवेति **शंकराचार्यैः** विवृतत्वेन वैदिकप्रयोगानुकारी आसेति तिङन्तप्रतिरूपकमव्ययम् इति **शाकटायनविवरणस्य** युक्तेश्च युक्तत्वात्।

**एवं च वल्लभवामनौ शाकटायनाभिप्रायविरुद्धाभिधायिनौ जातावित्यवधेयम्।**

**अत्र** विधातृरूपे विषये सर्वातिशायिलावण्यविशिष्टजंघानिर्माणानुमितं समस्तकोशव्ययं निमित्तीकृत्य शेषाङ्गनिर्माणप्रयोजकलावण्योत्पादनप्रयत्नमात्रं धर्म

**चित्रमीमांसा**

**इत्यत्र निरतिशयलावण्यशालिजंघासृष्ट्यनुमितेन निश्शेष-लावण्य कोशव्ययेन निमित्तेन विधातुः शेषाङ्गनिर्माणोपयुक्त लावण्योत्पादने यत्नमात्रमुत्प्रेक्ष्यते न तु तथाभूतयत्नवत्तादात्म्यमिति स्पष्टमेव।**

**अपिच-अप्रकृतधर्मिकोत्प्रेक्षायां प्रकृतमित्यंशाभावादव्याप्तिः**

तत्त्वालोकः-

उत्प्रेक्ष्यते नपुनर्धर्मिभूतयत्नवत्तादात्म्यम्। अतश्च अव्याप्तिरिति भावः।

तदाह- **इत्यत्रेति।**

यद्यत्र कवेर्विधातरि यत्नवत्तादात्म्यं विवक्षितं स्यात्तदायंश्लोकः एवं निर्मेयस्स्यात्

वृत्तानुपूर्वेच नचातिदीर्घेसृष्ट्वा शुभे जङ्घ इमे विधाता।
शेषाङ्ग निर्माणविधौ स एवलावण्यसृष्टाविव सप्रयत्नः इति।

नचैवं कविना पद्यं निर्मितम् अतश्च धर्मिणि धर्म एवोत्प्रेक्ष्यते नतु धर्म्यन्तरतादात्म्यम्।

**किञ्च-** विधातुः यत्न इति षष्ठीनिर्देशात् षष्ठ्याश्च संबन्धत्वेन कर्तृत्वस्य समवेतत्वस्यच वाच्यत्वात् विधातरि तत्कर्तृकयत्नस्य, तत्समवेतस्य यत्नस्य वा विवक्षितत्वेन धर्मिणि धर्मोत्प्रेक्षैव कविसम्मतेति अव्याप्तिः प्रसज्यत इति भावः।

**समाधानन्तु-** विधातरि उत्प्रेक्ष्यमाणो यत्नोऽप्यन्यःप्रकार इति नाव्याप्तिरिति यद्वेति पक्षान्तरानुरोधेन समाधानस्य वक्ष्यमाणत्वात्।

**इत्थं विद्यानाथोक्तलक्षणे दलद्वयं लक्ष्यविशेषासङ्ग्राहकमिति अव्याप्तिमुपपाद्य प्रकृतपदस्य प्रस्तुतार्थपरत्वे क्वचिददोषेऽपि लक्ष्यविशेषेऽव्याप्तिरिति दूषयितुंप्रस्तौति अपि चेति।**

**अयं भावः** वर्ण्यमानोत्कर्षसम्पादनाय यत्राप्रस्तुतप्रशंसादिरीत्या अप्रकृतमेवोत्प्रेक्ष्यते तदा अप्रकृतधर्मिकैव सम्भावना नतु प्रकृतधर्मिकेति

**चित्रमीमांसा-**

**हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा।**
**कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिम।**

**तत्त्वालोकः**

अप्रकृतधर्मसम्बन्धप्रयुक्त प्रकृतधर्मिकतादात्म्यसंसर्गकाऽप्रकृत विधेयकाहार्य-संभावना इत्येवंरूपोत्प्रेक्षालक्षणस्या व्याप्तिरिति।

उदाहरति -**हृतसारमिवेति।**

वेधसा दमयन्तीवदनाय इन्दुमण्डलं हृतसारमिव कृतमध्यबिलं धृतगम्भीरखनीखनीलिम विलोक्यते इत्यन्वयः।

वेधसा विश्वसृजा दमयन्तीवदनाय दमयन्तीवदननिर्माणाय इत्यर्थः अत्र "क्रियार्थोपपदस्य च सर्मणि स्थानिनः (पा.सू.२.३.१४) इति तुमुन्नन्ताप्रयोगेऽपि चतुर्थी, हृतसारमिव =आत्तसारमिव कृतमध्यबिलं निष्पादितमध्यरन्ध्रम् अत एव धृतं गम्भीरखन्यां गम्भीरे आकरे परभागस्थितं यत्खं तस्य नीलिमा नैल्यं येन तत् वर्णदृढादिभ्यः ष्यञ्च (पा.सू.५१-१२३) इति चकारादिमनिच्। विलोक्यते परिदृश्यते, इत्यर्थः।

अत्र इन्दुमण्डले विषये प्रकृते, हृतसारत्वमप्रकृतम्, कलङ्कवत्वं, कृतमध्यबिलत्वं वा निमित्तीकृत्य संभाव्यत इत्युत्प्रेक्षावाच्या। तथापि दमयन्तीवदनस्य प्रकृतत्वे, तत्र च न किमप्युत्प्रेक्ष्यते, परन्तु अप्रकृतमेवेन्दुमण्डलं हृतसारत्वेनोत्प्रेक्ष्यत इत्यव्याप्तिरिति भावः।

अत्र **मल्लिनाथादयः** अपह्नुत्युत्प्रेक्षयोः सांकर्यम् उपमाध्वनिं चाहुः। तथाहि-चन्द्रे परिदृश्यमानः कलङ्को न भवति, अपि तु आकाशनीलिमेति आरोपादपह्नवः स च इन्दुबिम्बे आकाशनैल्यावलोकनं अवकाशमन्तरा न सम्भवतीति तादृशावलोकनोपन्यासः समर्थनसापेक्ष इति तस्य कृतमध्यबिलमित्यनेन समर्थनं कृतमिति काव्यलिङ्गमलंकारः काव्यलिङ्गमाश्रित्य इन्दुबिम्बे हृतसारत्वमुत्प्रेक्ष्यते अतश्च काव्यलिङ्गापह्नवयोः उत्प्रेक्षायाश्च अङ्गाङ्गिभावसंकरः। अङ्गाङ्गिभावापन्न

**चित्रमीमांसा-**

**अत्र कृतमध्यबिलमिति पदार्थहेतुककाव्यलिङ्गापेक्षया, अतिशयोक्त्या कृतमध्यरन्ध्राकाशनैल्यत्वेनाध्यवसितः यःकलंकः तद्वत्वेन निमित्तेन कलंकाध्यवसितधृतमध्यरन्ध्राकाशनैल्य-निमित्तोत्प्रेक्षितकृतमध्यबिलत्वेन निमित्तेन वा, चन्द्रमण्डलं दमयन्तीवदननिर्माणाय हृतसारत्वेनोत्प्रेक्षितं नतु प्रकृतं दमयन्तीवदनमेव उक्तप्रकाराहृतैन्दवसारांशनिर्मितत्वेनोत्प्रेक्षितम्।।**

तत्त्वालोकः-

काव्यलिङ्ग-अपह्नुति उत्प्रेक्षाभिः दमयन्तीवदनमकलंकचन्द्रसारतुल्यमित्युपमा ध्वन्यत इति।

तुदुपरि कटाक्षेणाऽन्यथोद्भावनस्यौचित्यं मन्यमानः उक्तोदाहरणे अतिशयोक्त्युत्प्रेक्षानुप्राणिता अप्रस्तुतप्रशंसा वाच्या व्यतिरेकध्वनित्वं चेति ध्वनयति- **अत्रेत्यादिना। पदार्थहेतुकेति**।

अत्र इन्दुमण्डले तादृशनैल्यावलोकनं कारणमन्तरा नोपपद्यत इति समर्थनसापेक्षमिति तस्य कृतमध्यबिलमिति, इन्दुमण्डलमध्यभागे रन्ध्रकरणोपन्यासेन समर्थितमिति काव्यलिङ्गता वाच्या। अत्र च काव्यलिङ्गोन्नयने हृतसारत्वमपि हेतुर्भवितुमलम् इदम् इन्दुमण्डलं तादृशनैल्यविशिष्टं, हृतसारत्वात् इत्येवमपि वक्तुं शक्यत्वात्।

न च हृतसारत्वं यत्र तत्र तत्र (सरन्ध्र)नैल्यावलोकनमिति अनुभवः, चन्दनतरुषु तैलस्य सारांशस्योद्धरणेऽपि नैल्यस्यादर्शनात् इदं हृतसारत्वं तादृशनैल्यावलोकना-समर्थकमिति वाच्यम्, व्यभिचारित्वेऽपि प्रकृते तत्समर्थनयोग्यत्वात्। न हि काव्यलिङ्गे व्याप्तिपक्षधर्मतादिसापेक्षनैयायिकाभिमतलिङ्ग सापेक्षतेष्टेति वाच्यम्।

सत्यम्। अथापि- ''चिकुरप्रकरा जयन्ती''त्यादाविव, हृतसारत्वस्य, कृतमध्यबिलत्वस्य च मिलितस्य हेतुत्वस्य वक्तुं युक्तत्वात् कथंचित्काव्यलिङ्गता।

## तत्त्वालोकः-

**वस्तुतस्तु-** तादृशनैल्यावलोकने कृतमध्यबिलत्वस्य हेतोः उपनिबन्धे न कश्चिदतिशय इति काव्यलिङ्गता न तावत्स्वरसा इत्यभिप्रायेणाह- **काव्यलिङ्गापेक्षयेति।**

एवं चात्र काव्यलिङ्गं नालंकारःतर्हि कोऽन्योऽलंकार इति पर्यनुयोगे आह- **अतिशयोक्त्येति।**

इन्दुबिम्बे परिदृश्यमानो यः कलङ्कः सः सादृश्यमूलकगौणसाध्यवसानलक्षणया इन्दुबिम्बांतराळपरिदृश्यमानसुषिराकाशनैल्यरूपकेण क्रोडीकृत इति **रूपकातिशयोक्तिः।** तादृशातिशयोक्ति घटकःयोऽयं कलंकः तद्वत्वं निमित्तीकृत्येत्यर्थः एवमर्थे परिकल्पिते कृतमध्यबिलं धृतगम्भीरखनीलिमेत्यनयोर्नसमर्थ्यसमर्थकभावः, किन्तु- सामानाधिकरण्यमात्रम्, इन्दुबिम्बमध्यपरिदृश्यमानं बिलमेव धृतगभीराकाशः, अवयवसन्निवेशविशिष्टस्यैवाकाशदेशस्य बिलमिति व्यवहारात्। अत एव मध्यरन्ध्राकाशेत्युपादानमिति भावः तथाच कृतमध्यरन्ध्राकाशनैल्यत्वेना ध्यवसितं कलङ्कसम्बन्धं निमित्तीकृत्य इन्दुमण्डलं दमयन्तीवदननिर्माणफलक हृतसारत्वेनोत्प्रेक्षितम्।

उक्तरीत्या निमित्तस्यो पगमे धृतगम्भीरखनीत्वेनाकाशरूपणं अनन्वितं स्यात्। किञ्च- कृतमध्यबिलमित्यस्य कुत्रान्वय?, यदि खपदार्थेऽन्वयः तदा धृतगम्भीरखनीपदेन साकं वृत्या निष्पन्नस्य पुनर्विशेषणयोगः वृत्तस्य च वा विशेषणोयोगो नेति बाधितः। नचोक्तविशेषणस्य "देवदत्तस्य गुरुकुल"मितिवत् अन्यत्रान्वयानुपपत्तिः कृतमध्यबिलमित्यस्य इन्दुमण्डलं इत्येनाप्यन्वयेन कृतत्वात्। अतश्च कृतमध्यबिलमित्यस्य न धृतगम्भीरेत्येतदेकदेशे खेऽन्वयः इत्याशयेन अन्यादृशमन्वयं प्रदर्श्य निमित्ततां आविष्करोति-**कलङ्काध्यवसितेति।**

**अस्यायमभिप्रायः** इन्दुमण्डले यःकलङ्कः स नीलः आकाशोऽपि नील इति कलङ्केऽध्यवसितं यत् धृतमध्यरन्ध्राकाशनैल्यं तन्निमित्तीकृत्य कृतमध्यबिलत्वेन संभाव्यमाना या गम्योत्प्रेक्षा तां निमित्तीकृत्य वा इन्दुमण्डलं हृतसारत्वेनोत्प्रेक्षितमिति। अस्यां योजनायां तादृशनैल्यस्य निमित्तकोटिप्रविष्टत्वं

## तत्त्वालोकः-

कृतमध्यबिलत्वस्यैव इन्दुमण्डले हृतसारत्वोत्प्रेक्षायां साक्षान्निमित्तत्वम्। इत्थं च कृतमध्यबिलमित्यस्य नैकदेशान्वयप्रसरप्रसक्तिः, एवं चाप्रकृतमेव चन्द्रमण्डलं हृतसारतयोत्प्रेक्षितम्। नतु प्रकृतं दमयन्तीवदनम्।

एवंचोपपादितरीत्या वेधसा दमयन्तीवदनाय इन्दुमण्डलंधृतगम्भीरखनीखनीलिम कृतमध्यबिलं हृतसारमिव विलोक्यत इत्यन्वयः। अतिशयोक्त्युत्प्रेक्षाङ्कोत्प्रेक्षेत्येतावतोक्तं भवति।

एतेन- चन्द्रे परिदृश्यमानः कलङ्को न भवति अपि तु खनीलिमेत्यपह्नुतिरत्रेति अभिधानं चिन्त्यम्। यतश्चापह्नुतौ उपमेयनिषेधस्य उपमानारोपस्यच तच्छरीरानुप्रविष्टत्वात्।अनयोरु पमानारोपस्य वाच्यत्वेऽपि विषयनिषेधस्यावाच्यत्वात्। अत एव- "नायं सुधांशुः किं तर्हि व्योमगंगाम्भोरुहम्।" इत्यादावपह्नुतित्वम् नान्यत्र अन्यथा रूपकेषु अपह्नुतित्वप्रसंगात्। अतएव अपह्नुतिलक्षणे "प्रकृतस्य निषेधेने"ति विशेषणोपादानं प्राचीनैरपि क्रियते। अत्र च कलंके कलंकत्वनिषेधसामानाधिकरण्येन निषेधाभावात् तादृशनीलिम्नः आरोपे सत्यपि नापह्नुतित्वमिति ग्रन्थकृदाशयात्।

किंच- **प्राचीनमतेऽपि** -अपह्नुतेरारोपमूलत्वमुपगतम् तद्यथा- **दण्डिनोक्तम्-**

अपह्नुतिरपह्नुत्य किंचिदन्यार्थरोपणम्।
अमृतसम्यन्दिकिरणः चन्द्रमा नामतो मतः॥
अन्य एवायमर्कात्मा विषनिष्यन्ददीधितिः।
इति चन्द्रत्वमेवेन्दौ निवर्त्यार्थान्तरात्मना॥
उक्ता स्मरार्तेनेत्येषा स्वरूपापह्नुति र्मता। इति

एतेन विषयनिषेधः अपेक्षित इति तदभिप्रायात्। अतोनात्र अपन्हुतेः प्रसक्तिः इति दिक्।

**नन्वत्र-** दमयन्तीवदननिर्माणाय इन्दुमण्डले हृतसारत्वेनोत्प्रेक्षितेऽपि दमयन्तीवदनमेव इन्दुसारांशनिर्मितमिति पर्यन्तप्रतीतेरवार्यत्वेन पार्यन्तिक प्रतीतिमनुरुध्य दमयन्तीवदनमेव हृतसारत्वेव उत्प्रेक्षितं भवति अतो नाव्याप्तेः

**चित्रमीमांसा-**

**यद्बालेन्दुकलोच्चयादुपचितैः सारैरिवोत्पादितं**

**तत्पश्येयमनङ्ग मङ्गलगृहं भूयोऽपि तस्या मुखम्॥**

**इत्यत्रैव तथा शब्दान्वयाभावात्।**

तत्त्वालोकः-

प्रसक्तिरिति चेत्तत्राह-**यद्बालेन्द्विति।**

सम्भूयेव सुखानि चेतसिपरं भूमानमातन्वते,
यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवम्।

इति पूर्वार्धं, इदंच मालतीदर्शनोद्देशेन महामांसविक्रयार्थं प्रवृत्तेन माधवेनोक्तम्।

माधवःएवमाशंसते-सा मालती नाङ्कप्राप्या परन्तु तद्दर्शनं वा मम भूयात् तस्य संभावितत्वादिति। तदेव प्रार्थयते- **सम्भूयेवेति।**

अत्रायमन्वयः-यत्र आलोकपथावतारिणि सति यावन्ति सुखानि सन्ति तावन्ति संभूयेव चेतसि परं भूमानमातन्वते, तथा द्रष्टुः नेत्रोत्सवं रतिं प्रस्तौति, किंच यत् बालेन्दुकलोच्चयात् उपचितैः सारैः उत्पादितमिव तत् अनङ्गमङ्गलगृहं तस्याः मुखं भूयोऽपि पश्येयम् इति॥

यत्र प्रियतमायाः मालत्याः मुखे, आलोकपथावतारिणि संमुखीभूते, लोके यावन्ति सुखानि यावन्ति सुखसाधनानि सन्ति, तावन्ति सम्भूयेव एकीभूयेव-राशीभूयेव, परंनिरतिशयम्, भूमानम्- अन्योन्यसमागमजन्यं बहुत्वम्, आधिक्यम् आतन्वते चित्ते विस्तारयन्ति, अनेनान्तःप्रीतिरभिव्यक्ता। तथा द्रष्टुः नेत्रयोः उत्सवं-अलब्धलाभाभिमानरूपां रतिम्- अनुरागम्, इच्छाविशेषात्मिकां श्रृङ्गाररस्थायिनीं चित्तवृत्तिं प्रस्तौति = उत्पादयति। "रतिरिच्छाभवेद्यूनोरुभयप्रार्थनात्मिका।" इत्युक्ता रतिः। दर्शनमात्रेणैव अनवधिकानन्दः रतिश्च नायिकाभिलाषरूपा भवतीत्यर्थः। अनेन बाह्य प्रीतिरुक्ता। किंच यत्सुखम् बालेन्दोः अकलंकतासौम्यत्वाभ्यां मनोहरस्य अष्टमीचन्द्रस्य, कलानां प्रतिमासं एकैकशोऽभिवृद्धानां भागानामुच्चयात् राशेःउपचितैःसंगृहीतैः, बालेन्दुकलो- दयादितिपाठे तु ल्यब्लोपे पंचमी

**चित्रमीमांसा-**

**ननु यथा शब्दतोऽन्वयाभावेऽपि 'ब्राह्मणशतं भोज्यताम्' इत्यत्र प्रधानमतिलंध्य उपसर्जने क्रियान्वयपर्यवसानम्, संख्याया: भोजनान्वयायोग्यत्वात्, तथेहापि प्रधानम् इन्दुमण्डलमतिलङ्घ्य उपसर्जने दमयन्तीवदने इन्दुमण्डलाहृतसारांशनिर्मितत्वोत्प्रेक्षाया: पर्यवसानं स्यात्, अप्रकृतस्यावर्णनीयत्वात् इति चेत्,**

तत्त्वालोकः-

"प्रासादात्प्रेक्षते" इतिवत्, बालेन्दुकलोदयमारभ्य पूर्णिमापर्यन्तं उपचितैः सारैः श्रेष्ठांशैः, उत्पादितमिवेत्युत्प्रेक्षा। तत् निरतिशयाह्लादहेतुत्वेन नैर्मल्यप्रसादगुणयोगाच्च विलक्षणम्, अनङ्गस्य कामदेवस्य मङ्गलगृहं त्रिभुवनविजयप्राप्तेः आश्रयीभूतहेतुतां प्राप्तम्, यद्वा- अनङ्गस्य मङ्गलगृहं मङ्गलेन सुवर्णेन घटितं गृहं "कल्याणं मङ्गलंविद्यात् काञ्चनंचेति विश्वकोशात्। यद्वा- अनङ्गस्य मङ्गलानां अभिवृद्धिहेतूनां सौकुमार्यादीनां गृहं आश्रयम्। तस्याः मालत्याः मुखं भूयोऽपि पश्येयं इत्येतदेव प्रार्थये। तदङ्कप्राप्तेर्दुर्लभत्वादिति भावः। पुण्यपरिपाकवशात् दर्शनमपिवा तावदस्तु, तावतापिचरितार्थो भवेयमिति माधवस्याभिलाषः।

अत्र यथा शब्दतःमालत्याः वदनं बालेन्दुकलोच्चयोपचितसारांश-निर्मितत्वेनोत्प्रेक्षितं तथात्र " **ब्राह्मणशतभोजनन्यायेनाप्रधानएव** सम्भाव्यमानान्वयो युक्त इति चेत् उक्तन्यायस्यैतादृशस्थले अप्रसक्तिः वैषम्यादिति प्रति पादयितुमाशङ्कते **नन्विति**।

अयमभिसन्धिः "ब्राह्मणशतं भोज्यताम्" इत्यत्र ब्राह्मणानांशतमिति षष्ठीतत्पुरुषे सति उत्तरपदार्थप्राधान्यानुरोधेना शतसंख्यायाः प्राधान्यावगमात् तस्या ममूर्तरूपायां क्रियान्वयस्यानुपपद्यमानत्वेन तद्विशेषणे ब्राह्मणरूपेऽर्थे भोजनक्रियायाः सम्बन्धस्य पर्यवसानमिव अत्रापि इन्दुमण्डले हृतसारांशत्वसंभावनाया अप्रकृतत्वेन कल्पयितुमयुक्तत्वात् प्रधानमिन्दुमण्डल - मतिलंध्य तद्विशेषणे दमयन्तीवदने

**चित्रमीमांसा-**

**न। अप्रकृतवर्णनस्यापिअप्रस्तुतप्रशंसारूपेण प्रकृताति-शयाधानार्थतया अन्वेतुं योग्यत्वात्।**

**न च वाच्यम् ''इन्दुर्लिप्त इव ''इत्यप्रस्तुतप्रशंसोदाहरणान्तर इव अत्रापि सम्भावनामात्रमेव नोत्प्रेक्षेति।**

तत्त्वालोकः-

तादृशसारांशाहृतत्वोत्प्रेक्षायां पर्यवसानं भवत्विति।

तन्निराकरोति-**नेति। अप्रकृतेति।** अप्राकरिणिकस्यापि इन्दुमण्डले हृतसारांशत्ववर्णनस्येत्यर्थः अप्रस्तुतप्रशंसारूपेण गम्यमानेन वाच्येन वा अप्रस्तुतेन वाच्यं गम्यमानं वा प्रस्तुतं यत्र प्रशस्यते उपस्क्रियते सा अप्रस्तुतप्रशंसेति व्युत्पत्त्या प्रकृतातिशयाधायकाप्रकृतार्थरूपेणेत्यर्थः तस्यैव तद्रूपत्वात्। अप्रकृतार्थस्य नात्यन्ताप्रकृतत्वम्, अप्रकृतत्वं च मुख्यतात्पर्याविषयत्वरूपमेव इत्थंच प्रकृतातिशयाधायकाप्रकृतार्थस्य अयोग्यता वक्तुं न शक्येति" ब्राह्मण शतभोजनन्यायस्य" नात्र प्रसक्तिरिति भावः।

**एतेन** प्रधानमिन्दुमण्डलमतिलंघ्य विशेषणे दमयन्तीवदनं इन्दुमण्डल-सारांशहरणरूपकारणं यद्वाच्यं तत् प्रकृतं दमयन्तीवदन गतलोकोत्तरसौन्दर्यरूपं कार्यं व्यनक्तीति। अप्रस्तुत-प्रस्तुतयोः कार्यकारणभावसम्बन्धमूलिका **अप्रस्तुतप्रशंसा।** हृतसारांशतया इन्दुमण्डलादपि दमयन्तीवदनं अतिरिक्तमिति **व्यतिरेको** ध्वन्यते।

अत्र- "इन्दुर्लिप्त इवे"ति पूर्वोदाहृतपद्ये यथा अप्रकृतेषु इन्द्वादिषु अञ्जनलेपनादिनिकर्षसंभावना कृता तद्वत् अत्रापि इन्दुमण्डले सारांशहरणं संभावितमिति उभयोरपि तुल्ययोगक्षेमत्वमिति काव्यामिरित्याशंकते- **नचेति।**

**एतेनात्र-** नापह्नुतिः अपि तु अप्रस्तुतप्रशंसेति सूचितं भवति,

**चित्रमीमांसा-**

**तत्र सहृदयहृदयाह्लादिनिमित्ताभावेनोत्प्रेक्षासामग्री परिपूर्त्यभावात् उत्प्रेक्षाया असंभवेऽपि अत्र तत्संभवात् अप्रस्तुतप्रशंसया संकरोपपत्तेः।**

तत्त्वालोकः-

"इन्दुर्लिप्त इवाञ्जनेन "इति पद्यमपेक्ष्य- हृतसारमिति पद्ये वैलक्षण्यं प्रतिपाद्य अव्याप्तिं द्रढयति- तत्रेति।

तत्र- "इन्दुर्लिप्त इवेति" पद्ये, सहृदयहृदयाह्लादिनिमित्ताभावेन =काव्यभावनापरिपक्वबुद्धीनां चमत्कारजनकस्य निमित्तस्य उत्प्रेक्षाप्रयोजकस्य अभावेन अप्रतीत्येत्येकं व्यावर्तकम्।

अपरमप्याह- **उत्प्रेक्षासामग्रीति।** अप्रकृततादात्म्यसंभावनोपयोगिनोऽप्रकृत विशेषणोपादानस्य च असम्भवेऽपि अपिर्वैलक्षण्यद्योतकः। अत्र हृतसारमिति पद्ये। तत्सम्भवात् तस्य निमित्तस्य चमत्कारिणः अप्रकृतविशेषणस्य च सम्भवादित्यर्थः। कृतमध्यरन्ध्राकाशनैल्यनिमित्तत्वेनाध्यवसितकलंकवत्वस्य कलंकाध्यवसित-धृतमध्यरन्ध्राकाशनैल्यनिमित्तोत्प्रेक्षित कृतमध्यबिलत्वस्य वा चमत्कारिणः उत्प्रेक्षानिमित्तस्य, इन्दुमण्डले कृतमध्यबिलत्वस्य धृतगम्भीर खनीखनीलिमेति विशेषणाधिक्यं च कविनोपादानादुत्प्रेक्षासामग्रीपरिपूर्तिरस्तीति उत्प्रेक्षात्वं युज्यते। "इन्दुर्लिप्त इवेति" पद्ये तु सीतावदनसन्निधानं यद्यपि अन्यधर्मःतथापि इन्द्वादौ अञ्जनलिप्तत्वादिसंभावनायां तस्य अप्रयोजकत्वात्, सीतावदनसन्निधानस्य अचमत्कारित्वाद्वा उत्प्रेक्षात्वं न युज्यते इति भावः।

**यद्यपि**- "इन्दुर्लिप्त इवे"ति पद्ये अतिव्याप्तिः प्रकृतमित्युपादाय वारिता। अत्र तु उक्तपद्य एव निमित्ताभावात्सामग्रीपरिपूर्त्यभावादुत्प्रेक्षाऽसम्भव एव निरूपितः इति विरुद्धाभिधानमिति चोद्यम्।

**तथापि**- सारूप्यनिबन्धनाप्रस्तुतप्रशंसाव्यतिरिक्तकार्यकारणभावादिनि-बन्धनासु चतसृषु अभिधीयमानप्रतीयमानयोःकार्यकारणभावादिमुखेनोपनिबन्धने-

**चित्रमीमांसा-**

**तस्मादव्याप्तत्वात् नेदं लक्षणं युक्तमिति चेत्,**

**अत्र ब्रूमः।**

तत्त्वालोकः

सति कार्यकारणयोस्तादात्म्याङ्गी-कारानुरोधेन कार्यस्य प्राधान्ये कारणस्यापि प्राधान्यम्। अप्रस्तुतत्वंच मुरव्यतात्पर्य-विषयीभूतार्थातिरिक्तत्वम् न तु सर्वात्मनाऽप्राकरणिकत्वमिति प्रतिपादयतो **ध्वनिकृतो** मतमाश्रित्यैवमुक्तमिति विरोधाभावादित्यवधेयम्॥

**अप्रस्तुतेति-** अत्रातिशयोक्त्युत्प्रेक्षानुप्राणिता अप्रस्तुतप्रशंसा, व्यतिरेकध्वनिश्चेति भावः। **एतेन**-अपह्नुत्युत्प्रेक्षयोस्सांकर्यं उपमाध्वनिं चोपपादितवतां **मल्लिनाथप्रभृतीनां** मतं न उचितमिति व्यञ्जितं भवति एवं चोक्तलक्षणे प्रकृतपदोपदानादप्रकृतधर्मिकोत्प्रेक्षायां अव्याप्तिर्दुर्वारेति **पूर्वपक्षः**। एवंपूर्वपक्षमुपन्यस्योपसंहरति **तस्मादिति**।

पूर्वोक्तलक्षण एव प्रकृतपदस्य प्राकरणिकार्थत्वविवक्षां, अन्यत्वनेत्यस्य वस्त्वन्तररूपत्वेनेत्यर्थ विवक्षां चाश्रित्य प्राप्ताम् अव्याप्तिं परिहर्तुं उपक्रमते-**अत्र ब्रूम इति**। समाधानमितिशेषः। "हृतसारमिव" इत्यादौ अव्याप्तिं परिहरति-**न तावदिति**। **अयंभावः**- प्रकृतशब्दस्य प्राकरणिकार्थकत्वे खलुअव्याप्तेः प्रसक्तिः नह्यालंकारिकाः प्रकृतशब्दं प्राकरणिकार्थे एव प्रयुञ्जते, किन्तु विषयार्थकत्वेऽपि, तथान्यत्र तद्दर्शनात्। यथा "प्रकृतं यन्निषिध्यान्यत्", 'निगीर्याध्यवसानं तु प्रकृतस्य समेन यत्" इत्यादौ **प्रकाशकारादिभिः**। तद्व्यारव्यातृभिः **प्रदीपकारादिभिश्च** प्रकृतशब्दस्योपमेयपरतया व्यारव्यानात्। उक्तं च **काव्यप्रदीपे**-"प्रकृतमुपमेयं निषिध्य" इत्यपह्नुतौ, प्रकृतस्य उपमेयस्य समेन उपमानेनेति **अतिशयोक्तौ** च। एवं च यत्रान्यधर्मेति लक्षणघटकः प्रकृतशब्दः प्राकरणिक-प्राकारणिकोभय-साधारणविषयमात्र परइति "हृतसारम्" इति पद्ये इन्दुमण्डलस्य अप्राकरणिकत्वमिति पक्षेऽपि संभाव्यमानहृत-सारत्वाधिकरणत्वं नापह्नुतमिति अव्याप्तेरभावादिति।

**चित्रमीमांसा-**

**न तावत्-"हृतसारम् इत्यादावव्याप्तिः। प्रकृतशब्दस्य विषयत्वाभिमतपरत्वात्। नचैवं "इन्दुर्लिप्तइव" इत्यादावतिव्याप्तिः। तत्र सीतावदनसन्निधाने वस्तुतोऽन्यधर्मत्वे सत्यपि इन्दुगताञ्जनलिप्तत्वसंभावनायामन्यधर्मत्वस्य अप्रयोजकत्वात्।**

तत्त्वालोकः

यद्युक्तरीत्या प्रकृतशब्दस्य विषयपरत्वं तदा अव्याप्तिपरिहारे कृतेपि यदर्थं प्रकृतपदमुपात्तं सा अतिव्याप्तिः तदवस्थैवेत्याशंक्य परिहरति- **नचैवमिति**।

अयमभिप्रायः-'इन्दुर्लिप्त इव' इत्यादौ सीतावदनादेः प्रकृतत्वम्, तत्र किमपि न सम्भाव्यते, अपि तु उपमानभूते चन्द्रादौ अप्रकृत एव अञ्जनलेपनादिसम्भावना क्रियत इति प्रकृतेऽप्रकृतसम्भावनायाः अप्रसक्तिरिति पूर्वोक्तरीत्या अतिव्याप्तिः न स्यात्। विषयपरत्वे तु अप्रकृतेष्विन्द्वादिषु अञ्जनलेपनादिसम्भावनायां विषयत्वमस्त्येवेति अतिव्याप्तिस्स्यादेवेति चेत्,

उच्यते; न हि प्रकृते अप्रकृततादात्म्यसंभावनामात्रम् उत्प्रेक्षायाश्शरीरेऽनुप्रविष्टम्, अपि तु अन्यधर्मसम्बन्धोऽपि प्रविष्टः न चात्र सीतावदनसन्निधानं उत्प्रेक्षायां प्रयोजकम्, धर्मोत्प्रेक्षासु सर्वत्र विषयधर्मस्यैव निमित्तत्वमिति वक्ष्यमाणरीत्याअञ्जनलिप्तार्थान्तरवृत्तिश्यामत्वस्य इन्दुरूपविषयवृत्ति कलङ्कत्वस्य च भेदेऽपि अभेदाध्यवसायेन निमित्तत्वमिति उक्तधर्मस्यैव प्रयोजकत्वात् नोत्प्रेक्षात्वम् इति।

अत्रेव यदि सीतावदनादिसन्निधानं न स्यात्तदा इन्द्वादि नाञ्जलिप्तत्वादिना संभाव्येत, संभाव्यतेचैवं, तथासति सीतावदनादिसन्निधानमपि कालिकदैशिकादिसम्बन्धेन निमित्ततां भजतइत्यतिव्याप्तिरापाद्यते तदा अन्यधर्मः चमत्कारकारी विवक्षितः। "इन्दुर्लिप्त इवे"त्यत्रतु सीतावदनादिसन्निधानं नचमत्कारकारीत्यतिव्याप्तेरभावात्।

## चित्रमीमांसा-

**धर्मस्य सहृदयहृदयाह्लादिनो विवक्षितत्वाद्वा। अन्यत्वेनेत्यस्य अन्येन प्रकारेण इत्यर्थ इति न हेतु-फल-धर्मस्वरूपोत्प्रेक्षासु अव्याप्तिः। यत्र धर्मिणि धर्म्यन्तरं तादात्म्येनोत्प्रेक्ष्यते तत्र धर्म्यन्तरमन्यः प्रकारः। यत्र तु कश्चिद्धर्म एव किञ्चित्प्रति हेतुतया, फलतया, स्वरूपेण चोत्प्रेक्ष्यते तत्र स एव धर्मोऽन्यःप्रकार इति सर्वत्राप्यनुगतेः।**

## तत्त्वालोकः-

सीतावदनादिसन्निधानेन अञ्जनलिप्तत्वादीनाम प्रस्तुतप्रशंसाविधया सीतावदनगतसौन्दर्यातिशयप्रतीति प्रयोजकत्वमिति मनसि निधाय कल्पान्तरमुपादत्ते- **धर्मस्येत्यादिना।**

एवं 'हृतसारम्' इत्यादावप्रकृतधर्मिकोत्प्रेक्षायामव्याप्तिं परिहृत्य- हेतु-फल-धर्मोत्प्रेक्षासु "सैषा स्थली," चोलस्य यत्, "पिनष्टीव" इत्यत्र अव्याप्तिं परिहर्तुकामः 'अन्यत्वेनेत्यस्य धर्म्यन्तररूपत्वेनेत्यर्थपरतां परित्यज्य अन्यशब्दाद्विहितो भावप्रत्ययो प्रकारमभिधत्त इति अन्यत्वेवेत्यस्य अन्येन प्रकारेणेत्यर्थकरणेऽव्याप्तिः न प्रसज्यत इत्याह-**अन्यत्वेनेत्यस्येति।**

स्वरूपोत्प्रेक्षा- धर्म्युत्प्रेक्षा, धर्मोत्प्रेक्षा चेति द्विधा। तयोः धर्मिणि धर्म्यन्तरं यत्रोत्प्रेक्ष्यते तादात्म्येन तत्र धर्म्यन्तरमेवान्यः प्रकारः अन्यत्वेनेति पदग्राह्यः इत्याह- **यत्रेति।** यथा-"बालेन्दुवक्राणि" इत्यादौ पलाशकुसुमादिरूपे धर्मिणि, नखक्षतरूपे धर्म्यन्तरे तादात्म्येनोत्प्रेक्ष्यमाणे नखक्षतमेवान्यः प्रकारः। नीलघटइत्यादौ घटादौ नीलादिरिव।

धर्मिणि धर्मसंसर्गस्योत्प्रेक्षा त्रेधा- धर्मस्वरूपेत्प्रेक्षा- हेतूत्प्रेक्षा फलोत्प्रेक्षा चेति अत्र सर्वत्र यःधर्मः हेतुफलव्यतिरिक्ताकारेण हेतुफलाकारेण चोत्प्रेक्ष्यते तत्र स्वरूपस्य हेतोःफलस्यच स्वाकारेणैव प्रकारत्वमित्यव्याप्तेर्वारणादित्याह- **यत्रत्विति।**

## चित्रमीमांसा-

### यद्वा-हेतु-फल-धर्मस्वरूपोदाहरणेष्वपि तादात्म्येनैवोत्प्रेक्षा।।

## तत्त्वालोकः-

यथा-"सैषा स्थली" इत्युदाहरणे नूपुरे विषये विश्लेषदुःखमेव दुःखिसाधारणेन मौनित्वेन निमित्तेन हेतुतयोत्प्रेक्ष्यते। तत्र हेतुभूतं तादृशं दुःखमेव प्रकारः।

एवं "चोलस्य यत्" इत्युदाहरणे द्रुमेषु विषयेषु ललाटाक्षरदर्शन प्रवृत्तपुरुषसाधारणभालत्वग्विपाटनं निमित्तीकृत्य फालाक्षरदर्शनं धर्म एव तादृशविपाटनं प्रति फलतयोत्प्रेक्ष्यत इति तत्र ललाटाक्षरदर्शनमेवान्यः प्रकारः।

तथा-'पिनष्टीव' इत्यादौ समुद्रचन्द्रयोः पेषणलेपनरूपो धर्म एव स्वरूपेणोत्प्रेक्ष्यत इति पेषणलेपनयोः प्रकारत्वमिति धर्मिधर्मस्वरूप हेतु-फलोत्प्रेक्षासु अन्यत्वमनुवृत्तं प्रकारः उपलभ्यत इति न क्वाप्यव्याप्तेरवकाश इति भावः।

एतेन धर्मिणि तादात्म्येन धर्म्यन्तरोत्प्रेक्षा, धर्मिणि धर्मसंसर्गोत्प्रेक्षेति उत्प्रेक्षायां द्वैविध्यं ब्रुवतां सर्वस्वकारादीनां अर्वाचामनुरोधेन विषयिनिष्ठतत्समाना-धिकरणान्यतरधर्मसम्बन्धप्रयुक्तविषयधर्मिकविषयिविधेयकमाहार्यसंभावनमुत्प्रेक्षेति फलति एवंच न क्वाप्यव्याप्त्यादीनामवकाशः।

इत्थमर्वाचां सर्वस्वकारादीनामनुरोधेन विद्यानाथलक्षणं परिष्कृत्य तत्रापि अननुगमं गौरवंच मनसि निधाय कल्पान्तरमुपादत्ते- **यद्वेति।**

**अयंभावः** सर्वस्वकारादयः स्वरूपोत्प्रेक्षायां तादात्म्योत्प्रेक्षा, संसर्गोत्प्रेक्षा चेति यद्यपि अभ्युपगच्छन्ति, तथापि, लिम्पतीव' इत्यादौ, तमोनभःप्रभृतीनां द्विवारं कर्तृत्वेन विषयत्वेन चान्वयक्लेशः। तथा धर्म्युत्प्रेक्षायास्सादृश्यसम्बन्धप्रयुक्तता, धर्मोत्प्रेक्षायास्तु तत्सहचरितधर्मसम्बन्धप्रयुक्ततेति लक्षणाननुगमः। अन्यतरत्वघटितलक्षणकरणेन अननुगमस्य परिहारेऽपि सर्वत्र एकरूपेण सादृश्यनिमित्ताया एवोत्प्रेक्षायास्सम्भवे अन्यतरत्वादिघटितलक्षणकरण-प्रयुक्तज्ञानगौरवस्यानुपादेयत्वात्।

## चित्रमीमांसा-

**तथाहि-**

**''सैषा स्थली यत्र विचिन्वता त्वाम्,'''' चोलस्य यद्भीति पलायितस्य,''इत्यादि हेतु फलोत्प्रेक्षोदाहरणयोस्तद्विश्लेषदुःख-ललाटाक्षरदर्शनादि धर्मः हेतुतया फलतया नोत्प्रेक्ष्यते। किन्तु नूपुरद्रुमादिधर्मिकं यन्निश्चलत्व, कण्टकसंश्लेषादि निमित्तकं मौनव्यापाटनादिकं तदेवदुः खहेतुकमौनललाटाक्षर दर्शनाथ-'व्यापाटनादि तादात्म्येनोत्प्रेक्ष्यते।।**

## तत्त्वालोकः-

किंच -प्रथमान्तार्थमुरव्यविशेष्यकबोधवादिनां **नैयायिकानां** अनुरोधेऽपि न निस्तारः यतः प्रथमान्तार्थे तमसि,नभसिच लेपनकर्तृत्व-वर्षणकर्तृत्वयोः उत्प्रेक्षितुं शक्यत्वात् आरव्यातार्थाश्रयांशे प्रथमान्तार्थविशेषणीभूते एकत्र विशेषणत्वेन अन्वितस्य अन्यत्र अन्वयस्य अव्युत्पन्नत्वेन इवार्थविशेष्यतया अन्वयायोगात्। अतश्चसर्वत्रा-भेदेनैवोत्प्रेक्षेति पक्षः लक्षणानुगमलाघवाभ्यां युक्ततर इति। एवं तर्हि हेतु-फलोत्प्रेक्षासु उत्प्रेक्षाप्रकारः क इत्याशंकायां तदुपपादनप्रकारमेवाह- **तथाहीति**।

**अयं भावः**-''सैषा स्थली ''इति पद्यं **सर्वस्वकृता** गुणोत्प्रेक्षायामुदाहृतम्, उपपादितं च ''अत्र दुःखं गुण इति, तेनैवोत्तरत्र'' हेतूत्प्रेक्षा यथा-''विश्लेषदुःखादिव बद्धमौनम्'' इत्यादौ इत्युक्तम्। तथा हेतु-फल-स्वरूपोत्प्रेक्षाणां स्वरूपं प्रदर्शयता तेनैव-हेतूत्प्रेक्षायां यस्य प्रकृतसम्बन्धिनो धर्मस्य हेतुरुत्प्रेक्ष्यते स धर्मोऽध्यवसायवशादभिन्न उत्प्रेक्षायां निमित्तत्वेनाश्रीयते इत्युक्तम्। एवं च एतदनुसारेणोक्तोदाहरणे नूपुरगतस्य मौनित्वस्य हेतुत्वेन दुःखं गुण उत्प्रेक्ष्यते। तत्र मौनित्वमेव नूपुरगतनिश्शब्दत्वाभेदेना ध्यवसितं निमित्तमित्युक्तं भवति। तथाच नूपुरगतनिश्शब्दत्वा भेदेनाध्यवसितं मौनित्वं निमित्तीकृत्य नूपुरे हेतुत्वेन दुःखरूपोगुणः (धर्मः) उत्प्रेक्ष्यतइति नाभ्युपगम्यते। किन्तु नूपुरे निश्चलत्वनिमित्तके मौने

**चित्रमीमांसा-**

**अवश्यं च द्विविधस्यापि मौनादेःतादात्म्येनाध्यवसायः आस्थेयः, अन्यथा निश्चलत्वादिहेतुके स्वाभाविकमौनादौ दुःखादेः हेतुत्वादिना उत्प्रेक्षणमसमञ्जसं स्यात्।**

तत्त्वालोकः-

दुःखहेतुकमौनं तादात्म्येनोत्प्रेक्ष्यते, एवं "चोलस्य यद्भीतिपलायितस्य" इत्यत्रापि द्रुमादिषु भालत्वग्विपाटनहेतुः ललाटाक्षरदर्शनमेव नोत्प्रेक्ष्यते, किन्तु कण्टकजन्यविपाटने ललाटाक्षरदर्शनहेतुकत्वग्विपाटनं तादात्म्येनोत्प्रेक्ष्यत इति।

**यद्यत्र-** सर्वस्वकारोक्तरीत्या नूपुरद्रुमादौ विश्लेषदुःखललाटाक्षर-दर्शनादेरुत्प्रेक्ष्यत्वे द्विविधमौनव्यापाटनादीनामभेदमध्यवस्य दुःखि-ललाटाक्षरदर्शनप्रवृत्तपुरुषसाधारण्यसम्पादेनन निमित्तत्वं सम्पादयितुं शक्यम्, प्रकाशकाराद्यनुरोधेन तादात्म्योत्प्रेक्षोपगमे दुःखहेतुकमौनस्य, ललाटाक्षरदर्शनार्थव्यापाटनस्य च विषयिणः उपादानेऽपि विषयस्य निश्चलत्वहेतुकमौनस्य, व्यापाटनस्य च अनुपादानादुत्प्रेक्षाधिकरणस्यैवाभावे उत्प्रेक्षापि कथं कर्तुं शक्या इत्याशङ्कामपनुदति-**अवश्यंचेति**।

एवं चातिशयोक्तिवत् विषयभूतं मौनव्यापाटनादिकं विषयिवाचकमौन-व्यापाटनादिपदेनैव क्रोडीकृतमिति अनुपात्ते विषये मौनादौ उपात्तमौनादिविषयितादात्म्यं संभाव्यत इत्यदोषात्।

**यदि तु-** उत्प्रेक्षायामध्यवसायो नाभ्युपगम्यत इत्युच्यते तदा नूपुरादौ दुःखादिर्गुणः हेतुत्वेनोत्प्रेक्ष्यत इति वदतां मतेऽपि निमित्तस्य विषय-विषयि भेदाद्भिन्नत्वेन उभयसाधारण्याभावात् तथोत्प्रेक्षणमसमञ्जसं स्यादिति प्रतिबन्द्या उत्तरयति-**अन्यथेति**।

अतश्च निमित्तांशेऽभेदाध्यवसायः, धर्मोत्प्रेक्षायां सम्बन्धान्तरेणेति वदद्भिः अवश्यमास्थेयः। इत्थं सति उत्प्रेक्षायां निमित्तांशे विषयांशे वा अध्यवसायोऽस्तु कोऽत्र प्रतिबन्धः। एतेन निमित्तांश एवोत्प्रेक्षणमभेदेनेति फलति। निमित्तांशे

**चित्रमीमांसा-**

**अङ्गीकृतश्च-" सैषा स्थली" इत्यादौ दुःखादि धर्म एव मौनादिहेतुतया नूपुराद्विगतत्वेनोत्प्रेक्ष्यत इति वदताप्यलंकार-सर्वस्वकृता द्विविधस्य मौनादेः अभेदाध्यवसायः।**

**हेतूत्प्रेक्षायां यस्य प्रकृतसम्बन्धिनो धर्मस्य हेतुः उत्प्रेक्ष्यते स धर्मोऽध्यवसायवशादभिन्नः उत्प्रेक्षानिमित्तत्वेनाश्रीयते 'इत्याादि तद्वचनात्।**

तत्त्वालोकः-

अभेदाध्यवसायःसर्वस्वकृता अङ्गीकृत एवेतिउक्तार्थे उपष्टम्भकतया तदभिप्रायमनुवदति- **अङ्गीकृतश्चेति।**

**ननु-** "सैषा स्थली" इत्यत्र दुःखादेः धर्मस्योत्प्रेक्षणोक्त्या निमित्तयोर्द्वयोरभेदाध्यवसायोऽभ्युपगत इति तदभिप्रायवर्णनं कथं युज्यत इत्याशंकायां तदीयग्रन्थमेववानुवदति- **हेत्विति।** हेतूत्प्रेक्षायाम्-"विश्लेषदुःखादिव" इत्यादौ,प्रकृतसंबन्धिनः= नूपुरसम्बन्धिनः यस्य धर्मस्य बद्धमौनित्वस्य हेतुःकारणं दुःखमुत्प्रेक्ष्यते संभाव्यते, स धर्मः मौनित्वम्, अध्यवसायवशात् भेदेऽप्यभेद इत्येवंरूपाहार्यनिश्चयाश्रयणात्, अभिन्नः अप्रकृतपदार्थसम्बद्धेन असंचार-प्रयुक्तमौनरूपधर्मेण अभिन्नतया भासमानः,उत्प्रेक्षायां वस्तुतः अहेतौ हेतुत्वसम्भावनायां निमित्तत्वेनाश्रीयते विषयविषय्युभयानुगतत्वेनाश्रीयत इत्यर्थः।

**नन्वेवम्-** मौने मौनान्तरस्य, व्यपाटने व्यपाटनान्तरस्य वा उत्प्रेक्षणे स्वरूपोत्प्रेक्षायामेव पर्यवसानं स्यान्नपुनर्हेतूत्प्रेक्षायाम् इति चेदुत्तरत्र "उन्मेषमिति" पद्यव्यारव्यावसरे समाधास्यते।

**यद्यपि**-सैषा स्थली "इत्यादौ भेदेनोत्प्रेक्षणमपि शक्यं सिद्धत्वान्निमित्तांशस्य। क्वचिन्निमित्तस्यासिद्धत्वात् तदंशोऽध्यवसायमन्तरेण भेदेनाप्युत्प्रेक्षितुमशक्यमिति क्वचिन्निमित्तांशोऽध्यवसायस्याकामेनाऽप्युपगन्तव्यत्वे सर्वत्रैवाभेदेनोत्प्रेक्षा-मनुरुध्य

**चित्रमीमांसा-**

**आवश्यकंचान्यत्रापि क्वचित्क्वचित् हेतूत्प्रेक्षोदाहरणे निमित्तांशे तादात्म्याध्यवसायाश्रयणम्। यथा-**

**उन्मेषं यो मम न सहते जातवैरी निशायाम्**
**इन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः।**
**नीतः शान्तिं प्रसभमनया वक्त्रकान्त्येति हर्षा-**
**ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः।।**

तत्त्वालोकः-

अध्यवसायोऽभ्युपगम्यताम्, लक्षणानुगमलाघवयोः सम्भवादिति निमित्तांशे तादात्म्याध्यवसायाश्रयणमावश्यकमिति प्रतिपादयति **आवश्यकंचान्यत्रापीति।**

अस्योदाहरणप्रदर्शनव्याजेन -''उन्मेषमिति''पद्ये पादयोः पद्मलक्ष्मीलगनस्य वास्तविकत्वमुपपादयतो **विद्याचक्रवर्तिनः** , पादशोभायां पद्मशोभा सम्भाव्यत इति वदतो **भट्टगोपालस्य** च मतमयुक्तमिति मनसि निधाय अन्यथोत्प्रेक्षामुपपादयितुं **प्रकाशकृ**दुदाहृतं पद्यमुद्धरति-**यथा-उन्मेषमिति।**

सौन्दर्यसारसर्वस्वायमानां नायिकां प्रति नायकस्योक्तिरियम्। हेललिततनु! ते पादयोः पद्मलक्ष्मीः हर्षात् लग्ना मन्ये। यतः मम जातिवैरी (चन्द्रः) यः निशायां(मम) उन्मेषं न सहते, तस्य इन्दोःसौन्दर्यदर्पः अनया इन्दीवरदलदृशा वक्त्रकान्त्या प्रसभं शान्तिं नीत इति (हर्षात् लग्ना मन्ये) इत्यनेनान्वयः।

हे ललिततनु-सुकुमाराङ्गविन्यासचतुरदेहसम्पन्ने। ते तव, पादयोः अधिकरणे सप्तमी। पद्मलक्ष्मीः कमलशोभा, (कर्त्री) हर्षात् सन्तोषाद्धेतोः, लग्ना इति मन्ये संभावयामि। तव पादयोःपद्मलक्ष्म्या समाश्रयणे हेतुः क इत्याह-**य इति।** यः सर्वाह्लादकत्वेन प्रसिद्धः इन्दुः मम कमलस्य जातिवैरी जन्मतो विरोधी सन् मम उन्मेषं विकासम् निशायां न सहते न मर्षयति, कान्तिमदातिरेकादिति भावः। तस्य तादृशाहंकारमत्तस्य इन्दोः, सौन्दर्यदर्पः सौन्दर्यगर्वः (यो मया उपशमं न नीत इति शेषः) अनया

**चित्रमीमांसा-**

**अत्र हेतुतया हर्षोत्प्रेक्षां प्रति तत्फलत्वाभिमतं पादयोः पद्मलक्ष्म्या लगनं निमित्तं वाच्यम्, तच्च सर्वथैवासिद्धम्। अतस्तत्र पादयोर्यः स्वाभाविकशोभासम्बन्धःस एव पद्मलक्ष्मीलगनत्वेनाध्यवसितो निमित्तमिति समर्थनीयम्॥**

तत्त्वालोकः-

इन्दोरप्यधिकतराह्लादकसौन्दर्यवत्तयाप्रसिद्धया, इन्दीवरदलदृशा नीलोत्पल-सदृशनेत्रया कर्त्र्या, वक्त्रकान्त्या मुखशोभामात्रेण करणेन,प्रसभं बलात्कारेण, शान्तिम्-उपशमं नीतः प्रापित इति (हर्षात् तव पादयोः लग्ना मन्ये) इत्यर्थः।

अत्र पद्मशोभा स्वयं चन्द्रं जेतुमशक्ता सती स्वसदृशकान्ति सौगन्ध्ययुतनायिकामुखेन स्वजन्मवैरिणश्चन्द्रस्य विजयमवगत्य हृष्टा सती स्वसदृशनायिकापादावशिश्रियदिति संभाव्यते। अत्र च धर्मिणि धर्मसंसर्गोत्प्रेक्षापक्षेऽपि धर्मस्य अन्यसम्बन्धो न सिध्यति। तथा लोकानुभवराहित्यात्। तस्मात् निमित्तांशेऽध्यवसायः आश्रयणीय इत्युपपादयति-**अत्रहेत्विति।**

**अयं भावः**-उक्तपद्ये **सर्वस्वकाराद्यनुरोधेन** लक्ष्मीरूपे विषये, पादयोः (पद्मलक्ष्म्याः) लगनं निमित्तीकृत्य हर्षः हेतुत्वेनोत्प्रेक्ष्यत इति वक्तव्यम्। हेतूत्प्रेक्षायां फलं निमित्तम् फलोत्प्रेक्षायां हेतुर्निमित्तमिति तेनैवोपगमात्। लक्ष्मीर्विषयः हर्षः विषयी, पद्मलक्ष्मीलगनं निमित्तमिति वाच्यम्। तत्र निमित्तस्य हर्षरूपविषयि-धर्मसमानाधिकरणधर्मस्य (पद्मलक्ष्मीलगनस्य) वास्तव हर्षाधिकरणचेतन-वृत्तितत्कार्यस्य लगनस्य पादयोर्वृत्तित्वेन लोकसिद्धत्वाभावात् असिद्धस्य (विषयावृत्तिनो धर्मस्य) उत्प्रेक्षानिमित्तत्वासम्भवादुत्प्रेक्षैव न स्यात्। अतश्च लक्ष्मीरूपविषयगतो यः शोभासम्बन्धः पादवृत्तिश्च यस्स्वाभाविक-शोभासम्बन्धः तज्जातीयः तयोरभेदमध्यवस्य विषयवृत्तित्वमपीति निमित्तत्वमिति समर्थनीयम्। इत्थं चासिद्धनिमित्तकोत्प्रेक्षास्थले उत्प्रेक्षात्वनिर्वाहार्थमभेदाध्यवसायोऽवस्याश्रयणीयः।

**चित्रमीमांसा-**

**एवं निमित्तांशे तादात्म्याध्यवसायावश्यंभावे तत्रैवोत्प्रेक्षा-विश्रान्तिरस्तु।**

तत्त्वालोकः-

एवंच लक्ष्मीरूपे विषये हर्षरूपो विषयी, हर्षरूपविषयिधर्माधि-करणचेतनवृत्तिलगनस्य पद्मलक्ष्मीलगनस्य च अभेदाध्यवसायात्निमित्तत्वमिति तादृशलगननिमित्तको हर्षःहेतुत्वेनोत्प्रेक्ष्यत इति फलति।

**एतेन**-''वास्तवं यदेतत्पादयोः पद्मलक्ष्मीलगनं, तस्य इन्दुसौन्दर्य-शमनरूपवैरनिर्यातनप्रभवो हर्षो हेतुत्वेनोत्प्रेक्ष्यते'' इति **विद्याचक्रवर्तिना** यदुक्तम् तदयुक्तं, पादयोः पद्मलक्ष्मीलगनस्यावास्तविकत्वात् इति ध्वन्यते।

एवम्- अत्र पादशोभायाः उपमेयभूतायाः उपमानभूतसौन्दर्यात्मना सम्भावनम्। सौन्दर्यं च गुणः। तत्र हर्षादित्युक्तो गुणएवनिमित्तम्'' इति **यद्भट्टगोपालेन** उक्तं तदयुक्तम्, पादशोभायां पद्मशोभातादात्म्यस्य निमित्तकोटि प्रविष्टत्वेन अत्रानुत्प्रेक्ष्यत्वात्। अतश्च विषयविषय्याश्रयसाधारण्यसम्पादनाय भेदेऽप्यंभेद इत्येवंरूपा अतिशयोक्तिरेव समाश्रयणीया न पुनस्सम्भावना हर्षस्यैवोत्प्रेक्ष्यत्वेन तस्यैव निमित्तत्वोक्तेः अयुक्तत्वाच्चेत्यपि ध्वन्यते।

इत्थं **-सर्वस्वकाराद्यनुरोधेन धर्मिणि धर्मेत्प्रेक्षेति पक्षे पद्मलक्ष्म्यधि-करणकलगनप्रयोज्यहर्षप्रकारकसम्भावनेति बोधः एवंरीत्योत्प्रेक्षोपगमे उत्प्रेक्षायास्साहश्यमूलत्वस्य हेतुफलोत्प्रेक्षाविशेषे धर्मिणि धर्मोत्प्रेक्षेति पक्षेऽपि तत्सहचरित धर्मसम्बन्धनिबन्धनेत्यननुगमः गौरवं चेति यदि समीक्ष्यते तदा सर्वत्र अभेदेनोत्प्रेक्षेति प्रकाशकाराद्यनुरोधेनाप्युत्प्रेक्षा निर्वोढुं शक्या। तथासति निमित्तांशे उत्प्रेक्षापर्यवस्येत्। पर्यवस्यतां कामम् तस्या अध्यवसायगर्भतया विषयनिगरणेऽपि बाधकाभावादित्यभिप्रायेण निमित्तांश एवोत्प्रेक्षाविश्रान्तिंसम्भावयति- एवमिति।**

**चित्रमीमांसा-**

**नच तत्र निमित्तान्तरमन्वेष्यं स्यादिति वाच्यम्, निश्चलत्वहेतुकमौनस्य दुःखहेतुकमौनत्वोत्प्रेक्षायां चरणारविन्दविश्लेषकालभवत्वं निमित्तम्, कण्टकसंश्लेषहेतुकव्यापाटनस्य ललाटलिपिदर्शनार्थव्यापाटनत्वेनोत्प्रेक्षायां महाराजोऽप्येवमद्य कष्टमनुभवति, इतःपरमपि कियदनुभाव्यमनेनेति जिज्ञासोत्थापकपलायनकालभवत्वमित्यादेः स्पष्टत्वादिति।**

तत्त्वालोकः-

एवमुक्तरीत्या, निमित्तांशे विषय-विषयिसमानाधिकरणधर्मरूपे, अर्थात् स्वाभाविक शोभालगने पद्मलक्ष्मीलगनतादात्म्याध्यवसानस्यावश्यकत्वे सति तत्रैव निमित्तांश एव, स्वाभाविकशोभालगने निगीर्णे विषये पद्मलक्ष्मीलगनतादात्म्यं सम्भाव्यत इत्युत्प्रेक्षाविश्रान्तिरस्तु। उक्तरीत्युपगमेच सर्वत्राभेदेनोत्प्रेक्षणमित्यनुगमो लाघवं चेति भावः।

**ननु-** निमित्तांशे तादात्म्याध्यवसायावश्यंभावात् तत्रैव यदि उत्प्रेक्षाविश्रान्तिरस्तु इत्युच्यते तदा निर्निमित्तकस्य संभावनस्य अभावात् निमित्तान्तरगवेषणप्रसङ्ग इत्याशंकते- **नच तत्रेति।**

अयंभावः- **अलंकारसर्वस्वकृता मङ्खुकेन** निमित्तांशे उत्प्रेक्षाविश्रान्त्युपगमे निमित्तान्तरगवेषणं प्रसज्यते धर्मिणि धर्मोत्प्रेक्षादीनामुपगमे क्वचिदेकस्य गम्यमानत्वम्, निमित्तांशे तदभ्युपगमे द्वयोर्गम्यमानतेति ज्ञानगौरवमिति सूचितमिति कथं निमित्तांशे, तद्विश्रान्तिरूपे तु शक्येति चेत् तत्र समाधानमाह- **निश्चलेति।**

एवंच तादृशस्थले निमित्तान्तरस्य स्फुटत्वादन्वेषणपर्यन्तानुधावनक्लेशस्य प्रसक्तिरेव नास्तीति **सर्वस्वकारादीनामभिधानं** रिक्तम्।

यत्तूक्तं- **रसगंगाधरकृता-** "यद्यप्येककालप्रभवत्वादिरस्ति साधारणधर्मो निमित्तम्, तथापि तस्याचमत्कारित्वात् उपमायाम् इव उत्प्रेक्षायामप्यप्रयोजकत्वादिति।

## तत्त्वालोकः-

तदपि न युक्तम्। ग्रन्थकृता अभिहितस्यैव चमत्कारित्वात्। अन्यथा- "त्वत्प्रतापमहादीप" इति तदीयपद्येऽपि उपात्तस्य नूतनीकरणस्य निमित्तस्य कीदृशं चमत्कारित्वं प्रकृतापेक्षया वक्तुं शक्यं स्यात्।

**किञ्च-** विषयस्य निगीर्णतया विषयिणो विधेयत्वानुपपत्तेश्च सर्वत्र तादात्म्येनोत्प्रेक्षेति पक्षो रसगंगाधरकृता-निराकृतःतत्र युक्तिरप्रयोजिका उत्प्रेक्षाया अध्यवसाय गर्भतया विषयनिगरणस्योचितत्वेन लक्षणालभ्यविषयोद्देशेन अभिधेयस्य विषयिणो विधेयत्वमित्युपगमे बाधकाभावात्। अन्यथा गंगायां घोषः इत्यादावपि लक्ष्य-वाच्ययोः तीरघोषयोः आधाराधेयभावोऽपि नोपपद्येत। आधारस्य निगीर्णत्वात्।

**अन्यच्च-** रूपकप्रकरणे रूपकनिदर्शनयोः वैलक्षण्यं प्रतिपादयता तेनैव-रूपके उद्देश्यविधेयभावोऽभिहितः। व्यङ्ग्यरूपके विषयिणोऽनभिधानाद्विषयस्योद्देश्य-त्वमभिमतं यत् तन्न सिध्येत्। विषयिणो विधेयस्यानभिधानात्। नच एकशब्दवेद्यत्वेन उद्देश्यविधेयभावो न घटत इति वाच्यम्। श्लिष्टरूपकवत् उपपन्नत्वेनादोषात्। रूपके श्लेषेण अत्रतु लक्षणयेति विशेषः।

**अत्रेदमवधेयम्-** सर्वत्राभेदेनैवोत्प्रेक्षणमिति पक्षे मौनं मौनान्तरस्य, व्यापाटने व्यापाटनान्तरस्य, लगने लगनान्तरस्योत्प्रेक्षा स्वरूपोत्प्रेक्षायामेव पर्यवस्यतीति स्वरूपोत्प्रेक्षा एकैव स्यान्नपुनः हेतुफलोत्प्रेक्षे। तद्धेतुक-तत्फलकयोः कार्यकारणयोरेवोत्प्रेक्षणात् इति चेदुच्यते-

मुखतः निश्चलत्वहेतुविशिष्टे मौनादौ दुःखहेतुविशिष्टमौनादिस्वरूपोत्प्रेक्षा प्रतीयते अथापि- "दध्ना जुहोति" इत्यादौ यथा आपाततो दधिविशिष्ट होमप्रतीतावपि विवक्षितविवकेन होमे दधिविधित्वं तद्वदत्रापि तादृशमौने हेतुभूतदुःखस्य हेतुत्वमेव उत्प्रेक्ष्यमिति हेतूत्प्रेक्षादिव्यवहारो युज्यत एव।

एवम्- "उन्मेषमिति" पद्येऽपि हर्षहेतुकलगनादितादात्म्यसंभावनायाः आपाततः प्रतीतावपि विवक्षितविवेचनया हेतूत्प्रेक्षाव्यपदेशः।

नैतावता ग्रन्थकृतोऽपि हेतुफलोत्प्रेक्षास्थले हेतु-फल-विशिष्टयोरुत्प्रेक्षेत्यत्रैव नैर्भर्यमिति विभावनीयम्। यत उत्तरत्र हेतूत्प्रेक्षायां निमित्तस्यानुपादानं न सभवतीति

## तत्त्वालोकः

प्रतिपादयतः **सर्वस्वकारस्य** मतम चमत्कारीति निरूपयिष्यता ग्रन्थकृता-"सैषा स्थली यत्र विचिन्वता त्वाम्" इत्युदाहरणे-"अत्र हि पञ्चमी हेतुत्वप्रतिपादिका" इत्यभिधास्यमानत्वेन अत्रापि दुःखशब्दाद्विहिता पञ्चमी स्वप्रकृत्यर्थगतां हेतुतां प्रतिपादयति इति। तादृशदुःखस्यैव हेतुत्वमुत्प्रेक्ष्यते इति पक्षस्**सर्वस्वकारानुगुण** इष्ट इति प्रतिभाति। एवं ततोऽप्युत्तरत्र हेतुफलोत्प्रेक्षे तु असिद्धयोः सिद्धयोर्वा हेतुफलभावेन उत्प्रेक्षणीयतया प्रत्येकं द्विविधे। "सैषा स्थली यत्र विचिन्वता त्वां" "चोलस्य यद्भीतिपलायितस्य" इत्यादिषु नूपुरकण्टकद्रुमादावसिद्धयोः विश्लेषदुःख ललाटलिपिदर्शनादिकयोः हेतुफलभावेनो-त्प्रेक्षणीयतेति प्रतिपादनात् उक्तोदाहरणेषु तादृशदुःखललाटाक्षरदर्शन, हर्षादीनामेव हेतुफलात्मनोत्प्रेक्षणस्येष्टत्वात्। अत्रैव पूर्वं यद्वेति प्रक्रमस्तु **प्रकाशाद्यनुरोधेनापि** समर्थयितुं शक्यमित्यभिप्रायेण।

**एतेन**- यद्वा हेतु फल-धर्मस्वरूपोदाहरणेष्वपि तादात्म्येनैवोत्प्रेक्षा " इति प्राचांमतमनुसरता **द्रविडपुंगवेन** यदुक्तं तदपि परास्तम् इति **रसगंगाधर**कृतं दूषणं, दूषणंनैव भवति। स्वमतस्योत्तरत्र निरूपयिष्यमाणत्वात्। तस्यच तादात्म्येनोत्प्रेक्षेतिपक्ष बहिर्भूतत्वात्।

परन्तु **ग्रन्थकृतः रसगंगाधरकृत**श्च अभिप्रायभेदो विद्यत एव। हेतुफलोत्प्रेक्षास्थले दुःखललाटाक्षरदर्शनाद्युत्प्रेक्षणमिति ग्रन्थकारः। **रसगंगाधरकारस्तु**-पंचम्यर्थस्य हेतुत्वस्य तुमुन्नाद्यर्थफलस्य चोत्प्रेक्षणंनतुदुःखादीनां तेषामङ्गत्वेनानुवाद्यत्वादित्याह। तदिदं **रसगंगाधरकृ**दभिहितं पूर्वापरग्रन्थसंगतं न भवति। यतश्च-उन्मेषमिति पद्ये तादात्म्येनोत्प्रेक्षेति पक्षं निरस्य लक्ष्मीरूपे विषये लगनहेतुत्वेन हर्षः उत्प्रेक्ष्यत इत्युक्तेन असंगतत्वात्। अन्यथा-अत्रापि हर्षादिति पञ्चम्यर्थस्यैवोत्प्रेक्षेति वदेत्। नपुनः हर्ष उत्प्रेक्ष्यते इति "**यश्चोभयोस्समोदोष**" **इति** न्यायात्। तत्रापि वा दुःखादिकमुत्प्रेक्ष्यते इति वा वदेत्। नच तथाभिहितम्।

**नव्यतमास्तु** उन्मेषमिति पद्ये लक्ष्मीरूपे विषये हर्षहेतुकलगनतादा-त्म्संभावनमुचितं लगनस्य धर्म्युपसर्जनत्वेन संभावनायामन्वयायोगादित्याहुः। अयं भावः-लग्ना इति भूते कर्तरि क्तो विहित इति तदर्थस्य सिद्धत्वेन प्रतीयमानत्वात्

## तत्त्वालोकः-

उत्प्रेक्ष्यत्वेनाभ्युपगन्तुं बाधकाभावात्। अत एव

साध्यत्वेन क्रिया तत्र धातुरूपनिवन्धना।

सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः। इति। तथा-"सिद्धमेव समानार्थमुपमानं विधीयते"। इति **भूषणसार काव्यादर्शयोः भट्टोजिदीक्षितदण्डिभ्याम्** उक्तेन सामञ्जस्यं स्यात्।

**नच** -उन्मेषमिति पद्ये चन्द्र-पद्मयोर्विरोधस्य तत्रापि चन्द्रस्य पद्मापेक्षया बलिष्ठतया स्वसदृशेन नायिकामुखेन चन्द्रविजयप्रदर्शनात् प्रत्यनीकता अस्त्विति वाच्यम्। "प्रत्यनीकं बलवतः शत्रोःपक्षे पराक्रमः। "इति हि तल्लक्षणम्। तत्र बलवति प्रतिपक्षे प्रतीकारं कर्तुं (प्रतिकर्तुं) अशक्तस्य तत्सम्बन्धिनोऽन्यस्य बाधने खलु प्रत्यनीकता। यथा-

त्वं विनिर्जितमनोभवरूपःसाच सुन्दर भवत्यनुरक्ता।
पञ्चभिर्युगपदेव शरैस्तां तापयत्यनुशयादिव कामः।

इत्यत्र रूपेण कामजयोपन्यासात्प्रकृतस्य नायकस्य प्रबलत्वं प्रतिपक्षत्वं च व्यक्तम्। 'साच सुन्दर भवत्यनुरक्ता 'इत्यनेन नायिकायां प्रतिपक्षीयत्वम्, प्रकृते च नायके प्रतिकर्तुमक्षमेन कामेन नायकानुरक्तायां नायिकायां तापनोक्त्या शत्रोः पक्षे पराक्रमः उक्त इति प्रत्यनीकालंकारता। अत्र तु- प्रत्यनीकशरीरघटकयोः अंशयोरेकस्यापि वाच्यत्वाभावात्। तथाहि-प्रतिपक्षबलवत्वम् तदीये तिरस्कारश्चेत्युभयम्। अत्र पद्मापेक्षया चन्द्रे दौर्बल्यं नाभिधीयते नवा तदीयस्य दुर्बलस्य कस्यचित्प्रतीकारो वाभिधीयते , इत्थं सत्यपि कथं प्रत्यनीकता वक्तुंशक्या? नहि कस्मिंश्चित्प्राबल्ये व्यक्ते तदन्यस्मिन् दौर्बल्यमार्थिकमिति, प्रबलस्य दुर्बल पक्षीयेण केनचित्तिरस्कारे वर्णिते वा प्रत्यनीकता। अपि तु यत्र बलवतःप्रतिपक्षस्य दुर्वलेन प्रतिपक्षेण प्रतीकारःकर्तुं न शक्यत इति बलवत्प्रतिपक्षसम्बन्धिनो दुर्बलस्य तिरस्कारे प्रतीत एव। अत्र तु दुर्बलप्रतिपक्षीयेण प्रबलेन बलवतः प्रतिपक्षस्य तिरस्कार इति प्रत्यनीकताया वक्तुमयुक्तत्वात्।

**चित्रमीमांसा-**

**अयमेव पक्षो दण्डिनोऽभिमतः। यदाह-**

**अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा।**
**अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां प्रचक्षते।।**

तत्त्वालोकः-

**किंच**-अत्र हेतुनिर्णयसामग्र्यां सत्यामपि मन्ये इत्यादिसम्भावनार्थकपदसमभिव्याहारेण कारणनिश्चयाभावादपि प्रत्यनीकतायाः न प्रसरः।

नचैवं सति- त्वं विनिर्जितेति **काव्यप्रकाशो**दाहृतपद्येऽपि अनुशयादिवेति इवशब्दसमभिव्याहाराद्धेतुनिश्चयाभावात् प्रत्यनीकता न भवेदिति चेत्,

नहि प्रत्यनीकालंकारतायां हेतुनिर्णयः कारणम्। अपि तु शत्रोः पक्षे पराक्रममात्रं तच्चास्त्येवात्रेत्यबाधात्। इव शब्दप्रयोगादुत्प्रेक्षाप्यङ्गतयानुप्रविष्टा। नच तयोर्बाध्य बाधक भावः विषये विषयितादात्म्यसम्भावनमुत्प्रेक्षायामपेक्ष्यते। बलिष्ठशत्रुपक्षीयेषु तिरस्कारः प्रत्यनीकस्या पेक्ष्यत इति भेदात्। एतेन प्रत्यनीकतोक्तिरन्यैरुक्ता अनुचितैवेति दिक्।।

इत्थं सर्वत्र विषये विषयिणोऽभेदसंसर्गेणैवोत्प्रेक्षणं न तु सम्बन्धान्तरेणेति प्राचां मतं प्रदर्श्य तत्र सम्मतिं प्रदर्शयितुं **दण्डिनो** ग्रन्थमप्यनुवदति- **अयमेवेति।**

अयमेव पक्षः=हेतुफलधर्मस्वरूपोत्प्रेक्षासु तादात्म्येनैवोत्प्रेक्षेति पक्षः, **दण्डिनः** काव्यादर्शकर्तुः भामहादर्वाचीनस्य अभिमतः **अन्यथैवेति**। इदं च दण्डयभिमतमुत्प्रेक्षाया लक्षणम्। अस्यायमर्थः यत्र=काव्ये चेतनाचेतनान्यतरस्य प्रस्तुतस्य उत्प्रेक्षाधिकरणस्वरूपाद्विलक्षणस्वरूपेण स्थितो गुणक्रियादिः विच्छित्तिविशेषानुगुणतया विवक्षितरूपादपि चारुतरेण रूपेण संभाव्यते तत्र उत्प्रेक्षालंकारः।

**निष्कृष्टार्थस्तु-** वैचित्र्यफलकचेतनाचेतनान्यतरवृत्ति गुणक्रियादिधर्मिकरूपान्तरविधेयकतादात्म्यसंभावना उत्प्रेक्षेति उक्तामुत्प्रेक्षामुदाहरति-

**चित्रमीमांसा-**

**मध्यन्दिनार्कसंतप्तः सरसीं गाहते गजः।**
**मन्ये मार्तण्डगृह्या णि पद्मान्युद्धर्तुमुद्यतः।।**
**स्नातुं पातुं बिसान्यत्तुं करिणो जलगाहनम्।**
**तद्वैरनिष्क्रयायेति कविनोत्प्रेक्ष्य वर्ण्यते ।। इति।।**

**अत्र सन्तापनिवृत्त्यर्थत्वेन अन्यथैव स्थिता करिणश्चेतनस्य जलगाहनरूपा वृत्तिः अन्यथा तद्वैरनिष्क्रयार्थजलावगाहनत्वेनोत्प्रेक्ष्यत इति स्वकृतलक्षणानुसारेणैव योजितः।।**

तत्त्वालोकः-

मध्यन्दिनेति। मध्यन्दिनार्केण= मध्याह्नावस्थितसूर्येण सन्तप्तः, समुत्पादितौष्ण्यः, गजः, सरसीम्-सरोवरम्, गाहते-विलोडयति, इदं च वास्तवम् कविस्त्वेवं संभावयति-मार्तण्डगृह्याणि सूर्यानुरक्तानि, मार्तण्डेन गृह्यते इत्यर्थे "पदास्वैरिबाह्या पक्ष्येषु च" (पा.सू. ३.१.११९) इति पक्ष्यरूपार्थे क्यप् कर्तरि षष्ठया शेषषष्ठ्या वा समासः। पद्मानि कमलानि उद्धर्तुम् उन्मूलयितुम्, उद्यतः उद्युक्त इति मन्ये संभावयामि।

अत्रोत्प्रेक्षोपपादनप्रकारमाह- **स्नातुमिति**। गजस्य जलेऽवतारः तापापनोदनजलपान-बिसादनमात्रप्रयोजनोऽपि कविना एवं संभाव्यते सूर्येणोपद्रुतोऽपि गजः तस्य दूरस्थत्वेनाप्रतीकार्यत्वात् तत्पक्षीये पद्मे स्ववैरं निर्यातयितुं तान्युद्धर्तुं सप्रयत्न इति।।

तथाच- अत्र आतपतप्तस्य चेतनस्य गजस्य तापपरिहारकस्नान पानादिमात्रप्रयोजनकतया स्थितं सरोवगाहनं स्वसन्तापकरदिनकरपक्ष-प्रविष्टपद्मोन्मूलनद्वारा तद्वैरनिष्क्र यार्थं-जलवगाहनत्वेनोत्प्रेक्षितम्।

अत्र तादात्म्येनोत्प्रेक्षामुपपादयति-**अत्रसन्तापेति**। एवंच-सन्तापनिवृत्तिफलकस्नान-जलपान-बिसादनार्थमपि जलगाहनम् तत्प्रतीकारार्थ-जलावगाहत्वेनोत्प्रेक्षितमिति अनुपात्ते तादृशावगाहनरूपे विषये तादृशावगाहन-

## तत्त्वालोकः-

रूपविषयितादात्म्यं सभावितमिति अभेदेनेति पक्षः दण्डिनोऽपि सम्मत इति ग्रन्थकृदाशयः॥

**वस्तुतस्तु- दण्डिन** उभयमप्यनुमतमिति तदीयोक्त्यैव वक्तुं शक्यम्।

मध्यन्दिनार्कसन्त प्तः सरसीं गाहते गजः।
मन्ये मार्तृण्डगृह्याणि पद्मान्युद्धर्तुमुद्यतः॥ इत्यत्र

उद्धर्तुम् इति तुमुन्नन्तप्रयोगात्। "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" (पा.सू.३.३.१०) इति सूत्रेण हि तुमुन् प्रत्ययः। स च क्रियान्तरप्रधानक इति उद्धरणक्रियाया एव प्राधान्यम्। एवं च गजकर्तृकजलावगाहनस्य दिवाकरविषयकवैरनिर्यातनफलकम् उद्धरणं फलमसदपि तत्फलत्वेनोत्प्रेक्ष्यते इति फलोत्प्रेक्षा जलगाहनरूपे धर्मिणि पद्मोद्धरणं फलत्वेनोत्प्रेक्ष्यते। अत्र च पद्मोद्धरणस्यैव जलगाहनक्रियापेक्षया प्राधान्यमौचित्यात्। नहि 'कृष्णं द्रष्टुं याती'त्यादौ यानस्य प्राधान्यं विवक्षितुं युक्तम्। यानस्य कृष्णदर्शनमेव मुख्यं फलमिति सम्मतम् तद्वदत्रापीति। अतएव दण्डिनापि वस्तुतोजलगाहनस्य मुख्यं यत्फलं तत् स्नातुं पातुं वा बिसान्यत्तुं करिणो जलगाहनम् इत्युपपाद्य तद्वैरनिष्क्रयायेति जलावगाहनस्य फलान्तरं पूर्वफलस्थानापन्नं प्रदर्शितम्।

तथा-लिम्तीवेत्युदाहरणे उपमाऽसंभवमुपपाद्य-

तदुपश्लेषणार्थोऽयं लिम्पति ध्वान्तकर्तृकः।
अङ्गकर्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम्॥

इत्यत्र ध्वान्तकर्तृ-काङ्गकर्मकव्यापने तादृशलेपनमुत्प्रेक्षितमित्युपपादयता **दण्डिनैव** तादात्म्येन उत्प्रेक्षापक्षोऽपि समर्थितः।

अयमेव च पक्षो ग्रन्थकृतोऽपि सम्मतः। यतः सिद्धासिद्धत्वेन हेतुफलोत्प्रेक्षां विभजता ग्रन्थकृता "आलोहिततलावेतौ', "पूरं विधुः वर्धयितुं पयोधेः", इत्यादिषु पादचन्द्रादौ धर्मिणि स्वतस्सिद्धयोरेव विक्षेप-पयोवर्धनादिकयोः हेतुफलभावेनोत्प्रेक्षणीयताया वक्ष्यमाणत्वात्। इह तथोक्तिस्तु प्राचामनुरोधेन।

अतएव **रसगङ्गाधरकृतापि**- सर्वत्राभेदेनैव उत्प्रेक्षणमिति पक्षो निराकृतः। भेदेनोत्प्रेक्षेति पक्षोऽपि प्रकाशकारादपि प्राचः **भोजदेवस्याप्यभिमतः**।

**चित्रमीमांसा-**

**काव्यप्रकाशकारस्याप्ययमेव पक्षोऽभिमतः।**

**तेन हि-'संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्।' इत्युपमानेनोपमेयस्य तादात्म्यसंभावनमुत्प्रेक्षालक्षणम् अभिधाय- "उन्मेषं यो मम न सहते" इति तत्रोदाहरणं (कृतम्।)दत्तम् ततश्च स्वकृतलक्षणानुरोधेन स्वाभाविकीपादशोभैव स्ववैरिजय प्रभव हर्षलग्न पद्मलक्ष्मीत्वेन उत्प्रेक्ष्यत इत्यभिमतमिति स्फुटमेव।।**

तत्त्वालोकः

**किञ्च-** विषयस्य श्लेषेण धर्माश्रयताद्रूप्यसंपादनमुदाहरता ग्रन्थकृतैव-"अस्यां मुनीनामपि मोहमूहे" इति पद्ये धर्मिणि भेदेन उत्प्रेक्षां वदत **सर्वस्वकृतो** मतं गरीय इति मत्वा अत्र भृग्वादिमुनिरूपविषयगतदमयन्तीगोचरमोहोत्प्रेक्षायाम् इत्याद्युपपादितम्। नपुनः भृग्वादिमुनिसम्बन्धिनि धर्मविशेषे मोहोत्प्रेक्षायामिति। अतचश्च सर्वत्राभेदेनैवोत्प्रेक्षणमितिपक्षः न सर्वात्मना ग्रन्थकृत्सम्मतः। अतएव ग्रन्थकृतैव-स्वकीये कुवलयानन्दारव्यसन्दर्भे- "आश्रित्य नूनममृतद्युतय" इति पद्ये भगवन्मुखरूपे धर्मिणि चन्द्रकर्तृकलावण्यपुण्यनिचयन्यसनमुत्प्रेक्षितमित्युपपादितम्। नपुनर्व्यापारान्तरे न्यसनतादात्म्यमिति। यद्वेत्यादि कल्पारम्भस्तु प्राचीनानुरोधेनाप्युत्प्रेक्षितुमलमिति प्रदर्शयितुमेवेति विभावनीयम्।

**नचैवंसति** लक्षणाननुगमो गौरवं चेति पूर्वमुक्तमेवेति वाच्यम् औचित्यचमत्कारयोरनुरोधेन-विषयिनिष्ठ-तत्समानाधिकरणान्यतरधर्मनिमित्तक विषयधर्मिकविषयिविधेयकाहार्यसंभावनमुत्प्रेक्षेति अन्यतरत्वघटितलक्षणकरणे बाधकाभावेन तथैवोपगन्तुंयुक्तत्वात् अतएव **रसगंगाधरकृता** अन्यतरत्वघटितं लक्षणं निर्मितम् इत्यपि बोध्यम्।।

इत्थं सर्वत्राभेदेनैवोत्प्रेक्षेति पक्षे दण्डिनोऽभिमतिं प्रदर्श्य **काव्यप्रकाशकारस्य** अभिमतिं प्रदर्शयति-**काव्यप्रकाशकारस्यापीति।**

काव्यप्रकाशकर्तुः-मम्मटभट्टस्यापि सर्वत्राभेदेनैवोत्प्रेक्षणमिति पक्षोऽभित इत्यर्थः। स कथं ज्ञायत्राह- **तेनहीति।**

## तत्त्वालोकः

समेनेति पाठः काव्यप्रकाशसंकेतादृतः।तत्र प्रकाशवृत्तिकृता "समेन इत्यस्य" उपमानेन इत्यर्थो विवृतः, **संकेतकृता** तु उपमानगतगुणक्रियाभिसम्बन्धादुपमानत्वेनोपमेयस्य संभावनम् उत्प्रेक्षा। अन्यधर्माणां स्वधर्मिभूताद्वस्तुनः उत्कलितानां रसभावाद्यभिव्यक्त्यनुगुणतया वस्त्वन्तराध्यस्तत्वेन लब्धप्रकर्षणामीक्षणमुत्प्रेक्षा इति व्याख्यानात्- "उन्मेषं य" इति पद्ये हर्षो गुणः पद्मलक्ष्म्यां असंभवन्नपि संभावितः इति समन्वयं कृतवता तेनैव धर्मिणि धर्मोत्प्रेक्षा अभ्युपगतेव भाति। परन्त्वेवं व्याख्यानं-"समेन उपमानेन"इति वृत्त्यननुगुणं, यदि संकेतकारस्येव मूलवृत्तिकारस्याभिप्रायस्स्यात्तदा तावेव -समत्वेन उपमानत्वेनेत्येव ब्रूयाताम्। नच तथोचतुः। अत एव **काव्यप्रदीपकृता गोविन्दठक्कुरेण**- 'समेन सह एकरूपतयेतिशेषः। तेन प्रकृतस्य सम्भविनोऽर्थस्य समेन असंभविना सहैकरूपतया यत्संभावनं तदुत्प्रेक्षालंकारः इति सूत्रं व्याख्याय- 'उन्मेषं यः'इति पद्ये- अत्र पद्मलक्ष्म्याः कामिनीचरणयोः स्वभावलग्नत्वं यथोक्त हर्षहेतुकलग्नत्वतादात्म्येन संभावितम् इति लक्षणं समन्वितम्। लग्नत्वेन संभावितमिति वदतः प्रदीपकारस्यापि स्वभावलग्नायां हर्षहेतुकलग्नाया अभेदेन संभावनं बोध्यमित्यत्रैव तात्पर्यात्। अन्यथा लग्नत्वस्य पदार्थैकदेशत्वेन तत्र अभेदेनान्वयानुपपत्तेः। अयमेवपक्षः नव्यतमानामभिमतः इति प्रागेवावेदितमस्माभिः। **ग्रन्थकृता तु**- वृत्त्यनुरोधेन **साहित्यचूडामणिकारोपपादितरीत्या** स्वाभाविकी पादशोभैव स्ववैरिजयप्रभवहर्षलग्नपद्मलक्ष्मीत्वेन उत्प्रेक्ष्यत इत्यभिमतमित्युक्तम्। **साहित्यचूडामणौतु**- "अत्र पादशोभायाः उपमेयभूताया उपमानभूतपद्मसौन्दर्यात्मना संभावनम्। हर्षादित्युक्तो गुण एव निमित्तमित्युक्तम्। एवं च अस्मिन् मते हर्षनिमित्तिका पादशोभाधर्मिका पद्मशोभोत्प्रेक्षेत्युक्तं भवति। अथापि निमित्तस्य विषयगतत्वाभावात् उभयसाधारण्यं न संभवतीति च न वाच्यम्। चेतननिष्ठो हर्षः पद्मे विकासरूपे उपचरित इत्युपचारेण उभयसाधारण्यं कथंचित्सम्पादयितुं शक्यम्।

अत एव ग्रन्थकृता-स्ववैरिजयप्रभवहर्षलग्नपद्मलक्ष्मीत्वेन स्वाभाविकी पादशोभैवोत्प्रेक्ष्यते इत्युक्तम्।।

## चित्रमीमांसा-

**तथा-''पिनष्टीव तरङ्गाग्रैः'' इत्यादि धर्मस्वरूपोत्प्रेक्षोदाहरणेष्वपि प्रेरणादिरेव पेषणादिरूपतयोत्प्रेक्ष्यते।।**

## तत्त्वालोकः

एवं च **काव्यप्रकाशकारस्यापी**त्यपिना स्वस्यापि सर्वासूत्प्रेक्षासु अभेदेनैवोत्प्रेक्षणमिति पक्षः सम्मत इति ध्वनितं भवति तथा सति- ''संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्'' इति **काव्यप्रकाशीयकारिकायाः** सर्वानुगतमिदं लक्षणं फलितं भवति-तद्भिन्नस्य तत्वेन संभावनमुत्प्रेक्षा इति। तथाच- ''बालेन्दु वक्राणि'' इत्यादिस्वरूपोत्प्रेक्षायां नखक्षतभिन्नस्य पलाशस्य नखक्षतत्वेन सम्भावनम् ''उन्मेषं य'' इति(पद्ये) हेतूत्प्रेक्षायां पादशोभालगनस्य पद्मशोभालगनाद्भिन्नस्य पद्मशोभालगनरूपतया संभावनम्। **यद्वा**-पादयोः स्वाभाविकेन शोभालगनेन पद्मशोभालगनत्वेनाध्यवसितेन निमित्तेन तादृशलगनं प्रति हेतुभिन्नस्य हेतुरूपतया हर्षस्य संभावनम्। एवं'' चोलस्य यत् ''इत्यादौ फलभिन्नस्य फलत्वेन संभावनमिति नक्काप्यव्याप्त्यादीनामवसर इति भावः।

**यद्वा**-''सैषा स्थली यत्र विचिन्वता त्वाम् ''इत्यादौ यथा निश्चलत्व-निमित्तकमौनादौ दुःखहेतुकमौनादेः तादाऽत्म्येन संभावनं तथात्रापि- (उन्मेषमिति पद्येऽपि) स्ववैरिजयप्रभवहर्षहेतुकपद्मशोभालगनं स्वाभाविकपद्मशोभालगने उत्प्रेक्ष्यते। आपाततः स्वरूपोत्प्रेक्षात्वाविशेषेऽपि 'दध्ना जुहोति ' इति वत् विवक्षावशतो हेतूत्प्रेक्षेत्येव व्यपदेशः नपुनस्स्वरूपोत्प्रेक्षेति पूर्वमेव प्रतिपादितम् तत्रैवास्माभिः यत्प्रकारान्तरेणोपपादनंकृतं तत्सर्वस्वानुरोधेनेति बोध्यम्।।

**एवमपि**- आख्यातान्तसमभिव्याहृतोत्प्रेक्षासु ''सर्वत्राभेदान्वयस्य व्युत्पत्त्यननुगुणतया विषयस्यानुपादानाच्च 'पिनष्टीव तरङ्गाग्रैः 'इत्यादावव्याप्तिः स्यात् इति चेत्-तत्राह **तथेति**।

## तत्त्वालोकः

**अयंभावः-**

पिनष्टीव तरङ्गाग्रैः समुद्रःफेनचन्दनम्।
तदादाय करै रिन्दुर्लिम्पतीव दिगङ्गनाः॥

इति पूर्वोदाहृतपद्ये-पिनष्टीति, लिम्पतीत्याख्यातार्थकर्तुः धात्वर्थव्यापारे विशेषणतयान्वितत्वेन तस्यैव कर्तुःइवार्थे सादृश्ये स्वप्रतियोगिकत्वसम्बन्धेन अन्वयोऽव्युत्पन्नः। एकत्र जनितान्वयबोधत्वेन आकांक्षाविरहात्। अतश्च-समुद्रचन्द्रयोः धर्मिणोः पेषण-लेपनधर्म एवोत्प्रेक्ष्यः तस्यैव प्रधानत्वेन इवार्थसंभावनायां प्रतियोगितयान्वेतुं योग्यत्वात्। नचैवं सत्यपि समुद्रचन्द्रयोः धर्मित्वम्, पेषणलेपनयोः धर्मतेति कथं धर्मिणि धर्मस्याभेदेनोत्प्रेक्षणं घटत इति शङ्क्यम्। समुद्रचन्द्रकर्तृकं यद्वास्तवं प्रेरणं दिग्व्यापनं च तदेव कविना आहार्यतया पेषण-लेपनादिरूपतयोत्प्रेक्ष्यत इत्यव्याप्तेरभावात् इति।

**नन्वेवं तर्हि-** प्रेरणादौ पेषणादितादात्म्यमुत्प्रेक्ष्यते चेत् धर्म्युत्प्रेक्षात्वमेव।

यतश्च-प्रेरणत्व-पेषणत्वादिकमादाय प्रेरणपेषणादीनां धर्मित्वस्यानपायात्। अन्यथा क्रियात्वं शुक्लत्वमित्यादिशब्देषु प्रधानतया क्रियादीनां निर्देशः किञ्चिद्धर्मवत्वाभावे ऽनुपपन्नस्स्यात्। धर्मेऽपिध र्मान्तराङ्गीकारेऽनवस्थाप्रसङ्गः आनन्त्यव्यभि-चाररूपानुपपत्यभावात्परिहृत एवास्तिकदार्शनिकैः। अतश्च कथमत्र धर्मस्वरूपोत्प्रेक्षारूपत्वमिति चेत्-"द्रव्ये द्रव्यान्तरोत्प्रेक्षायां धर्म्युत्प्रेक्षा। यथा-बालेन्दुवक्राणीत्यादौ, पलाशमुकुलेषु द्रव्येषु नखक्षतरूपद्रव्यो-त्प्रेक्षणात् प्रेरणादेश्च अद्रव्यत्वेन द्रव्याश्रितत्वेन तत्र या पेषणाद्युत्प्रेक्षा सा धर्मोत्प्रेक्षेत्येतावन्मात्रेण अन्यथा वैयाकुलीस्यात्। एवं चात्र चन्द्र-समुद्रवृत्तित्वेन धर्मतां प्राप्ते प्रेरणादिरूपे विषये पेषणादि-तादात्म्येन संभाव्यत इति न क्वाप्यनुपपत्तिः।

**नन्वितः** पूर्वं विद्यानाथीयलक्षणे वस्त्वन्तररूपत्वार्थकस्य अन्यत्वेने-त्यस्योपादानात् पिनष्टीवेत्यादिषु" भावप्रधानमाख्यातम्"इत्यनुरोधेन समुद्रादिकर्तृकत्वविशेषितलेपनादीनां धर्माणामेवोत्प्रेक्ष्यतया उक्तरूपेणोपतर्कणं नास्तीत्यव्याप्तिमापाद्य सर्वस्वकाराद्यनुरोधेन अन्यत्वेनेत्यस्य प्रकारान्तरार्थकत्व

## चित्रमीमांसा -

**तथा - 'पिनष्टीव तरङ्गाग्रैः' इत्यादि धर्मस्वरूपोत्प्रेक्षोदाहरणेष्वपि प्रेरणादिरेव पेषणादिरूपत्वेनोत्प्रेक्ष्यते। नच प्रेरणादेः विषयस्यानुपादानं दोषः अतिशयोक्ताविव तदुपपत्तेः।।**

## तत्त्वालोकः -

मुपगम्य धर्मस्यापि प्रकारत्वानुभवानुरोधाद्वारिता। साच सर्वत्राभेदेनोत्प्रे- क्षणमितिपक्षे धर्म्युत्प्रेक्षास्वव्याप्त्यादीनामभावेऽपि धर्मस्वरूपोत्प्रेक्षासु अव्याप्तिः। तासु विषयिसजातीयस्य उत्प्रेक्षाधिकरणस्य प्रस्तुतस्य अनभिधानता प्रसक्तेः। नच विषयस्य गम्यमानत्वं युज्यते। धर्मिणमन्तरेण धर्मस्य अविश्रान्तेः इति चेदत्र समाधत्ते- तथापिनष्टीवेति।

**अयं भावः**- दण्ड्यादिप्राचीनमतानुरोधेनापि "पिनष्टी"वेत्यादौ धर्मोत्प्रेक्षेत्यत्र न विवादः **यास्का**द्यनुरोधात्। अवशिष्यते परं अनुपात्तेऽपि विषये विषयिणो धर्मस्योत्प्रेक्षणं घटते नवेति। घटत इति हि दण्ड्यादीनामभिमतिः। उक्तं च **दण्डिनैव** लिम्पतीव तमोङ्गानि इत्युपक्रम्य-

तदुपश्लेषणार्थोऽयं लिम्पतिर्ध्वान्तकर्तृकः।-
अङ्गकर्मा च पुंसैवमुत्प्रेक्ष्यत इतीष्यताम्। इति।

एतत्साजात्यादत्रापि अनुपात्ते विषये प्रेरणादौ पेषणादिरभेदेनोत्प्रेक्ष्यते। ननुविषयस्योपादानमुत्प्रेक्षायामावश्यकं इति **सर्वस्वकारा**दीनामभिप्रेतमिति वाच्यम्। अतिशयोक्तावपि विषयस्यानुपादानमस्तीति तत्र यथा समाधिः स एवात्रापीति विषयस्योपादानम् आवश्यकमिति वदतः **सर्वस्वकार**स्योक्तिः न निरवद्या। यतश्च प्राञ्च आहुः-

विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः।
अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते।। इति।

एवंच विषयस्यानुपादानं न दोषायेति।

**ननु**- अतिशयोक्तिवद्विषयनिगरणस्यात्राप्युचितत्ववचनं, न समीचीनम्।

**चित्रमीमांसा-**

**उत्प्रेक्षायाः अध्यवसायगर्भतया तत्र विषयनिगरणस्य उचितत्वाच्च॥**

तत्त्वालोकः-

वैषम्यात्। अतिशयोक्तिस्साध्यवसानलक्षणामूला। साध्यवसानलक्षणा च विषयस्य स्वशब्देनोल्लेखनं विनापि विषयिवाचकेनैव शब्देन ग्रहणं विषयनिगरणं तत्पूर्वकं विषयस्य विषयिरूपतयाध्यवसानप्रयोजको व्यापारः। न चासावत्रोत्प्रेक्षायां युक्तः। अन्यथा अतिशयोक्तितः अवैलक्षण्यप्रसङ्गात्। इति चेत्, न। (उत्प्रेक्षाया अध्यवसायगर्भत्वस्य सर्वस्वकारादिसम्मतत्वात्, नैतावता उत्प्रेक्षायाः अतिशयोक्तिरूपता प्रसक्तिः) अस्यां अध्यवसायस्य संभावनारूपत्वम्। अतिशयोक्तौ निश्चयरूपत्वं, तथा अस्यां विषयस्योपादानमपि। तस्यां तु नियमेन अनुपादानमिति भेदात्। तदेतन्मनसि निधायाह- **उत्प्रेक्षाया इति।**

एतेन यत् **विद्यानाथेन** अलंकारकक्ष्याः विभजता उत्प्रेक्षातिशयोक्त्योः अध्यवसायमूलत्वमुक्तं तन्मन्दम्। सर्वासु उत्प्रेक्षासु अध्यवसायमूलत्वस्य वक्तुमशक्यत्वात्। "बालेन्दुवक्राणी"त्यादौ अध्यवसायमूलत्वस्य दुरुपपादत्वात्।

**नच- सर्वस्वकारादिभिः** सिद्धाध्यवसायः साध्याध्यवसाय इति अध्यवसायो द्वेधा विभक्तः। तदानुगुण्येन विद्यानाथेनाप्यध्यवसायमूलत्वमस्याः उक्तमिति वाच्यम्। साध्याध्यवसाये प्रमाणाभावात्। साध्याध्यवसाने विषयस्य निगीर्यमाणत्वेन पृथगुपलब्धिमात्रमितिचेत् तदा रूपकादेरप्यध्यवसानगर्भताप्रसक्तेः । नच रूपकेऽध्यवसायगर्भतेष्टा। तस्याः रूपकपूर्वपक्षनिराकरणावसरे एव निरासात्। एवं च "नच विषयस्य गम्यमानत्वं युक्तम्। तस्योत्प्रेक्षिताधारत्वेन प्रस्तुतस्याभिधातुमुचितत्वात्' इति **सर्वस्वोक्तं** न समञ्जसमिति ध्वनितं भवति।

एवं **विमर्शिनीकृता**- "अतिशयोक्तौ विषयस्यानुपादानमेव। अन्यत्र पुनः सर्वत्र विषयोपादानमेव न्याय्यम्" इति यदुक्तं तदपि न युक्तम्। यतः विमर्शिनीकृतस्समकालिकेन **पीयूषवर्षापरनामधेयेन जयदेवेन- चन्द्रलोके**

**तत्त्वालोकः-**

अनुक्तविषयाया उत्प्रेक्षाया अभ्युपगमात्। तथैव- **साहित्यदर्पणकृतापि**- "लिम्पतीव तमोऽङ्गानीति" पद्यमुदाहृत्य अत्र तमसो लेपनस्य व्यापनरूपो विषयो नोपात्तः इत्युपपादितत्वाच्च। **तेनैव दर्पणकृता**-

तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम्।
हाराय गुणिने स्थानं न दत्तमिति लज्जया।

इत्यत्र कृशाङ्गीस्तनकर्तृकमुखाप्रकाशने वस्तुतो वस्त्रावरणे हेतौ अनुपात्ते हाराय स्थानादानात् या लज्जा तयेति हेतुरुक्त। सच न युज्यते स्तनयोर्लज्जाया असंभवेन लज्जयेव इत्युत्प्रेक्षणीयार्थप्रतीतिमन्तरा वाच्यार्थबोधानिर्वाहात् इवशब्दाभावेऽपि प्रतीयमानोत्प्रेक्षेत्युपपादितम्। न पुनरतिशयोक्तिरिति। एतेन- विषयविषयिणो-रन्यतरनिगरणेनाभेदप्रतिपत्तिरध्यवसाय इति **विद्यानाथोक्तं** अयुक्तमिति ध्वनितम्। नन्वस्यां अध्यवसायगर्भतोच्यते। तत्र अध्यवसायश्च कीदृश इति ननिश्चितः। स एवादौ विवेचनीयः-

**तत्र काव्यालंकारसूत्रकृता वामनेन** -अध्यारोपाध्यवसानलक्षणाभ्यां भिन्नः अध्यवसाय उत्प्रेक्षाशरीरे निवेशितः अतद्रूपस्य अन्यथा अध्यवसानमध्यवसायः, न पुनरारोपो लक्षणा वेति। विवृतं च -**कामधेनुकृता** अतत्स्वभावस्य वस्तुनः तद्गुणयोगात् तद्भावकल्पनमध्यारोपः यत्र रूपकादिस्वरूपलाभः। यत्र सादृश्ये सत्येकेन वस्तुना वस्त्वन्तरस्य प्रतिपादनमध्यवसायरूपं सा सादृश्यमूला लक्षणा यत्र वक्रोक्तिव्यपदेशः। यत्पुनरतद्रूपे वस्तुनि अतिशयमाधातुं तद्रूपतया अध्यवसानं, सोऽयमध्यवसायः सम्भावनालक्षणः उत्प्रेक्षेति विवेक इति।

**काव्यप्रकाशकृता मम्मटेन** लक्षणाघट्टे- आरोप्यमाणारोपविषययोरनपह्नुत योस्सामानाधिकरण्यमारोपः, विषयिणा विषयनिगरणे सति तस्यापि क्रोडाकरण-मध्यवसायः । उभयोश्च ताद्रूप्यप्रतीतिः, सर्वथैवाभेदावगमश्च प्रयोजनं यथासंख्यन्यायात् इत्यभिप्रायः स्फुटीकृतः। उभयोरपि गौणभेदयोः अभेदप्रतीतिपूर्वकं ताद्रूप्याभेदयोः प्रतीतिरिति **काव्यप्रदीपकारः। अलंङ्कारसर्वस्वकारश्च**-अन्यत्रान्यावाप आरोपःविषयनिगरणेन अभेदप्रतिपत्तिः विषयिणोऽध्यवसायः। इति रूपकोत्प्रेक्षाप्रकरणयोराह।

## तत्त्वालोकः

**विद्यानाथस्तु- प्रतापरुद्रीये** काव्यप्रकरणे आरोपाध्यवसाययोः प्रकाशकृदत्तरीत्या स्वरूपं प्रदर्शयामास। अथापि अर्थालङ्कारप्रकरणे अध्यवसाय-मन्यथैवाह-"विषयविषयिणोरन्यतरनिगरणेनाभेदप्रतिपत्तिः अध्यवसाय इति। एवंच विषयिनिगरणेन विषयनिगरणनेति द्वेधाऽध्यवसायः।यत्र विषयस्य इवादेश्च प्रयोगस्तदा विषयिणो निगरणम्। यत्र च विषयस्य इवादेश्चाप्रयोगस्तत्र विषयनिगरणम् इति विद्यानाथाशयः रत्नापणकारेण प्रदर्शितः। एतेनोत्प्रेक्षायां विषयिनिगरणं अतिशयोक्तौ विषयनिगरणमित्युक्तं भवतीति तदेतदुभयमपि न युज्यते। "लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।" इति प्रकाशोदोहृतोत्प्रेक्षोदाहरणे व्यापनादिलेपनादिरूपतया संभावितमिति तदुपपादितरीत्या विषयस्य निगीर्णतैवेति न साध्याध्यवसायतेत्यव्याप्तिःप्रसज्येत तथा-"अनाकाशे कोऽयं गलितहरिणः शीतकिरणः"इत्याद्यतिशयोक्तौ विषयस्य नात्यन्तमपलापः। गलितहरिण इति भेदप्रयोजकस्योक्तेः अध्यवसायस्य न सिद्धत्वमिति अतिशयोक्तिता न स्यात्। अभेदातिशयोक्तेरभावेऽपि ताद्रूप्यातिशयोक्तिरिष्यत एवात्र। एवं च शब्दालंकार प्रस्तावे या उत्प्रेक्षातिशयाक्त्योः अध्यवसायमूलता **विद्यानाथे** नाभिहिता सा न घटते। अत एव ग्रन्थकृता रूपकनिरूपणावसरे आरोपाध्यवसानयोस्स्वरूपं विकल्प्य दूषितम्।

अथ च आरोपाध्यवसायगर्भत्वमुत्प्रेक्षातिशयोक्त्योरभ्युपगतम्। तत्राप्यध्य-वसायगर्भत्वंकण्ठतएवाभिहितम्। आरोपगर्भत्वन्तु "बालेन्दुवक्राण्य-विकासभावादिति," अपर इव पाकशासन- इत्याद्युदाहरणद्वारा सूचितम्। इष्टाच बालोन्दुवक्राणीत्यादौ उत्प्रेक्षा प्राचाम्। यतश्च **उद्भटविवृतौ**- बालेन्दुवक्राणी-त्यादीन्यतद्गुणक्रियायोगादुत्प्रेक्षोदाहरणान्युन्नेयानीत्याद्युक्तम्।

**विद्याधरश्च**- "विषयिनिगीर्णे विषये साध्यवसाना द्विधा रव्याता" इत्यभिधायापि उत्प्रेक्षाप्रसङ्गे- अभिन्नत्वेन प्रतिभासनमध्यवसायः "इत्येतावन्मात्रमाह। एतद्ग्रन्थाशयश्च **एकावलीतरलायां- मल्लिनाथेन**- आविष्कृतः-"इदं तावद्विवेक्तव्यम्। अध्यवसायो निश्चयज्ञानम्। सच सम्यङ्मिथ्या चेति द्विप्रकारः।

## तत्त्वालोकः

लोके यथा शुक्तावेव शुक्तिरियं इदं रजतमिति च। सः द्विरूपोऽपि नालंकारः। चमत्काराभावात्। किन्तु बुद्धिपूर्विकैवेयमतस्मिन् तद्बुद्धिः अन्यधर्मसम्बन्धनिबन्धना- "अयं पारिजात" इत्यादि। सोऽयमलौकिकोऽपरोऽध्यवसाय इहालंकारमूलत्वेन विवक्षितः। तस्यैव लोकोत्तरचमत्कारकारणात्वादिति॥

**विमर्शिनीकृतापि**- उत्प्रेक्षाया अध्यवसायमूलत्वमेवेति वदतः **सर्वस्वकारस्य** मतमुपोद्बलयता- अध्यवसायो द्वेधा। स्वारसिकः उत्पादितश्च। तत्राद्यो भ्रान्तिमदादिविषयः। (उत्पादितः)द्वितीयोऽस्या इति, एवंचैषां मते सिद्धसाध्य-भेदेनाध्यवसायप्रभेदकल्पनमनिवार्यम्। अतश्च साध्याध्यवसायमनभ्युपगम्यापि उत्प्रेक्षातिशयोक्त्योः संभावनानिश्चयरूपत्वेन भेदस्य स्फुटतया तदनुसरणस्य क्लेशावहत्वेन उभयत्रापि अभेदताद्रूप्यसंभावनानिश्चययोः उपगन्तव्यतया अप्रयोजकत्वाच्च उत्प्रेक्षातिशयोक्त्योरध्यवसायमूलत्वाभिधानमसंगतमेव। परन्तु उभयोरपि यथासम्भवमारोपाध्यवसायगर्भत्वोपगमेन इष्टसिद्धेः। अन्यथा उत्प्रेक्षातिशयोक्त्योःलक्ष्यविशेषेऽव्याप्तिप्रसङ्गादिति मत्वाआरोपाध्यवसाययोः स्वरूपं ग्रन्थकृतैव **वरदराजस्तवीयव्याख्याने**- इत्थमभिहितम्। तथाहि-

आरोपमध्यवसितिं च विना तवास्यांनाभौ सरःपदमुपैतु कथं न वृत्तिम्।
साक्षादियं सरसिजस्य समुद्रशायिन्उत्पत्तिभूतिरिह नायक नायमूहः॥

इत्यत्र-"प्रसिद्धादुपमानादुपमेयस्य भेदमनूद्य ताद्रूप्यमात्रपरिकल्पनम् आरोपः। यथा-

"अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः"। इति तस्य प्रसिद्धोपमानाभेद-कल्पनमध्यवसायः। यथा-"अवतीर्य हरिस्साक्षादेष रक्षति मेदिनीम्।" इति। तत्रैवान्यत्र- "मन्ये निजस्खलनदोषमि"ति पद्यव्याख्यने "रूपकाति-शयोक्तिस्स्यान्निगीर्याध्यवसानतः।"इत्यनूद्य अधिष्ठानस्य स्वशब्देन ग्रहणं विना तस्मिन्नारोप्यस्य वाचकेनैव ग्रहणं निगरणम्। तत्पूर्वकमधिष्ठानस्यारोप्यरूपतया अध्यवसानमाहार्यनिश्चयः" इत्यभिहितम्। एतेन **उत्प्रेक्षायामुपमेये** उपमानाभेदताद्रूप्यान्यतराहार्यसंभवना। **अतिशयोक्तौ** तु विषयनिगरणपूर्वकमुपमाना भेदताद्रूप्यन्यतराहार्यनिश्चयः इति भेदः इति ग्रन्थकृदाशय इत्युन्नीयते। इत्थंसत्यपि-

## तत्त्वालोकः

**रसगंगाधरे** नव्यास्त्वित्युपक्रम्य ग्रन्थकृदुपरिकटाक्षेण उत्प्रेक्षाद्यतिरिक्तातिशयोक्त्यपह्नवादिषु आहार्यज्ञानेनैवोपपत्तौ लक्षणायां बीजाभावदनुभवविरोधाच्चेत्युक्तम्। तत्कथं युज्यते- यतो ग्रन्थकृता रूपकप्रकरणे "उत्प्रेक्षाया अप्याहार्यसंभावनारूपतया" इत्यद्यभिदधता उत्प्रेक्षायां आहार्यसंभावनायाः लक्षणायाश्चानिराकरणात् इति रसगंगाधरकृतोक्तं चिन्त्यम्।

एवंच **काव्यप्रकाशिकाकारस्येवारोपाध्यवसायस्वरूपो विवक्षित एव।** अथापि-रूपकप्रकरणेतन्निराकरणंच **विद्यानाथाभिमतस्य** उत्प्रेक्षायामध्यवसायमूलत्वस्य, रूपके आरोपमूलत्वस्यच निराकरणार्थमेवेति मन्तव्यम्।

एवंच यत्र उपमानोपमेययोः भेदेनानुवादे सति तत्कार्यकारित्वं परिकल्प्यते तत्रारोपः। यथा-"अचतुर्वदनो ब्रह्मा" इत्यादौ। यत्र तु" चन्द्रोऽयमि"तिवत् उपमेयतावच्छेदकधर्मावच्छिन्नोपमेयनिष्ठ विशेष्यताकोपमानतावच्छेदक धर्म प्रकारताशालीबोधः तत्र मुखादेरपि चन्द्रत्वेन प्रकारेणोपस्थित्या अध्यवसायः इत्युक्तं भवति।

नचैतावता- उपात्तविषयके-प्रतीतोपमानोपमेयभेदकेचोत्प्रेक्षोदाहरणेऽव्याप्तेः प्रसक्तिः। उत्प्रेक्षायाः अध्यवसायगर्भत्वेनेत्याद्युक्ते: लिम्पतीवेत्यादौ अनुपात्तविषयकेऽव्याप्तिपरिहारंप्रदर्श्य- नच विषयस्य निगरणं युक्तम्। तस्योत्प्रेक्षिताधारत्वेन प्रस्तुतस्याभिधातुमुचितत्वाच्चेति वदतः **सर्वस्वकारस्य** मतमयुक्तमिति प्रदर्शनार्थमेव। नपुनरस्य अध्यवसायगर्भत्वमेवेति नियमद्वारा आरोपपरिहारार्थम् तथात्वे-"नूनं मुखमिदमपरश्चन्द्रः" इत्यादौ अनलंकारता स्यात्। यतश्चात्र नोपमा भेदस्यैव प्रतीतेः भेदाभेदप्रधानोपमेति सिद्धान्तात्, नापि रूपकम् इवशब्दोपादानात्। नाप्यतिशयोक्तिः विषयनिगरणाभावात् अतश्चात्रोत्प्रेक्षैव युक्तेति अस्या आरोपगर्भत्वनिराकरणे ग्रन्थकृतस्तात्पर्यं नैवेति नाव्याप्त्यवकाशः।।

अत एव- पूर्वत्रोपमायां **विद्यानाथीयमुपमालक्षणं** विवेचयता ग्रन्थकृतैव तदीयलक्षणघटकं स्वतस्सिद्धेनेतिविशेषणमयुक्तम् इत्युक्त्वा तदुपपादनावसरे उत्प्रेक्षायामिवकारस्य विषयविषयिणोः तादात्म्यादिसंभावनावाचकत्वेन तत्र

## तत्त्वालोकः

साम्यस्यावाच्यतया तत एव तद्व्यावृत्तेः इत्यत्र तादात्म्यादीत्यादि इत्यादिशब्दम् उपाददता उत्प्रेक्षा ताद्रूप्यगर्भापीति प्रत्यायनात् । रूपकपूर्वपक्षे च विद्यानाथाभिमतारोपगर्भतां निरस्यन् उक्तविधस्यारोपस्य रूपकविशेषे एवाव्याप्तत्वमुपपाद्य उत्प्रेक्षाविशेषे अतिव्याप्तिमुपपादयितुम्- "अपर इव पाकशासनः" इत्याद्युत्प्रेक्षायां च रूपकवदेव प्रसिद्धचन्द्राभेदप्रतिपत्त्यभावेन ताद्रूप्यप्रतिपत्तिरेव इत्यापादयता अस्यां ताद्रूप्यप्रतिपत्तिःसंभावनात्मिका अभ्युपगंतैवेत्यत्र न कापि संशीतिः।

यद्यपि-**प्रभाकारेण**- तत्रतत्र ताद्रूप्यमित्यस्य तादात्म्यमिति विव्रियते। परन्तु ग्रन्थकृतः ताद्रूप्यतादात्म्ययोः भेदो विवक्षितः। तादात्म्यं च विवर्ताद्वैतवादिनां **शंकराचार्याणाम्**, तदनुयायिनां ग्रन्थकृतां च मते कस्यचित्पदार्थस्य पदार्थान्तरस्वरूपात्मकमैक्यमेव। **परिणामाद्वैतवादिनां भास्करादीनां** मते तादात्म्यं भेदाभेदरूपमिति त्वन्यत्।

**ताद्रूप्यं** च विषयविषयिणो भेदे प्रतीयमान एव तत्कार्यकारित्वरूपम्। अतएव- "शुक्तिका रजतवदाभासत" इति **अध्यासभाष्यस्थं** वाक्यमुपादाय **कल्पतरुपरिमलेग्रन्थकृतैव**-रजतवदित्यत्र दूरादागच्छन् देवदत्तवद्भातीत्यादि प्रयोगात् उत्कटकोटिकसंशयरूपा तादात्म्यसंभावनाप्यर्थः। तथा शुक्तिका मिथ्यारजतात्मना भासते इत्यात्मशब्देन तादात्म्यशब्दार्थं विवृण्वता तादात्म्शब्दस्य ऐक्यार्थकत्वं स्फुटीकृतमेव।

**एवमत्रैव पूर्वं ससन्देहालंकृतौ-अनवधारणशब्दस्य अनिश्चयार्थकत्वे-** "बालेन्दुवक्राणी" त्यादावुदाहरिष्यमाणायामप्रकृतसाम्यनिमित्तक तादात्म्यसंभावना- रूपायामुत्प्रेक्षायामतिव्याप्तिः इत्यभिहितवता उत्प्रेक्षायां तादात्म्यसंभावनाप्युगता। एवं च उत्प्रेक्षाया आरोपाध्यवसायान्यतरगर्भत्वं लक्ष्यानुरोधात् गन्थकृता स्थिरीकृतम्।

**नन्वेवंतर्हि**- सर्वत्राभेदेनैवोत्प्रेक्षणमित्यभिप्रयतां मतमनुरून्धानानां ताद्रूप्यसंभावनोदाहरणेषु कथमुपपत्तिरिति चेत्

**अत्रोच्यते**। "मुखमिदमपरश्चन्द्र इव" इत्यादौ अपरादिपदस्य स्वार्थान्वयिता

## तत्त्वालोकः-

वच्छेदकाश्रय.क्रिश्चिद्व्यक्तिप्रतियोगिकभेदमात्रबोधकत्व व्युत्पत्यनुसारेण प्रसिद्ध चन्द्रव्यक्तिभेदभानेऽपि चन्द्रसामान्यभेदाभानात् चन्द्रद्वित्वभ्रममूलकस्य मुखादौ चंद्रत्वावच्छिन्नाभेदसंभावनायास्सम्भवात्।

अन्यथा- चन्द्रपदस्य अत्र चन्द्रकार्यकारित्वपरत्वेऽपि चन्द्रकार्यकारित्वेना-साधारणरूपेण प्रसिद्धचन्द्रव्यक्त्यभेदसंभावनाया एवोपेयतया अनुपपत्ति-तादवस्थ्यात्।

यदि तु चन्द्रकार्यकारित्वं प्रसिद्धचन्द्रतदितरसाधारणम् इत्युपेयते तदा आरोपस्यैवानावश्यकत्वेनोत्प्रेक्षाया एवाप्ररोहात्। एवं-मुखं चन्द्रकार्यकारीवेत्य-त्राप्युत्प्रेक्षाप्रसङ्गात्। तस्मात् सर्वत्राभेदेनैवोत्प्रेक्षणमिति प्राञ्चो मन्यन्ते। अत एव अनुपात्त एव विषये आहार्यां विषयिणः तादात्म्यसंभावनाम् अभिमन्यन्ते। एतावता-सर्वत्र तादात्म्येनैवोत्प्रेक्षेत्यत्र न ग्रन्थकारस्यनैर्भर्यम्। प्रागुद्धृतप्रकरणान्तरस्थ ग्रन्थसंवादाभावात्। अतश्च तादात्म्य-ताद्रूप्यान्यतरसंभावना ग्रन्थकाराभिमता। अन्ततो- रूपक-प्रकरणे'अपर इव पाकशासन' इत्यादौ प्रसिद्धचन्द्राद्यभेद-प्रतिपत्तयभावेऽपि उपात्तकल्पितापरचन्द्राद्यभेदप्रतिपत्तिसंभवा शङ्का न कृता भवेत्। अत एव यद्वेति कल्पान्तराश्रयणमपि प्रकाशकारानुरोधेनेति मन्तव्यम्।।

एतेन- यद्रसगंगाधरे उत्प्रेक्षावसरे प्राचीनसम्मताभेदोत्प्रेक्षामात्रस्य उपयुक्ततां निरस्यता जगन्नाथेन-यद्वा हेतुफल-धर्मस्वरूपोत्प्रेक्षासु तादात्म्येनैवोत्प्रेक्षा'' इति प्राचां मतमनुसरता द्रविडपुंगवेन यदुक्तं तदपि परास्तमिति, यद्दूषितं तत् एतद्ग्रन्थप्रकरणान्तरस्थ ग्रन्थानवलोकननिदानमिति बोध्यम्।

एतेन-

विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः।
अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते।।

इति कारिकया विषयपदोपादानेऽपि यन्निगरणमभिहितम्। तत्रारुचिः सूचिता भवति।।

किंच- यद्वा इत्यादिना यरसर्वत्राभेदेनैवोत्प्रेक्षेति पक्षः उपन्यस्तः स जयदेवाद्यनुरोधेनेति मन्तव्यम्। अन्यथा स्वीये कुवलयानन्दे-पिनष्टीवेत्युदाहरणे-

**चित्रमीमांसा-**

**नच प्रेरणादेर्विषयत्वेन निमित्तत्वाभावे निमित्तान्तरमन्वेष्यं स्यादिति वाच्यम्**

**प्रेरणस्य पेषणरूपतयोत्प्रेक्षायां प्रान्तगतफेनचन्दनपुञ्जीभवनं निमित्तम्। करव्यापनस्य दिगङ्गनालेपनत्वोत्प्रेक्षायां तद्धवलीकरणं निमित्तमिति निमित्तान्तरस्य जागरूकत्वात्।**

तत्त्वालोकः

प्रथमतः अनुक्तविषया स्वरूपोत्प्रेक्षेत्युपपाद्य येषां तूपात्तयोः समुद्रचन्द्रयोरेव तत्कर्तृकपेषणलेपनरूपधर्मोत्प्रेक्षेति मतं, तेषांमते, इह धर्मिणि धर्मसंसर्गोत्प्रेक्षेति भदोऽवगन्तव्य इति उपसंहारो न कृतस्यात्। इतश्च सर्वत्राभेदेनैवोत्प्रेक्षेति पक्षे नात्यन्तं नैर्भर्यम्।

परन्तु- धर्मिणि धर्मोत्प्रेक्षोपगमे- पिनष्टीवेत्यादावुदाहरणे समुद्रचन्द्रयोः कर्तृत्वेन विषयत्वेन च द्विवारमन्वयनिबन्धनः क्लेशः। धर्म्युत्प्रेक्षायाः सादृश्यमूलकत्वं धर्मोत्प्रेक्षायास्तु तत्समानाधिकधर्मसम्बन्धनिबन्धनत्वमिति लक्षणस्याननुगतिः। अन्यतरघटितलक्षणनिर्माणेऽपि **"सम्भवति लघौ गुरौ तदभावात्" इतिन्यायेन** लघुभूतायाःसादृश्यमूलाया एव सम्भवे अन्यतरत्वघटितलक्षणकरणात् ज्ञानगौरवं चेति एतेदोषाः प्रादुष्युरिति समालोचनामात्रमेवेति पूर्वमेव निरूपितम्।

इत्थं उत्प्रेक्षाया अध्यवसायगर्भतां तत एव विषयनिगरणस्य युक्ततां च तस्यां प्रदर्श्य-पिनष्टीवेति पद्ये यदि प्रेरणस्य विषयत्वं निमित्तत्वंच तस्यैव भवेत्। नच तस्यैकदा विषयत्वं निमित्तत्वं चोपपद्यते। अतश्च निमित्तान्तरमन्वेष्टव्यं भवेत्। धर्मिणि धर्मोत्प्रेक्षेति वादिनां मते तु निमित्तान्तरगवेषणाप्रसंगः। यतस्तन्मते समुद्रचन्द्रयोः तत्कर्तृकपेषण लेपनरूपधर्मयोः उत्प्रेक्षणीययोःप्रेरणादेः निमित्तस्य लोकसिद्धत्वमेवेति न निमित्तगवेषण प्रसंग इति **काव्यप्रकाशिकाकाराद्यनुसरणं न** युक्तमिति मनसि निधायाशङ्कते **नचेति** निमित्तान्तरगवेषणस्येष्टत्वाददिति समाधत्ते- **प्रेरणस्येति।**

**चित्रमीमांसा-**

**"लिम्पतीव तमोङ्गानि वर्षतीवाञ्जनं नभः" इत्यादौ व्यापनादि लेपनादिरूपतया संभावितमिति वदता काव्यप्रका-शिकाकारेणापि धर्मस्वरूपोत्प्रेक्षोदाहरणेषु तादात्म्योन्प्रेक्षणपक्ष एवाश्रितः।**

तत्त्वालोकः

**अयं भावः**-"पिनष्टीव तरङ्गाग्रैः" इत्यत्र अनुक्त एवविषये प्रेरणरूपे पेषणं तादात्म्येनोत्प्रेक्ष्यताम्। तथोत्प्रेक्षायां निमित्तम् किमित्याकांक्षायां झटिति म्मुद्रतीरदेशपरिदृश्यमानतरङ्गसदृश विन्यासविशिष्टाकारफेन(चन्दन) पुञ्जीभवनं निमित्तमिति स्फुरत्येव। लोकेऽपि शिलाया उपरि चन्दने घृष्टे शिलाप्रान्तेषु तरङ्गाकारेण चन्दनं परिदृश्यते तद्वदत्रापीति निमित्तगवेषणायासोऽपि न भवति। एवमेतत्समशीर्षिकयोन्मिषन्त्यां"लिम्पतीव दिगङ्गनाः" इत्यत्रत्योत्प्रेक्षायामपि अनुक्तएवविषये करव्यापने दिगङ्गनालेपनं तादात्म्येनोत्प्रेक्ष्यताम्। तस्यां च धवलीकरणं निमित्तं झटिति स्फुरत्येव। लोकेऽपि अधवलं वस्तु धवलीभूतं चेत् गृहादिकं तदा सुधालिप्तमित्युन्नीयते तद्वदत्रापि दिशां धावल्यं निमित्तीकृत्य लेपनरूपत्वमुत्प्रेक्ष्यत इत्यदोषात् इति।

एतेन- समुद्रे पेषणकर्तृतादात्म्यं, चन्द्रे लेपनकर्तृतादात्म्यं चोत्प्रेक्ष्यमित्यादिवादाः **"भावप्रधानमारव्यातमिति" यास्को**क्त्यननुगुणत्वादुपेक्ष्याः इति सिद्धं भवति॥

उक्तार्थे संवादाय **काव्यप्रकाशाभिप्रायमविष्करोतिलिम्पतीवेति।**

**अयं भावः**-इह तमःकर्तृक मङ्गकर्मकं लेपनम्, नभःकर्तृकमंजनकर्मकं च वर्षणमुत्प्रेक्ष्यते, तत्र तावत् न तमोनभसोः लेपनवर्षणकर्तृत्वमुत्प्रेक्षितुं शक्यं तिङ्समभिव्याहारस्थले व्यापारप्रधानबोधानुरोधेन प्रधानीभूतव्यापारोत्प्रेक्षणस्यैव युक्तत्वेन अप्रधानीभूतकर्त्रुत्प्रेक्षाया अयुक्तत्वात्। नापि तमोनभसोः विभिन्नलेपनादिकर्तृतादात्म्संभावना कर्तुं शक्या पूर्वोक्तदोषतादवस्थयात्। तमोनभसोः लेपन वर्षणकर्त्रोश्च अनुगतसादृश्यप्रयोजकस्य साधारणधर्मस्याप्रतीतेः। व्यापनादेः प्रतीतावपि प्रागुक्तदोषानु द्धारात् तथोत्प्रेक्षितुमशक्यत्वाच्च।

## तत्त्वालोकः

अतएव **प्रकाशकृता-** व्यापनादि लेपनादिरूपतया संभावितमिति वदता तमःकर्तृकाङ्गकर्मकत्वेन ज्ञाते व्यापने लेपनतादात्म्यं निबिडत्वादिकं स्वारसिकं निमित्तीकृत्योत्प्रेक्ष्यम्, नभःकर्तृकाञ्जनकर्मकत्वेन ज्ञाते अधःप्रसरणे वर्षणतादात्म्यं आसाररूपतया कविप्रतिभानिबद्धवक्तृप्रौढोक्तिसिद्धं निमित्तीकृत्य उत्प्रेक्ष्यमिति धर्मस्वरूपोत्प्रेक्षोदोहरणेषु तादात्म्येनोत्प्रेक्षणपक्षआश्रित इति।।

**ग्रन्थकृतस्त्वत्र-** एकस्मिन्नेवानुपात्ते तमोव्यापने नभःप्रभृति भूपर्यन्तं सकलवस्तुषु निरन्तरमालिन्यरूपमेकमेव धर्मं निमित्तीकृत्य तमःकर्तृक लेपनतादात्म्यं, नभः कर्तृकाञ्जनवर्षण तादात्म्यं चेति द्वयमुत्प्रेक्ष्यते इत्युपपादयन्तः निमित्तद्वयगवेषणा-प्रयुक्तं गौरवराहित्यम् एकधर्मिकैकनिमित्तकानेकविधेयक संभावनाप्रयुक्त चारुता-तिशयं च अभ्यधुः।

एवं विषयाश्रयभेदेन एकस्यैव धर्मिणः अनेकधासंभावनं दृश्यते। तद्यथा-

रञ्जिता नु विविधास्तरुशैलाः नामितं नु गगनं स्थगितं नु।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण।।

इत्युक्तपद्ये एकस्यैव तिमिरव्यापनस्या श्रयभूततरुशैल-गगनधरित्रीककुब्रूपव्यक्ति-भेदात् विविक्तवर्णतया अनभिव्यक्त्यादिरूपनिमित्तभेदेन रञ्जन-नामन-स्थगन-पूरण-संहरणाद्यात्मना संभाव्यमानत्वात् धर्मिणि धर्मोत्प्रेक्षेति मते तिमिरे विषये रञ्जनादिर्धर्मः व्यापनं निमित्तीकृत्योत्प्रेक्ष्यते इति बोध्यम्।

**एतेन-**" लिम्पतीव तमोङ्गानि" इत्यादौ तमोगतत्वेन लेपनक्रियोत्प्रेक्षायां व्यापनादि निमित्तं गम्यमानम्। व्यापनादौतु उत्प्रेक्षाविषये निमित्तमन्यदन्वेष्टव्यं स्यात् इति निमित्तस्य अन्वेष्टव्यत्वं यत् **सर्वस्वकृतोक्तं** तदयुक्तम् निमित्तान्तरस्य जागरूकत्वादिति।।

**किञ्च-** उत्प्रेक्षाया अध्यवसायगर्भत्वेन लेपनमेव स्वविषयभूतं व्यापनं लक्षणया अवगमयति इति न तस्य गम्यमानता। तमसि लेपनरूपधर्मोत्प्रेक्षेति वदतस्तवमतेऽपि व्यापनस्य गम्यमानत्वं न युज्यते व्यापनसम्बन्धिनस्तमसः उपात्तत्वात् इति च बोध्यम्।।

**चित्रमीमांसा-**

**एवं "चुम्बतीव रजनीमुखं शशी" इत्यादावपि रजन्याः वदनत्वेन अध्यवसितं यदारम्भारव्य मुखं तस्य शशिनश्च सम्बन्धः चुम्बनत्वेनोत्प्रेक्ष्यते।**

तत्त्वालोकः-

यदपि **तेनैव**-नच उत्प्रेक्षायां विषयस्य गम्यमानत्वं युक्तम् तस्योत्प्रेक्षिताधारत्वेन प्रस्तुतस्याभि धातुमुचितत्वादिति उक्तम् तदपि चिन्त्यम्। "कमलमनम्भसि कमलेच कुवलये" इति तदीयातिशयोक्त्युदाहरणे अतिशयविवक्षायाःसावधिकत्वेन प्रस्तुतस्य मुखादेरभिधानप्रसंगात्। युक्तेरुभयत्र तुल्यत्वात्। विषयस्य प्रतीतिः लक्षणया भवत्वभिधया वा। नह्येतत्कृतो भेदोऽलंकारविभाजकोपाधिः, अपितु उपमानतादात्म्यसंभावनानिश्चय इत्यपि बोध्यम्।

इत्थं-"लिम्पतीवेति" पद्ये तादात्म्येनोत्प्रेक्षापक्षं प्रसाध्य "अङ्गुलीभिरिव केशसञ्चयम्"इत्यत्र धर्मिणि धर्मोत्प्रेक्षेति मतानुरोधेन शशिनि चुम्बनरूपो धर्म उत्प्रेक्ष्यते। तत्र उत्प्रेक्ष्यमाणो धर्म एवान्यः प्रकारः इति समाधानं मनसि निधाय अभेदेनैवोत्प्रेक्षणमिति मतानुरोधेनाऽप्यत्रोत्प्रेक्षोपपादयितुं शक्येत्यभिधत्ते-**एवं चुम्बतीति।**

इदं पद्यं प्राक्-'अन्यधर्मसम्बन्धात्' इति दलोपादानादव्याप्तिमापादयता उदाहृतम्। अथाप्यत्र ग्रहणस्य निमित्तत्वं न, अपि तु ततोऽन्यस्यैव गम्यमानस्येति नाव्याप्तिः।परन्तु विषयस्यात्रानुपादानम्। अनुपात्तश्चविषयो मुखसंबन्धरूपः तत्र चुम्बनरूपत्वमुत्प्रेक्ष्यते। तथाहि-

अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी।।

अत्रैवमन्वयः-अङ्गुलीभिरिव मरीचिभिः केशसंचयमिव तिमिरं सन्निगृह्य कुड्मलीकृतसरोजलोचनं रजनीमुखं शशी चुम्बतीव इति।

## तत्त्वालोकः-

अत्र शशिकर्तृकरजनीमुखकर्मकसम्बन्धे, शशिकर्तृकनिशामुख चुम्बनोत्प्रेक्षायाः तयोः दाम्पत्यव्यवहारसमारोपमन्तरा अचमत्कारित्वेन समासोक्तिगर्भताआवश्यकी। साधारणधर्मापेक्षाचोभयत्र समाना। तत्र चन्द्रोदयवर्णनस्य प्रकृतत्वेन शशिकर्तृकनिशामुखकर्मकसम्बन्धे नायककर्तृ-कनायिकामुख कर्मकचुम्बनमुत्प्रेक्षणीयम्। तत्र प्रकृतकोटिगतानां मरीचि-तिमिरसरोजानाम्, अप्रकृतकोटिगतानां अङ्गुली केशसंचय-लोचनानामेव साधारणधर्मत्वं बिम्बप्रतिबिम्ब भावात्। बिम्बप्रतिबिम्बभावश्च सादृश्यनिबन्धनः। सादृश्यं च प्रकृताप्रकृतकोटिगतानां मरीचीनां अङ्गुलीनां च तनुत्व-दीर्घत्वारुण्यादिभिः। तिमिराणां केशसंचयानां च **नील-नीरत्वाभ्यां सादृश्यम्**। सरोजलोचनयोश्च कान्तिमत्वेन तत्वम् तेषां च प्रातिस्विकरूपेण भेदेसत्यपि सादृश्यमूलका-भेदाध्यवसायेन अभिन्नत्वमपीति तेषामेव साधारणधर्मत्वमिति रजन्याः वदनत्वेनाध्यवसिते आरम्भरूपे मुखे शशिसंबन्धः चुम्बनत्वेनोत्प्रेक्ष्यत इति न पूर्वोक्ताव्याप्त्यवसरः। अत्रैव अन्वयान्तरेणापि धर्मे साधारण्यं सम्पादयितुं शक्यमित्यनुपदमेव वक्ष्यति। तथाच मरीचिकरणकतिमिरसंचयकर्म-कग्रहणपूर्वकमुकुलीकृतसरोजविशिष्टरजनीमुखसम्बन्धे प्रकृते अप्रकृता-ङ्गुलीकरणककेशसंचयकर्मकग्रहणपूर्वकनिमीलितलोचनविशिष्टनायिका-मुखचुम्बनं तादात्म्येनोत्प्रेक्ष्यते इति यावत्।

**एतेन**-उत्प्रेक्षावयवो नामालंकारोऽतिरिक्तोऽत्रेति प्रतिपादयतां **भामहादीनाम्**, उत्प्रेक्षावयवस्संसृष्टिप्रभेदोऽत्रेति वदतो **वामनस्य**, अङ्गाङ्गिभावसङ्करोऽत्रेति प्रतिपादयतो **रुय्यकस्य** च मतमनुपादेयमिति ध्वनितं भवति॥

तथाहि- अद्यत्वेनोपलभ्यमानेषु अलंकारग्रन्थनिर्मातृषु आद्यो भामहः-**मेधाविना** अलक्षितामप्युत्प्रेक्षाम्-

अविवक्षितसामान्या किञ्चिचोपमया सह।
अतद्गुणक्रियायोगादुत्प्रेक्षातिशयान्विता ॥

इति लक्षयित्वापि तृतीयपरिच्छेदे-

## तत्त्वालोकः-

श्लिष्टस्यार्थेन संयुक्तः किंचिदुत्प्रेक्षयान्वितः।
रूपकार्थेन च पुनः उत्प्रेक्षावयवो यथा॥

इति श्लेषरूपकाभ्यां उपस्कृता उत्प्रेक्षा यत्र प्राधान्येनोपतिष्ठते तत्र **उत्प्रेक्षावयव इति** चतदर्थः। अत्र पाठभेदोऽप्यस्ति।

श्लिष्टेनार्थेन संसृष्टः किंचिच्चोपमयान्वितः।
रूपकार्थेन वा युक्तः उत्प्रेक्षावयवो यथा॥

इति **जीवानन्दविद्यासागरोद्धृतः**। उक्तपाठानसारेण(अङ्गुलीभिरिव केशसंचयम्)इत्यत्र अङ्गुलि-मरीचीनां, केशसञ्चय-तिमिराणां, सरोजलोचनानां याः उपमाः, ताभ्यः रजनीमुखमिति श्लिष्टरूपकेण चोपस्कृता चुम्बनोत्प्रेक्षा प्राधान्यम् अवलम्बत इत्युत्प्रेक्षावयवत्वम्।

यद्वा-एकदेशविवर्तिरूपकवत्- एकदेशविवर्त्युपमावद्वा विशेष्यभूत-चुम्बनोत्प्रेक्षाया अवयवभूते मरीचिकरणकतिमिरसम्बन्धे केशग्रहणोत्प्रेक्षा सरोजकुड्मलीकरणेअक्षिनिमीलनोत्प्रेक्षागम्यत इत्यवयवभूतोत्प्रेक्षायुक्तप्रधानी-भूतोत्प्रेक्षेति उत्प्रेक्षावयवत्वम्। यतश्च अङ्गुलीभिः केशेषु गृहीत्वा प्रियामुखं चुम्ब्यते साच लोचने निमीलयतीति प्रायोवादोऽपि जागर्ति इति।

तदपि न युक्तम्। उत्प्रेक्षाभेदत्वेनैव परिगणयितमुचितत्वात्। न पुनरलंकारान्तर-त्वेनेति। अत एव **दण्डिना**-" उत्प्रेक्षाभेद एवासौ उत्प्रेक्षावयवोऽपि च "इत्युक्तम्।

वामनस्तु-दण्डयुक्तोत्प्रेक्षाप्रभेदतां निराकुर्वन्निव संसृष्टि भेदतामस्याह। तद्यथा-"अलंकारस्य अलंकारयोनित्वं संसृष्टिः। तद्भेदौ **उपमारूपकोत्प्रेक्षावयवौ**" इति विभज्य "उत्प्रेक्षाहेतुरुत्प्रेक्षावयवः " इति सूत्रयित्वा उत्प्रेक्षायाःहेतुरलंकारः उत्प्रेक्षावयवः। अवयव शब्दो ह्यारम्भकं लक्षयतीति सूत्रार्थं व्यवृणुत। उदाजहार चैतदेव पद्यम्। **गोपेन्द्रतिप्पभूपालश्च**-अत्रोपमारूपकानुप्राणितस्यश्लेषस्य उत्प्रेक्षोपपादकत्वा-दुत्प्रेक्षावयवत्वम् इत्युपपादयमास। उक्तोदाहरण एव वामनोक्तं निराकुर्वन्निव भोजराजः **सरस्वतीकण्ठाभरणे**-

## तत्त्वालोकः-

उत्प्रेक्षावयवो यश्च या चोत्प्रेक्षोपमा मता।
मतश्चेति न भिद्यन्ते तान्युत्प्रेक्षास्वरूपतः।(४.५२)

इत्युत्प्रेक्षायामन्तर्भावमाह।।

**केचित्तु**- यत्र प्रधानक्रिया नोत्प्रेक्ष्यते अवयवक्रिया तु उत्प्रेक्ष्यते तमुत्प्रेक्षावयवं वर्णयन्ति तेषां मतेअङ्गुलीभिरिवेति पद्ये नोत्प्रेक्षावयवत्वम् इत्याहुः।

**अलंकारसर्वस्वकारस्तु** -अस्मिन्नेवोदाहरणे वाक्योक्त समासोक्तोपमाभ्यां, श्लेषानुगृहीतातिशयोक्तेश्च अनुगृहीता उत्प्रेक्षा प्रधानीभूतेत्यङ्गाङ्गिभावसंकर इत्याह। सर्वेष्वप्येषु पक्षेषु अस्वरसो ग्रन्थकृत इत्युपपाद्य तत्पक्षमनूद्यते।

तथाहि- यदि **वटुकनाथशर्मप्रभृतिभिः** वारणासीयैः अद्यतनैः **तिरुपतिवासिभिः डि.टि.ताताचार्यशिरोमणिभिश्चो**द्धृतोऽयं पाठः प्रथमं प्रदर्शितः। तदनुरोधेन अत्र उत्प्रेक्षावयवस्य प्रसक्तिरेव नास्तीति कथंचिद्वक्तुं शक्यम्। यतश्चात्र रूपकस्य न प्रसक्तिः उपमाप्रायपाठात्। नवात्र मुखशब्दे श्लेषोऽत्र विवक्षितः निशारम्भस्यैव मुखरूपत्वेनाध्यवसानात्।(वाच्योत्प्रेक्षान्तरेणोपयोगोऽपि नास्ति)। अथापि द्वितीयपाठानुरोधेन तल्लक्षणप्रसक्तिरस्ति उपमादियोगादिति चेत्।

**अत्रोच्यते**- उक्तपद्ये उपमादीनामङ्गभावेन प्रतीतावपि नातिरिक्तता ,अपि तु प्राधान्येन प्रतीतिगोचरोत्प्रेक्षैव, '**प्राधान्येन व्यपदेशा भवन्ति**' इति न्यायात्। **अन्यथा**-

विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम्।
प्रवर्तते नाऽकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती।

इत्यादौ विविक्तवर्णाभरणा, सुखश्रुतिः, प्रसन्नगम्भीरपदा एषां पदानामनेकार्थकत्वेन श्लेषस्य प्रतीतावपि यत्समासोक्तेरेव प्राधान्यमुपगतं तत् न संगच्छेत। किञ्चात्रापि **समासोक्त्यवयवो** नामातिरिक्तालंकारः कल्पयितव्यः स्यात्। एवमन्यत्रापि। अत एव **दण्डी-भोजराजश्च** नामुमलंकारान्तरमित्यभ्युपेयतुः। प्रत्युत निराचक्रतुरेव।

**चित्रमीमांसा-**

## "वृत्तानुपूर्वे च" इत्यत्राप्यन्यपूर्वके शेषाङ्गनिर्माणे यत्नपूर्वकतत्तादात्म्योत्प्रेक्षेत्याद्यूह्यम्।।

### तत्त्वालोकः

यदपि **वामनः**-"अंगुलीभिरिवे"त्यत्र उत्प्रेक्षावयवलक्षणं संसृष्टिप्रभेदमाह। तदपि न युक्तिमत्। अलंकाराणामलंकारान्तरोत्थापकत्वेसति तिलतण्डुलवत् पृथगवस्थानाभावात् संसृष्टेरप्रसक्तेः। अत एव उत्प्रेक्षास्वरूपनिष्पत्तौ समासोक्त्युपमानां अवेक्षणात् अनुग्राह्यानुग्राहकभावस्य प्रतीतिरिति।

नापि **रुय्यकाभिमतम्**-अङ्गाङ्गिभावसंकरमात्रम्। ततोविलक्षणत्वात्। यतोऽत्र समासोक्त्युपमानां उत्प्रेक्षोत्थापकत्वे सति अङ्गाङ्गिभावप्रतीतावपि समासोक्त्युत्प्रेक्षयोः एककालिकतया समप्राधान्यमिति सर्वस्वकाराभिमताङ्गाङ्गिभावसंकरापेक्षया विलक्षणस्समप्राधान्यसंकरालंकारः। तस्मात्प्राचीनानामुक्तयश्चिन्त्या इत्येव ग्रन्थकाराशय इत्युत्पश्यामः। विस्तरस्त्वन्यत्र वक्ष्यते।।

इत्थं यद्वेति कल्पान्तरानुरोधेनापि-"अंगुलीभिरिवेति" पद्ये उत्प्रेक्षामुपपाद्य प्रागुदाहृते 'वृत्तानुपूर्वेच' इति पद्ये अव्याप्तिः सुपरिहरेत्याह-**वृत्तानुपूर्वे इति।**

वृत्तानुपूर्वे च नचातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये।
शेषाङ्गनिर्माणविधौ विधातुः लावण्य उत्पाद्य इवास यत्नः।।

इतिपूर्णपद्यम्। व्यारव्यतं च प्रागेव। अत्रायमभिप्रायः अन्यादृशलावण्यशालिजङ्घासृष्टचवेक्षणानुमितं अशेषलावण्यकोशव्ययं निमित्तीकृत्य अनुपात्ते अयत्नपूर्वके शेषाङ्गनिर्माणविषये यत्नपूर्वकशेषाङ्गनिर्माणं तादात्म्येनोत्प्रेक्ष्यत इति नातिव्याप्तिरिति।।

**एतेन**-"वृत्तानुपूर्वे" इति पद्ये इवशब्दस्य वितर्कमात्रप्रतिपादकत्वं न पुनरुत्प्रेक्षोपयुक्तसंभावनाप्रतिपादकत्वम्, तत् सामग्रयभावात् इत्युपपादितवतो विमर्शिनीकृतः अभिसन्धिरसमीचीन इति ध्वनितं भवति। अन्यथा निरलंकारतास्य प्रसज्येत। यतश्च न तावदुपमा वक्तुं शक्या विषयस्यानुपादानात्। नाप्यतिशयोक्तिः इवशब्दोपादानात् निमित्तस्य चारुणः असंभवे सति तथोक्तिःकदाचिदपि घटते।

## तत्त्वालोकः-

नंचात्र तथा-निश्शेषलावण्यकोशव्ययस्य निमित्तस्योपलम्भात्। अत एव-सहृदयहृदयाह्लादकनिमित्ताभावेन उत्प्रेक्षाभावमुपपादयता ग्रन्थकृता-"इन्दुर्लिप्त इवेति" पद्यमुदाहृतं नपुनरिदं पद्यम्। प्रत्युतोत्प्रेक्षोदाहरणतयैवोपन्यस्तमिति विभाव्यम्।

**इदमत्रावधेयम्-**

यदत्र ग्रन्थकृता-"अत्र ब्रूमः---इत्युपक्रम्य "यत्रान्यधर्मसम्बन्धात्" इति **विद्यानाथीयं** लक्षणं व्यापारमुख्यविशेष्यकशाब्दबोधवादिनां **वैयाकरणाना-मनुरोधेन**, प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधवादिनां **नैयायिकानामनुरोधेन** च परिष्कृतम्। तयोराद्यमते लक्षणघटकस्य अन्यत्वेनेत्यस्य उपमानरूपत्वेनेत्यर्थः तथाच-"अन्यधर्मसम्बन्धनिमित्तकविषयधर्मिकान्य-दात्म्यसंभावनमुत्प्रेक्षेति। अस्ति चेदं लक्षणं-धूमस्तोमं तमश्शङ्के 'इति स्वकृत **चन्द्रालोको**दाहृतपद्ये। यतस्तत्र तमसि नैल्यदृष्टि प्रतिरोधकत्वादिसम्बन्धेन निमित्तेन धूमतादात्म्यसंभावनात्। "लिम्पतीव तमोङ्गानी"त्यादौ आख्यातवाच्ये कर्तरि तमसः तादात्म्येनान्वये कर्तुः धात्वर्थलेपनेऽन्वयाभावात् तस्य इवार्थसंभावनायां तस्याश्च विषयतासम्बन्धेन व्यापनेऽन्वय इति तमः कर्तृक लेपनसंभावनाविषयः नभःकर्तृकाञ्जनवर्षण-संभावनाविषयो व्यापनमिति बोधः, एवं चैतन्मते स्वरूपोत्प्रेक्षा धर्मिस्वरूपोत्प्रेक्षारूपा एकैव। परन्तु "लिम्पतीवे"त्यादौ व्यापारप्राधान्यानुरोधेन उपात्तविषया-अनुपात्तविषया चेति द्विधा भवति।

**द्वितीये नैयायिकमते**-वैयाकरणमतवत्-लःकर्मणीति विहितस्याप्याख्यातस्य कर्त्रर्थकत्वाभावेन तत्र तमोनभसोःअभेदेन अन्वयायोगात्- अन्यतादात्म्य-संभावनमिति लक्षणार्थस्य लिम्पतीवेत्यत्रापि अव्याप्तत्वेन लक्षणाननुगम इति मत्वा अन्यतादात्म्यं नाम अन्यत्वमेव तच्च अन्यप्रकाररूपम्। स च प्रकारः धर्मिणि धर्म्यन्तरोत्प्रेक्षायां विषयभूतधर्म्यन्तरमन्यः प्रकारः, लिम्पतीवेत्यादौ तमोनभसोः विषययोःउत्प्रेक्षणीयतया अभिमतो धर्मः प्रकार इति न लक्षणाननुगमः। परन्तु एतन्मते स्वरूपोत्प्रेक्षा-धर्म्युत्प्रेक्षा-धर्मोत्प्रेक्षा चेति द्विधेति पूर्वमताद्विशेषः। लक्षणंतु अनुगतं भवति।

## तत्त्वालोकः

**अन्यधर्मस्म्बन्धनिमित्तकविषयधर्मिकान्यप्रकारकसंभावनमुत्प्रेक्षेति। अत एव विद्यानाथेन**- प्रकाशकाराभिमतं

"संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्।"

इति लक्षणं परित्यज्य **प्रकाश**-**सर्वस्वो**भयानुगतं वैयाकरणनैयायिकानुगुणं च लक्षणं- "यत्रान्यधर्मसम्बन्धात् अन्यत्वेनेति" लक्षितम्। एतेन प्रकाशकारः वैयाकरणानुरोधी **सर्वस्वकारः**नैयायिकानुरोधीति ज्ञायते। अत एव ग्रन्थकृतापि वैयाकरणमतानुरोधेन अव्याप्तिमापाद्य उभयसाधारण्येन लक्षणं नीतम् "**अत्र ब्रूम** इत्यादिना।

अथापि- स्वस्य वैयाकरणपक्षपातित्वम्" यद्वा हेतुफलधर्मस्वरूपोत्प्रेक्षोदाहरणेष्वापि तादात्म्येनैवोत्प्रेक्षा" इति कल्पान्तरमारभमाणेन स्फुटीकृतम्। अत एव **कुवलयानन्दे**-जयदेवाभिमतं-

"उत्प्रेक्षोन्नीयते यत्र हेत्वादिर्निह्नुतिं विना।" इत्युत्प्रेक्षालक्षणमनभिधाय-

"संभावना स्यादुत्प्रेक्षा" इति लक्षयित्वा उक्तानुक्तास्पदाद्यत्रेति व्यभजत्। नपुनः धर्मोत्प्रेक्षा धर्म्युत्प्रेक्षेति। उक्तस्य धर्म्युत्प्रेक्षा-धर्मोत्प्रेक्षा इत्यस्य स्वानभिमतिमप्यसूचयत्। केचित्तु तमोनभसोःविषययोः तत्कर्तृकलेपनवर्षणस्वरूपधर्मोत्प्रेक्षेत्याहुः। तन्मते स्वरूपोत्प्रेक्षायां धर्म्युत्प्रेक्षा-धर्मोत्प्रेक्षा चेत्येवं द्वैविध्यं द्रष्टव्यम् इति विस्तरस्तु अन्यत्र वक्ष्यतेः।

**रसगंगाधरकारस्तु**- नैयायिक-वैयाकरणयोः मतमुभयमप्यनुभवानुगुणमिति मत्वा तदानुगुण्येनैव लक्षणं प्राणैषीत्-तद्भिन्नत्वेन प्रमितस्य पदार्थस्य रमणीयतद्वृत्तिधर्मनिमित्तकं तादात्म्येन संभावनं धर्म्युत्प्रेक्षायाः लक्षणम्। तदभाववत्वेन प्रमितस्य पदार्थस्य तत्समानाधिकरणधर्मनिमित्तकं तद्वत्वेन संभावनं धर्मस्वरूपोत्प्रेक्षाया लक्षणमिति।

सत्यम्। अथापि-रसगंगाधररीत्या लक्षणोपगमे धर्मोत्प्रेक्षासु- " लिम्पतीव तमोङ्गानी"त्यादौ तमोनभःप्रभृतीनां(कर्तृणां) कर्तृत्वेनैकवारम्, विषयत्वेन चैकवारमिति द्विवारमन्वयक्लेशः। एवं धर्म्युत्प्रेक्षाणां सादृश्यप्रयुक्तत्वम्, धर्मोत्प्रेक्षाणांन्तु उत्प्रेक्ष्यमाणधर्मसमानाधिकरणधर्मसंबन्धप्रयुक्तत्वम्। यथा-'अस्यां मुनीनामपि मोहमूहे" इत्यादौ भृम्वादौ मोहरूपधर्मोत्प्रेक्षायां तत्सिद्धये मोहसहचरित

## चित्रमीमांसा-

**अन्यधर्मोऽनुगामितयैव न विवक्षितः, किन्तु साधारणधर्म इव बिम्बप्रतिबिम्बभावादिभिः सर्वैरपि प्रकारैर्विवक्षितः।**

### तत्त्वालोकः

भृग्वादिश्लेषमूलकाभेदाध्यवसायलब्धकुचपरिशीलनादिरूपधर्मस्य (विषयगतत्वेन), निमित्तत्वमिति लक्षणाननुगमो वारणीयः।

नच- तन्निष्ठतत्सहचरितान्यतरधर्मनिमित्तकं तत्वेन तद्वत्वेन वा संभावनमुत्प्रेक्षेत्यन्यतरत्वघटितलक्षणकरणेन अननुगमस्याप्रसक्तावपि सर्वालंकारिकसम्मतस्य सादृश्यमूलकत्वमुत्प्रेक्षायाः इति वादस्य दत्ततिलाञ्जलित्वापत्तेः। अन्यतरत्वादिनिवेशकृतज्ञानगौरवस्यानिवार्यत्वाचोक्त्ा रसगंगाधरकाररीतिश्चिन्त्यैव, "सम्भवति लघौ गुरौ तदभावात्" इति **दीधितिकृच्छिरोमणि** वाक्यानुसारात्।

लघुभूतं च लक्षणं-अन्यधर्मसम्बन्धनिमित्तकं विषयधर्मिकं अन्यप्रकारकं संभावनमुत्प्रेक्षेति प्रागुक्तमेव। तच्च धर्म-धर्म्युत्प्रेक्षासाधारणमिति न लक्षणाननुगमः।

न वा सर्वालंकारिकसम्मतस्य- उत्प्रेक्षा सादृश्यमूलेत्यस्याननुगतिः गौरवंवा।

अत एव **अलंकारकौस्तुभकृता-**रसगंगाधरकृन्मतमनूद्य आहुः इत्यस्वरसः प्रदर्शितः इति दिक्।

ननु-किमनेनाडम्बरेण -यत्र स्वमात्रधर्मात् "अङ्गुलीभिरिवे"त्यादौ अन्यमात्रधर्माद्वा "भूयस्तराणि" इत्यादौ किंचिदुत्प्रेक्ष्यते तत्रान्यधर्मसम्बन्धादिति लक्षणांशाभावादव्याप्तिरिति चोद्यं न परिहृतमिति। तत्परिहारायोपक्रममाणः "एका क्रिया द्व्यर्थकरी बभूव" इति न्यायेन **सर्वस्वकाराभिमतं** अन्यधर्मतासम्पयादनोपयोगित्वे तत्परिगणितयोः अनुगामित्व-श्लेषयोरेवेति न भ्रमितव्यम् अन्येषामपि तत्संभवात् इति प्रदर्शयितुं च प्रस्तौति **अन्यधर्मइत्यादिना**।

अन्यधर्मः विषयिधर्मः, अनुगामितयैव स्वत एव साधारणीभूतया तत्तद्धर्मतापर्याप्त्यधिकरणवृत्त्येकसामान्योपस्थापकैकपदोपस्थाप्यतयैति न विवक्षितः। **प्रकारैरिति** साधारणीकरणोपायेन उपमानमात्रनिष्ठः उपमेयमात्रनिष्ठोवा धर्मः उभयसाधारणीकृतो ग्राह्यः। स चोपायः क्वचित् बिम्बप्रतिबिम्बभावः क्वचित्समासान्तराश्रयणम्, क्वचिदन्वयभेदः, क्वचिदाक्षेपः, क्वचिद्वस्तुप्रतिवस्तुभावः,

**चित्रमीमांसा-**

**तथा च यथा-**

**आवर्जिता किञ्चिदिव स्तनाभ्यां**
**वासो वसाना तरुणार्करागम्।**
**सञ्जातपुष्पस्तबकावनम्रा**
**संचारिणी पल्लविता लतेव।।**

**इत्यत्र बिम्बप्रतिबिम्बभावकृताभेदाध्यवसायेन।**

तत्त्वालोकः

क्वचिदपह्नुतिः, क्वचिच्छ्लेषः, क्वचिदुपमा, क्वचिदुत्प्रेक्षा, क्वचिदसङ्गतिः, क्वचिद्विरोधाभासः, क्वचिदर्थान्तरन्यासः क्वचित् रूपकम् इत्याद्यूह्यम्।

इतःप्रागेव "अन्यधर्मस्यानुगामितायां "बालेन्दुवक्राणि" इति पद्यं उदाहृतम्। तत्र च प्रकृतेषु पलाशकुसुमेषु नखक्षततादात्म्यसंभावनायां वक्रत्वलोहित्ये स्वत एव उभयसाधारणधर्मौ इति मनसि निधाय बिम्बप्रतिबिम्बभावमूलकाभेदाध्यवसायेन अन्यधर्मसम्बन्धसम्पादनोपयोगिस्थलविशेषं निर्दिशति-**तथाचेत्यादिना।**

**कुमारसम्भवे**-वनदेवताभिरनुगतायाः पार्वत्याः अवलोकनसामयिकावस्थावर्णनमिदम्। स्तनाभ्यां=स्तनभारेण किञ्चित् आवर्जितेव अवनमितेव, तथा तरुणार्करागं बालार्कप्रभम् वासः वसनम्, वसाना आच्छादयन्ती, अत एव संजातौ यौ पुष्पस्तबकौ कलिकाकीर्णपल्लवग्रन्थी ताभ्यामवनम्रा अवनता, पल्लविता संजातकिसलया, सञ्चारिणी-संचरणशीला लतेव वीरुदिव, वनदेवताभ्यामनुप्रयाता स्थावरराजकन्या हैमवती अदृश्यतेति पूर्वेणान्वयः।

अत्र पार्वत्यां लतातादात्म्यं संभाव्यत इत्युत्प्रेक्षा वाच्या अथापि विषयिलताधर्मस्य स्तबकपल्लवादिसम्बन्धस्य विषयभूतायां पार्वत्यामभावात् सा नोपपद्यते। उपमानमात्रनिष्ठत्वादित्याशंकायां साधारण्यसंपादकमुपायमाह-**इत्यत्रबिम्बेति।** उक्तोपायानुसारेण तु नाव्याप्तेःप्रसक्तिः।यतश्चात्र स्तनावर्जितत्व स्तनवक्रावनम्रत्वयोः वस्तुप्रतिवस्तुभावमूलतया प्रकृताप्रकृतसाधारणीकरणेन, वासः

**चित्रमीमांसा-**

**तारुण्यकुञ्जरारूढां विलासकमलाकुलाम्।**
**मूर्तामिव मनोजस्य त्रैलोक्यविजयश्रियम्।।**

**इत्यत्र समासभेदाश्रयणकृताभेदाध्यवसायेन च धर्मस्य प्रकृताप्रकृतसाधारण्यादन्य धर्मसम्बन्धः**

तत्त्वालोकः

पल्लवयोःबिम्बप्रतिबिम्बभावमूलतया प्रकृताप्रकृतसाधारण्याच्च अन्यधर्मस्य सम्बन्ध उपपद्यत इति। देव्यां संचरणशीलपल्लवितलतातादात्म्य संभाव्यत इत्युत्प्रेक्षोपपन्नेतिनाव्याप्त्यवकाश इति भावः।।

सम्प्रति समासभेदाश्रयणकृताभेदाध्यवसायेनापि
धर्मे प्रकृताप्रकृतसाधारण्यं संभवतीत्युदाहरति-**तारुण्येति।**

तारुण्यमेवकुञ्जरः गजः तमारूढाम्, यद्वा तारुण्यं कुञ्जरइव इति विशेषणसमासः। उदीयमानमदः कुञ्जर इत्यर्थः। तम् आरूढाम्, अन्यत्र नायिकापक्षे तारुण्यं कुञ्जर इवेत्युपमितसमासेन कुञ्जरसदृशतारुण्यशालिनीम्, तथा विलासप्रयोजककमलैराकुलां व्याप्ताम्। कमलवनविहरणशीलमिति यावत्। यद्वा विलासार्थं कमलं कुञ्जरोपरि अवस्थानायआस्तृते सुवर्णचित्रितचर्मणि आकुलां व्याप्यवर्तमानाम् कुञ्जरपरिस्तोमावस्थितामिति यावत्। पक्षे विलासाःकमलानीव आह्लादकत्वात् तैराकुलां प्रचुरां ,विलासमयीमिति यावत्। अथवा आकुलशब्दो व्यग्रार्थकः इति विलासव्यग्रामित्यर्थः। "अश्रुपूर्णाकुलेक्षणामित्यादिप्रयोगानुसारात्। मनसि मनसो वा जायत इति मनोजःकामः तस्य मूर्तां परिगृहीताकृतिं, त्रिलोक्येव त्रैलोक्यं तस्य विजयमिव विजयलक्ष्मीमिव स्थिताम् ददर्श इति शेषः।अत्र कमलशब्दःपरिस्तोमे प्रयुक्तः। अत्र

**कमलं तु नपुंसकं,।**
**पद्मे रक्ताम्बुजे तोये स्थौणेये छुरिकादिनः।**
**हैमाद्यैश्चित्रिते चर्मण्यथस्त्री कमला श्रियाम्। मृगे तुद्वे।**

**इति नानार्थार्णवसंक्षेपः।अत्रान्यधर्मसम्बन्धसम्पादनरीति मुपपादयति-इत्यत्रेति।**

## तत्त्वालोकः

**अयं भावः**-प्रकृतनायिकायाम्, अप्रकृतसाकारत्रैलोक्यविजयलक्ष्मीतादात्म्यं संभाव्यते, तस्यां निमित्तंच तारुण्यकुञ्जरारूढत्वम्, विलासकमलाकुलत्वंच धर्म इति वक्तव्यम्, तस्य विजयलक्ष्मी-नायिकान्यतरनिष्ठत्वमेव नोभयनिष्ठत्वमिति न चाशंकनीयम्, समासभेदाश्रयेण प्रकृताप्रकृतसाधारण्यस्य सम्पादयितुंशक्यत्वात्। तद्यथा-अप्रकृतायां राजलक्ष्म्यां तारुण्याभिन्नतापन्नकुञ्जरारोहणस्य रूपकसमासेन(मयूरव्यंसकादिसमासेन) विशेषणसमासेन वा, सम्बन्धःप्रकृतायां नायिकायां तारुण्यं कुञ्जरमिवेत्युपमितसमासाश्रय पूर्वपदार्थप्राधान्याश्रयेण समुपारूढयौवनस्य सम्बन्धःतथा-अप्रकृतायां विजयलक्ष्म्यां मध्यमपदलोपि-समासाश्रयणेन, उपमितसमासाश्रयणेनचप्रकृतायां नायिकायां च सम्बन्ध इति तयोरभेदमध्यवस्य तदुभयसाधारण्यादन्यधर्मसम्बन्धः उपमाया-मिवात्राप्याश्रीयते। तस्यां यथा-

श्येनपक्षपरिधूसरालकाः सान्ध्यमेघरुधिरार्द्रवाससः।
अङ्गना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः॥

इत्यादौ रूपकोपमितसमासभेदाश्रयणकृताभेदाध्यवसायेन धर्मसाधारण्यं तद्वदत्रापि।

अतएव-

विकसित तमालनीलां पुनःपुनःचलतरङ्गकरपरिमृष्टाम्।
फुल्लैलावनसुरभिम्-उदधिगजेन्द्रस्य दानलेखामिव स्थिताम्।

इति **प्रवरसेनविरचित सेतुबन्धस्थं** पद्यं व्याख्यास्यता।**रामदासभूपतिना**-वेलायां मदलेखातादात्म्यं संभाव्यत इति व्याख्यातमुपपादितं च तथैव। उदधिरेव गजेन्द्र इतिरूपकम्।तस्य दानलेखमिव स्थितामित्युत्प्रेक्षा। मदलेखातौल्यमाह-विकसितेति। विकसितं यत्तमालपुष्पं तेन नीलाम्, तमालस्य श्यामत्वात् एवं चञ्चलकल्लोलरूपेण करेण परिमृष्टाम् "इत्युपपाद्य" मदलेखापि तमालवच्छ्यामा चलतरङ्गवद्यः करःशुण्डा तया परामृष्टा, फुल्लैलावनवत्सुरभिश्च भवतीत्यर्थ इति। एतेन रूपकोपमित समासभेदाश्रयणकृताभेदाध्यवसायेन धर्मस्य प्रकृताप्रकृतसाधारण्या-दन्यधर्मसम्बन्धः स्फुटमवगमितः॥

**चित्रमीमांसा-**

**तथा-'अङ्गुलीभिरिव' इत्यत्रान्वयभेदकृताभेदाध्यवसायेन धर्मस्य प्रकृताप्रकृतस ाधारण्यात् अन्यधर्मसम्बन्धः सुसम्पाद इति न तत्राव्याप्तिः।**

तत्त्वालोकः-

इत्थं सत्यपि प्रकृतसेतुबन्धपद्ये उपमाभ्युपगता कौस्तुभकारेणेति विवेचनीयम्।

रसगगाधरकारादयस्तु-समासभेदाश्रयण कृताभेदाध्यवसायेनैकधर्मता संपादनस्य प्रकृतसाधारणधर्मतासम्पादकत्वं नाद्रियन्ते। अपि तु समासभेदनिबन्धनयोरर्थयोः श्लेषमूलकाभेदाध्यवसायेन धर्मैक्यसम्पादनात् इत्येषामभिप्रायात्। श्लेषस्य तत्सम्पादकत्वं "दृष्टिः सम्भृतमङ्गला बुधमयी देव त्वदीया सभा।" इत्यादौ मङ्गलादिशब्दात् कल्याणाङ्गारकादीनां अनिवार्यमिति तेनैव गतार्थत्वसंभावात्। अत एव-उपमोत्प्रेक्षयोः समासभेदाश्रयेण धर्मसाधारण्ये उदाहरणं अनेन क्वापि नोपन्यस्तमिति बोध्यम्।

क्वचिद्धर्मस्य प्रकृताप्रकृतसाधारण्यं अन्वयभेदकृताभेदाध्यवसायेन संभवतीति "अंगुलीभिरिव केशसंचयम्" इति प्रागुदाहृतपद्ये अङ्गुलीसदृशीभिर्मरीचिभिः केशसंचयसदृशस्य तिमिरस्य ग्रहणरूपो यः प्रकृतमात्रधर्मःतस्मादेव निमित्ताचुम्बनमुत्प्रेक्षितमिति अन्यधर्मसम्बन्धाभावादव्याप्तिरुद्भाविता तां परिहरति-

**तथा अङ्गुलीभिरिवेति।**

श्लोकार्थस्तु वारद्वयं विवृत एवेति तदुपरि विचारःक्रियते। **अत्रेयमाशङ्का** उक्तपद्ये केषामलंकाराणां प्रतीत्युपारूढत्वम्? तेष्वपि केषामङ्गाङ्गिभावः? इति।उच्यते-उपमा-समासोक्त्युत्प्रेक्षाणां प्रतीत्युपारूढत्वम्। तेषु उत्प्रेक्षा-समासोक्त्यो-रङ्गित्वम्, उपमाया अङ्गत्वमिति, उपमायाः समासोक्त्युत्प्रेक्षयोश्चाङ्गाङ्गिभाव इति। सत्यम्। अङ्गुलीभिरिव मरीचिभिः, केशसंचयमिव तिमिरं इत्यनयोः कुड्मलीकृतसरोज-लोचनमित्यत्र चोपमाया व्यक्ततास्ति, तथापि समासोक्त्युत्प्रेक्षेकथं भवतः? तयोराद्यायास्समासोक्तेः विशेषणसाम्यमूलकत्वात्, द्वितीयायाश्चोत्प्रेक्षायाः विषय-विषय्युभयानुगतधर्म-साधारणनिमित्तसत्यपेक्षत्वात्। अत्रच चन्द्रोदयवर्णनस्य

## तत्त्वालोकः

प्रकृतत्वात् तदानुगुण्येन अङ्गुल्युपमितमरीचिभिः केशसंचयोपमितस्य तिमिरस्य ग्रहणरूपो यो धर्मः सः विषयभूतचन्द्रमात्रवृत्तिः नपुनरुपमानभूतनायककवृत्तिरित्यन्यधर्मसम्बन्धाभावात् इति।

**अत्रोच्यते**-" अङ्गुलीभिरि"वेत्यत्र या अङ्गुलिमरीचीनां करणभूतानामुपमा तस्याः याच केशसंचयतिमिरयोःकर्मभूतयोरुपमा, याच कुड्मलपदमुरव्यार्थान्वयसामर्थ्यरूपयोग्यतायाः सरोजधर्मताया बलात् सरोजलोचनयोः उपमितसमासे-सति लोचनसरोजयोश्च कर्मभूतयोरुपमा परिदृश्यते न तासां प्राधान्यम्। शशिकर्तृकरजनीमुखकर्मकचुम्बनस्यैव मुरव्यवाक्यार्थत्वेन प्रतिभासात्। तत्र च न हि चुम्बनोपमा वक्तुं शक्या विषयस्यानुपादानात्। नाप्यतिशयोक्तिः इवशब्दोपदानात्। इत्थं सत्युत्प्रेक्षैव वाच्या तस्या एव चमत्कृति जनकत्वात् सा चोत्प्रेक्षा रजनी शशी इति पुंस्त्रीलिङ्गाभ्यां नायिकानायकयोः प्रतीत्या, रजनीमुखमिति चन्द्रमसः प्राची प्रारम्भलक्षणमुखसम्बन्धलक्षणे उदये वर्ण्यमाने मुखशब्दस्य प्रारम्भवदनसाधारण्यात्, चुम्बतीत्यस्य प्रस्तुतार्थसम्बन्धमात्रपरस्य प्रस्तुते चन्द्रमसि बाधितत्वेन विशेषरूपपरित्यागेन साधारण्यात् नायिकासक्तनायकवृत्तान्तः प्रतीयते। तथा अप्रकृतसम्बन्धयोग्यानां अङ्गुली केशसंचय-लोचनानामप्युपादानमस्त्येव अथापि अप्रकृतसम्बन्धः परमपेक्षितः सच अप्रकृतानुगुण्येनापि मरीचिभिरिव अङ्गुलीभिः, तिमिरमिव केशसञ्चयं, सन्निगृह्य सरोजसदृशं लोचनमिति मध्यमपदलोपिसमास माश्रित्य उभयविध समासलभ्यार्थद्वयस्य च अभेदमध्यवस्य समासोक्तौ विशेषणसाम्यम्, उत्प्रेक्षायां प्रकृताप्रकृतविशेषणानां अङ्गुलिमरीचिसरोज लोचनानामभेदाध्यवसायेन साधारण्यं संपाद्यत इति चन्द्रमसः रजन्याश्च यस्सम्बन्धः सः चुम्बनत्वेनोत्प्रेक्षितः।

**नच**-अङ्गुलीमरीच्यादीनां गुणक्रियादिरूपत्वं नास्ति, अपि तु द्रव्यत्वमेव इति तेषां समासभेदाश्रयणमूलकाभेदाध्यवसायेनापि कथं साधारण्यमिति शङ्क्यम्। धर्मसम्पादनमिदानीमावश्यकं,सधर्मःद्रव्यं वा गुणो वा जातिर्वास्तु नतत्रास्माकमभिनिवेशः।यतो लोकेऽपि दण्डी कुण्डली वासस्वी इत्यादिपदेषु प्रत्ययांशेन द्रव्यस्यैव दण्डकुण्डलादेः धर्मत्वस्य प्रतिपादनात्।

चित्रमीमांसा-

**नापि भूयस्तराणीत्यत्राव्याप्तिः। तत्रोपात्तधर्माक्षिप्तधर्मान्तरसम्बन्धस्य निमित्तत्वात्। तत्रहि चन्द्ररूपविषयगतसन्ध्यानलमध्यगाम्बरमूषिकावर्ति-ततारानिकरनिर्मितत्वोत्प्रेक्षायां तारागतेन तत्तद्रात्रिषु विरलत्वाविरलत्वरूपेण उपात्तधर्मेण निमित्तेन धर्मस्य चन्द्रगतस्य तद्विरलत्वाविरलत्वानुविधायि वृद्धिह्रासशालित्वस्याक्षेपः।**

तत्त्वालोकः

**किंच** - उत्तरत्र ग्रन्थकृतैव द्रव्यस्यापि निमित्तत्वमभिधास्यते।

निशासु मूर्ध्नि स्फुरता यत्सौधो राजतीन्दुना।
श्रीकण्ठो भक्तरक्षार्थं सन्निधानं भजन्निव॥

इत्यत्र बाणासुरसौधस्य शिवरूपत्वोत्प्रेक्षायां मूर्ध्नि स्फुरन् इत्दुर्निर्मितम् इति। अत एव **नैयायिकादिभिः** 'पर्वतो वह्निमान्'इत्यादौ वह्न्यादेर्द्रव्यस्य पक्षवृत्तित्वेन धर्मत्वम्, हेतोश्च पक्षवृत्तित्वेन धर्मत्वमुपगतमेवेति अंगुल्यादीनां निमित्तत्वे न किमपि बाधकमिति बोध्यम्।

अङ्गुलीभिरिवेति पद्ये आपाततः प्रतीयमानो धर्मः प्रकृतमात्रवृत्तिरिति तत्रान्यधर्मसम्बन्धाभावादापादितामव्याप्तिं परिहृत्य 'भूयस्तराणि' इति पद्ये चन्द्रे सन्ध्यानलमध्यगाम्बरमूषिकावर्तिततारानिकरनिर्मितत्वोत्प्रेक्षायां ताराविरलत्वाविरलत्वयोः अप्रकृततारामात्रवृत्तित्वेन अन्यधर्मस्य प्रकृतसम्बन्धो नास्तीत्यन्यधर्मसम्बन्धादिति लक्षणांशाभावादव्याप्तिः या आपादिता तां परिहरति- **नापि भूयस्तराणीति।**

भूयस्तराणि यदमूनि तमस्विनीषु।
ज्योत्स्नीषु च प्रविरलानि ततः प्रतीमः।
सन्ध्यानलेन भृशमम्बर मूषिकायाम्
आवर्तितैरुडुभिरेव कृतोऽयमिन्दुः॥

**चित्रमीमांसा-**

**अयं च अपरोऽपि विशेषः। अन्यधर्मसम्बन्धादित्यन्यपदार्थो धर्म्युत्प्रेक्षासु विषय्येव, धर्मोत्प्रेक्षासु तु विषयिणो धर्मस्याश्रयः।**

तत्त्वालोकः

इत्यत्र यद्यप्यापाततः चन्द्रे विषये सन्ध्यानलमध्यगाम्बरमूषावर्तिततारानिकरनिर्मितत्वोत्प्रेक्षायां तत्तत्पक्षक्षपागतविरलत्वाविरलत्वादेर्धर्मस्य कथंचिदपि सम्बन्धो नास्ति, अथापि ताराणां विरलत्वसत्वे चन्द्रे वृद्धि-सत्वम्, तासामविरलत्वेतद्ह्रासः इत्यन्वयव्यतिरेकाभ्यां लभ्यस्य वृद्धिह्रासशालित्व स्याक्षेप इत्याक्षिप्तधर्मस्य ताराचन्द्रोभयसाधारण्यमिति तमेव धर्ममादायोत्प्रेक्षणे नाव्याप्तिरिति भावः।

**एतेनैतदुक्तं भवति-**"अंगुलीभिरिवे"त्यत्र, "भूयस्तराणि "इत्यत्र च उपात्तधर्मस्य विषयविषयिसाधारण्याभावादानर्थक्यशंका न कार्या। उक्तधर्मयोः साक्षादुत्प्रेक्षोत्थापकत्वाभावेऽपि उत्प्रेक्षोत्थापनानुकूलान्वयान्तरानुकूलत्वेन वा उत्प्रेक्षोत्थापनसमर्थधर्मान्तराक्षेपकत्वेनानुकूल्यसम्पादकत्वेन च सार्थक्यसंभवादिति।

इदमुपलक्षणम्। वस्तुप्रतिवस्तुभावादयोऽपि साधारणीकरणोपायभूताः तद्यथा-

व्यराजत सखे तन्व्या वक्त्रं वलितकन्धरम्।
लावण्यौघजलावृत्तनालदण्डमिवाम्बुजम्।

इत्यत्र वक्त्रे ऽम्बुजतादात्म्यसंभावनायां कन्धरा-नालदण्डविशेषणयोः वलितत्वावृत्तत्वयोरभेदेऽपि सम्बन्धिभेदेन द्विरुपादानं कृतमिति अयमेव वस्तुप्रतिवस्तुभावः तेन च धर्मे साधारण्यं सम्पाद्यत इति।

इत्थं धर्मे साधारण्यं, उपमायामिव सर्वैरपि प्रकारैः सम्पाद्य अन्यधर्मसम्बन्धो निर्वाह्यः इत्यभिधाय स्वरूपोत्प्रेक्षायां धर्म्युत्प्रेक्षा धर्मोत्प्रेक्षा चेति द्वैविध्यसद्भावानुरोधेन विद्यानाथाभिमते स्वेन परिष्कृते अन्यधर्मसम्बन्धात् अन्यस्य अन्यतादात्म्यसंभावनमुत्प्रेक्षेति लक्षणे अन्यधर्मसम्बन्धादित्यत्र विषय्यादि पदमनुपादाय अन्यपदोपादानाद्धर्मोत्प्रेक्षायां नाव्याप्तिप्रसक्तिरिति मनसि निधाय इतरलक्षणविलक्षणतां प्रदर्शयितुमाह- **अयं चेति।**

**चित्रमीमांसा-**

**एवंस्थिते यत्रानुपात्तो निमित्तभूतो धर्मः तत्र सर्वत्रापि यो धर्मोऽन्यपदार्थस्य विषयस्यच सम्बन्धितया संभावना पदवीमारोहति तथाभूतोऽन्वेष्यः।**

**तत्र ''वर्षतीवाञ्जनं नभः इत्यत्र नभोगतत्वेन वर्षणक्रियोत्प्रेक्षापक्षे नभसो भूपर्यन्तगाढनीलिमव्याप्तत्वम् अञ्जनवर्षुकसाधारणं निमित्तम्।**

तत्त्वालोकः-

विशेषः=वैलक्षण्यम् अन्यधर्मसम्बन्धादिति दलघटकः अन्यपदार्थः अन्यशब्दाभिधेयः, धर्म्युत्प्रेक्षासु धर्मिणि धर्म्यन्तरस्याभेदेनोत्प्रेक्षाप्रदेशेषु, विषय्येव उत्प्रेक्ष्यमाणमेव यथा- 'बालेन्दुवक्राणि' इत्यदौ पलाशकुसुमरूपे धर्मिणि नखक्षतरूप धर्म्यन्तरस्याभेदेनोत्प्रेक्षणे अन्यपदार्थः नखक्षतान्येव। धर्मस्वरूपोत्प्रेक्षासु च, विषयिणो धर्मस्याश्रयः अन्यपदार्थः यथा- 'पिनष्टीव तरङ्गाग्रैः' इत्यत्र समुद्रचन्द्रमसोः धर्मिणोः पेषणलेपनधर्मसंसर्गोत्प्रेक्षायां पेषणलेपनयोराश्रयः कश्चन पुरुषः अन्यपदार्थः। सर्वत्राभेदेनोत्प्रेक्षेति मते प्रेरणे पेषणं तादात्म्येनोत्प्रेक्ष्यते तदा तदाश्रयः समुद्रादिरन्य पदार्थ इत्यर्थः।। उक्तविधस्वरूपोत्प्रेक्षायां यत्र निमित्तस्यानुपादानं तत्र तदन्विष्य तदुपादानेऽप्यन्येन अन्यस्य वा सम्बन्धेऽनिर्व्यूढि तन्निर्वाहकोपायमवलम्ब्योत्प्रेक्षा निर्वाह्येति प्रतिपादयितुमुपक्रमते **एवं स्थित इति।**

एवं धर्म्युत्प्रेक्षायाम् अन्यपदार्थःविषयी, धर्मोत्प्रेक्षायाम् अन्यपदार्थ-विषयिरूपधर्माश्रयश्च ग्राह्य इत्युक्तप्रकारेण ,स्थिते विषयविभागे व्यवस्थिते, यत्र धर्मि-धर्मोत्प्रेक्षोदाहरणयोःनिमित्तभूतो धर्मः संभावनाप्रयोजको धर्मः, गुणक्रियादिःअनुपात्तः अनिर्दिष्टः, तत्रसर्वत्रापि तादृशोदाहरणेषुयो धर्मः गुणक्रियादिः, अन्यपदार्थस्य विषयिणः तदाश्रयस्य वा, संभावनोपयोगित्वम्, आरोहति-अवलम्बते तथाभूतः तेन प्रकारेण स्थितः अन्वेष्यः गवेषणीय इत्यर्थः।

तत्र प्रथमान्तविशेष्यकबोधानुसारिणां **सर्वस्वकारादीनां** मतेनापि निमित्तमनुपात्तमन्विष्योपादत्ते- **तत्रेति।**

**चित्रमीमांसा-**

**तमसो व्यापने नभःकर्तृकाञ्जनवर्षणक्रियात्वोत्प्रेक्षेति पक्षे तु सकलवस्तुसान्द्रमलिनीकरणादि(निमित्तम् ऊहनीयमिति शेषः)।**

## तत्त्वालोकः

उपात्ते नभसि विषये वर्षणक्रियासंसर्गः उत्प्रेक्ष्यते संसर्गश्चाधारतैव। आधारता च तिङर्थः। तस्याश्च संभावनायामन्वयः। तथा च नभःअञ्जनवर्षणाधारता-संभावनाविषयमिति वाक्यार्थपर्यवसानात् धर्मिणि धर्मोत्प्रेक्षात्वम्। तत्र चाञ्जनवर्षणक्रिया विषयि तदाश्रयः अञ्जनवर्षुकः, तस्य विषयस्य नभसश्च सम्बन्धितया साधारणं निमित्तं नभःप्रभृति भूपर्यन्तगाढनीलिमव्याप्तत्वं तमादायोत्प्रेक्षा निर्वाह्येति भावः।एतेनात्र व्यापनस्य निमित्तत्वमिति **सर्वस्वकृदुक्तं** न समीचीनमचमत्का-रित्वादिति ध्वनितं भवति। धात्वर्थमुख्यविशेष्यकबोधानुसारिणां मतेन विषयनिमित्तयोः अनुपादाने सति विषयस्य यथा गवेषणं क्रियते तथा निमित्तस्यापीति सर्वत्राभेदेनोत्प्रेक्षेति पक्षोऽपि निर्वोढुं शक्यमित्युपपादयति-**तमसोव्यापन इति।**

अत्र तमस इति षष्ठ्याः वृत्तित्वमर्थः तमोवृत्ति यद्व्यापनं तस्मिन्निति यावत् व्यापने इत्यत्र सप्तम्याः विशेष्यत्वमर्थः तथा च तमोव्यापनविशेष्यिकेति यावत्। वर्षतीत्याख्यातोपस्थिते कर्तरि नभसस्तादात्म्येनान्वये कर्तुःर्धात्वर्थे वर्षणे अन्वयात् तस्य इवशब्दार्थसंभावनायां तस्याश्च विषयतासम्बन्धेन तमोव्यापने ऽन्वयः तथाच नभःकर्तृकाञ्जनवर्षणतादात्म्यसंभावनाविषयस्तमोव्यापनमिति बोधः।तत्र निमित्तं च सकलवस्तुसान्द्रमलिनीकरणं तच्च नीरन्ध्रनैल्यापादनरूपम्। अस्य च विषयभूततमोव्यापनवृत्तित्वं विषयिभूततादृशाञ्जनवर्षणवृत्तित्वं च संभवतीति उत्प्रेक्षानिर्वाहः।

**अत्रायं विशेषः**-धर्मिणि धर्मसंसर्गःउत्प्रेक्ष्यत इति वादिनां मते वर्षतीवेत्यत्र उक्तविषयत्वमेव परन्तु निमित्तमात्रस्य अनुपात्तत्वम्। सर्वत्राभेदेनैवोत्प्रेक्षणमिति वादिनां मते तु विषयनिमित्तयोरनुपादानम्। एवंच मतद्वयेऽपि निमित्तस्यानुपादानमेव। विषयस्यच क्वचिदनुपादानमपि नैव दोषाय भवति। उत्प्रेक्षाया अध्यवसायगर्भत्वाभ्युपगमात्।

**चित्रमीमांसा-**

**एवं-''वेलेव रागसागस्य'' इत्यादौ संक्षोभकारित्वादिगम्यं निमित्तमूहनीयम्।**

तत्त्वालोकः

एतेन **अलंकारसर्वस्वकृता**-धर्मिणि धर्मसंसर्गोत्प्रेक्षामुपपादयता व्यापनादेः यन्निमित्तत्वमभिहितं तदयुक्तम्। अचमत्कारित्वात्। चमत्कारिणश्च धर्मस्य निमित्तत्वमालंकारिकसम्मतम्। अन्यथा 'अस्मद्विक्रमचेष्टितानि' इत्यत्र अर्थान्तरन्यासोदाहरणे चाञ्चल्यसहचरितस्त्रीसामान्यवृत्ति स्त्रीत्वं निमित्तीकृत्य सीतायां चाञ्चल्यसंभावनया उत्प्रेक्षातिव्याप्ता स्यात्। तत्रच स्त्रीत्वस्याचमत्कारित्वे नोत्प्रेक्षायामप्रयोजकत्वं खल्वभीष्टम्।

एवम्-अनुक्तविषयस्वरूपोत्प्रेक्षामनभ्युपगच्छता सर्वस्वकृतैव व्यापनादौ उत्प्रेक्षाविषये निमित्तमन्यदन्वेष्यं स्यात्। न च विषयस्य गम्यमानत्वं युक्तम्। तस्योत्प्रेक्षाधारत्वेन प्रस्तुतस्याभिधातुमुचितत्वात् इति विषयाभिधानौचित्यं यत्प्रतिपादितं तदपि अनुचितमेव अन्यथा तुल्यन्यायेन अतिशयोक्तावपि आहार्यारोपाधारस्य विषयस्योपादानमुचितं स्यात्। धर्मिणमन्तरेण आरोपस्याविश्रान्तेः वस्तुतःन तत्र विषयोऽभिधीयते। यदि तु अतिशयोक्तौ न विषयस्यगम्यमानता अपि तु साध्यावसानलक्षणया लक्षणमस्त्येवेति समाधीयते। तदात्रापि अध्यवसायगर्भत्वोपगमानुरोधेन लक्षणया विषयस्य प्रतीतिरस्त्येवेति उत्प्रेक्षाधारस्य प्रतीतिरप्रतिहतैवेत्यदोषादिति।

इत्थं स्वरूपोत्प्रेक्षायां धर्मोत्प्रेक्षोदाहरणे मतभेदेन निमित्तमूह्यमिति तन्निर्दिश्य, स्वरूपोत्प्रेक्षाप्रभेदे धर्मिस्वरूपोत्प्रेक्षोदाहरणे निमित्तमूहनीयम्। ऊहितं च सर्वस्वकृतैवेत्यनुभाषते- **एवमिति।**

**हर्षचरिते**-दधीचपरिवारभूतायाः शोणानदमुत्तीर्यआयान्त्याः मालत्याः वर्णनप्रघट्टके मालती प्रेमार्णवतटीत्वेन उत्प्रेक्ष्यते। वेला यथा सागरं क्षोभयति तथेयं

**चित्रमीमांसा-**

**यत्र तु निमित्ततया धर्मस्योपादाने सत्यपि तत्संबन्धो विषयस्यान्यपदार्थस्य वा ऽञ्जसा न प्रतीयते तत्र, क्वचित् निमित्तभूतधर्मादन्यस्य कस्यचिद्धर्मस्य तत्ताद्रूप्यसम्पादनेन तत्सम्बन्धः समर्थनीयः।**

तत्त्वालोकः

रागं क्षोभयति। क्षोभेन यथा सागरो दुरुत्तरः तथा एतयापि रागो दुरुत्तर इति भावः। एवं चात्र मालत्यां प्रेमार्णव तटीत्वोत्प्रेक्षायां संक्षोभकारित्वं विषयस्य अन्यपदार्थस्य च संभावनापदवीमारोहतिइत्यनुपात्तनिमित्तिका धर्मिस्वरूपोत्प्रेक्षा॥

इत्थंम्-अनुपात्तनिमित्तकेषु विषयान्वयि तदाश्रयान्यतरानुगुणनिमित्त गवेषणयोत्प्रेक्षानिर्वाहप्रकारमुपपाद्य उपात्तनिमित्तकेष्वपि स्वरूपोत्प्रेक्षोदाहरणेषु "आवर्जिताकिञ्चिदिव स्तनाभ्याम्," तारुण्यकुञ्जरारूढाम्, "अंगुलीभिरिवकेश - संचयम्," "भूयस्तराणि"इत्याद्युदाहृतिषु निमित्तस्य न विषयविषयिगतत्वं प्रतीयत इत्यतिव्याप्तिः इत्याशंकां मनसि निधाय तां परिहर्तुमुपायमुपादत्ते **यत्रत्विति**।

यत्रतु यादृशस्वरूपोत्प्रेक्षोदाहरणेषु तु, निमित्ततया उत्प्रेक्षाप्रयोजकत्वेन, धर्मस्य गुणक्रियादेः, उपादाने सत्यपि शब्दशक्त्या प्रतिपादनेऽपि तत्सम्बन्धः,गुणक्रियादि धर्मसंसर्गः,विषयस्य उपमेयवृत्तित्वेन, अन्यपदार्थस्यवा उपमानतदाश्रयान्य-तरवृत्तित्वेन वा अञ्जसा झटिति बिम्बप्रतिबिम्बभावादिभङ्ग्याश्रयणात्प्राक् इति यावत्, न प्रतीयते न ज्ञायते तत्र क्वचित् तादृशोपात्तनिमित्तकोदाहरणेषु "आविर्जिताकिंचिदिवे"त्यादिषु निमित्तभूतधर्मात् विषयविषय्यन्यतरमात्रसम्बद्ध त्वेनोपात्तात् अन्यस्य विषयिविषयान्यतरसम्बद्धस्य धर्मस्य गुणक्रियादेः तत्ताद्रूप्यसम्पादनेन, उत्प्रेक्षाप्रयोजकधर्मतादात्म्यसम्पादनेन, तत्सम्बन्धः विषयविषयि तदा श्रयान्यतरोभयसम्बन्धः समर्थनीयः हेतुबलेन प्रत्यायनीय इत्यर्थः। एवं च धर्मिणि धर्म्यन्तरतादात्म्योत्प्रेक्षायां विषयविषयिमात्रवृत्तिधर्मणां उपादानं

## तत्त्वालोकः-

तत्र "आवर्जिता किंचिदिव स्तनाभ्याम्" इत्यादौ विषयिविशेषणानां स्तबकावनम्रत्व-पल्लवादीनां धर्माणां विषयिलतामात्रनिष्ठत्वेन तत्सम्बन्धस्य विषयभूतायां पार्वत्यां अभावादन्यधर्मसम्बन्धोऽअसा न प्रतीयते तस्मादन्यस्य विषयभूतपार्वतीनिष्ठस्य स्तनावर्जितत्वधर्मे स्तबकावनम्रतारूपधर्मताद्रूप्यं बिम्बप्रतिबिम्बभाव-मूलकाभेदाध्यसायेन सम्पाद्य अन्यधर्मसम्बन्धः समर्थ्यत इति नाव्याप्तिः।

एवं "तारुण्यकुअरारूढम्" इत्युदाहरणेऽपि नायिकायां प्रकृतायां अप्रकृतसाकारत्रैलोक्यविजयलक्ष्मीतादात्म्यं स्वरूपेणोत्प्रेक्ष्यते। अथापि-प्रकरणानुगुण्येन नायिकायां तारुण्यकुअरारूढत्व"विलासकमलाकुलत्वयोः विशेषणत्वोपगमे "तारुण्यकुअरारूढां " विलासकमलाकुलाम्" इत्युभयत्रापि उपमितसमासेन पूर्वपदार्थप्रधान्यात् कुअरसदृशतारुण्यस्य कमलसदृशविलासा-कुलत्वस्य च विषयासाधारण्येन अन्यपदार्थभूतायां विजयलक्ष्म्यां सम्बन्धस्याप्रतीतेः अन्यधर्मसम्बन्धो नास्ति, यदि तु तारुण्यकुअरारूढपदे विशेषण समासेन ' सुपा' इति समासेनवा उत्तरपदार्थप्राधान्यं शाब्दमाश्रित्यविषयिभूतायां विजयक्ष्म्यामन्वयोऽ-भ्युपेयते तदातारुण्याभिन्न कुअरारोहणस्य, विलासकमला-कुलामित्यत्र मध्यमपदलोपिसमासोपगमेन विलासप्रयोजक-कमलव्याप्तेश्च विषयिमात्रनिष्ठत्वेन विषयेण सम्बंन्धो नभवतीति अव्याप्तिःस्यात् अतश्चोक्तविशेषणयोः समासभेदपरिकल्पनामूलकतया अभेदमध्यवस्य प्रकृताप्रकृतसाधारण्यादन्य-धर्मसम्बन्धःसम्पाद्यत इति नाव्याप्तिः। एवमन्यत्रापि धर्मे तत्ताद्रूप्यं सम्पाद्य अन्यधर्मसम्बन्धःसम्पाद्यः।

इत्थमनलंकारभूतबिम्बप्रतिबिम्बभावादिमूलकतयानिमित्तभूतधर्मे प्रकृताप्रकृतसाधारण्यादन्यधर्मसम्बन्धसमर्थन प्रकारमुपपाद्य अलंकार-भूतश्लेषादिमूलकतयापि विषयस्य अन्यपदार्थस्य वा निमित्तभूतधर्मा-श्रयताद्रूप्यसम्पादनद्वारा क्वचित् धर्मान्तरे निमित्तभूतधर्मताद्रूप्यसम्पादनेन, विषयस्य निमित्तभूतधर्माश्रयताद्रूप्यसम्पादनेन च क्वचिदुपात्तधर्मान्तराक्षेपेण अन्यधर्म-

**चित्रमीमांसा-**

**क्वचिद्विषयस्य, अन्यपदार्थस्य वा तद्धर्माश्रय तादूप्यसम्पादनेन, क्वचिन्मिलितेन तेनोभयेन क्वचित् उपात्तधर्मकृतधर्मान्तराक्षेपेण।**

**तत्र धर्मान्तरस्य निमित्ततादूप्यसम्पादनमुपमायां धर्मस्य सम्पादनमिव बिम्बप्रतिबिम्बभावादिभिः प्रकारैःते प्रदर्शिताः।**

तत्त्वालोकः-

सम्बन्धो निर्वाह्यः इत्युपपाद्य अव्याप्तिसंभावनां निराकुरुते **क्वचिद्विषयस्येति।**

क्वचिद्विषयस्येति-"अस्यां मुनीनामपि" इत्युदाहरिष्यमाणपद्ये विषयस्य भृग्वादिमुनिरूपविषयस्य भृग्वादिपदश्लेषमूलकाभेदाध्यवसायेन तदभेदं सम्पाद्य तद्ध र्माश्रयतादूप्यसम्पादनेन निमित्तभूतदमयन्तीस्तनशैलपरिशीलनमेव पर्वतसेवनमित्येवंरूपो यो धर्मस्तदाश्रयतादूप्यसम्पादनेन विषयसम्बन्धोऽन्यधर्मे सम्पादनीय इति शेषः **अन्यपदार्थस्यवेति।** "अस्या दोहदशालिन्याः" इति वक्ष्यमाणोदाहरणेऽन्यपदार्थस्य विषयिणश्चन्द्रस्य, तद्धर्माश्रयतादूप्यसम्पादनेन निमित्तभूतभूभोगाभिलाषरूपधर्माश्रयमुखतादूप्यं राजपदश्लेषेण चन्द्रेसम्पाद्य उक्तधर्मस्य चन्द्रसम्बन्धित्वनिर्वाहः। **क्वचिन्मिलितेनेति।** 'आकृष्टिवेगविवलत्' वक्ष्यमाणोदाहरणे, मिलितेन तेनोभयेनधर्मान्तरेनिमित्तधर्मतादूप्यसम्पादनं यत् तेन, विषयस्य-निमित्तभूतधर्माश्रयतादूप्यसम्पादनमिति यत् तेन चेत्यर्थः। अन्यधर्मसम्ब-न्धस्सम्पादनीय इति शेषः। **क्वचिदुपात्तेति।** 'भूयस्तराणि यदमूनि 'इति प्रागुदाहृतपद्ये उपात्तो यो धर्मः नक्षत्रगतविरलत्वाविरलत्वरूपः, तत्कृतःतन्मूलकं यद्धर्मान्तरं चन्द्रगत-विरलत्वाविरलत्वानुविधायि वृद्धिह्रासशालित्वं तस्याक्षेपेण अनुपपत्तिमूलकार्थ-परिकल्पनेनन तयोरभेदं परिकल्प्य धर्मस्य प्रकृताप्रकृत-साधारण्यात् अन्यधर्मसम्बन्धः सम्पादनीय इत्यर्थः। प्राकप्रदर्शितेषु असाधारण धर्मेष्वपि उत्प्रेक्षाप्रयोजकेषु साधारणीकरणोपायेषु चतुर्षु आद्योपायप्रकारः, बिम्बप्रतिबिम्बभावाद्यात्मकः सोदाहरणम् अन्यधर्मोऽनुगामितयैव न विवक्षितः इत्युपक्रम्य प्रदर्शित इत्याह- **तत्रेति।**

**चित्रमीमांसा-**

**एवं विषयस्य अन्यपदार्थस्य वा धर्माश्रयताद्रूप्यसम्पादनं श्लेषादिभङ्ग्या।**

**तत्र विषयस्य श्लेषेण धर्माश्रयताद्रूप्यसम्पादनम्। यथा**

**अस्यां मुनीनामपि मोहमूहे**
**भृगुर्महान्यत्कुचशैलशीली।**
**नानारदाह्लादि मुखं श्रितोरुः**
**व्यासो महाभारतसर्गयोग्यः।।**

तत्त्वालोकः

बिम्बप्रतिबिम्बभावादिभिरित्यादिशब्दः समासभेदाश्रयणान्वयभेदादीनां सङ्ग्राहकः

द्वितीयोपायप्रकारेषुश्लेषा-पह्नुतिभ्यां साधारणीकरणेन तत्सम्बन्धनिर्वाह-प्रकारमात्रमत्र सोदाहरणं प्रदर्श्यते उत्तरत्र अन्यालंकारानुषङ्गकृतवैचित्र्यमुदाहरणान्तरेषु प्रदर्शयिष्यते इत्यभिप्रायेण आदौ तत्प्रकारमाह **एवमिति।**

अत्रायमन्वयः यत् महान् भृगुः कुचशैलशीली मुखं नानारदाह्लादि, तथा महाभारतसर्गयोग्यःव्यासः श्रितोरुःतत् अस्यां मुनीनामपि मोहं अहं ऊहे इति।

नलः दमयन्तीं दृष्ट्वा तदीयाङ्गप्रत्यङ्गलावण्यातिशयमवेक्ष्य मुनीनामपि मननप्रकृतीनामपि मोहं सम्भावयतिअस्यामिति। यत् यस्मात्कारणात्, महान् तपसा महत्त्वां प्राप्तः पूज्यश्च, भृगुः स्वयंभुवा वरुणस्य यज्ञे अग्नेः समुत्पन्नः ऋषिरपि, यस्याः कुचशैलशीली=कुचौ=स्तनौ शैलौ पर्वताविति बुध्या शीलयति आश्रयति अथ च कामपीडितत्वादत्युच्चौ एतत्कुचौ ग्रहीतुमिच्छति इति यावत्, अयं च भृगुः, ब्रह्मणस्समुत्पन्न इति श्रीमन्महाभारते आदिपर्वणिव्यासेनाभिहितम्-

भृगुर्महर्षि भंगवान् ब्रह्मणा वै स्वयंभुवा।
वरुणस्य क्रतौ जातः पावकादिति नः श्रुतम्।। इति।

## तत्त्वालोकः

तथा दमयन्त्याः मुखं नाऽनारदाह्लादि-नारदं तन्नामकं ब्रह्मणो मानसपुत्रं आह्लादयति गानकलयेति नारदाह्लादि न नारदाह्लादि अनारदाह्लादि, अनारदाह्लादि न भवतीति नानारदाह्लादि अवश्यं नारदाह्लादि इत्यर्थः। नञ्द्वयस्यप्रकृतार्थदार्ढ्यद्योतकत्वात्। एवं च नारदोऽपि गानकलाभ्यासार्थं अस्याः मुखं सेवते इति भावः। यद्वा मदनपीडितत्वात् मुखं चुम्बनाभिलाषिणं नारदमानन्दयतीत्यर्थः। तथैव महतःशिरोधार्यस्य भारतस्य सर्वाम्नायार्थप्रदर्शनात् सर्वतोरमणीयं अज्ञानान्धकार-निस्तारकत्वेन भारतमित्यन्वर्थनामधेयस्य इतिहासोत्तमस्य सर्गे निर्माणे योग्योऽर्हो व्यासः-

हिताय सर्वभूतानां वेदभेदान् करोति सः।
यथासौ कुरुते तन्वा वेदमेकं पृथक्प्रभुः।
वेदव्यासाभिधाना तु सा च मूर्तिर्मधुद्विषः॥

इति विष्णुपुराणस्थतृतीयांशोक्तरीत्या कृष्णद्वैपायनाख्यो वेदव्यासोऽपि श्रितोरुः। श्रितौ कदलीस्तम्भबुध्या समाश्रितौ अथवा कामपीडितत्वादाश्रितावेतदूरूयेन सःजातः, अतः मुनीनामपि महर्षीणामपि अस्यां दमयन्त्यां मोहं कामविकारम् ऊहे वितर्कयामि।

पक्षे-महान् भृगुः तटः अतटो वा "प्रपातस्तु तटो भृगुः प्रपातस्त्वतटो भृगुः" इत्युभयथा कोशदर्शनात्।तटसदृशः कुचपार्श्वभाग इत्यर्थः, कुचशैलशीली कुचयोश्शीलमेव शैलंस्वभावः तं शीलयति अभ्यस्यति परमद्यापि कुचस्वभावं नायातीत्यर्थः।मुखं दमयन्तीवदनं नानारदैः द्वात्रिंशत्संख्याकैःरदैः दन्तैः आह्लादयतीति नानारदाह्लादि अतिसुन्दरमित्यर्थः महती भा दीप्तिः यस्य सः तथा रतं सुरतं त स्य सर्गःसम्पादनं तत्र योग्यः दक्षः व्यासःविस्तारः श्रितोरुः ऊर्वाश्रयेण तिष्ठतीत्यर्थः। अतिविशालावूरू इति भावः। "भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि," "व्यासो मुनौ स्याद्विस्तारे" इत्युभयत्र विश्वः तस्मादस्यां दमयन्त्यां मुनीनामपि जितेन्द्रियाणामपि मोहं मुग्धतां ऊहे तर्कयामि इत्यर्थः।

**चित्रमीमांसा-**

**अत्र भृग्वादिमुनिरूपविषयगतदमयन्तीगोचरमोहोत्प्रेक्षायां यदेव तत्कुचपरिशीलनादिनिमित्तं न तद्विषयगतं., किन्तु तटादिगतम्। तस्य भृग्वादिशब्दश्लेषेण विषयगततानिर्वाहः।**

तत्त्वालोकः

अत्र भृग्वादि महर्षिषु विषयेषु नलेन दमयन्तीविषयकमोहः उत्प्रेक्ष्यते, अतश्च धर्मिणि धर्मोत्प्रेक्षोदाहरणमिदम्। सत्यम् अथापि तादृशमोहोत्प्रेक्षायां निमित्तस्य अन्यपदार्थभूतमोहाश्रय दमयन्तीकुचतटगतत्वमेव नपुनर्विषयभूतभृग्वादिमहर्षि गतत्वमिति निमित्तस्य विषय-विषय्याश्रयोभयसाधारण्यं नास्तीति तत्सम्पादनाय भृगुपदश्लेषेणभृगुमहर्षितटयोः वस्तुतोभिन्नयोरपि एकपदोपात्तस्यानेकार्थस्यैकवद्भासमानत्वस्यानुभवसिद्धत्वेन अभेदम् अध्यवस्य भृगुतटादी अभिन्नाविति तटादिगतस्यापि तत्कुचपरिशीलनादेः भृग्वादिमहर्षिगतत्वमिति विषय-विषय्याश्रयोभयसाधारण्यं जातमिति नाव्याप्तिरित्युत्प्रेक्षा निरुह्यत इत्युपपादयति- **अत्रेति।**

**एतेन-अलंकारसर्वस्वकृता**-एषा चार्थाश्रयापि धर्मविषये श्लिष्टशब्दहेतुका क्वचिद्दृश्यते ''इति यन्निमित्तमात्रे श्लेषहेतुकत्वमुपन्यस्तं तदपि न्यूनम्। विषयांशेपि श्लेषस्य संग्राह्यत्वात्।

एवं यच्च तेनैव-निमित्तभूतधर्मविषये श्लिष्टशब्दहेतुकस्योदाहरणमुपन्यस्तम्-

प्रस्थे स्थितां हिमवतोऽपि न बाधते यां।
ऊर्ध्वेक्षणानलभयादिव जाड्यमुद्रा।
गोष्ठीषुवस्सततसन्निहितास्तु देवी
सा शारदा नव सुभाषितकामधेनुः।इति।

तदपि चिन्त्यम् उक्तोदाहरणे शारदाया जाड्यमुद्रारूपे विषये तत्कर्तृकबाधाभावं प्रति विषयनिष्ठभालनेत्रानलभयं हेतुत्वेनोत्प्रेक्ष्यते तत्रच यदेव फलं तदेव निमित्तम्। उक्तं च **सर्वस्वकृतैव**-''हेतूत्प्रेक्षायां यस्य प्रकृतसम्बन्धिनो धर्मस्य हेतुरुत्प्रक्ष्यते स

**चित्रमीमांसा-**

**अपह्नुत्या यथा-**

**किंशुकव्यपदेशेन तरुमारुह्य सर्वतः।**
**दग्धादग्धामरण्यानीं(न्याः) पश्यतीव विभावसुः।।**

तत्त्वालोकः

धर्मोऽध्यवसायवशादभिन्न उत्प्रेक्षायां निमित्तत्वेनाश्रीयेत इति। एवं चात्र 'नबाधत' इति बाधाभावस्यैव फलत्वं, तस्यैव हेतुत्वेनोत्प्रेक्ष्यमाणं भयंप्रति निमित्तम्। त**दंशेचन** श्लेषसंभवः। बाधतेरनेकार्थकत्वाभावादिति।

**यदितु**-बाधकर्मत्वाभावविशिष्टायां विषयभूतायां शारदायां भयं हेतुरुत्प्रेक्ष्यत इत्युच्यते तदा हेतुफलयोस्सामानाधिकरण्यं प्रसज्यते। नहि 'सैषा स्थली यत्र विचिन्वता त्वाम्' इत्यत्र यथा मौनदुःखयोःहेतुफलयोः विषयभूतनूपुरवृत्तित्वं तद्वदत्र बाधाभावभीत्योः नैकाधिकरण्यमिति। क्वचित्पुस्तके अयं पाठः कुण्डलितः।परंतु (चित्रमीमांसाकृता) गन्थकृता'' क्वचिद्धर्मविषये श्लिष्टा'' इति सर्वस्वकृदभिहितं वाक्यमुद्धृत्य उत्तरत्र दूषितम्।

एवंच निमित्तांशे श्लेषस्योत्प्रेक्षानिर्वाहकत्वमिव विषयांशेऽपि तत्सम्भवतीति प्रतिपादितं भवति। विषय्यंशेऽपि श्लेषस्य तन्निर्वाहकत्वं संभवतीत्युत्तरत्र वक्ष्यति।

इत्थं विषयस्य श्लेषेण विषयिभूतधर्माश्रयताद्रूप्यसंपादनेन निमित्तस्य विषयगतत्वं सम्पाद्य सम्प्रति अपह्नुत्यापि विषयस्य विषयिताद्रूप्यसम्पादनेन निमित्तभूत[illegible]सम्बन्धनिर्वाहस्संभवतीत्युदाहरति- **अपह्नुत्या यथेति। किंशुकेति। भामहीयं** पद्यमिदम्। विभावसुः दावाग्निः किंशुकव्यपदेशेन पलाशकुसुममिषेण, तरुं पलाशवृक्षम्, आरुह्य आरोहणानन्तरम् सर्वतः=परितः, अरण्यान्याः महतोरण्यस्य ''हिमारण्ययोर्महत्त्वे'' इति **कात्यायनवचनान्महत्वे** विवक्षिते अरण्यशब्दस्यानुगागमो ङीष् च, दग्धादग्धं भागं मया कियानरण्यप्रदेशो दग्धःकियान्नेति पश्यतीव अवलोकयतीवेत्यर्थः।

**चित्रमीमांसा-**

**अत्र दावानलरूपविषयगतदग्धादग्धवनप्रदेशदर्शनक्रियोत्प्रेक्षायां तरुसमारोहणं निमित्तम् तदपि न विषयगतम्। किन्तु किंशुकपुष्पगतम्। तत्रापि यद्यपि मुख्यं समारोहणं नास्ति, तथापि तदीयं तरुसमाश्रयणमेव तदारोहणत्वेनाध्यवसितं, ततश्चतत्रापह्नुत्या विषयस्य किंशुकपुष्पे ताद्रूप्यसम्पादनेन धर्मसंबन्धनिर्वाहः।**

तत्त्वालोकः

अत्र दावानलरूपे विषये तरुसमारोहणं निमित्तीकृत्य दग्धादग्धवनप्रदेशादर्शनरूपो धर्मः (क्रियारूपः) उत्प्रेक्ष्यत इति क्रियानिमित्ताक्रियोत्प्रेक्षा वाच्या। अथापि निमित्तस्य विषय-विषय्याश्रयोभयानुगतिरपेक्षिता। सा च नोपलभ्यते। तरुसमारोहणस्य मुख्यस्य असंभवेऽपि तरुसमाश्रयणमेव तरुसमारोहणमिति तयोरभेदमध्यवस्यापि विषय्याश्रयगतत्वं सम्पादयितुं शक्यम्। नपुनर्विषयगतत्वमिति चेन्न। दावानलः किंशुकव्यपदेशेनेत्युक्त्या नेदं किंशुककुसुमं किन्तु दावानलः इत्यर्थस्य व्यपदेशपदादेव लाभात्। अपदेशो व्याजः विशिष्टोऽपदेशः व्यपदेशः अमुख्ये मुख्यव्यवहार इत्यर्थः।

"अपदेशस्तु लक्षेस्यात् निमित्तव्याजयोरपि"

इति **यादवप्रकाशैः वैजयन्त्यामुक्तत्वात्।** ततश्च अपह्नुत्या दावानले किंशुकपुष्पताद्रूप्यसम्पादनेन तरुसमारोहणस्य विषयगतत्वनिर्वाह इत्यव्याप्तिं परिहरति। **अत्रेति।**

**अयं भावः-**अत्र दग्धादग्धवनप्रदेशदर्शने दावानले उत्प्रेक्षितव्ये तन्निमित्तं तरुसमारोहणमपेक्ष्यम्, तच्च न मुख्यं किन्तु किंशुकपुष्पगतं तरुसमाश्रयणं दावानले न सम्भवतीति' किंशुकव्यपदेशेन' इत्यत्र व्यपदेशपदेन किंशुकपुष्पत्वमपह्नुत्य तरुसमाश्रयणस्य दावानलवृत्तिता सम्पाद्यत इति निमित्तभूतधर्मस्य विषयविषय्याश्रयोभयसाधारण्यमित्युत्प्रेक्षात्वम्।

## तत्त्वालोकः

**वस्तुतस्तु-**

"उपवनसहकारोद्भासिभृंगच्छलेन
प्रतिविशिखमनेनोट्टंकितं कालकूटम्।"
"शिखाधूमस्येयं परिणमति रोमावलिवपुः"

इत्यादौ यथा भृङ्गरोमावलिपदसमभिव्याहृतछलवपुश्शब्दाभ्यां भृङ्गरोमावल्योः निषेधपूर्वकं तयोरेव सकालकूटत्वंशरत्वंधूमशिखात्वंच आरोप्यते इत्यपह्नुतिप्रकरणे स्वेनैवोपपादितरीत्या अत्रापि किंशुकव्यपदेशोनेत्यनेन किंशुककुसुमेषु किंशुककुसुमत्वं निषिध्य तस्मिन् दावानलत्वं आरोप्यत इत्यपह्नुतित्वकथनं युज्येत। नपुनर्दावानले किंशुकपुष्पताद्रूप्यारोपकथनम् प्रकृते च दावानले यदि किंशुकपुष्पताद्रूप्यमुच्यते तदा कथमपह्नुतित्वं स्यात्। उपमेये तत्वं निषिध्यउपमानतादात्म्यारोपे खल्वपह्नुतिता। विभावसौच दग्धादग्धवनप्रदेशदर्शनं खलूत्प्रेक्ष्यत इति तस्यैव प्राधान्यमिति किं शुके दावानलताद्रूप्यमपह्नुत्या सुशकम्, न पुनर्दावानले किंशुकपुष्पताद्रूप्यम्। किंशुकपुष्पे दावानलत्वमारोप्यतां तस्य चोत्प्रेक्षायां विषयत्वमस्तु तथा किंशुकतरुसमाश्रयणे दावानलतरुसमाश्रयणे तदारोहणमपि इत्युत्प्रेक्षानिमित्तस्य विषयविषय्याश्रयसाधारण्यं सम्पाद्यत एवेति नाव्याप्त्यवसर इत्यपह्नुत्या विषयस्य किंशुकपुष्पताद्रूप्यसम्पादनप्रयासः किमर्थ इति न जानीमः॥

अतः अपह्नुत्या धर्मे साधारणीकरणस्यअन्यदेवोदाहरणं प्रदर्श्यम्। तद्यथा ममैव-

यदा हृत् अन्तर्वसदेव वल्लभं
समीक्षितुं नाशकदेव कोविदम्।
अवाप्य नेत्रद्वितयात्मतां तत्
ऐक्षिष्ट रागाद्बहिरेत्य मानदम्॥

इत्यत्र हृदि विषये वल्लभेक्षणरूपक्रियोत्प्रेक्षायां बहिरागमनं निमित्तम्, तदपि न विषयगतं, किन्तु चक्षुर्गतम्। तच्च बहिस्संसर्गरूपम्। तच्च तत्र अपह्नुत्या चक्षूरूपतापत्या

**चित्रमीमांसा-**

**आकृष्टिवेगविवलद्भुजगेन्द्रभोग-**
**निर्मोकपट्टपरिवेष्टनयाम्बुराशेः।**
**मन्थव्यथाव्युपशमार्थमिवाशु यस्य**
**मन्दाकिनी चिरमचेष्टत पादमूले।**

तत्त्वालोकः-

मन्दाकिनी-देवनदी, अम्बुराशेः समुद्रस्य नदीनां पत्युः, मन्थः(मन्थनं) अमृतोत्पादानार्थं मथनं तेन व्यथा कष्टं तस्य विशेषत उपशमाय उपशमनायेव आशु अञ्जसा आकृष्टिः आकर्षणं तेन यो वेगः तेन विवलत् परिर्तमानो यो भुजगेन्द्रः वासुकिः तस्य यो भोगः शरीरं, तस्य यो निर्मोकपट्टः सर्पकंचुकः तेन यत्परिवेष्टनं परितोवेष्टनं तया तदात्मना तन्मिषेण यस्य मन्दरस्य पादमूले पर्यन्तपर्वतमूलमेव चरणमूलं तस्मिन् चिरं अचेष्टत व्यापारयामासेत्यर्थः।

**अयं भावः**देवाः असुराश्च अमृतोत्पादनाय मन्थानं मन्दरं कृत्वा वासुकिं योक्त्रं च कृत्वा क्षीरोदधिं ममन्थुः। तदानीं च उदधेः व्यथा जाता तां अवलोक्य तत्पत्नीभूता मन्दाकिनी मथनकालभवं कष्टमपनेतुमिव मथनाकर्षणवेगविगलितनिर्मोकपट्टव्याजेन मन्दरपर्वतप्रत्यन्तपर्वतरूपचरणौ परिवृतवती। अनेन स्वस्य पत्युः पुनरपि एतादृशं कष्टं माभूत् भेवच्चेन्ममै भूयादिति पत्यौ प्रेमातिशयः व्यज्यते।

अत्र निर्मोकपट्टः पादमूले नावेष्टत, अपितु मन्दाकिनी इत्यपह्नुतिः साच मन्दाकिनी इति वस्त्वन्तराभिधायि शब्दान्तरोपादानबलाल्लभ्यते। पादमूले इत्यत्र प्रत्यन्तपर्वतस्यैव चरणरूपत्वेन प्रतीतेः श्लेषः। तथा चरणमूले वेष्टनमेव पर्यन्तवेष्टनमिति तादात्म्यप्रतीतेः श्लेषः मन्थाव्यथाव्युपशमार्थमिवेति फलोत्प्रेक्षा। तादृशफलोत्प्रेक्षायां च निमित्तं चरणमूले वेष्टनम्,

इत्थं च मन्दाकिनीरूपे विषये पयोधिमन्थव्यथाव्युपशमरूपफलोत्प्रेक्षायां चरणमूले वेष्टनं निमित्तं तद्रूपता च पर्यन्तपर्वतकर्मकनिर्मोकपट्टपरिवेष्टने नसंभवतीति तयोश्श्लेषेण चरणमूलवेष्टनतादात्म्यंस म्पाद्यत इति चरणमूलवेष्टनस्य निर्मोक

## चित्रमीमांसा-

**अत्र मन्दाकिनीरूपविषयगतपयोधिमन्थव्यथाव्युपशम रूपफलोत्प्रेक्षायां यन्निमित्तं चरणमूले वेष्टनं तत्तादात्म्यसंपादनं पर्यन्तवेष्टनस्य श्लेषेण, विषयस्य यत् तद्धर्माश्रयताद्रूप्यसम्पादन-मपह्नुत्या वेति मिलितेनोभयेन विषयस्यान्यधर्मसम्बन्धनिर्वाहः।**

**उपात्तधर्मेण धर्मान्तराक्षेपस्तु दर्शित एव।**

### तत्त्वालोकः

पट्टवृत्तित्वम् अथापि मन्दाकिनी निर्मोकपट्टयोः भेदात्कथं चरणमूलवेष्टनरूपस्य पर्यन्तवेष्टनस्य विषये संभव इति चेन्न। नायं निर्मोकपट्टः किन्तु मन्दाकिनीत्यपह्नुत्या तत्सम्भव इति श्लेषापह्नुतिभ्यां धर्मान्तरे पर्यन्तवेष्टने निमित्तभूतचरणवेष्ट-नताद्रूप्यसम्पादनेन विषयस्य मन्दाकिन्याःयन्निमित्तभूतधर्माश्रयताद्रूप्यसंपादनं निर्मोकपट्टे तेन चेत्युभयमेलनेन अन्यधर्मसम्बन्धःसमर्थित इत्याह-**अत्रेत्यादिना**।

अत्रैव मन्थव्यथाव्युपशमार्थत्वेन संभावितपादमूलवेष्टनलक्षणशुद्धकार्य समारोपनिमित्तेनाम्बुराशिमन्दाकिन्योः पतिपत्नीव्यवहारसमारोपेण समासोक्तिरिति **सर्वस्वकारः**।

अन्यधर्मसम्बन्धनिर्वाहकं तृतीयमुपायप्रकारं सोदाहरणमुपन्यस्य तुरीयःप्रकारः प्रागेवोपन्यस्त इत्याह-**उपात्तेति**। 'भूयस्तराणि' इत्यत्र धर्मिस्वरूपोत्प्रेक्षोदाहरणे चन्द्रे सन्ध्यानलमध्यगाम्बरमूषिकावर्तिततारानिकरनिर्मितत्वोत्प्रेक्षायां यद्यपि तमस्विनीषु भूयस्तराणि प्रविरलानि ज्यौत्स्नीषु इत्याभ्यां तत्तत्पक्षनिशागत ताराविरलत्वादेधर्मस्योपादानमस्ति। तथापि तस्य तारानिकररूपविषयिमात्रवृत्तित्वम् न पुनर्विषयभूतचन्द्रवृत्तित्वमित्यन्यधर्मस्य सम्बन्धो विषये नास्तीत्यव्याप्तिः प्राप्नोति। सत्यम्, अथापि तादृशविरलत्वाविरलत्वानुविधायि वृद्धिह्रासशालि त्वस्य विषयसम्बन्धो भवत्येवेति तत्रान्य धर्मसम्बन्धः सुसम्पाद इति दर्शित एवेत्यर्थः।

**चित्रमीमांसा-**

**तस्मात् अन्यधर्म-सम्बन्धादित्येतदपि सर्वोत्प्रेक्षानुगतमिति नक्काप्यव्याप्तमिति सर्वं समञ्जसम्। -**

**अलंकारसर्वस्वकृताअयमस्याःविभागः प्रदर्शितः (१) वाच्या प्रतीयमाना चेति तावदुत्प्रेक्षा द्विविधा (२)।इवादिप्रयोगे वाच्या, तदप्रयोगे प्रतीयमाना।**

तत्त्वालोकः

इत्थंच अन्यधर्मसम्बन्धादित्यस्य सर्वविधोत्प्रक्षानुगतिसम्भावान्नक्काप्य-व्याप्त्यवकाश इति निगमयति-**तस्मादिति**

एतेन 'यत्र स्वमात्रधर्मादन्यमात्रधर्माद्वा किंचित् उत्प्रेक्ष्यते तत्रान्यधर्म-सम्बन्धादिति लक्षणांशाभावादव्याप्तिः या धर्मस्यानुगामित्वमात्रेणैव निमित्तत्वमिति पक्षावलम्बनेन आपादिता सा साधारणीकरणोपायैः साधारणीकृतोपि साधारणतां प्रतिपन्न इति परिहृतेत्युक्तं भवतीभावः।

इत्थं महता प्रबन्धेन **विद्यानाथा**भिमतं प्राचीनार्वाचीनोभयरीत्यापि (सर्वत्राभेदेनैवोत्पक्षेति प्राचीनरीत्या, भेदेनाप्युत्प्रेक्षणमित्यर्वाचीनरीत्यापि) उत्प्रेक्षासमन्वयसाधकंतल्लक्षणंपरिष्कृत्य तद्विभागः **सर्वस्वकृदादि**कृतोऽसमञ्जस इतिन्यूनत्वं इति प्रदर्शयितुं तदभिमतविभागप्रकारम् अनुवदति-**अलंकारसर्वस्वकृतेति।**

उत्प्रेक्षां सामान्यतो विभजते-**वाच्येति। इवेति।**

इव, नूनम्, मन्ये, जाने, अवैमि, ऊहे, तर्कयामि, शङ्के, इत्यादिप्रयोगे सति यत्रोत्प्रेक्षासामग्री तत्र वाच्योत्प्रेक्षेत्यर्थः। **प्रतीयमानेति**। प्रतीयमानत्वं च न व्यङ्ग्यत्वम्। अपि तु अर्थसामर्थ्या वसेयत्वरूपम्।

**चित्रमीमांसा-**

**(२) तत्र वाच्या जाति-गुण-क्रिया-द्रव्याणामप्रकृता-नामध्यवसेयत्वेन चतुर्विधा॥**

**(३) तेषां च प्रत्येकं भावाभावाभिमानरूपतया द्वैविध्येनाष्टविधा॥**

**(४) तेषु पुनर्निमित्तगुणक्रियारूपत्वेन षोडशभेदाः॥**

तत्त्वालोकः

उत्प्रेक्षा

(१) वाच्या, प्रतीयमाना

तत्र वाच्योत्प्रेक्षां पुनर्विभजते- **तत्र वाच्येति।**

(२) उत्प्रेक्षा वाच्या (४) जाति-गुण-क्रिया-द्रव्यभेदात्

(३) उत्प्रेक्षा वाच्या(४)

| | |
|---|---|
| (१) जातिभाव ० | (५) जात्यभाव ० |
| (२) गुणभाव ० | (६) गुणाभाव ० |
| (३) क्रियाभाव ० | (७) क्रियाऽभाव ० |
| (४) द्रव्यभाव ० | (८) द्रव्याभाव. ० |

(४) उत्प्रेक्षा वाच्या (१६) विधा

| | |
|---|---|
| (१) गुणनिमित्तजातिभाव ० | (९) गुणनिमित्तजात्यभाव ० |
| (२) क्रियानिमित्तजातिभाव ० | (१०) क्रियानिमित्तजात्यभाव ० |
| (३) गुणनिमित्तगुणभाव ० | (११) गुणनिमित्तगुणाभाव ० |
| (४) क्रियानिमित्त गुणभाव ० | (१२) क्रियानिमित्त गुणाभाव ० |

**चित्रमीमांसा-**

**(५) निमित्तस्य पुनः उपादानानुपादानाभ्यां द्वात्रिंशत्प्रकाराः (३२) तेषु पुनः प्रत्येकं स्वरूप-हेतु-फलोत्प्रेक्षारूपत्वेन षण्णवतिः भेदाः।**

**(६) तत्र द्रव्यस्य स्वरूपोत्प्रेक्षणमेवेति हेतुफलोत्प्रेक्षास्ततोऽपि विपातनीयाः ततः षोडशभेदाः न्यूनाः। जात्यादीनामपि हेतुफलोत्प्रेक्षयोर्निमित्तस्यानुपादानं न संभवतीति ततः चतुर्विंशति भेदाः न्यूनाः।ततश्च स्वरूपोत्प्रेक्षा अवैकल्येन द्वात्रिंशद्भेदा।**

तत्त्वालोकः

(५) गुणनिमित्त क्रियाभाव ० (१३) गुणनिमित्त क्रियाऽभाव ०

(६) क्रियानिमित्त क्रियाभाव ० (१४) क्रियानिमित्त क्रियाऽभाव ०

(७) गुणनिमित्त द्रव्यभाव ० (१५) गुणनिमि द्रव्याभाव ०

(८) क्रियानिमित्त द्रव्याभाव ० (१६) क्रियानिमित्त द्रव्याभाव ० -

**(५) वाच्यास्वरूपोत्प्रेक्षा (३२)**

(१) उपात्तगुणनिमित्तजातिभाव ० (१७) अनुपात्त रुणनिमित्तजातिभाव ०

(२) उपात्त क्रियानिमित्त जातिभाव ० (१८) अनुपात्त क्रियानिमित्त जातिभाव ०

(३) उपात्तगुणनिमित्त गुणभाव ० (१९) अनुपात्तगुणनिमित्त गुणभाव ०

(४) उपात्तक्रियानिमित्त गुणभाव ० (२०) अनुपात्तक्रियानिमित्त गुणभाव ०

(५) उपात्तगुणनिमित्त क्रियाभाव ० (२१) अनुपात्तगुणनिमित्त क्रियाभाव ०

(६) उपात्तक्रियानिमित्त क्रियाभाव ० (२२) अनुपात्तक्रियानिमित्त क्रियाभाव ०

(७) उपात्त गुणनिमित्त द्रव्यभाव ० (२३) अनुपात्तगुणनिमित्त द्रव्यभाव ०

**चित्रमीमांसा-**

## हेतु फलोत्प्रेक्षे प्रत्येकं द्वादशभेदे, इति षट्पञ्चाशद्भेदा वाच्योत्प्रेक्षा(५६)

- तत्त्वालोकः -

(८) उपात्त क्रियानिमित्त द्रव्याभाव ० (२४) अनुपात्तक्रियानिमित्त द्रव्यभाव ०

(९) उपात्तगुणनिमित्त जात्यभाव ० (२५) अनुपात्तगुणनिमित्तजात्यभाव ०

(१०) उपात्त क्रियानिमित्त जात्यभाव ० (२६) अनुपात्तक्रियानिमित्त जात्यभाव ०

(११) उपात्तगुणनिमित्त गुणाभाव ० (२७) अनुपात्तगुणनिमित्त गुणाभाव ०

(१२) उपात्त क्रियानिमित्त गुणाभाव ० (२८) अनुपात्तक्रियानिमित्तगुणाभाव ०

(१३) उपात्त गुणनिमित्त क्रियाऽभाव ० (२९) अनुपात्तगुणनिमित्तक्रियाऽभाव ०

(१४) उपात्तक्रियानिमित्त क्रियाऽभाव ० (३०) अनुपात्तक्रियानिमित्त क्रियाऽभाव ०

(१५) उपात्त गुणनिमित्त द्रव्याभाव ० (३१) अनुपात्तरणिनिमित्त द्रव्याभाव ०

(१६) उपात्त क्रियानिमित्त द्रव्याभाव. ० (३२) अनुपात्तक्रियानिमित्तद्रव्याभाव ०

### (६) वाच्याः हेतूत्प्रेक्षाः १२ विधाः।

भावाभिमानवत्यः ६ विधाः

१. उपात्त गुणनिमित्त जातिभावहेतूत्प्रेक्षा।

२. उपात्त क्रियानिमित्तजातिभावहेतूत्प्रेक्षा।

३. उपात्त गुणनिमित्त गुणभावहेतूत्प्रेक्षा।

४. उपात्त क्रियानिमित्त गुणभावहेतूत्प्रेक्षा।

५. उपात्त गुणनिमित्त क्रियाभावहेतूत्प्रेक्षा।

६. उपात्त क्रियानिमित्त क्रियाभावहेतूत्प्रेक्षा।

**चित्रमीमांसा-**

**वीणावादनसंरम्भात् चकम्पे दक्षिणः स्तनः।**
**अदृष्ट्वेवेतरं तस्याः स्तम्भाभोगतिरोहितम्॥**

**अत्राद्यश्लोके रविचन्द्रयोः जातिद्रव्ययोरभावौ हेतुत्वेन उत्प्रेक्ष्येते। द्वितीयतृतीयश्लोकयोः आदरदर्शनयोः गुणक्रिययोरभावौ। सृष्टिमीलनकम्पक्रियास्तु निमित्तानि।**

तत्त्वालोकः-

अस्तमिति मान्तमव्ययम् अदर्शने वर्तते। "अस्तमदर्शने" इति **वैजयन्ती**। यद्वा अस्तं अस्तमयाचलं गते याते कार्यान्तरव्यापृत्या स्थानान्तरमुपेयुषि भास्वति इति यावत्। तस्य पदे तत्स्थाने विधुः कुमुदबन्धुरिति प्रसिद्धः इन्दुः कियान् अल्पः यतोऽस्मद्बन्धुं भानुमवलम्ब्यैव स्वधाम स प्रतिपद्यते अथापि स्वाश्रयविरोधिनं कुमुदमेव विकासयति न स्वाश्रयदातुः भानोः बन्धूनस्मान् इत्यनादरतः तिरस्कारं मनसि निधायेव तिरस्का-राद्धेतोः इति वा अर्थः नूनं मीलति संकुचति। अत्र चन्द्रपद्मविरोधस्य स्वाभाविकत्वात्पद्ममीलनं नत्वनादराद्धेतोः। अथापि मीलनं निमित्तीकृत्य आदररूपगुणाभावो हेतुत्वेनोत्प्रेक्षितः।

क्रियाभावस्य हेतुत्वेनोत्प्रेक्षायामुदाहरणमाह- **वीणेति** तस्याः नायिकायाः दक्षिणः स्तनः वीणावादनसंरम्भात् वल्लकीवादनरभसात् (तस्याः वीणायाः) स्तम्भाभोगतिरोहितं वीणादण्डेन पूर्णतया तिरोहितमन्तर्हितमितरं स्तनं वामस्तनं अदृष्ट्वेव अनवलोक्येव चकम्पे चचाल॥

अत्र वस्तुतो वीणावादनरभसादेव स्तनचलनम् ,अथापि तच्चलनं प्रति दक्षिणस्तनकर्तृकवामस्तनदर्शनाभावो हेतुत्वेनोत्प्रेक्षित इति चलनरूपक्रियानिमित्ता स्तननिष्ठा दर्शनरूपक्रियाऽ भावोत्प्रेक्षा। तदेवं त्रिषूदाहरणेषु आद्यश्श्लोके जातिद्रव्ययोः, द्वितीयतृतीयश्लोकयोः गुणक्रिययोरभावौ चोत्प्रेक्ष्येते इत्युपपादयति- **अत्रेति** आद्यश्लोके-"रात्रौ रवेः" इत्यादिश्लोके द्वितीयतृतीयश्लोकयोः" तस्मिन् अस्तंगते," "वीणावादनसंरम्भात्" इति श्लोकयोरित्यर्थः।

## चित्रमीमांसा-

**एवं गुणनिमित्ता-अप्यभावहेतूत्प्रेक्षाः उदाहार्याः।। एवं षोडशभेदा हेतूत्प्रेक्षा दर्शिता।**

## अथ फलोत्प्रेक्षा-

### तत्त्वालोकः

इदमुपलक्षणं गुणनिमित्ताभावहेतूत्प्रेक्षाणामित्याह- **एवमिति**। पूर्वोदाहृतेषु आद्ये द्वितीयचतुर्थपादयोः विपर्यासे गुणनिमित्तजातिद्रव्याभावोत्प्रेक्षे भवतः। तद्यथा-

रात्रौ रवेर्दिवाचेन्दोरभावादिव तद्गृहे।
भूमौ प्रतापयशसी सुस्थितेभिनवोदिते।।

इत्यत्र सुस्थिते प्रतापयशसी गुणौ निमित्तीकृत्य रविचन्द्रयोः जातिगुणयोरभावौ उत्प्रेक्ष्येते।

एवं द्वितीयपद्ये चतुर्थचरणे "म्लायतीत्यपहाय"म्लानि :" इति पद विपर्यासे गुणनिमित्ता गुणाभावहेतूत्प्रेक्षा "तद्यथा-

तस्मिन्नस्तंगते भानौ विधुस्तस्य पदे कियान्।
इत्यनादरतो नूनं म्लानि रम्बुरुहाकरे।। इति।

अत्र म्लानिं गुणं निमित्तीकृत्य आदररूपगुणाभावः हेतुरुत्प्रेक्ष्यते।

एवं तृतीयपद्ये-द्वितीयपादे "चकम्पे" इत्यपहाय "वियुक्तः" इति व्यत्यासे गुणनिमित्तक्रियाभावहेतूत्प्रेक्षा तद्यथा-

वीणावादनसंरम्भाद्वियुक्तो दक्षिणः स्तनः।
अदृष्ट्वेतरं तस्याः स्तम्भाभोगतिरोहितम्।। इति।

अत्र नैयायिकाभि मतंप्रसिद्धं विभागरूपं वियोगं प्रति दर्शनक्रियाभावो हेतुत्वेनोत्प्रेक्ष्यत इति गुणनिमित्ता दर्शनरूपक्रियाभाव हेतूत्प्रेक्षा इति गुणनिमित्ताः अपि जातिद्रव्य-गुण-क्रियाभावहेतूत्प्रेक्षा उदाहृताः।।

एवंच हेतूत्प्रेक्षापि षोडशविधा दर्शिता। तदेतदाह- **एवमिति**।

सम्प्रति फलोत्प्रेक्षासु क्रियानिमित्तां जातिभावफलोत्प्रेक्षामुदाहरति **अथेत्यादिना**।

**चित्रमीमांसा-**

**सौधेषु यत्र मुखभासु मृगेक्षणानां**
**ज़्योत्स्नापहासचतुरासु विसृत्वरीषु।**
**चन्द्रस्तदर्थमिव रात्रिषु बम्भ्रमीति।**
**कुर्वन् करप्रसरणान्यधिजालवर्गम्।।**
**तव निर्वर्ण्य यद्वर्णं स्वर्णं वर्णाय तादृशे।**
**त्वत्कोशगेहान्निर्गम्य तीर्थेषु वसति ध्रुवम्।।**

तत्त्वालोकः-

यत्र सौधेषु मृगेक्षणानां ज्योत्स्नापहासचतुरासु विसृत्वरीषु मुखभासु सतीषु तदर्थमिव चन्द्रः रात्रिषु अधिजालवर्गं करप्रसरणानि कुर्वन् बम्भ्रमीति इत्यन्वयः।।

यत्र नगर्यां, सौधेषु राजसदनेषु, मृगेक्षणानां हरिणाक्षीणाम्, ज्योत्स्नापहासचतुरासु विनैव कारणं चन्द्रिकापरिहासचटुषु चन्द्रिकातोऽधिकं प्रकाशमानासु, विसृत्वरीषु विशेषतःप्रसरणशीलासु, मुखभासु मुखच्छविषु सतीषु, तदर्थमिव तादृशवदनकान्तिलाभायेव,चन्द्रः हृद्यांशुः रात्रिषु निशासु,अधिजालवर्गम् गवाक्षेषु, करप्रसरणानि किरणरूपकरप्रसरणानि, कुर्वन् बम्भ्रमीति पुनःपुनः अतिशयेन वा क्वचिदनवस्थितश्चरति लोकेऽपि कश्चित् यद्बलमाश्रित्य यं अकारणं हसति सः तस्य तद्बलं ह्रासयितुं अपर्हतुवा सन्तमसावृते काले गवाक्षादिद्वारा करं प्रसार्य तदेकदेशं तत्सर्वस्वं वा मुषितुं भ्रमति तद्वदयमपि चन्द्रः स्वापहासनिदान भूतां मुखकान्तिमेव अपहर्तुमिव करं प्रसारयति।।

अत्र मुखप्रभा नायिकावयववृत्तिः जातिरूपाच। सैवात्ररात्रौ गवाक्षेषु करान् प्रसार्य भ्रमणरूपक्रियायाः फलत्वेन उत्प्रेक्ष्यते। नच मुखप्रभाया जातेः अमूर्तत्वेन-व्यापारजन्यत्वाभावात्फलत्वमेव नोपपद्यते इति मुखप्रभाप्राप्तिरेव फलमिति वाच्यम्। मुखप्रभाप्राप्तेः संसर्गत्वेन तद्वारा जात्यादेरपि फलत्वमुपपद्यत इत्यभिप्रायात्। तथाच भ्रमणरूपां क्रियां निमित्तीकृत्यप्राप्तिद्वारा मुखप्रभारूपा जातिः फलत्वेनोत्प्रेक्ष्यत इत्यत्र क्रियानिमित्ताजातिभावफलोत्प्रेक्षेति विभावनीयम्।।

क्रियानिमित्तां गुणभावफलोत्प्रेक्षामुदाहरति-**तवेति**।

14

**चित्रमीमांसा-**

**रथस्थितानां परिवर्तनाय**
**पुरातनानामिव वाहनानाम्।**
**उत्पत्तिभूमौ तुरगोत्तमानां**
**दिशि प्रतस्थे रविरुत्तरस्याम्।।**
**दुग्धार्णवसहस्राय कैलासाचलकोटये।**
**नूनं प्रतापरुद्रेण यशो दिक्षु प्रसारितम्।।**

तत्त्वालोकः-

हे सुन्दरि! स्व[illegible]म्वर्णं कर्तृ तव भवत्याः यत् विलक्षणं वर्णं, तत् निर्वर्ण्य सम्यगवलोक्य, ता[illegible] त[illegible]जातीयाय वर्णाय तत्सजातीयं वर्णमुपादातुं, त्वत्कोशगेहात् भावत्कार्थसंचयागारात् बहिः निर्गम्य निःसृत्य, तीर्थेषु सत्पात्रेषु- ''तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने। पात्रोपायावतारेषु इति **वैजयन्ती।** ध्रुवंस्थिरं वसति। अथवा ध्रुवमिति संभावनार्थकम्।।

अत्र स्वर्णं विषयः तीर्थवासो निमित्तम् गौरवर्णो विषयी चतुर्थ्यर्थः फलम्। प्रकृत्यर्थप्रत्ययार्थयोरभेदः सम्बन्धः तथाच तीर्थवासरूपक्रियानिमित्ता गौरवर्णरूप गुणभावफलोत्प्रेक्षेति भावः।।

क्रियानिमित्तां क्रियाभावफलोत्प्रेक्षामुदाहरति-**रथस्थितानामिति।**

रविः रथस्थितानां पुरातनानां वाहनानां परिवर्तनायेव तुरगोत्तमानां उत्पत्तिभूमौ प्रतस्थे इत्यन्वयः।

रविः सूर्यः रथस्थितानां रथे नियुक्तानां पुरातनानाम् पुराणानाम्, वाहनानां अश्वानाम् परिवर्तनायेव अश्वपरिवर्तनरूपं फलमुद्दिश्येव, तुरगोत्तमानां अश्वरत्नानां उत्पत्तिभूमौ उत्तरस्यां दिशि प्रतस्थे।

अत्र रविः विषयः परिवर्तनम् विषयी। उत्तरायणं निमित्तम्। तथाच उत्तरायणं निमित्तीकृत्य अश्वपरिवर्तनरूपं फलमुत्प्रेक्ष्यते इति क्रियानिमित्ता क्रियाभावफलोत्प्रेक्षा।

क्रियानिमित्तद्रव्यभावफलोत्प्रेक्षायाः **विद्यानाथो**दाहृतपद्यमेव उदाहरति - **दुग्धेति।**

**चित्रमीमांसा-**

**एषु श्लोकेषु क्रमेण मुखप्रभा-गौरवर्ण-परिवर्तन दुग्धार्णव-कैलासरूपाणि, जाति-गुण- क्रियाद्रव्याणि फलत्वेनोत्प्रेक्ष्यन्ते। भ्रमण-तीर्थवास-प्रस्थान प्रसरणक्रियाः निमित्तानि एवं गुणनिमित्ता अप्युदाहार्याः**

**अभावाभिमानवत्यः फलोत्प्रेक्षाः यथा-**

तत्त्वालोकः-

प्रतापरुद्रेण एकशिलानगर्या अधिराजेन, दुग्धार्णवसहस्राय एक एव दुग्धार्णवः प्रथितः इदानीं असंख्यदुग्धार्णवसम्पादनाय, कैलासाचलकोटये एक एव कैलासाचलः प्रथितः इदानीं असंख्यकैलासाचल-सम्पादनाय नूनं यशः कीर्तिः दिक्षु दशसुदिशासु प्रसारितम्।। अत्र प्रसरणक्रियां निमित्तीकृत्य दुग्धार्णव-कैलासरूपद्रव्ये फलत्वेनोत्प्रेक्ष्येते इति क्रियानिमित्त द्रव्यभावफलोत्प्रेक्षा।।

यद्यपि पूर्वं "चोलस्य यद्भीतिपलायितस्येति" फलोत्प्रेक्षा उदाहृतैव अथापि यथा तुमुन्नादेरर्थः फलं तथा चतुर्थी-तदर्थादिशब्दानामपि फलमर्थः इति बोधयितुं पृथगुदाहरणान्तरदानमिति बोध्यम्।।

सौधेष्वित्यादिषु चतुर्षु एकोक्त्या चतस्र उत्प्रेक्षाः उपपादयति- **एष्विति**। तत्तच्छ्लोकव्याख्यावसरे उपपादितोऽयमंशः।

इदमुपलक्षणं गुणनिमित्तानामपि फलोत्प्रेक्षाणामित्याह **एवमिति**। तद्यथा - **ममैव-**

यत्र स्थितानां प्रमदाजनानां मुखत्विषा वामतिरस्कृतिर्ग्लौः।
तस्या जयार्थं किल सोऽपि राकानिशासु शोभातिशयेन युक्तः।।

इत्यत्र इन्दौ शोभातिशययोगं गुणं निमित्तीकृत्य प्रमदामुखशोभाजयः फलत्वेनोत्प्रेक्षित इति गुणनिमित्त फलोत्प्रेक्षा एवमन्या अपि भावाभिमानवत्योऽन्वेष्याः।

इत्थं भावाभिमानवत्यः फलोत्प्रेक्षाः उदाहृत्य अभावाभिमानवत्यः फलोत्प्रेक्षाः उदाहर्तुमाह- **अभावेति**।

**चित्रमीमांसा-**

**त्वदाननेन सादृश्यं प्राप्नुकामो निशाकरः।**
**कलंकपङ्काभावाय नूनं मज्जति सागरे।**
**अरण्यवासोचितबान्धवासु**
**मृगीष्ववैरार्थमिवाशरण्याः।**
**त्रिलिङ्गदेशेश्वरवैरिनार्यः**
**पराङ्मुखा लोचनविभ्रमेषु।।**

तत्त्वालोकः

अभावाभिमानवतीषु क्रियानिमित्तां जात्यभावफलोत्प्रेक्षाम् उदाहरति- **त्वदानने नेति**। त्वदाननेन त्वन्मुखेन सादृश्यम् प्राप्नुकामः प्राप्नुंकाम इच्छा यस्य सः इतिविग्रहः। "तुंकाममनसोरपि" इति वलोपः लब्धुकाम इत्यर्थः, निशाकरः चन्द्रः,कलङ्कपङ्काभावाय कलंकरूपस्य पाप्मनो नाशाय ,नूनं सागरे समुद्रे निमज्जति स्नाति।

लोके यं कमपि पाप्मानं परिहर्तुमेव समुद्रे निमज्जन्ति जनाः। तद्वदयमपि निशाकरः समुद्रे निमज्जति तत्किमर्थमिति चेत् कलङ्करूपपङ्कपरिहाराय इत्युच्यते। तथाचात्र निशाकरे विषये सागरनिमज्जनरूपां क्रियां निमित्तीकृत्य कलङ्कपङ्कत्वरूप-जात्यभावः फलत्वेनोत्प्रेक्ष्यत इति क्रियानिमित्ताजात्यभावफलोत्प्रेक्षा बोध्या।

तास्वेव गुणनिमित्तां गुणाभावफलोत्प्रेक्षामुदाहरति **अरण्यवासेति**।

अशरण्याः त्रिलिङ्गदेशेश्वरवैरिनार्यः अरण्यवासोचितबान्धवासु मृगीषु अवैरार्थमिव, लोचनविभ्रमेषु पराङ्मुखाः जाताः इत्यन्वयः।।

अशरण्याः शरणे साधुः शरण्यः तत्र साधुः (पा.सू.४-४-९८) इति यत्प्रत्ययः, तद्रहिताः अशरण्याः अनाथाः इत्यर्थः, त्रिलिङ्गदेशेश्वरवैरिनार्यः प्रतापरुद्र शत्रुराज-योषितः, स्वभर्तॄणां पराजितत्वेन पलायनपराणां अरण्ये निलीय वासस्य सहवासस्यार्हा उचिताः बान्धवाः बन्धुभूताः याः मृग्यः हरिण्यः तासु अवैरार्थमिव वैरनिषेधायेवेत्यर्थः विलासविमुखाः मृगाङ्गनाः विलासाभिमुखीः विलासिन्यो विलोक्य वैरायन्ते तन्निषेधार्थमिवेत्यर्थः। लोचनविभ्रमेषु नयनविलासेषु पराङ्मुखाः विमुखा जाताः।।

**चित्रमीमांसा-**

**हेमाद्रिकुञ्जेषु विहारभाजः**
**सिद्धाङ्गनाः कल्पितचन्द्रिकार्घान्।**
**श्रीवीररुद्रस्य यशो विलासान्**
**गायन्त्यसंस्प्रष्टुमिवान्धकारम्॥**
**वीररुद्रनरेन्द्रस्य जयप्रस्थानसंभवम्।**
**रजः पिहितदिग्गोलं निराकाशमिव स्थितम्॥**

तत्त्वालोकः

अत्र वैरिवनिताः विषयाः वैराभावो विषयी विलासवैमुख्यं गुणो निमित्तम्। तथाच विलासवैमुख्यनिमित्तकः वैररूप गुणाभावः फलमुत्प्रेक्ष्यत इति गुणनिमित्ता गुणाभावफलोत्प्रेक्षा बोध्या॥ गुणनिमित्तगुणाभावफलोत्प्रेक्षामुदाहृत्य क्रियानिमित्तक्रियाऽभावफलोत्प्रेक्षा मुदाहरति **हेमाद्रीति**।

हेमाद्रिकुञ्जेषु विहारभाजः सिद्धाङ्गनाः कल्पितचन्द्रिकार्घान् श्रीवीररुद्रस्य यशोविलासान् अन्धकारं असंस्प्रष्टुमिव गायन्ति इत्यन्वयः।

हेमाद्रिकुञ्जेषु लोकालोकपर्वतीयलतापिहितप्रदेशेषु विहारभाजः क्रीडन्त्यः, सिद्धाङ्गनाः सिद्धपुरुषस्त्रियः कल्पितचन्द्रिकार्घान् कल्पितश्चन्द्रिकाया इव अर्घः पूजाविधिःयेषां तान् चन्द्रिकासदृशान् श्रीवीररुद्रस्य त्रिलिङ्गदेशेश्वरस्य यशोविलासान् यशः प्रसरान्, अन्धकारं तमः कर्तृ "आततिश्चान्धकारोऽस्त्री" इति **वैजयन्ती**। इति नपुंसकोऽत्र अन्धकारशब्दः। असंस्प्रष्टुमिव संस्पर्शं माकुरुतादितीव गायन्ति गीतकारव्यस्वरविशेषेण प्रकाशयन्तीत्यर्थः। अत्र सिद्धङ्गनासु राज्ञो यशोगानरूपक्रियां निमित्तीकृत्य संस्पर्शाभावरूपं फलं उत्प्रेक्ष्यत इति क्रियानिमित्त क्रियाऽभावफलोत्प्रेक्षा॥

क्रियानिमित्तक्रियाऽभावफलोत्प्रेक्षामुदाहृत्य क्रियानिमित्तद्रव्याभावफलोत्प्रेक्षां **विद्यानाथो**दाहृतामेवोदाहरति-**वीररुद्रेति**।

वीररुद्रनरेन्द्रस्य प्रतापरुद्रनृपतेः, जयप्रस्थानसंभवं जयार्थं यत्प्रस्थानं गमनोपक्रमः तस्मात् संभवो यस्य तत् रजः, पिहितदिग्गोलं पिहितः आच्छादितः

## चित्रमीमांसा

**एषु श्लोकेषु पङ्क-वैर-स्पर्शनाकाशानामभावाःफलत्वेन उत्प्रेक्ष्यन्ते। तेषु पराङ्मुखत्वमेको गुणः अन्याः क्रियाः। इत्थं गुणक्रियानिमित्तभेदाः उदाहार्याः, एवं फलोत्प्रेक्षाः षोडश दर्शिताः इति वाच्योत्प्रेक्षावर्गः।।**

### तत्त्वालोकः-

दिग्गोलः दिङ्मण्डलं येन तत् निराकाशमिव आकाशस्याभावायेव स्थितम्।

अत्र आकाशस्याभावो निराकाशं अर्थाभावेऽव्ययीभावः। ततश्च चतुर्थ्याः नाव्ययीभावादतोम्त्वपञ्चम्याः (पा.सू.२.४.८७) इत्यम्भावः। अत्र रजो विषयः, आकाशाभावो विषयी, आच्छादनं निमित्तम्, तथाच रजसः आच्छादनस्य आकाशाभावः फलम् , आकाशस्य द्रव्यत्वात् क्रियानिमित्ता द्रव्याभावफलोत्प्रेक्षा बोध्या।।

एषु चतुर्षूदाहरणेषु एकवाक्यतया चतस्र उत्प्रेक्षा उपपादयति **एष्विति**। उपसंहरति- **इत्थमिति**।

एवं फलोत्प्रेक्षा षोडशविधा जातेत्युक्त्वा वाच्योत्प्रेक्षावर्गमुपसंहरति **एवमित्यादिना**।

नन्वत्र- वाच्योत्प्रेक्षातः गम्योत्प्रेक्षायां को विशेषः? उच्यते वाच्योत्प्रेक्षायां इवादिः प्रयुज्यते। गम्योत्प्रेक्षायां इवादिर्नप्रयुज्यते इति सत्यम्। तथा सति "वेलामतिक्रम्य" इत्याद्युत्प्रेक्षाध्वनिस्थलेषु अतिव्याप्तिः तत्रापि इवाद्यनुपादानात्। अतश्च गम्योत्प्रेक्षायां ध्वन्यमानोत्प्रेक्षानतिव्यापको वाच्यः स च उत्तरत्र वक्ष्यते- "यत्रोत्प्रेक्षणीयस्य विषयिणोऽप्यनुपादानं, निबद्धेन वस्तुना अलंकारेण वा गम्योत्प्रेक्षा गूढा तत्रैव उत्प्रेक्षाध्वनिः" इति। इत्थं सति यत्र विषयिण उपादानं तत्र "चन्दनासक्ते" त्यादौ कथं ध्वनित्वं ध्वनिकारादिभि रुपगतमिति विवेचियिष्यामः।

तत्र तावत्- **सर्वस्वकृता**-प्रतीयमानोत्प्रेक्षाया इदमुदाहरणं दत्तम्-

महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती।
अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति।। इति।

**चित्रमीमांसा-**

**अथ गम्योत्प्रेक्षाः दिङ्मात्रेणोदाह्रियन्ते।**

**नभसि महसां ध्वन्तध्वाङ्क्ष प्रमापणपत्त्रिणा-**
**मिह विहरणैः श्यैनम्पातां रवेरवलोकयन्**
**शशविशसनत्रासात् आशामगाच्चरमां शशी**
**तदधिगमनात्तारापारावतैरुदडीयत॥**

तत्त्वालोकः

अत्रेदं चिन्त्यते। अत्रोत्प्रेक्षा प्रतीयते न वेति। प्रतीयते इति सर्वस्वकारः, नेति प्रकाशकारादीनां गूढाभिप्रायः। उक्तपद्यार्थश्च हे सुभग सौभाग्ययुक्त सुन्दर , अनेन नायिकानिष्ठानुरागस्य त्वमेव विषय इति ध्वन्यते। महिलासहस्रभरिते स्त्रीसहस्रेणावृते तव हृदये अमान्ती अवकाशमलभमाना सा त्वय्यनुरक्ता नायिका अनुदिनं प्रतिदिनम् अनन्यकर्मा कृशाया अपि तनोः कृशतरतासम्पादनातिरिक्त व्यापारशून्या तन्वपि कृशमपि अंगं तनुं तनयति क्रशयति। अत्र सुभग इति सम्बोधनेन नायिकायाः त्वय्यनुरागे सत्यपि न त्वं तस्यामनुरक्तइिति ध्वन्यते। तथा महिलासहस्रभरिते इत्युक्त्या त्वदीयानुरागस्य ता एव नायिकाः विषयाः न पुनस्तासां त्वय्यनुराग इति च ध्वन्यते। तथाच विरहिण्यां विषये अवकाशालाभरूपोहेतुः तनोस्तनूकरणंप्रत्युत्प्रेक्ष्यते। अत्र इवशब्दानुपादानमात्रं न पुनः विषयिणोऽप्यनुपादानमिति वाच्यायमानत्वा- दुत्प्रेक्षाया इति प्रतीयमानतेति॥

**प्रकाशाकारादीनां तु** - अत्र विशेषोक्तिध्वनित्वमभिमतमिति ज्ञायते। अत्र नायकस्य हृदये नायिक्या अवकाशालाभे महिलासहस्रभरितत्वं हेतुः। तनूकरणे अवकाशालाभश्च हेतुरिति **काव्यलिङ्गाभ्यां** अङ्गतनूकरणरूपकारणसत्त्वेऽपि हृदये स्थानालाभरूपकार्याभावः कथित इति **विशेषोक्तिर्ध्वन्यते** नपुनःउत्प्रेक्षेति। यतश्चात्रामान्तीत्यत्र अमान्तीवेत्युत्प्रेक्षामपरिकल्प्यैव तव हृदयानुरागपात्रतामप्राप्येति पर्यवसितार्थमादाय अभिधेय एव विश्रान्तेः। तदेतन्मनसि निधायैव अर्थशक्तिमूलध्व- निमुदाहरता **प्रकाशकृता अलंकारेणालंकारध्वनेः** "महिलासहस्रभरिते" इति पद्यमुदाहृत्य विवृतं-अत्र **हेत्वलंकारेण** तनोस्तनूकरणेऽपि तव हृदये न वर्तते इति

## तत्त्वालोकः

विशेषोक्तिरिति। अतोऽत्रोत्प्रेक्षायाः प्रतीयमानतोक्तिः अगरीयसीति मत्वा उदाहरणान्तरं व्यतरत् ग्रन्थकृत् **अथेत्यादिना।**

तत्र स्वरूपहेतूत्प्रेक्षाणां गम्यमानत्वे उदाहरति **नभसीति।** नभसि ध्वान्तध्वाङ्क्षप्रमापणपत्रिणां महसां इह विहरणैः रवेः श्यैनम्पातामवलोक्यन् शशी शशविशसनत्रासात् चरमामाशां अगात्, तथा तदधिगमात् तारापारावतैः उदडीयत इत्यन्वयः। नभसि आकाशे स्थितानां, ध्वान्तध्वांक्षप्रमापणपत्रिणां ध्वान्तरूपाः ये ध्वाङ्क्षाः काकाःतेषां (प्रमापणे विशरणे मारणे वा) प्रमापणाय मारणाय प्रयुक्तानां पत्रिणां श्येनरूपाणाम् महसां सूर्यकिरणानां,"पत्री तु विशिखः खगः" पत्री श्येने शरे खगे इत्युभयत्रापि **वैजयन्ती।** इह प्राच्यां दिशि विहरणैः क्रीडनैः रवेः सूर्यस्य श्यैनंपातां श्येनानां पातः पतनं श्येनपातः स इव पातोऽस्यां क्रियायां वर्तते श्यैनम्पाता मृगया इत्यर्थे" घञः सास्यां क्रियेति ञः" (पा.सू.४.२.६७) इति ञप्रत्यये श्येनतिलस्य पाते ञे(पा.सू.६-३-७२) इति मुमागमश्च। श्येनपातलक्षणं चान्यत्र उक्तम्-

> परिक्रम्यान्तरिक्षेण संप्राप्योच्चैरदृश्यताम्।
> आकस्मिकाभिपातेन श्येनपात इतीरितः ॥ इति।

एव विधां मृगयां अवलोकयन् ईक्षमाणः शशी शशयुक्तः चन्द्रमाः(स्वकीय) शशविशसनत्रासात् स्वकीयस्यापि शशाख्यमृगस्य मारणं संभवेदिति भीत्या चरमां आशां पश्चिमाशां, अगात् ययौ, तथा तदधिगमात् चन्द्रपलायनवृत्तान्तमुपलभ्य तारापारावतैः नक्षत्ररूपैः पारावतैः पक्षिभिः उदडीयत पलायितम्॥

चन्द्रास्तं सूर्योदयं च वर्णयितुं प्रवृत्तः कविः एवमुत्प्रेक्षते। लोकेऽपि कस्मिंश्चिद्राज्ञि (मृगयया) श्येनपातेन काकादीन् हिंसति सति शशयुक्तोऽन्यः पुरुषो मदीयं शशमपि मांसार्थमेतदीया श्येनाः हनिष्यन्तीति भिया पलाय्य गच्छति तत्पलायनमवगत्य पारावता अपि तत्रत्याः पलायन्ते इति स्थितिः

सूर्यो विषयः तदीयकिरणप्रसरणं निमित्तम् मृगयाविहारक्रिया विषयी तथा च सूर्यो तद्विसृष्टध्वान्तरूपकाकमारणश्येनरूपकिरण प्रसरणं निमित्तीकृत्य श्येनपातवती मृगयाविहारक्रिया उत्प्रेक्ष्यते इति क्रियाभावस्वरूपोत्प्रेक्षा गम्या तथा "शशी

**चित्रमीमांसा-**

**अत्र सूर्येण विसृष्टानां ध्वान्तकाकप्रमापणश्येनरूपाणां किरणानां विहरणेन निमित्तेन सूर्यस्य श्येनपातवती मृगयाविहारक्रियोत्प्रेक्ष्यत इति क्रियास्वरूपोत्प्रेक्षा तावदेका, तस्माच्छशिनः त्रासः तस्य दिगन्तरगमनं प्रति हेतुत्वेनोत्प्रेक्षान्या। ततस्तदधिगमस्य तारापारावतानां मुग्धत्वेन अध्यवसितः तत्तत्स्थाने अस्फुरणं प्रति हेतुत्वेनोत्प्रेक्ष्यत इत्यपराच हेतूत्प्रेक्षा। सर्वाश्चैताः गम्याः इवाद्यभावात्। एवमन्या अपि स्वयमेव बोध्याः नूनमादिशब्दविरहेण पूर्वोक्त-प्रकाराणामुन्नेतुं शक्यत्वात्। प्रागुदाहृतानामेव श्लोकानां नूनमादिशब्दाविधानेन गम्योत्प्रेक्षोदाहरणत्व संभवाच्च गम्योत्प्रेक्षाः पृथक्साकल्येन नोदाहृताः॥**

**इदं तु चिन्त्यते।**

**गम्योत्प्रेक्षासु जातिद्रव्य-स्वरूपोत्प्रेक्षे संभवतो नवेति। सम्भवत इति पक्षे-**

तत्त्वालोकः-

चरमामाशामगात्'' इतिशशिनो दिगन्तरगमनंप्रति रवेस्सकाशात् प्राप्तत्रासो हेतुत्वेनोत्प्रेक्ष्यते इति गुणभावहेतूत्प्रेक्षा गम्या। तथा तारापारावतानां मुग्धत्वेनाध्यवसितः तदधिगमः तत्तत्स्थानेऽस्फुरणरूपडयनं प्रति हेतुत्वेनोत्प्रेक्षितः इति क्रियानिमित्ता गुणहेतूत्प्रेक्षेति तिस्रः उत्प्रेक्षाः अत्र गम्याः। इवादीनामप्रयोगात्। तदेतदुपपादयति- **अत्रेत्यादिना।** एवमन्या अप्युत्प्रेक्षा स्वयमेव बोध्येत्याह- **एवमिति।** स्वयमेव कथं वोद्धुं शक्यमित्याशंकायामाह -**नूनमादीति।** तथोन्नेतुं शक्यत्वेऽपि ज्ञानगौरवं न परिहृतमिति चेत् अत्राह- **प्रागित्यादिना।**

इत्थं वाच्य गम्योत्प्रेक्षास्सोदाहरणं प्रदर्श्य गम्योत्प्रेक्षा विषये विशेषं विवक्षुः पूर्वपक्षिमतमालोचयति- **इदन्त्विति।**

**चित्रमीमांसा-**

**रुचयोऽस्तमितस्य भास्वतः**
**स्खलिता यत्र निराश्रयाः खलु।**
**अनुसायमभुर्विलेपनापण-**
**काश्मीरजपण्यवीथयः॥**

तत्त्वालोकः-

इदानीं चिन्तयितुमवसरः। तथाहि- **सर्वस्वकृता** उत्प्रेक्षां विभज्य "प्रतीयमानायास्तु" यद्यप्युद्देशत एतावन्तो भेदाः" इत्युपक्रम्य प्रायश्चात्र स्वरूपोत्प्रेक्षा न संभवतीत्युक्तम्। तत्र च हेतुः इवाद्यनुपादाने निमित्तस्य चाकीर्तने उत्प्रेक्षणस्य निष्प्रमाणत्वादिति। तत्र जातिद्रव्यस्वरूपोत्प्रेक्षे सम्भवत इति केचित्, न संभवतीति तु **सर्वस्वकृत्सम्मतः** पक्षः। तदेतद्विकल्पयति- **गम्योत्प्रेक्षास्विति**

तत्र संभवपक्षाभिप्रायेणोदाहरति- **सम्भवत इत्यादिना।**

प्रतीयमानजातिस्वरूपोत्प्रेक्षामुदाहरति-**रुचयः इति।** यत्र अनुसायं विलेपनापण-काश्मीरजपण्यवीथयः अस्तमितस्य भास्वतः स्खलिताः निराश्रयाः रुचय (इव) अभुः इत्यन्वयः॥

यत्र विदर्भनगर्याम्, अनुसायम्-प्रतिदिनं सायंकाले इत्यर्थः वीप्सायां अपि यथार्थत्वेन ग्रहणाद्यथार्थे अव्ययं विभक्ति (पा.सू.२-१-६) इति यथार्थे अव्ययीभावः। यद्वा-सायं समये सन्निहिते इत्यर्थः तदा- अनुर्यत्समया (पा.सू.२.१.१५) इति अनोः लक्षणभूतेन समासः अव्ययीभावसंज्ञाच। विलेपनापणे सुगन्धद्रव्यविक्रयहट्टे यानि काश्मीरजानि कुंकुमानि तान्येव पण्यानि तेषा वीथयः श्रेणय इत्यर्थः, अस्तमितस्य अस्तंगतस्य भास्वतः रवेः सकाशात् स्खलिताः च्युताः, सन्तो निराश्रयाः निरालम्बाः रुचयः इवः अभुः भान्ति स्म। सायंसमये तासां रक्तवर्णत्वात्। कुङ्कुमकेसरवर्ण-साजात्यात्तनुदीर्घतया च तथोत्प्रेक्षणम् भातेः लुङि झेर्जुसादेशे अभुरिति रूपम्। पण्यमिति "अवद्यपण्यवर्येति (पा.सू.३.१.१०१) इति निपातनात्साधु॥

अत्र कुंकुमवीथी विषयः, भास्वद्रुचयो विषयिणः, सन्ध्यासावर्ण्यं प्रसिद्ध

## चित्रमीमांसा

परिखावलयेच्छलेन या
न परेषां ग्रहणस्य गोचरः
फणिभाषितभाष्यफक्किका
विषमा कुण्डलनामवापिता।।

इत्यादिनोदाहरणेन भाव्यम्। अभिमतं च केषाञ्चित्। अलंकारसर्वस्वकारस्य तु न संभवत इतिपक्षः। एतदभिप्रायेणैव तेनोक्तं "गम्योत्प्रेक्षाविभागे प्रायश्चात्र स्वरूपोत्प्रेक्षा न संभवतीति" कस्तर्हि अनयोस्तस्य पक्षेऽलंकारः। रूपकमेव।

तत्त्वालोकः-

त्वादनुपात्तं निमित्तम्, तथा च कुंकुमवीथ्यां सन्ध्यासावर्ण्यं निमित्तीकृत्य प्रभाजातिरुत्प्रेक्ष्यते इति जातिस्वरूपोत्प्रेक्षा इवशब्दानुपादानाद्गम्या च।

नन्वत्र- "इवाद्यनुपादानेनिमित्तस्य चाकीर्तने उत्प्रेक्षणस्य निष्प्रमाणत्वात्" इति सर्वस्वानुसारेण निमित्तेवशब्दयोरनुपादानाद्गम्योत्प्रेक्षात्वं न घटते इति शंक्यम् निमित्तांशस्य आरुण्यस्य सकललोकसिद्धत्वेनोपात्तप्रायतैवेति गम्योत्प्रेक्षात्व-मव्याहतमिति भावात्। संभवत इतिपक्षे निमित्तानुपादानस्याप्यदोषत्वात् इत्यभिप्रायाद्वा। उदाहृतश्लोके अस्तंगतस्य भानोः प्रभाणां निराधारतया अवस्थानवर्णनाद्विशेषालंकारोऽपि-तदुक्तं **रुद्रटेन-**

किञ्चिदवश्याधेयं यस्मिन्नभिधीयते निराधारम्।
तादृगुपलभ्यमानं विज्ञेयोऽसौ विशेष इति। इति।

ाम्योत्प्रेक्षायां जातिस्वरूपोत्प्रेक्षामुदाहृत्य द्रव्योत्प्रेक्षामुदाहरति - **परिखेति**।

या परिखावलयच्छलेन कुण्डलनामवापिता सती परेषां ग्रहणस्य नगोचरः वेषमा फणिभाषितभाष्यफक्किका (नूनम्) जाता इत्यन्वयः।

**चित्रमीमांसा-**

**अत एव**

**पीयूषप्रसृतिर्नवा मखभुजां, दात्रं तमो लूतये**
**स्वर्गङ्गाविमनस्ककोक वदनग्रस्ता मृणाली लता।**
**द्विर्भावः स्मरकार्मुकस्य किमपि प्राणेश्वरी सागसां**
**आशातन्तुरुदञ्चति प्रतिपदि प्रालेयभानोस्तनुः।।**

तत्त्वालोकः

या विदर्भनगरी, परिखावलयच्छलेन खेयवेष्टनव्याजेन "खेयं तु परिखा" इति **वैजयन्ती** "अगळु "इति कर्णाटभाषायाम्, कुण्डलनां मण्डलाकाररेखां, अवपिता सती परेषां शत्रूणां ग्रहणस्य आक्रमणस्य अन्यत्र अन्येषां ज्ञानस्य न गोचरः अविषया विषमा दुर्ग्रहा दुर्बोधावा, फणिभाषितभाष्यफक्किका शेषावतारभूत भगवत्पतञ्जलिप्रणीत महाभाष्यस्थकुण्डलितग्रन्थ (नूनं) इव जातः।। भाष्यफक्किका वररुचिना कुण्डलितेति प्रसिद्धिः, वररुचिः भाष्यकारात्प्राचीन इति कथमियं प्रसिद्धिः साधीयसीति चिन्त्यम्। शेष एतद्ग्रन्थाभिप्रायं जानातीति तदर्थः।

अत्र विदर्भनगरी कुण्डलितमहाभाष्यग्रन्थत्वेनोत्प्रेक्ष्यते। साच परिखा-वलयच्छलेनेति अपह्नवोत्थापितत्वात् सापह्नवा व्यञ्जकप्रयोगाद्गम्या। निमित्तंचात्र न परेषां ग्रहणस्य गोचरेति श्लेषेणाभिन्नतामुपगतो धर्मःकुण्डलित ग्रन्थस्यैकत्वात् द्रव्यत्वम्। गम्योत्प्रेक्षासु जातिद्रव्य स्वरूपोत्प्रेक्षे न सम्भवतः इति वदतः **सर्वस्वकारस्य मतमाह अलंकारसर्वस्वेति**। अस्याभिप्रायः प्रागेवप्रदर्शितः" प्राय" इत्युक्त्या क्वचित् तत्सम्भवश्च।

एवं तर्हि गम्योत्प्रेक्षासु जातिद्रव्यस्वरूपोत्प्रेक्षयोरभावे तादृशोदाहरणेषु "रुचयोऽस्तमि"त्यादिषु कोऽलंकारस्**सर्वस्वकाराभिमतः** इति पर्यालोच्य तत्र रूपकालंकारतैवेत्याविष्कुरुते **कस्तर्हीति** ।

**सर्वस्वकारस्यायमभिसन्धिः** गम्योत्प्रेक्षासु इवाद्यनुपादाने निमित्तस्यचाकीर्तने प्रतीयमानापि स्वरूपोत्प्रेक्षा रूपक एव पर्यवसिता भवति इति। एवंविधाभिप्रायः सर्वस्वकृतभिमत इति कथं निर्णीत इत्यत्र संवादं प्रदर्शयति **अत एवेति**। उदाहरति

**चित्रमीमांसा-**

**इति मालारूपकमुदाहरता स्वर्गङ्गाविमनस्केत्यादिष्वपि रूपकमेवोररीकृतम्।।**

## तत्त्वालोकः

**पीयूष प्रसृतिरिति।**

मखभुजां नवा पीयूषप्रसृतिः तमोलूतये दात्रं स्वर्गङ्गविमनस्ककोकवदनस्रस्ता मृणालीलता, स्मरकार्मुकस्य द्विर्भावः प्राणेश्वरीसागसां किमप्याशातन्तुः प्रालेयभानोस्तनुः प्रतिपदि उदश्चति इत्यन्वय :।

मखभुजाम्= क्रतुहविर्भुजां देवानाम्, नवा प्रत्यग्रा "नवो नवो भवति जायमानः" इति श्रुतेः, पीयूषप्रसृतिः पीयषस्य अमृतस्य प्रसृतिः प्रसरणनाडी तथा तमोलूतये तमसः अन्धकारस्य लूतये छेदाय दात्रंलवित्रम्, तथा स्वर्गंगायां देवगंगायां विहारार्थं अहनि गतस्य रात्रिप्राप्त्या वियोगाद्विमनस्का या कोकी तद्वदनात् स्रस्ता गलिता मृणालीलता अल्पं मृणालं मृणाली तद्रूपा लता मृणाली लता-, मृणाली इति स्त्रीलिङ्ग निर्देशः अल्पत्व विवक्षानिबन्धनः। उक्तं च **अमरकारेण**- "स्त्रीस्यान्काचिन्मृणाल्यादिर्विवक्षापचये यदि" इति, स्मरकार्मुकस्य पुष्पधनुषः द्विर्भावः द्वितीयवारम् उत्पत्तिः ,तथा प्राणेश्वरीसागसां प्राणेश्वर्यां नायिकायां ये सापराधाः तेषां नायकानां किमपि अनिर्वाच्यः आशातन्तुः उज्जीवनहेतुः चन्द्रोदये सति कुपिता अपि नायिकाः नायककृतानपराधान् क्षान्त्वा तेषु प्रेमप्रदर्शयन्तीति भावः।प्रालेयभानोः हिमकिरणस्येन्दोः तनुः कृशं शरीरं प्रतिपदि प्रथमातिथौ उदश्चति उद्गच्छति।

अत्र एकस्यामेवेन्दुतनौ पीयूषप्रसृत्याद्युपमानाभेदोपरञ्जनं क्रियते। तच्च बहुभिरिति मालारूपकम्। तत्रकेवलमृणालीलतात्वमनारोप्य स्वर्गङ्गाविमनस्ककोकवदनस्रस्तत्वरूपविशेषणस्य अप्रकृततादात्म्यसंभावनोपयुक्तस्यउपादानेऽपि नोत्प्रेक्षोपगता **सर्वस्वकृता**, वस्तुतो यया कयाचिदपि मृणालीलतया अतिसाम्यं वक्तुं शक्यं स्यात् अथापि तदुपादानं " बालेन्दुवक्राणीत्या"दाविव उत्प्रेक्षात्वमेव अवगमयति। अथापि मालारूपकत्वाभिधानं निमित्तस्यानुपादाने इवशब्दस्य चाभावे उत्प्रेक्षा निष्प्रमाणेत्यभिप्रायादेवेत्यगम्यत इति भावः।

**चित्रमीमांसा-**

**तस्माज्जाति द्रव्योत्प्रेक्षे परिहृत्यैव गम्योत्प्रेक्षावर्गः परिगणनीयः।**

तत्त्वालोकः-

**गन्थकृतोऽपि-** अत्र रूपकमित्यत्रैव तात्पर्यमिति जानीमः। यत उत्तरत्र गम्योत्प्रेक्षाया उत्प्रेक्षाध्वनेश्च वैलक्षण्यं प्रदर्शयता विषयविषयिनिमित्तेषूपात्तेषु केवलमिवादिवाचकाप्रयोगमात्रेण यत्रोत्प्रेक्षावगम्यते इति वक्ष्यमाणत्वात् निमित्तस्याप्रयोगे इवशब्दानुपादाने उत्प्रेक्षात्वं न सम्मतमिति। अत एव गम्योत्प्रेक्षासु जातिद्रव्यस्वरूपोत्प्रेक्षे परिहरणीये इत्यनुपदमेव आविष्कृतोऽभिप्रायः॥

एतेन

मलअसमीरसमागम सन्तोसपणिच्चराभिसव्वत्तो।
विव्याह इचलकिसलअ कराहि सादाहि महुलच्छी॥

इत्यत्र मधुलक्ष्म्यां व्याहरणाक्रियास्वरूपोत्प्रेक्षणं क्रियते तदौन्मुख्योत्पादकत्वं निमित्तमनुपात्तं इवादिरपि नोपात्त इति अन्यैः प्रतिपादितं नातीव रमणीयमिति व्यञ्जितं भवति॥

निगमयति -**तस्मादिति** ,तस्मात् उत्प्रेक्षाव्यञ्जकनिमित्तयोरनुपादाने उत्प्रेक्षाप्रयोजकविषयि विशेषणोपादानेऽपि तस्याः अप्रामाणिकतया तादृशोदाहरणेषु रूपकालंकारस्यैव वक्तुं युक्तत्वात् जातिद्रव्योत्प्रेक्षे परित्यज्य गम्योत्प्रेक्षावर्गः प्रतीयमानोत्प्रेक्षावर्गः परिगणनीयः परिसंख्यातुमर्हः, **तथाचेदमुक्तं भवति-** गम्योत्प्रेक्षासु अनुपात्तनिमित्ते जातिद्रव्योत्प्रेक्षे परिहृत्य चत्वारिंशद्भेदाः परिगणयितव्या इति। नपुनः उपात्तनिमित्तास्वपि जातिद्रव्योत्प्रेक्षे परिहर्तव्ये इति तथा सति चत्वारिंशद्भेदा गम्योत्प्रेक्षा इति प्राक् कृतं परिगणनं अयुक्तं स्यात्। अत एव **विमर्शिनीकारेण** -उपात्तनिमित्तागम्योत्प्रेक्षोदाहृता-

प्रसारि सर्वतो विश्वं तिरोदधदिदं तमः।
सर्वाङ्गं लिम्पति जनं सान्द्रैरमृतकूर्चकैः॥

इति। अत्र च तमसि वस्तुतिरोधायकत्वमुपात्तं धर्मं निमित्तीकृत्य लेपनक्रियास्वरूपेणोत्प्रेक्षितेति प्रयीयमाना धर्मिणि धर्मस्वरूपोत्प्रेक्षेति, उपपदितं च उक्तरीत्याश्रयण एव संगच्छते॥

**चित्रमीमांसा-**

**इदं चान्यद्बोद्धव्यम्। धर्म्युत्प्रेक्षासु विषयि विषयानुगतोधर्मो, धर्मोत्प्रेक्षासु विषय्याश्रयविषयानुगतो धर्मश्च निमित्तम्।।**

**तेन "उवाह या तनुलता" इत्यादौ वैमल्यं निमित्तमित्यादिपक्षो न युक्तः। तस्य तादात्म्यसंभावनोपयुक्त प्रतिबिम्बघटकस्य तनुधर्मस्य विषयिधर्मत्वाभावात्।।**

तत्त्वालोकः-

ननु- स्वरूपोत्प्रेक्षायां धर्म्युत्प्रेक्षा-धर्मोत्प्रेक्षेति विभज्य **सर्वस्वकृता-** अप्रकृतगतगुणाक्रियाभिसम्बन्धादप्रकृतत्वेनप्रकृतस्य संभावनमुत्प्रेक्षेति अभिहितम्। तस्य लक्षणस्य धर्मोत्प्रेक्षोदाहृतिषु- उत्प्रेक्षानिमित्तभूतधर्मस्य विषयिगतत्वं न संभवति अपि तु विषय्याश्रयगतत्वमेव यथावा- "वर्षतीवाञ्जनं नभः" इत्यादौ वर्षणक्रिया विषयी तदाश्रयः धात्वर्थतावच्छेदकफलशालित्वं अञ्जने, तत्र च भूपर्यन्तगाढनीलिमव्याप्तत्वमस्तीति विषय्याश्रयगतत्वमेव न विषयिगतत्वमिति अव्याप्तिस्स्यादतो निमित्तस्य विषयिविषयानुगतत्वं धर्म्युत्प्रेक्षासु, धर्मोत्प्रेक्षासुतु विषय्याश्रय विषयानुगतत्वमिति भेदोऽवश्याश्रयणीय इत्यभिप्रायविशेषंप्रदर्शयति- **इदंचेति**।

धर्म्युत्प्रेक्षासु धर्मिणि धर्म्यन्तरतादात्म्योत्प्रेक्षा "सुबालेन्दुवद्राणि" इत्यादौ विषयि-विषयानुगतः नखक्षतपलाशकुसुमोभयानुवृत्तः धर्मः वक्रत्वलौहित्यादिरूपः निमित्तं प्रयोजकम्, धर्मोत्प्रेक्षासु "पिनष्टीव तरङ्गाग्रैः" इत्यादिषु धर्मिणि धर्मोत्प्रेक्षासु विषयाश्रयविषयानुगतः पेषणाधिकरणशिलाप्रान्त-समुद्रप्रान्तरूपपदार्थानुवृत्तो धर्मः फेनचन्दनपुञ्जीभवनस्पश्च निमित्तं उत्प्रेक्षाप्रयोजकमित्यर्थः।

उक्तरीत्याश्रयणेन अव्याप्तिनिरासः अयुक्तपक्षनिरासश्च भवतीत्याह - **तेनेति**।

तेन धर्म्युत्प्रेक्षासु विषयिविषयोभयानुगतधर्मस्य उत्प्रेक्षानिमित्तत्वस्वीकारेण- **उवाहेति**।

उवाह या तनुलता भृङ्गालीरोमवल्लरीम्।
पश्चाद्विमुक्तां वैमल्याद्विम्बितामिव वेणिकाम्।।

**चित्रमीमांसा-**

**''यत्रान्यधर्मसम्बन्धादित्यादि''लक्षणं वदद्भिः सर्वैरपि विषयिधर्मस्यैव निमित्तत्वस्य व्यवहृत्वादलमतिविस्तरेण।।**

**अत्र ब्रूमः-**

**विषयिण उत्प्रेक्षायां जातिगुणाद्यात्मना विभागविधा।**
**याऽदर्शि नैव शोभा तयोपमायामिवोपमेयस्य।।**

तत्त्वालोकः-

इत्यादिधर्मस्वरूपोत्प्रेक्षोदाहरणे रोमवल्लर्यां वेणिकातादा-त्म्यसंभावनायां वैमल्यं निमित्तमिति पक्षः कैंचिदुक्तः स न युक्तः प्रकृताननुगुणः इत्यर्थः अयुक्तत्वे हेतुमाह - **तस्येति।**

''उवाहेति'' पद्ये पार्वत्याः लावण्यसम्पदुत्कर्षः तदनुगुणा नाभेरूर्ध्वं-प्रदृश्यमाना नवरोमराजिश्च वर्ण्यते। तत्र लतात्वेनाध्यवसितायाः पार्वत्याः नाभेरूर्ध्वं प्रवृत्ता रोमराजिः नैल्यादिना निमित्तेनानुपात्तेन वैमल्याद्धेतोः पश्चात् स्रस्तायाः प्रतिबिम्बताया वेणिकायाः तादात्म्यं संभाव्यते नपुनःवैमल्यं निमित्तीकृत्य तस्य उपमेयभूतरोमवल्लरीवृत्तित्वाभावात् । नापि विषयिभूतवेणिकावृत्तित्वं वेणिकायां रोमवल्लर्यां च मालिन्यस्यैव विद्यमानत्वात्।

**नच-** यत्र क्वचित् स्थितयापि वेणिकया उपमाया वक्तुं शक्यत्वे सति वैमल्यात्पुरोभागप्रतिबिम्बत्वरूपविशेषणकल्पना विषयिणि कृतेति तादृशवेणिका प्रतिबिम्बनाधारतनोरपि विषयि विशेषणत्वमस्तीति तस्यां वैमल्यमस्त्येवेति विषयि गतत्वमिति वाच्यम् विषयि धर्मस्यैव उत्प्रेक्षाप्रयोजकत्वात् वैमल्स्य न विषयिधर्मत्वं न वा विषयधर्मत्वमिति तस्य निमित्तत्वेन परिग्रहो न युक्तः अन्येषामिति भावः।

किंच - निमित्तभूतधर्मस्य विषयिधर्मत्वं सर्वसम्मतं ये 'अन्यधर्मेत्यादे-रुत्प्रेक्षालक्षणतामुपयन्तीत्याह- **यत्रान्येति।** एतावता प्रबन्धेन **मङ्खुकविद्यानाथ**कृतोत्प्रेक्षाविभागप्रकारं सोदाहरणं प्रदर्श्य तत्कृतविभागे न्यूनतां प्रदर्शयितुमुप्रक्रमते **अत्र ब्रूम इत्यादिना।**

## तत्त्वालोकः-

**अत्रायमभिसन्धिः सर्वस्वकृता** तावत् उत्प्रेक्षास्वरूपं लक्षयित्वा "साच जाति गुण-क्रिया द्रव्याणामप्रकृतानामध्यवसेयत्वेन चतुर्धात्र इति संभाव्यमानो विभक्तः। नपुनस्सम्भावनाधिकरणम् ,यदितु विषयिणो जात्यादिप्रविभागश्चमत्कारमूलक इति विभाव्यते तदा तादृशाप्रविभागमूलस्य चमत्कारस्य प्रकृतेऽपि (विषयेऽपि) तुल्यतेति विषयाणां जात्याद्यात्मना विभागाकरणात् न्यूनतयैव। एवमर्थपरिकल्पने एवं योजना कार्या-उत्प्रेक्षायां विषयिणो या जातिगुणाद्यात्मना विभागविधा अदर्शि सा उपमेयस्य नादर्शीति तया नैव शोभा इति।

तथास्यां यथा विषयिणो जात्यादिविभागविधा अदर्शि तथा उपमायामपि विषयिणो विषयस्य च जात्यादि विभागविधा दर्शिता भवेत्। नच तस्यां अदर्शि अतश्च तया नैवशोभेति न्यूनो विभाग इत्यर्थविवक्षायां -उत्प्रेक्षायामिव उपमायां विषयिणः उपमेयस्य जातिगुणाद्यात्मना विभागविधा या नैवादर्शि तया नैवशोभेति इव नैव शब्दयोः द्विवारमन्वयः कार्यः। एवं चोत्प्रेक्षायामेतादृशविभागस्य चमत्कारित्वे उपमेयस्यापि विभागःउपमायां उभयोरपि विभागः कृतो भवेत्सच नकृतः इत्यस्यामेकविधा न्यूनता. उपमायांतुद्विविधा न्यूनता आपततीति भावः॥

**यदितु-प्रकृतस्यैतद्भेदयोगेऽपि न वैचित्र्यमिति न तेगणिताः इत्युक्तसर्वस्वरीत्या** सर्वत्र प्रकृते उत्कर्षप्रतिपादनायैवाप्रकृतसाम्यं तत्सम्भावनं वा क्रियत इत्युपमेये तद्विभागस्य उत्कर्षानाधायकत्वात् तद्विभागो न कृतः तदा उपमायामप्येवं विभागः कार्यः सच त्वया नकृत इति न्यूनता अपरिहार्या। उदाहृतं चान्यैरुपमायामपि जातिगुणक्रिया-द्रव्याणामुपमानत्वपरिग्रहे वा-

घनोद्यानच्छायामिव मरुपथाद्दावदहनात्
तुषाराम्भोवापीमिव विषविपाकादिव सुधाम्॥
प्रवृद्धादुन्मादात्प्रकृतिमिव निस्तीर्य विरहात्
लभेय त्वद्भक्तिं निरुपमरसां शंकर कदा॥

इत्यत्र छाया-वापी-सुधा-प्रकृतीनां जात्यादिरूपाणामुपमानत्वमित्युपपादितं च॥

**चित्रमीमांसा-**

**तदभावेऽलंकाराः संभवमात्रेण न विभागम्।**
**अर्हन्तीतरथाऽस्याः विषयोऽप्येवं विभक्तव्यः॥**
**धर्मस्यापि विभागो गुणक्रियात्मा न चारुताहेतुः।**
**उपमायामिव सोऽपि न्यूनस्तदभावयोरसंकलनात्॥**

तत्त्वालोकः-

वस्तुतः-जात्यादिकृतविभागस्य न चमत्कारप्रयोजकत्वम् अथापि जात्याद्यात्मना विभागस्सम्भवतीत्यभिप्रायेणैवं विभक्तः न पुनरन्यथेत्युच्यते तदा विषयस्याप्येवंविधो विभागः कार्यः सम्भवात्- इत्याह- **तदभावेति।**

जात्यादिविभागस्य विषयिण इव विषयस्याणि संभवे तत्परित्यागोऽनुचित इति न्यून एव विभाग इति भावः ॥ एवं च प्राचीनोक्तविभागस्य सम्भवाभिप्राय-त्वमित्यपि न वक्तुं शक्यम्।

एवं विषय्यंशे कृतं जात्यादिविभागं न्यूनमिति प्रदर्श्य निमित्तांशे प्रत्येकं निमित्तस्य गुणक्रियारूपत्वे षोडश भेदा इति यत् सर्वस्वकारादिभिः दर्शितं तदपि उपमायामिव न्यूनं गुणक्रियाभावयोरपि तन्निमित्तत्वेन महाकविभिराश्रयणात्। तथा च तेषामप्रसंगः इत्याह -**धर्मस्यापीति।**

उपमायां यथा साधारणधर्मे गुणक्रियादिविभागश्चारुताहेतुर्नभवति तथात्र उत्प्रेक्षानिमित्तभूतधर्मस्यापि गुणक्रियात्मा न चारुताहेतुः न सहृदयहृदयाह्लादहेतुः यदितुसंभवाभिप्रायेण तथाविभाग इत्युच्यते, तदा उपमायां साधारणधर्मस्य गुणक्रियादेः यथा निमित्तत्वं तथा गुणक्रियाद्यभावस्यापि तन्निमित्तत्वमिति तस्यां यथा न्यूनता तथास्यामपि गुणक्रियाभावयोः निमित्तत्वसम्भवेऽपि तदपरिगणनं न्यूनमिति भावः। उपमायां जाति-गुण-क्रिया द्रव्याणां साधारणधर्मतायामुदाहरणं यथा-

वैदेहि पश्यामलयाद्विभक्तं
मत्सेतुना फेनिलमम्बुराशिम्।

**चित्रमीमांसा-**

**मनसि सन्तमिव प्रियमीक्षितुं**
**नयनयोः स्पृहयान्तरुपेतयोः।**
**ग्रहणशक्तिरभूदिदमीययोः**
**अपि न संमुखवास्तुनि वस्तुनि।।**

तत्त्वालोकः-

छायापथेनेव शरत्प्रसन्नम्
आकाशमाविष्कृतचारुतारम्।।

इत्यत्र आकाशाम्बुराश्योरुपमानोपमेयभाव उपनिबध्यते तत्र विभक्तत्वरूप क्रियायाः, रामसेतुच्छायापथयोर्द्रव्ययोः, फेनताकराणां जातीनां, प्रसन्नतारूप गुणस्य आकाशाम्बुराशिरूपोपमानोपमेयगतत्वेनोपनिबद्धत्वेन उपमायामपि जाति-गुणक्रियाद्यात्मना धर्मविभागः कर्तुं शक्यः अथापि अचमत्कारित्वेन सः परित्यक्तः संभवाभिप्रायेतु उपमायामपि कार्य एव, तथा न कृत एव प्राचीनैः। एवं गुणक्रियादीनाम् अभावस्यापि अप्रदर्शनं न्यूनतायैव भवति। उक्तदिशा अभावरूपाःसाधारणधर्माः ऊह्या उपमायामपीति मनसिनिधाय प्रकृतानुगुणतया गुणक्रियाभावयोः निमित्तत्वम् उदाहरणे प्रदर्शयितुं गुणाभावनिमित्तक्रियास्वरूपोत्प्रेक्षां उदाहरति -**मनसीति।**

अत्र इवार्थस्य भिन्नक्रमताश्रयणेन उत्प्रेक्षाभेदः उन्नेतुंशक्य इति प्रथममन्वय परिकल्पनायां विप्रतिपत्तीः प्रदर्श्यते तत्र मनसि सन्तं प्रियं ईक्षितुं स्पृहयेव अन्तः उपेतयोः इदमीययोः नयनयोः संमुखवास्तुनि अपि वस्तुनि ग्रहणशक्तिः नाभूत् इति।

मनसि सन्तं प्रियं स्पृहया ईक्षितुमिव अन्तरुपेतयोः इदमीययोः नयनयोरपि संमुखवास्तुनि वस्तुनि ग्रहणशक्तिः नाभूत् इतिवा मनसि सन्तं प्रियमीक्षितुं स्पृहया अन्तरुपेतयोरिव इदमीययोः नयनयोः सम्मुखवास्तुनि वस्तुनि ग्रहणशक्तिरपि नाभूत् इतिवा, तत्र प्रथमरीत्या अन्वये हृदयस्थितवल्लभावलोकनस्पृहयेवान्तर्गतयोः दमयन्तीनयनयोः अभिमुखावस्थितवस्तु ग्रहणशक्तिरपि नाभूत् इत्यर्थो लभ्यते।

तथा च विरहवेदनया नेत्रयोरधः प्रवृत्तत्वेन पुरःस्थितमपि वस्तु ताभ्यां ग्रहीतुं

## तत्त्वालोकः-

न शक्यत इति नयनयोरन्तर्गमनं प्रति प्रियावलोकनाभिलाषस्य कारणत्वमुत्प्रेक्षितं भवतीति क्रियानिमित्ता गुणहेतूत्प्रेक्षा। प्रयोज्यत्वं तृतीयार्थः। प्रयोज्यतासम्बन्धेन प्रियावलोकनस्पृहाभिन्नहेतुत्वप्रकारकसंभावना विषये नयने इति बोधः अयं च पक्षः व्याख्यातृसम्मतः अस्यामुत्प्रेक्षायां न ग्रन्थकृतो नैर्भर्यम्।

यतश्च वल्लभावलोकनस्पृहाया विषयिणोर्नयनयोश्च लोकसिद्धत्वेन तत्र हेतुत्वोत्प्रेक्षापेक्षया चमत्काराभावात् या लोकासिद्धस्य अन्तः प्रवेशरूपक्रिया-स्वरूपस्य नयनयोरुत्प्रेक्षणीयतोचिता- "यदा पुनरयं लोकादसिद्धः" इत्याद्युक्त्यनुसारादिति, अतएवानुपदमुपपाद्यते -नयनयोः हृदयगतप्रियवीक्षणाय अन्तः प्रविष्टत्वोत्पेक्षायामिति। एतदनुरोधेन तृतीयोऽन्वयप्रकारः प्रदर्शितः ग्रन्थकाराभिमतोत्प्रेक्षानुरोधेन व्याख्यायते-मनसि चित्ते सन्तं स्थितम् प्रियं वल्लभम् ईक्षितुं द्रष्टुं स्पृहया वाञ्छया अन्तरुपेतयोरिव अन्तप्रविष्टयोरिव स्थितयोः इदमीययोः दमयन्तीसम्बद्धयोः नयनयोः सम्मुखवास्तुनि सम्मुखे वास्तु स्थानं यस्य तस्मिन् वस्तुनि पदार्थेऽपि ग्रहणशक्तिः ज्ञानोत्पादन सामर्थ्य नाभूत् इत्यर्थः।

अत्र नयनयोरिष्टवस्तुदर्शनाभिलाषस्य स्वाभाविकत्वेन तादृशवस्तुनोऽदर्शने सत्युत्कण्ठापारवश्यात्प्रियमनुचिन्तयितुमुपक्रान्तेमनसितस्यैव साहायक-माचरतोर्नयनयोः बाह्यवस्तुग्रहणानौन्मुख्यं जातमिति वस्तुस्थितावपि कविः हृदयगतप्रियवीक्षणफलकमन्तः प्रवेशमुत्प्रेक्षते तत्र च निमित्तं बाह्यवस्तु ग्रहणशक्त्यभाव इति तादृशवीक्षणफलकान्तः प्रवेशएव उत्प्रेक्षिते निमित्तस्य चमत्कारितेति भावः।

एतेन ईक्षणफलोत्प्रेक्षापक्षः अस्वरसग्रस्त इति भाति यतश्चात्र अन्तरुपेतत्वं बहिस्स्थितयोः नयनयोर्नसंभवत्येव अथापि बाह्यवस्तुग्रहणाशक्तिमवलोक्य एवमुत्प्रेक्ष्यत इति गुणाभावनिमित्तायाः अन्तःप्रवेशरूपक्रियास्वरूपोत्प्रेक्षाया एवोचितत्वात्, तदेतदनुपदमेवोपपाद्यते॥

**चित्रमीमांसा-**

**वतंसनीलाम्बुरुहेण किंदृशा**
**विलोकमाने विमनीबभूवतुः।**
**अपि श्रुती दर्शनसक्तचेतसां**
**नते नते शुश्रुवुतुर्मृगीदृशाम् ।।**

तत्त्वालोकः-

गुणाभावनिमित्तक्रियास्वरूपोत्प्रेक्षामुदाहृत्य क्रियाऽभावनिमित्तां गुणोत्प्रेक्षामुदाहरति- **वतंसेति।**

दर्शनसक्तचेतसां मृगीदृशां श्रुती अपि वतंसनीलाम्बुरुहेण दृशा विलोकमाने सत्यौ यत् विमनीबभूवतुःतेन श्रुती किम् न शुश्रुवुतुः ? इत्यन्वयः।।

दर्शनसक्तचेतसां दर्शने नलावलोकने सक्तम् आसक्तं चेतः यासांतासां मृगीदृशां मृगाक्षीणाम्, श्रुती अपि कर्णावपि "श्रुतिर्वेदे श्रवस्यपि" इति **वैजयन्ती** वतंसनीलाम्बुरुहेण वतंसः अवतंसः कर्णालंकारो यो नीलाम्बुरुहः नीलकमलं तेन तद्रूपयैवेत्यर्थः"वतंसोत्तंसावतंसाः कर्णपूरेऽपि शेखरे "इति **यादवप्रकाशः।** **भागुरिमतानुसारेण** अवेत्युपसर्गस्यादेरकारस्य लोपे वतंस इति रूपम्। दृशा लोचनेन विलोकमाने एकाग्रतया पश्यन्त्यौ सत्यौ यत् विमनीवभूवतुः व्याकुले जाते अत्र अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च (पा.सू.५-४-५१) इत्यभूततद्भावे च्विः सलोपश्च। तेन हेतुना ते कर्णौ किम् भूषणस्रंसनं न शुश्रुवुतुः न? नाश्रुणुतामित्यर्थः।।

अत्र रमण्यो यथा नलमवलोकयन्त्य एव विमनस्का जाताः तथा कर्णावपि भूषणस्रंसन न श्रुश्रुवुतुः यतः कर्णावपिस्वावतंसभूतनीलोत्पलरूपया दृशा अवलोक्य विमनस्केभवेतामन्यथा भूषणस्रंसनं श्रुणुयातामेव ,एवंच चक्षुषी श्रवणायोग्यतया माश्रुणुतां, श्रवणयोग्ये अपिश्रुती नाश्रुणुतामितिचेत्तदा नलावलोकने श्रवणयोरपि कियदैकाग्र्यमिति प्रतीयते, अत एव श्रोत्रयोः भूषणस्रंसनश्रवणक्रियाभावं निमित्तीकृत्य विलोकनैकाग्रत्व - मुत्प्रेक्ष्यते उक्तोदाहरणयोः गुणक्रियाभावयोरुत्प्रेक्षानिमित्तत्वं

**चित्रमीमांसा-**

**इत्यादिषु पश्यामो गुणक्रियाऽभावयोरपि व्यक्तम् ।**
**उज्जवलभावनिबन्धनमुत्प्रेक्षायां निमित्तत्वम्।**

**अत्र ह्याद्ये उदाहरणे नयनयोः हृदयगतप्रियावीक्षणाय अन्तः प्रविष्टत्वोत्प्रेक्षायां बाह्यवस्तुग्रहणशक्त्यभावो निमित्तम्। द्वितीये श्रोत्रेन्द्रियगतविलोकनैकाग्रत्वोत्प्रेक्षायां श्रवणक्रियाऽभावो निमित्तम्।।**

तत्त्वालोकः-

दृष्टमिति कारिकारूपेण संगृह्णाति-इत्यादिष्विति।

इत्यादिषु "मनसि सन्तम्," "वतंसनीलाम्बुरुहेण" इत्याद्युदाहरणेषु उत्प्रेक्षायां, क्रियागुणयोस्स्वरूपोत्प्रेक्षायां, गुणक्रियाऽभावयोरपि बाह्यवस्तु ग्रहणशक्त्यभाव-श्रवणक्रियाभावयोरपि, उज्जलभावनिबन्धनं सहृदयहृदायाह्लादनिबन्धनं, निमित्तत्वम् कारणत्वं, व्यक्तं स्फुटमित्यर्थः। अत्र निमित्तांशे उज्जवलभावनिबन्धनमिति विशेषणोपादानादचमत्कारिणो निमित्तस्य उपादानेऽप्यनुत्प्रेक्षात्वम् "इन्दुर्लिप्त इवे"त्यत्र यदुक्तं तत्स्फोरितमिति विभावनीयम्। एवं च गुण-क्रियाभावयोःनिमित्तकोटौ अपरिगणनात् न्यूनतैवेति भावः। उदाहृतपद्ययोः गुणक्रियाऽभावयो र्निमित्तत्वमुपपादयति -**अत्रहीति**। आद्य इति। 'मनसि सन्तम्' इत्युदाहृतपद्ये इत्यर्थः। शिष्टं व्यारव्यातप्रायम्। द्वितीय इति। वतंसेति पद्ये इत्यर्थः।।

इत्थं गुणक्रियाभावनिमित्तां धर्मिणि धर्मोत्प्रेक्षामुदाहृत्य क्रिया-भावनिमित्तां धर्मिणि-धर्म्यन्तर स्वरूपोत्प्रेक्षादिग्दर्शनतयोदाहरति- **एवमित्यादिना।**

वीरासनैः ध्यानजुषां ऋषीणां समध्यासितवेदिमध्याः अमी शाखिनोऽपि निवातनिष्कम्पतया योगाधिरूढा इव विभान्ति इत्यन्वयः।

वीरासनैः मनोजयसाधनैः तदुक्तम्-**वसिष्ठेन-**

एकंपादमथैकस्मिन् विन्यस्योरुणि संस्थितम्।
इतरस्मिंस्तथाचान्यं वीरासनमुदाहृतम्।।

**चित्रमीमांसा-**

**एवम्-**

**वीरसनैध्यानजुषामृषीणां**
**अमी समध्यासितवेदिमध्याः।**
**निवातनिष्कम्पतया विभान्ति**
**योऽगाधिरूढा इव शाखिनोऽपि।।**

**इत्यादीनि अभावनिमित्तत्वे भूयांस्युदाहरणानि।**

**अपिच समुच्चयभेदः परिगणनीयो निमित्तेषु।**
**भावौ भावा भावौ समुच्चितावपि निमित्ततां भजतः।।**

तत्त्वालोकः-

इति ध्यानजुषां ध्यानं नाम प्रत्ययैकतानता ध्येयं वस्तु विनाऽन्यत्र चित्तवृत्त्यप्रसरः तत् जुषन्ते सेवन्त इति ध्यानजुषः तेषां, वीरासने उपविश्य ध्यायतामृषीणां, सम्बन्धिनः अमी परिदृश्यमानाः समध्यासितवेदिमध्याः परिष्कृतभूमध्यस्थिताः। इदं वीरासनस्थानीयम् अमी शाखिनोऽपि निवातनिष्कम्पतया वातस्याभावो निवातम् अर्थाभावेऽव्ययीभावः, कम्पस्याभावो निष्कम्पं निवातविष्कम्पयोर्भावः निवातनिष्कम्पता तया, यद्वा निवातेनवाताभावेन हेतुना कम्पराहित्यं तत्तया योगाधिरूढा इव ध्यानजुष इव विभान्ति प्रकाशन्ते इत्यर्थः,अत्र शाखिषु विषयेषु वातरहिततया कम्पाभावरूपेण हेतुना योगाधिरूढत्वजातिस्वरूपोत्प्रेक्षा साच निवातकम्परूपक्रियाभावनिमित्ता।

एवं गुणक्रियान्यतराभावमात्रनिमित्तकोत्प्रेक्षादिशं प्रदर्श्य गुणक्रिययोर्भावयोः गुणभाव-गुणाभावयोः समुच्चित्यनिमित्तत्वं दृश्यते तत्समुच्चितयोश्च निमित्तकोटौ परिगणनं कार्यं भवेत् न च परिगणितस्तयोर्भेद इति कारिकारूपेण संगृह्णाति-**अपि चेति।**

अपिच गुणक्रियाभावयोः निमित्तत्वेनापरिग्रहादेवन्यूनतेति न, प्रत्युत भावयोः

**चित्रमीमांसा-**

**अवैमि हंसावलयो वलक्षाः**
**त्वत्कीर्तिमूर्तेश्चपलाःपुलाकाः।**
**उड्डीय युक्तं पतिताः स्रवन्ती-**
**-वेशन्तपूरं परितः प्लवन्ते॥**

तत्त्वालोकः-

भावाभावयोश्च यः परस्परनिरपेक्षयोः एकस्मिन् निमित्तभावेन अन्वयः परिदृश्यते सोऽपि समुच्चयभेदः, निमित्तेषु उत्प्रेक्षानिमित्तेषु परिगणनीयः अर्हार्थे अनीयर् प्रत्ययः। यतश्च भावौ क्रियागुणौ भावाभावौ गुणादिभावाभावौ समुच्चितावपि सन्तौ निमित्ततां भजतः इति कारिकार्थः॥

तत्र गुणक्रिययोस्समुच्चितयोर्भावयोः निमित्ततायामुदाहरति **अवैमि इति।**

अहं अत्र स्रवन्ती वेशन्तपूरं परितः उड्डीय पतिताः चपलाः वलक्षाः हंसावलयः यत् प्लवन्ते तत् ताः त्वत्कीर्तिमूर्तेः पुलाकाः इत्यवैमि इति युक्तम् इत्यन्वयः।

अहम्-भैमी, अत्र स्रवन्ती-वेशन्तपूरं परितः-स्रवन्ती नदी, वेशान्तः अल्पसरः, तेषां पूरं परितः प्रवाहस्य इतस्ततः, उड्डीय गगनादुत्पत्य, पतिताः, चपलाः चञ्चलाः, अथच वलक्षाः धवलाः शुभ्राः, हंसावलयः हंसश्रेणयः, यत् यस्मात्, प्लवन्ते तत् तस्मात्, ताः हंसावलीः, त्वत्कीर्तिमूर्तेः भवत्कीर्तिस्वरूपस्य ये पुलाकाः तुच्छधान्यांशाः तान् अवैमि जाने इति युक्तम् स्थाने इत्यर्थः॥

**यद्वा**-स्रवन्ती वेशन्तपूरं परितः वलक्षाः हंसावलयः प्लवन्ते इति युक्तम् यतस्ताः अहंत्वत्कीर्तिमूर्तेश्चपलाः पुलाकाः उड्डीय पतिता इत्यवैमि। इत्यप्यन्वयः कर्तुं शक्यः॥

अत्र भैमी नलस्यानुपमं सौन्दर्य आविष्कर्तुं प्रवृत्ता स्रवन्ती वेशन्तेषु पतित्वा प्लवमानाः हंसावलीः वीक्ष्य नैता हंसावलयः अपि तु नलयशोरूपधान्यांशाः अतिलघुत्वात् गगने उत्पत्य पतिताः महानद्यः अल्पनद्यश्च पूरयित्वा प्लवन्ते इत्युत्प्रेक्षते ईदृशस्सुन्दरः न मया कोऽपि दृष्ट इति भैमीमनसि स्थितोऽर्थः।

**चित्रमीमांसा-**

**उडुपरिषदः किं नार्हन्ती निशः किमनौचिती**
**पतिरिह न यद्दृष्टस्ताभ्यां गणेयरुचीगणः।**
**स्फुटमुडुपतेराश्मं वक्षः स्फुरन्मलिनाश्मनः(न)**
**च्छविमदनयोः विच्छेदेऽपि द्रुतं बत न द्रुतम्।।**

तत्त्वालोकः-

एवं चात्र हंसावलीनां कीर्तिपुलाकत्वोत्प्रेक्षायां धावल्यंगुणः जलोपरि प्लवन क्रिया चेति गुणक्रिये निमित्ततां भजत इति भावयोः निमित्तमिदमित्युक्तं भवति। अयमंशोऽनुपदमुपपादयिष्यते ग्रन्थकृतैव।

समुच्चितयोः गुणक्रिययोः निमित्ततायामुदाहरणं प्रदर्श्यगुणभावा भावयोः समुच्चितयोः एकत्रोत्प्रेक्षायां निमित्तत्वसम्भवंप्रदर्शयितुमुदाहरति। **उडुपरिषद इति।** सूर्योदयसमय : एवमुत्प्रेक्ष्यते कविना।

हेराजन् उडुपरिषदः आर्हन्ती किं न? निशः किं औचिती न? यत् ताभ्यां गणेयरुचां गणः पतिः इह न दृष्टः एवं सत्यपि स्फुरन्मलिनाश्मनः छविः उडुपतेर्वक्षः स्फुटं आश्मम् यत् अनयोः विच्छेदेऽपि द्रुतं न द्रुतम्। इत्यन्वयः।

हेराजन् उडुपरिषदः तारावल्याः आर्हन्ती योग्यता, "अर्हतो नुम्च "इति भावे ष्यञ् नुम् च। षित्वान्ङीषि "हलस्तद्धितस्येति" यलोपे च रूपम् ,सा योग्यता किंन? अपि तु योग्यतास्त्येव, तद्वत् निशः निशायाः अनौचिती उचितस्य भावः औचिती, यद्वा- "वर्णदृढादिभ्यः ष्यञ् च" इत्यत्र दृढादिषु उचितशब्दः केषचित्पुस्तेकेषु पठ्यते। तदानीं उक्तसूत्रेण ष्यञ्। अथवा गुणवचनब्राह्मणादिभ्यः कर्मणिच (पा.सू. ५-१-१२४) इत्यत्र ब्राह्मणादेराकृतिगणत्वात् ष्यञ्। हलस्तद्धितस्य (पा. सू. ) इति यलोपो नञ्समासश्चेति बोध्यम्। अनौचित्यं कि न? अपि तु औचित्यमेवेत्यर्थःयत् यस्मात् कारणात्, ताभ्याम्- तारावलीनिशाभ्यं कर्तृभ्यां, गणेयरुचीगणः सर्वधातुभ्य"उ.५६७. इति इन् कृदिकारादक्तिनः (गण. इति ङी.पू.अत्यल्पतेजाः क्षीणतेजाः पतिः चन्द्रः यतश्चन्द्र एव उडुपतिः निशापतिरित्याभ्यां प्रसिद्धिं गतः, अतस्तारानिशयोः प्राणनाथः, इह क्षयसमये, न दृष्टः न व्यलोकि,।

**चित्रमीमांसा-**

**एवमादिषु बह्वीषु निह्नोतुं केन शक्यते।**
**समुच्चितनिमित्तत्वमुत्प्रेक्षासु निरीक्षितम्।।**

तत्त्वालोकः-

"धन्यास्तात न पश्यन्ति पतिंभङ्गं कुलक्षयम्"।

इतिन्यायेन पत्युर्विपदमदृष्ट्वा पतिव्रतानां नाशः उचित एवजातः। इत्थं सति स्वविलये सन्निहिते सत्यपि स्फुरन्मलिनाश्मनः छविमतपूर्वं स्फुरत् प्रकाशमानं पश्चान्मलिनं अप्रकाशं कलंकव्याजेन कृष्णवर्णं यदश्म पाषाणं तस्यच्छविरिवछविर्यस्य एवं भूतं उडुपतेः चन्द्रस्य वक्षः उरः आश्मम् अश्मविकारस्वरूपम् अश्मनो विकार इत्यर्थे विवक्षिते मनिन्प्रत्ययान्तादश्मन्शब्दादणि "अश्मनो विकारे टिलोपोवक्तव्यः" इति **वार्तिकात्** टिलोपः। आश्मनच्छवीति पाठे-अश्मनो विकार आश्मनः अश्मनो विकार इति टिलोपः पाक्षिकः इति **काशिकावृत्तिकारः** अथाप्येवंपाठश्चिन्त्यः ,यत् यतः अनयोः आत्मनः पत्नीत्वेन प्रसिद्धयोः तारानिकरनिशयोः विच्छेदेऽपि वियोगेऽपि द्रुतं शीघ्रम् नद्रुतं न विलीनम्। अतश्च तारा-निशापतेः वक्षःपाषाणनिर्मितमेव अन्यथा सद्यो द्रुतं स्फुटितं वा भवेत्। कियती कठिनहृदयता चन्द्रस्येति स्वप्रेयसीभ्यां स्वप्रेमानुरूपमाचरितमपि स्वप्रेयस्योः विषयेतेननप्रेमानुरूपमाचरितमिति अनुचितमेवेति भावः।

किंच तारापरंपरा -अदर्शनंगता रात्रिश्च व्यतीता। चन्द्रश्चः क्षीणतेजाः आसन्ननाशो जात इत्यत्र तात्पर्यम्। अत्र चन्द्रस्य स्वप्रियानाशेऽपि अद्रुते वक्षसि अश्मसारत्वोत्प्रेक्षायां अश्मच्छविरूपो भावः द्रव्याभावश्चेति गुण-भावाभावौ समुच्चितौ प्रकृतजातिभावस्वरूपोत्प्रेक्षायां निमित्ततां भजत इति चमत्कारिणोरनयोरपलापः न्यूनतां गमयति एवंच भावाभावयोः समुच्चितयोः निमित्तत्वमपरिहार्यमिति प्रतिपादयति-**एवमादिष्विति।**

प्रागुक्तयोः "अवैमि, " "उडुपरिषदः" इत्यादिषु पद्येषु याः उत्प्रेक्षाः तासु अनेकासु निरीक्षितं अवगतं समुच्चितयोर्भावयोः भावाभावयोश्च निमित्तत्वम्, तत्

**चित्रमीमांसा-**

**आद्ये उदाहरणे हंसावलीनां कीर्तिपुलाकत्वेत्प्रेक्षायां धावल्यंगुणः जलोपरि प्लवनक्रिया चेत्युभयं निमित्तम्। द्वितीये उडुपतिवक्षसोऽश्मविकारत्वोत्प्रेक्षायां अश्मच्छविरूपो भावः द्रुतत्वाभावश्चेत्युभयं निमित्तम्।।**

**उत्प्रेक्षायां निमित्तत्वं यज्जाति-द्रव्ययोरपि।**
**तेनापि विकलां विद्मो निमित्तगणनामिमाम्।।**
**द्रोणस्स तत्र वितरिष्यति भाग्यलभ्य**
**सौभाग्यकार्मणमयीमुपदां गिरिस्ते।**
**तद्द्वीपदीप इव दीप्तिभिरोषधीनां।**
**चूडामिलज्जदकज्जलदर्शनीयः।।**

तत्त्वालोकः-

केनवालंकारिकेण केन वा उपायेन निन्होतुं अपलपितुं शक्यते। तदपलापो नयुक्तः इति भावः।उक्तपद्ययोः यथाक्रमं निमित्तभूतौ-भावा-भावौ उपादत्ते- **आद्य इत्यादिना।** उदाहरणव्यारव्यासमय एवोपपादितोयं ग्रन्थभागः।।

**यदपि सर्वस्वकृता-तदनुयायिना विद्यानाथेन च-** गुणक्रिययोरेव निमित्तत्वं परिगणितं नपुनर्जातिद्रव्ययोः प्रत्येकं निमित्तत्वं, तथा जाति-गुण-क्रियाणां समुचितानां नैमित्तत्वमिति तत्कृतं परिगणनं न्यूनमेवेत्याह- **उत्प्रेक्षायामिति।** यत्उत्प्रेक्षायां जातिद्रव्ययोरपि निमित्तत्वमिष्टं ततः इमां निमित्तगणनामपि विकलां विद्म इति योजना।यत् यस्मात् उत्प्रेक्षायां जातिद्रव्ययोरपि निमित्तत्वं प्रयोजकत्वं दृष्टं लक्ष्येषु इति शेषः तेन हेतुना इमां निमित्तगणनां सर्वस्वकारादिकृतां उत्प्रेक्षा-प्रयोजकधर्मगणनामपि विकलां न्यूनां विद्मः जानीम इत्यर्थः। तत्र धर्मिणि धर्म्यन्तरतादात्म्योत्प्रेक्षायां जातेर्निमित्तत्वे उदाहरणं प्रदर्शयति- **द्रोणस्स इति।** स्वयंवरार्थमागतेषु राजसु आसनेषूविष्टेषु स्वयंवरमण्डपं समागतां दमयन्तीमवलोक्य

## तत्त्वालोकः-

सरस्वती तत्तद्राजकुमाराणां कुल-शील-विद्या-वयोद्रविणधामादि वर्णयितुमुपक्रम्य केषांचित् कुलादिकमुपवर्ण्य शाल्मलिद्वीपाधिराजस्य वपुष्मान्नाम्नो वर्णनप्रसङ्गेन द्रोणाचलं वर्णयति- **द्रोणेति**। तत्र ओषधीनां दीप्तिभिःतद्द्वीपदीप इव स्थितः चूडामिलज्जलदकज्जलदर्शनीयस्सः द्रोणस्सगिरिः भाग्यलभ्यसौभाग्य-कार्मणमयीमुपदां ते वितरिष्यति तस्मादमुं वपुष्मन्तं नृपं वृणीष्व इति योजना॥

तत्र शाल्मलिद्वीपे ओषधीनां मृतसंजीविन्यादीनां, दीप्तिभिः प्रभाभिः तद्द्वीपदीप इव सचासौ द्वीपश्च तद्द्वीपः तस्य दीपइव गृहमणिरिव स्थितः अत्र यद्यपि द्वीपशब्दः चतुर्दिक्षु जलेन परिवृते भूप्रदेशे पठ्यते-"द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्" **इत्यमरकारादिभिः** अथापि पुराणादिषु भुवः खण्डाः ये सप्तधा विभक्ताः जम्बूद्वीपः, ल्पक्षद्वीपः, शाल्मलिद्वीपः, कुशद्वीपः, क्रौंचद्वीपःशाकद्वीपः पुष्करद्वीपः इत्येषु तृतीयो महान् भूभागो ग्राह्यः। विग्रहस्तु द्विर्गता आपो यस्मिन् इत्येव कार्यः। द्व्यन्तरुपसर्गेभ्योऽपईत् (पा.सू.६-३-९७) इति ईत्वम्। चूडामिलज्जलदकज्जलदर्शनीयः चूडासु अग्रभागेषु" शिखा चूडा शिरस्यपि" इति **वैजयन्ती**। मिलन्तः संसक्ताः जलदा मेघा एव कज्जलं अञ्जनं तेन दर्शनीयः सुन्दरः सः लक्ष्मणविशल्यीकरणाय हनूमता आनीतः इति प्रसिद्धः द्रोणो गिरिः, भाग्यलभ्यसौभाग्यकार्मणमयीम् भाग्येन सुकृतविशेषेण लभ्यं लब्धुशक्यं यत्सौभाग्यम् आनन्दःसुभगायाः भावः सौभाग्यं "हृद्-भगसिन्ध्वन्ते पूर्वपदस्यच (पा.सू.७-३-१९) इति पूर्वोत्तरपदयोरादेरचो वृद्धिः , तदर्थं यत् कार्मणम् ओषधिमूलैः वशीकरणं तन्मयी तद्रूपाम् इत्यर्थः। कर्मण इदम् इत्यर्थे "तस्येदम्," इत्यण् "ताद्रूप्ये मयट् च "उपदां उपायनं अन्यस्त्रीपरिहारेण स्वयमेव पतिः यथा त्वामुपभोक्ता तथा वशीकरणमौषधिरूपमुपायनं ते तुभ्यं वितरिष्यति अर्पयति तस्मादमुं शाल्मलिद्वीपाधिपं वपुष्मान्नामानं वृणीष्व इत्यर्थः एवं विधमौषधं महतापुण्येन विना न लभ्यते त्वया अस्मिन् वृते तत्पत्नीत्वेन तव अप्रयत्नेन तल्लाभो भविष्यति अतो धन्या त्वं भवेः इति भावः॥

अत्रोत्प्रेक्षा प्रधानभूता-अनया-प्रकृतशाल्मलिद्वीपाधिपतिचित्ता वर्जनरूपकार्योपयोगाय उपायनस्य विषयिणः कार्मणरूपविषयात्मतया-

**चित्रमीमांसा-**

**अत्र द्रोणाचलस्य दीपत्वोत्प्रेक्षायां तत्प्ररूढौषधिवृक्षदी पस्योपरि स्थितं जलदकज्जलं च निमित्तमिति जातेः निमित्तत्वं दृष्टम्।।**

**निशासु मूर्ध्नि स्फुरता यत्सौधे राजतीन्दुना।**
**श्रीकण्ठो भक्तरक्षार्थं सन्निधानं भजन्निव।।**

**इत्यत्र बाणासुरसौधस्य शिवरूपत्वोत्प्रेक्षायां मूर्ध्नि स्फुरन् इन्दुर्निमित्तम्।**

तत्त्वालोकः

परिणामात्परिणामालंकार इति तस्याः संसृष्टिः जलदकज्जलरूपकं चास्याः उपस्कारिका, तथाच परिणामेन ससृष्टा रूपकेणोपस्कृता उत्प्रेक्षात्रेति भावः।।

अत्रोत्प्रेक्षामुपपादयति - **अत्रेति।**

**अयं भावः** -द्रोणाचले द्रव्ये तादात्म्येन दीपत्वरूपजातिस्वरूपोत्प्रेक्षायां द्रोणाचलप्ररूढौषधिदीप्तीनां दीपोपरिस्थित जलदरूपकज्जलस्य च निमित्तत्वमिति ओषधिदीप्ति जलदकज्जलयोः जातित्वं दृश्यत इति जातिनिमित्ता जातिस्वरूपोत्प्रेक्षा अस्या सङ्ग्रहः स्यात् इति।।

इत्थं जातिनिमित्तजातिस्वरूपोत्प्रेक्षामुद्धृत्य द्रव्यनिमित्तद्रव्योत्प्रेक्षायां जात्युत्प्रेक्षायां वा अव्याप्तिः स्यादिति प्रतिपादयितुमुदाहरति **निशास्विति।** यत्सौधः मूर्ध्नि स्फुरता इन्दुना निशासु राजति सः भक्तरक्षार्थ सन्निधानं भजन् श्रीकण्ठइव भाति इत्यन्वयः।

यत्सौधः यस्य बाणासुरस्य सौधः सुधया निर्मितः प्रासादः, मूर्ध्नि उपरिभागे स्फुरता प्रकाशमानेन इन्दुना निशासु रात्रिषु राजति स्फुरति। क इव, भक्तरक्षार्थं आश्रितसंरक्षणाय सन्निधानं सान्निध्यम् भजन् प्राप्नुवन्, श्रीकण्ठ इव श्रीः कालकूटजनिता शोभा तद्वान् कण्ठो यस्य सः तथा-

"विकारोऽपि श्लाघ्यः भुवनभयभङ्गव्यसनिनः"

इत्युक्तरीत्या कालकूटजनितमपि मालिन्यं शोभायै भवति , अथवा श्रीः विषं-

**चित्रमीमांसा-**

**एवं भास्वतालंकारेण, श्वेतरोचिषा स्मितेन, लोहितेनाधरेण, सौम्येन दर्शनेन ,गुरुणानितम्बेन, सितेन हारेण, शनेश्चरेण पादेन, तमसा केशपाशेन,विकचेन लोचनोत्पलेन ग्रहमयीमिव इत्यत्र वासवदत्तायाःसकलग्रहमयत्वोत्प्रेक्षायां श्लेषेण तत्तद्ग्रहरूपापन्नालंकारादयो निमित्तमिति जातिक्रियागुणानां समुच्चितानां निमित्तत्वं दृष्टम्।**

तत्त्वालोकः-

श्रीर्वेषरचनाशोभासम्पत्सरलशाखिषु।
वाणीलक्ष्मीलवङ्गेषु विषे बिल्वेप्यथत्रिषु।।

इति **नानार्थरत्नमाला**। तद्वान् कण्ठो यस्य सः श्रीकण्ठः शिवस्याष्टादशसु मूर्तिषु एकामूर्तिः "विषापहरणं रूपमष्टादशम् इति स्मृतम्" **इति शैवागमे** स्मरणात्। स इव राजति प्रकाशते इत्यर्थः।

अत्र बाणासुरस्य प्रासादः श्रीकण्ठत्वेनोत्प्रेक्ष्यते। तस्यां च प्रासादोपरिस्थः इन्दुः सन्निहितो निमित्तम्। तच्चैकत्वात् द्रव्यरूपम्। उत्प्रेक्षाधारस्याप्येकत्वेन द्रव्योत्प्रेक्षा अस्याः असंग्रहादव्याप्तिः स्यादिति भावः।

इत्थं जातिद्रव्ययोः पृथक्पृथक् उत्प्रेक्षानिमित्तत्वं प्रतिपाद्य जात्युत्प्रेक्षायामेव क्वचिज्जातिगुणक्रियाणां समुच्चितानां निमित्तत्वं दृष्टमिति तदुदाहरति -**एवमित्यादिना।**

**वासवदत्तारव्यायिकायां सुबन्धुना -श्लेषाश्रयणेन वासवदत्तायां** सर्वग्रहरूपत्वमुत्प्रेक्ष्यते :-

१)भास्वता प्रकाशमानेन अलंकारेण आभरणेन अथच **सूर्येण,**

२)श्वेतं रोचिः यस्य तेन धवलेन स्मितेन मन्दहासेन अथच **चन्द्र** ग्रहेण,

३) लोहितेन रक्तवर्णेन अधरेण अधरोष्ठेन अथच **भौम**ग्रहेण,

४) सौम्येन आह्लादकेन दर्शनेन वीक्षणेन अथच **बुध**ग्रहेण,

**चित्रमीमांसा-**

**नच उदाहृतेषु दीप्त्यादिसम्बन्धो निमित्तम् सच सर्वो गुण एवेति वाच्यम्।**

तत्त्वालोकः

५)गुरुणा, बृहता नितम्बेन कटिपश्चाद्भागेन अथच बृहस्पतिना ,

६) सितेन शुभ्रेन हारेण, मुक्ताहारेण अथच शुक्रग्रहेण,

७) शनैश्चरेण मन्दं मन्दं सञ्चरणशीलेन पादेन चरणेन, अथच शनिग्रहेण,

८)तमसा तद्वन्नीलेनं केशपाशेन केशसमूहेन अत्रपाशशब्दःकेशशब्दा त्परः समूहार्थकः " पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे इति हैमः। अत्र कचशब्दः कचार्थकशब्दपरः। अथच निकृष्टेन राहुणा। अत्र केश पाशशब्दे एवं व्युत्पत्तिः प्रदर्श्या। कस्य सुखस्य ईशाः, केशाः, ग्रहाः, तेषां आनुकूल्ये सति सुखोदया त्, केशेषु ग्रहेषु मध्ये नीचो ग्रहः राहुः अतश्च केशशब्दात्. " भिषक् पाशा इतिवत् कुत्सायां " याप्ये पाशपू (पा. स् ५-३-८६) इति पाशपूप्रत्ययः ।ततध निकृष्टेन राहुग्रहेण इत्यर्थः विकचेन विकसितेन, लोचनोत्पलेन नत्रोेत्पलेन, अथच विकचेनकेतुना. ग्रहमयीमिव ग्रहरूपिणीमिवेत्यर्थः ।

अत्र वासवदत्तायां रवि, चन्द्र, मङ्गल, बुध, बृहस्पति, शुक्र, शनि, राहु, केतु, रूपत्वे उत्प्रेक्ष्यमाणे, भास्वत्, श्वेतरोचिस्, लोहित, सौम्य, गुरु, सित. शनैश्चर, तमस्, विकच शब्देषु श्लेषः सहकारी तस्यामेव अङ्गारकत्वोत्प्रेक्षायां "नामैकदेशे नामग्रहणम् " इति न्यायेन सत्यभामा सत्येतिवत् लोहिताङ्गो लोहितशब्देनोच्यते, सितशब्दः तात्स्थ्यात् ताच्छब्द्यमिति न्यायेन वेळ्ळि इति द्राविडभाषानुगुण्येन, बेळ्ळि () इति कर्णाटभाषानुगुण्येन वा शुक्रग्रहे औपचारिकः प्रयुक्तः। एवं च नानोपायाश्रयणेन वासवदत्तायां समस्तग्रहरूपत्वम् उत्प्रेक्ष्यते, तथाच श्लेषादिना तत्तद्ग्रहाणामुपस्थित्या तैस्साकं वासवदत्तायामभेदमध्यवस्य सम्भाव्यत्वे श्लेषादिमूलककतया तत्तद्ग्रहरूपतामापन्नानां अलंकार- स्मिताधर- दर्शन-नितम्ब-हार-पाद -लोचनरूपाणां निमित्तत्वम् स्मितादीनां क्रियात्वमिति जातिगुणक्रियाणां निमित्तत्वं दृष्टम् अतश्च सर्वस्वकाराद्विकृत निमित्तविभागो न्यून इति भावः। पुनरपि शङ्कते- **नचेति**।

## चित्रमीमांसा-

**तथासति- ''ईदृक्षां क्षामतां गतौ'' इत्यादावपि गमनादिक्रियासम्बन्ध एव निमित्तमिति क्रियाया एव अनिमित्तत्वप्रसंगात्।।**

## तत्त्वालोकः-

अयं शङ्काभिप्रायः -पूर्वोदाहृतेषु द्रोणाचलस्य दीपत्वोत्प्रेक्षायां तादृशदीप्तिसम्बन्धस्यैव निमित्तत्वम् बाणासुरसौधस्य शिवरूपत्वोत्प्रेक्षायां इन्दुसंयोगो निमित्तम्। वासवदत्तायां सकलग्रहरूपत्वोत्प्रेक्षायां अलंकारसम्बन्धस्य निमित्तत्वमिति तेषां सर्वेषां गुणत्वमेवेति काव्याप्तिरिति।

उक्तरीत्यासम्बन्धस्यनिमित्तत्वोपगमे सर्वस्वकाराभ्युपगतक्रियानिमित्तो -त्प्रेक्षोदाहरणे क्रियाया निमित्तत्वोक्तिः अनुपपन्ना स्यात् तत्रापि तत्सम्बन्धस्यैव निमित्तत्वोक्त्या गतार्थत्वात् इत्यभिप्रायेणापादयति- **तथासतीति।**

प्रतिबन्देरयमाशयः-**सर्वस्वकृता**-तावत् ''कपोलफलकावस्याः'' इत्युदाहृत्य यथा-''ईदृक्षांक्षामतां गतौ'' इत्यत्र क्षामतागमनस्य''इति क्रियाया एव निमित्तत्वमुपपादितमिति तत्रापि गमनादिक्रियासम्बन्धस्यैव निमित्तत्वोपगमे सर्वत्र एकविधनिमित्तलाभाल्लाघवमेवेति क्रियानिमित्तत्वोक्तिः असमीचीना स्यात्तथासति क्रियाया निमित्तत्वं यत्तेनैव प्रतिपादितं तदयुक्तं स्यात्। अतश्च सर्वत्र सम्बन्धमात्रं गुणमुपादाय अव्याप्तिवारणप्रयासो निष्प्रयोजनः इति एषां परिगणनं न्यूनमेव इति।

एवं स्थिते अत्रैव **चित्रमीमांसायां** क्रियाया एव निमित्तत्वप्रसंगादिति पाठः पररीत्या इष्टापत्तिकथनप्रयोजको भवेदिति क्रियाया एवानिमित्तत्वप्रसंगः इतिपाठः परिवर्तितः। एवंच द्रोणस्सतत्रेत्यादौ जात्यादेर्निमित्तत्वकथनं युक्तमेवेतिफलति।

ननु-''भास्वता अलंकारेण''इत्यादौ वासवदत्तायां सर्वग्रहरूपत्वसंभावनायां केवलस्य अलंकारादेः जात्यादिकस्य निमित्तत्वं नैव युज्यते किन्तु भास्वान् प्रकाशमान एव भास्वान् सूर्य इति श्लेषमूलकाभेदेन भास्वदाद्यभिन्नालंकारादेः विशिष्टस्यैव निमित्तत्वमिति विशिष्टे स्थितं निमित्तत्वं विशेषणेऽपि प्रकाशादौ गुणे स्थितमेव

**चित्रमीमांसा-**

**नच तथाऽपि "भास्वता अलंकारेण" इत्यादौ श्लेषेण सूर्यरूपताद्यापन्ना अलंकारादयो निमित्तं न पुनरविशिष्टा जातिर्द्रव्यंवेति वाच्यम्।**

**तथासति-कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव" इत्यादावपि कपालोन्मुक्तांकुरत्वादिविशिष्टमेवोत्प्रेक्षणीयं नत्वविशिष्टं जात्यादिकमिति विषयिणोऽपि जात्यादिरूपेण विभागस्यासामञ्जस्य प्रसंगात्।**

तत्त्वालोकः-

**अरुणाधिकरणन्यायात् इति** गुणनिमित्तोत्प्रेक्षेति वक्तुं शक्यतया जातेः द्रव्यस्य वा निमित्तत्वमिति वचो रिक्तमेवेति तदपरिगणनं न्यूनतायै नभवतीत्याशंकते **नचेति।**

प्रतिबन्द्या समाधत्ते- **तथासतीति।**

तथासति-विशिष्टस्य निमित्ततोपगमे तद्विशेषणे गुणेऽपि निमित्तत्वमबाधितमिति सर्वत्र गुणक्रिययोरन्यतरस्य निमित्ततोपगमे सति तुल्यनयात् भवदभिमतजात्युत्प्रेक्षास्थले इन्दौ या अङ्कुरत्वजातिरुत्प्रेक्ष्यते सा नकेवलाउत्प्रेक्ष्यते बाधात्। अपि तु कपालोन्मुक्ताङ्कुरत्वविशिष्टमेवोत्प्रेक्ष्यत इति तादृशस्य एकव्यक्तिरूपत्वेन द्रव्यत्वमेव न जातिरूपतेति जात्युत्प्रेक्षात्र इत्यभिधानमयुक्तमिति विषयिणोऽपि जात्यादिविभागोऽसमञ्जसः स्यादित्यर्थः॥

**वस्तुतस्तु-** नात्र विशिष्टोत्प्रेक्षावक्तुं शक्या तत्रैवविशिष्टोत्प्रेक्षा यत्र विषयिणो विशेषणमपि उत्प्रेक्षणीयमवगम्यते यथा-

"मुनिद्रुमःकोरकितोऽसितद्युतिः"।

इत्यत्र कोरकनिर्गमनविशिष्टे मुनिद्रुमे विधुकलाकलापवमनविशिष्टराहुरूपत्वे उत्प्रेक्ष्यमाणे विशेष्ये मुनिद्रुमे राहुरूपत्वं विशेषणे कोरके विधुकलारूपत्वं निर्गमने वमनरूपत्वं च उत्प्रेक्ष्यत इत्येतादृशस्थल एव विशिष्टोत्प्रेक्षा , नचात्र तथा

**चित्रमीमांसा-**

**तस्माद्विषयिण इव निमित्तस्यापि जात्यादिरूपेण चतुर्विधतया पुनः प्रत्येकं भावाभावाभ्यामष्टविधतया च विभागः कर्तव्य इति न्यूनएवायं विभागः। किंच- यद्धेतूत्प्रेक्षायामनुपादानं निमित्तस्य न क्वापिसम्भवतीति प्रतिश्रुतं तदपि नो चारु।।**

**मग्ना सुधायां किमु तन्मुखेन्दोः**
**लग्ना स्थिता तत्कुचयोः किमन्तः।**
**चिरेण तन्मध्यममुञ्चतास्य**
**दृष्टिः क्रशीयः स्खलनाद्भियानु।।**

तत्त्वालोकः-

विशेषणांशेऽपि उत्प्रेक्ष्यणीयता परिदृश्यते । " भास्वता अलंकारेण" इत्यादौ तु वासवदत्तायां सूर्यादिग्रहरूपत्वे उत्प्रेक्ष्यमाणे श्लेषेण सूर्यादिरूपतामापन्नाः अलंकारादयो विशिष्टाकारेण निमित्ततां गताः। अन्यथा तेषाम् अविशिष्टानां निमित्ततानुपपन्नैव स्यादिति ग्रन्थकृदाशयः।

एवंच **सर्वस्वकृदादिकृतो** निमित्तविभागः न्यून एवेति विषयिण इव निमित्तस्यापि जाति-गुण-द्रव्य-क्रियात्मना तदभावरूपेण चाष्टधाविभाग एव तत्परिहारसंभवादिति तद्विभागविधिं प्रदर्श्य निगमयति- **तस्मादिति।**

इत्थं **सर्वस्वकृत**स्वरूपोत्प्रेक्षाविभागे न्यूनतां प्रतिपाद्य तत्कृतएव हेतूत्प्रेक्षाविभागेऽपि न्यूनतां प्रतिपादयितुमुपक्रमते **किञ्चेति।**

**अलंकारसर्वस्वे-**" हेतूत्प्रेक्षायां यस्य प्रकृतसम्बन्धिनो धर्मस्य हेतुरुत्प्रेक्ष्यते स धर्मोऽध्यवसायवशादभिन्नः उत्प्रेक्षायां निमित्तत्वेनाश्रीयते सच वाच्यएव नियमेन भवति अन्यथा कं प्रति हेतुः स्यादि"ति उक्तम्। तच्च किमभिप्रायकमिति विशये यथाकथञ्चित्तदभिप्रायं वर्णयामः हेतूत्प्रेक्षासु प्रायः फलस्यैव निमित्तत्वमुपगतम्। यं प्रति हेतुरुत्प्रेक्ष्यते तस्यैव फलस्यानुपादाने हेतोः कुत्रान्वयो भवेत्। एवंच फलं विना हेतुः निर्विषयस्स्यात् हेतूत्प्रेक्षास्थले एकएव धर्मो हेतोरुत्प्रेक्ष्यमाणस्य निमित्तं

## तत्त्वालोकः

फलंचेति तद्विना हेतूत्प्रेक्षणस्यैवासिद्धिप्रसंगात्। अतश्च हेतूत्प्रेक्षास्थले निमित्तोपादानं नियतमिति।

ग्रन्थकारस्त्वत्र-निमित्तोपादानासम्भवोक्तिर्नघटते केषुचिल्लक्ष्येषु तथादर्शनादिति उदाहरणं प्रदर्शयति **मग्ना सुधायामिति**।नलस्य दमयन्त्याः तत्तदङ्गेषु सक्ता दृष्टिः तत्तदङ्गंपरित्यक्तुमशक्ता कश्चित्कालमतीत्यतत्तदङ्गान्निवृत्तेति वस्तुस्थितिः। तत्र कविरेवमुत्प्रेक्षते मग्नेति। अस्य दृष्टिः तन्मुखेन्दोः सुधायां मग्ना किमु? अथ सैव दृष्टिःतत्कुचयोरन्तः लग्ना स्थिता किम्। ततः सैव दृष्टिः क्रशीयः तन्मध्यं स्खलनाद्भियानु चिरेण अमुश्चत इति योजना।

अस्य दृष्टिः दमयन्त्याः अङ्गप्रत्यङ्गसौष्ठवं परामृशतोनलस्य दृष्टिः ,तन्मुखेन्दोः तस्याः दमयन्त्याः मुखमेवेन्दुः तस्य सुधायां पीयूषे मग्ना किमु यतस्तन्मुखं एतावता कालेनापि न तत्याज। यथा जलादौ निमग्नःपदार्थः चिरात्तंप्रदेशंत्यजति तद्वत् इयमपि दृष्टिः, तत्कुचयोः तस्याः दमयन्त्याः कुचयोः पयोधरयोः अन्तः मध्ये, "अन्तरिति मध्ये' " स्वरादिनिपातमव्ययम्" इति सूत्रस्थ मनोरमायाम्। लग्ना दृढंसक्ता सती स्थिता किम्? पादादौ विद्धोऽपि कण्टकादिः न झटिति बहिर्निस्सरति तद्वदिति समाधिः, ततः सैव, दृष्टिः, क्रशीयः अतिशयेन कृशं क्रशीय इति विग्रहः विभज्योपपदे ईयसुन्प्रत्ययः तन्मध्यं तस्याः दमयन्त्याः मध्यं कटिप्रदेशं कर्म स्खलनात् पतनजनितया भिया नु भयान्नु चिरेण कंचित्कालं अपास्य अमुश्चत अत्यजत् इत्यर्थः।

नलः दमयन्त्याः यंयमङ्गं पश्यति तस्यतस्यातिसुन्दरत्वेन परित्यक्तुमशक्ता तस्य दृष्टिः कथंचित्तत्तदङ्गान्निववृते नतु तदैवेति भावः॥

अत्र दृष्टिरूपे विषये मज्जनं लगनं च चिरेण मुखकुचत्यागं प्रति हेतुत्वेनोत्प्रेक्ष्यते। तयोर्निमित्तभूतं यन्मुखकुचत्यजनं तन्नोपात्तम् न चैतावता हेतूत्प्रेक्षा निरसितुं शक्या वस्तुतोऽहेतौ हेतुत्वसम्भावनायां हि चमत्काराधिकयम् एवंच मुखकुचत्यागरूपफलं प्रति अहेतौ हेतुत्वं संभाव्यत इत्यस्त्यत्र हेतूत्प्रेक्षा। भवदुक्तरीत्या निमित्तानुपादानमात्रेण

## चित्रमीमांसा

**इह हेतावुत्प्रेक्ष्ये मज्जन-लगने, निमित्तमनुपात्तम् ।**
**तत्कार्यं दृष्टिगतं चिरेण यन्मुखकुचत्यजनम्।।**

**स्यादेतत् इह मज्जनलगनोत्प्रेक्षयोश्चिरेण मुखकुचत्यागवनुपात्तौ निमित्ते, तयोश्च न मज्जनलगने हेतुत्वयोग्ये इति सत्यम्। तथापि हेतूत्प्रेक्षैव ,**

### तत्त्वालोकः-

सा न स्यात् इष्यते च सेत्याह- **इहहेताविति।**

इह- ''मग्ना सुधायामिति'' पद्ये मज्जनलगने हेतौ मज्जनलगनरूपे हेतौ उत्प्रेक्ष्ये सति तत्कार्यं मज्जनलगनयोः फलं दृष्टिगतं चिरेण मुखकुचत्यजनरूपं निमित्तमनुपात्तम् यद्वा- इह हेतौ हेतूत्प्रेक्षायां मज्जनलगनेक्रिये उत्प्रेक्ष्ये उत्प्रेक्षयितुं योग्ये तत्कार्यमित्यादि पूर्ववत्।

उक्तोदाहरणे अनुपात्तनिमित्तोत्प्रेक्षामप्यभ्युपेमः यदितत्रानुपात्तयोः मुखकुचत्यागयोः मज्जनलगने हेतुत्वयोग्ये भवेतां न च ते तद्धेतुत्वयोग्ये इति कथमत्र हेतूत्प्रेक्षेति पूर्वपक्षमाह- **स्यादेतत् इति।**

अत्रास्माभिरपि मुखकुचत्यागौ प्रति हेतुत्वयोग्यता मज्जनलगनयोर्नास्तीत्यभ्युपगम्यत इत्यत्र न कोऽपि विवाद इत्यभ्युपगमं सूचयति- **सत्यमिति।**

न चैतावता त्वदभिमतसिद्धिः प्रत्युत तद्वैपरीत्यमित्याह**तथापीति।**

तथापि हेतुत्वयोग्यताया अभावेऽपि हेतूत्प्रेक्षैव, नहि हेतूत्प्रेक्षात्वे हेतुत्वयोग्यता अपेक्षिता। अपि तु हेतत्वोनोत्प्रेक्षणविवक्षा औचित्यं च, भवद्भिरपि हेतूत्प्रेक्षास्थले हेतुत्वयोग्यमेव न हेतुत्वोनोत्प्रेक्षितम् अपि तु तदयोग्यमपि, परन्तु तत्र हेतुत्व प्रतिपादकसद्भावमात्रमपेक्ष्यते यथा ''सैषा स्थली'' इत्यत्र अन्यथा तत्रापि दुःखित्वस्योत्प्रेक्षणेनिश्चलत्वजनितमौनस्य तदफलत्वेन निमित्तता नस्यात् वस्तुतस्तत्र निश्चलत्वनिमित्तकमेव मौनं नपुनर्दुःखजनितमिति तादृशमौनं प्रति दुःखे

**चित्रमीमांसा-**

**नहि हेतूभवनक्षमस्योत्प्रेक्षैव हेतूत्प्रेक्षा, किन्तु, हेतुत्वेनोत्प्रेक्षा। यथा "सैषा स्थली यत्र विविन्वतात्वाम्" इत्यत्र अत्रहि पञ्चमी हेतुत्वप्रतिपादि का।।**

**तथा-**

**कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ।**
**अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ।।**

तत्त्वालोकः

हेतुत्वयोग्यतायामसत्यां कथंवा दुःखं हेतुत्वेनोत्प्रेक्ष्यं स्यात्। अतश्च कस्यचित् कंचित्प्रति हेतुत्वेनोत्प्रेक्षणे तद्योग्यता अनपेक्षिता अपि तु कविविवक्षा चमत्कारश्चेत्याशयेनाह- **नहि हेतूभवनेति** यदि हेतूभवनक्षमस्यैवोत्प्रेक्षा हेतूत्प्रेक्षा। तदक्षमस्य-तु या उत्प्रेक्षा सा हेतूत्प्रेक्षा न भवतीत्युच्येत तदा बाधकमुपक्षिपति- **अत्रहीति।**

अयं भावः-"सैषा स्थली" इति पद्ये विश्लेषदुःखादिवेति पञ्चम्युक्ता। साच हेतुतामवगमयति। एवं च पञ्चम्यर्थो हेतुःतत्र "**प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थः प्रधानं प्रकृत्यर्थो विशेषणम्**" इत्युक्तरीत्या प्रत्ययार्थे हेतौ प्रकृत्यर्थस्य दुःखस्याभेदेन संसर्गेणान्वयः तथाच -विश्लेषदुःखाभिन्न हेतुप्रयोज्यमौनवदभिन्नं नूपुरमिति बोधो वाच्यः। अन्यथा पञ्चम्यर्थहेतोरन्वयो न स्यात् तत्प्रकृत्यर्थे अभेदेनान्वययोग्यताया अभावादिति।

एतदेव **उद्धटीयो**दाहरणान्तरप्रदर्शनद्वारा द्रढयति **-तथेति**। अस्याः पार्वत्याः तथाविधौ अनिर्वचनीयशोभौ कपोलफलकौ, अन्योन्यं परस्परमित्यर्थः, क्रियाविनिमयविवक्षायां "कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये समासवच्च बहुलम्" इति**कात्यायनवार्तिकतो** द्विर्वचनम्। अपश्यन्ताविव नासिकाव्यवधाननिमित्तकदर्शनाभावादिवेत्यर्थः। अत्र नञ्युक्तदृश्धात्वर्थस्य हेतुत्वविवक्षणात् ततः ारस्य लक्षणहेत्वोः क्रियायाः (पा.सू. ३.२.१२६) इत्यस्मात् लटः शतृप्रत्ययः।

**चित्रमीमांसा-**

**इत्यत्र क्षामतागमनं प्रति परस्परादर्शनस्य हेतुत्वोत्प्रेक्षायां शतृप्रत्ययो हेतुत्वप्रतिपादकः।**

**मदनतापभरेण विदीर्य नो**
**यदुदपाति हृदा दमनस्वसुः।**
**निबिडपीनकुचद्वययन्त्रणा**
**तमपराधमधात्प्रतिबध्नती॥**

तत्त्वालोकः

कष्टंभूत्वा दुःखमनुभूय," भूप्राप्ताविति" धातुरत्रेति बोध्यम् । ईदृक्षां इदृशीं इदंशब्दोपपदात् दृश् धातोः दृशेः क्सश्च वक्तव्यः (पा.सू. ३-२-६, वार्ति) इतिक्सप्रत्यये "दृक्षेचेति वक्तव्यम्"(पा.सू. ६-३-९० वार्ति) इति इदमः ईशादेशः। क्षामतां कार्श्यं गतौ प्राप्तौ।

अत्र कपोलफलकयोः तपोवशात् क्षामत्वमापन्नयोः परस्परादर्शनं अभावरूपं क्षामतायां कारणतयोत्प्रेक्षितमिति उद्भटवृत्तौ प्रतीहारेन्दुराजेन, सर्वस्वकृताच "अपश्यन्ताविवान्योन्यं" इत्यादौ कपोलयोः प्रकृतयोः सम्बन्धित्वेनोपात्तस्य क्षामतागमनस्य हेतुरदर्शन मुत्प्रेक्षितम् । हेतुफलं च क्षामतागमनं तत्र निमित्तम् इत्युक्तम्। इत्थं च वस्तुतः क्षामतागमनं प्रति तपसो निमित्तत्वम्। अदर्शनजनितस्य क्षामतागमनस्यावास्तविकत्वेन क्षामतागमनं प्रति परस्परादर्शनस्यापि हेतुत्वयोग्यता नास्तीति तस्य तेन रूपेण उत्प्रेक्षणमसमञ्जसं स्यात् तथैव हेत्वर्थ-विहितशतृप्रत्ययार्थान्वयोऽप्यनुपपन्नस्स्यादित्यभिप्रायेणाह - **इत्यत्रेत्यादिना।**

एवंच उद्भटानुसारेणापि हेतूभवनक्षमस्यैव हेतूत्प्रेक्षेति न, अपि तु हेतुत्वेनोत्प्रेक्षैवेति पर्यवस्यति। पूर्वोदाहरणे पञ्चमी हेतुत्वप्रतिपादिका इह तु शतृप्रत्ययः इति विशेषः।

इत्थं हेतुत्वप्रतिपादकसुप्सत्संज्ञयोरुपादाने सति हेतूत्प्रेक्षात्व-मुदाहरणयोरुपपाद्य फलतोऽपि अहेतौ हेतुत्वे प्रतिपादिते हेतूत्प्रेक्षा अनिवारितप्रसरेति मत्वा तादृशमुदाहरणं प्रदर्शयति- **मदनतापेति।**

**चित्रमीमांसा-**

**इत्यत्र हृदयस्य मदनतापेन स्फुटित्वोत्पतनाभावे कुचद्वय-यन्त्रणायाः**

तत्त्वालोकः-

दमनस्वसुः हृदा मदनतापभरेण विदीर्य नो उदपाति इति यत् तमपराधं निबिडपीनकुचद्वययन्त्रणा प्रतिबध्नती सती अधात् इति योजना।

दमनस्वसुः दमयन्त्याः हृदा मनसा कर्त्रा मदनतापभरेण कामवेगेन निमित्तेन विदीर्य हृदयदेशं भित्वा, नो उदपाति नोत्पतितं इति यत् तं तद्रूपमपराधम् अनुत्पतनलक्षणं भ्रेषम् निबिडपीन कुचद्वययन्त्रणा निबिडं निरन्तरं अथच पीनं स्थूलं यत्कुचद्वयं तत्कर्तृका या यन्त्रणा अवकाशाप्रदानरूपा क्रिया प्रतिबध्नती प्रतिबन्धंकुर्वती सती तमपराधम् अनुत्पतनलक्षणमागः अधात् दधार अथच पपौ धाञो धेटश्च लुङि रूपस्यैकविधत्वादुभयार्थलाभः।

अत्र दमयन्त्याः हृदयं विरहतापमसहमानं सद्धृदयदेशं विदीर्य गन्तुकाममपि तत् स्तनद्वयमेवोपरुरोध अन्यथा कदाचित् हृदयमुत्पतेदेव अतश्च अनुत्पतन-लक्षणोऽपराधः स्तनद्वयस्यैव नपुनर्मनसः यथा लोके वाताधिक्यात् उत्पतनशीलस्य वस्त्रादेः पाषणादिना कृता यन्त्रणा तदुत्पतनं प्रतिरुणद्धि तद्वदिति वाक्यावसितोऽर्थः। अत्र च भैमीमनसो विरहतापे सत्यपि स्वदेशं विदीर्य अनुत्पतने वस्तुतः आयुश्शेषो निमित्तम् अथापि कविः स्वप्रतिभया हृदयानुत्पतनं प्रति कुचयुगलयन्त्रणां हेतुत्वेन उत्प्रेक्षते, यद्यप्यत्र उत्पतनाभावहेतुत्वप्रतिपादकश्शब्दो न साक्षादुपात्तः। अथापि हेतूत्प्रेक्षैव। यतश्चात्र नो उदपातिइत्युत्पतनाभावः उल्लिखितः उत्पतनकारणसत्वेऽपि कुतो नोत्पतितमित्याकांक्षायां प्रतिबन्धक-सद्भावादित्यकामेनापि वक्तव्यम्। यस्य यत्प्रतिबन्धकं तत्तदभावं प्रतिकारणम् यथा- दाहंप्रति वह्नेः कारणत्वम् दाहकारणवह्निसत्वेऽपि मणिसमवधानदशायां दाहाभावेन दाहं प्रति मणेः प्रतिबन्धकत्वम् इत्थंच मणिः वह्निसमवधानकाले दाहाभावं प्रति कारणमिति यथा उच्यते तद्वदत्रापि शब्दतोऽनुच्यमानमपि अनुत्पतनं प्रति कुचद्वयप्रतिबन्धः कारणमिति विज्ञायते अतश्च नात्र हेतुबोधकविभक्त्याद्यपेक्षा तदभावेऽपि तत्प्रतिपत्तेः। तदेतदाह- **इत्यत्रेति।**

**चित्रमीमांसा-**

**हेतुत्वोत्प्रेक्षायामुत्पतनप्रतिबन्धकत्वपरः प्रतिबध्नती शब्दः फलतोऽनुत्पतनहेतुत्वप्रतिपादकः। एतादृशेषुच फलस्य निमित्तस्योपादानं नियतमेव। अन्यथा पंचम्यादीनामन्वयसम्पादनाभावात्।**

**यत्र हेतुत्वप्रतिपादकश्शब्दो नास्ति तत्र हेतूभवनक्षमस्यापि स्वरूपोत्प्रेक्षैव।।**

**अत एव अलंकारसर्वस्वकृता-**

**प्राप्याभिषेकमेतस्मिन् प्रतितिष्ठासति द्विषाम्।**
**चकम्पे लोप्यमानार्थभयविह्वलितेव भूः।।**

तत्त्वालोकः-

एतेन हेतूभवनाक्षमस्यापि हेतुत्वविवक्षामात्रेण हेतूत्प्रेक्षा कविसम्मतेत्युक्तं भवति, एतादृशस्थलेषु पञ्चम्यादीनामनुपादानात् तदन्वयानुरोधेन फलात्मकस्य निमित्तस्योपादानं व्यवस्थितम्, नोचेत् विभक्त्यर्थस्याभेदेनात्वयो नोपपद्यते तदाह- **एतादृशेष्विति।**

यद्येवं यत्र हेतुत्वप्रतिपादकश्शब्दो नास्ति तत्र किं हेतूत्प्रेक्षा आहोस्वित् स्वरूपोत्प्रेक्षा? स्वरूपोत्प्रेक्षेति **सर्वस्वकारः**। हेतूत्प्रेक्षेति **ग्रन्थकारः**। तत्र सर्वस्वकारमतेनाह-**यत्रेत्यादिना।**

तदेतत्कथमवगतम्। उच्यते **अलंकारसर्वस्वे** हेतूत्प्रेक्षां निरूपयता ,**सर्वस्वकृता-** "हेतूत्प्रेक्षायां यस्य प्रकृतसम्बन्धिनो हेतुरुत्प्रेक्ष्यते स धर्मोऽध्यवसायवशादभिन्नः उत्प्रेक्षायां निमित्तत्वेनाश्रीयत" इत्युक्त्यनन्तरं सच वाच्य एव नियमेन भवति अन्यथा कं प्रति हेतुः स्यादि"त्युक्तम् एवं च निमित्तस्यानुपादाने हेतुताप्रतीतावपि स्वरूपोत्प्रेक्षैवेति अवगतम्। किंच निमित्तोपादानेऽपि हेतुत्वप्रतिपादकशब्दाभावे स्वरूपोत्प्रेक्षैवोपगता। उक्तार्थे संवादं प्रदर्शयितुं तदीयस्वरूपोत्प्रेक्षानिरूपणप्रकरणस्थं पद्यमुदाहृत्योपपादयति **अत एवेति।**

एतस्मिन् राज्ञि अभिषेकं प्राप्य प्रतितिष्ठासति सति द्विषां भूः लोप्यमानार्थ-

**चित्रमीमांसा -**

**इत्यत्र विह्वलितत्वस्योत्प्रेक्ष्यस्य हेतुत्वप्रतिपादकशब्दरहितस्य कम्पं प्रति हेतूभवनक्षमत्वेऽपि स्वरूपोत्प्रेक्षा उदाहृता इति चेत्।**

तत्त्वालोकः -

भयविह्वलितेव चकम्पे इति योजना। एतस्मिन् प्रकृते राज्ञि अभिषेकं राज्याभिषेकं प्राप्य लब्ध्वा प्रतितिष्ठासति सति दिग्विजयार्थं प्रस्थातुमिच्छति सति द्विषां भूः शत्रुवसुधा लोप्यमानार्थभयविह्वलितेव चोर्यमाणरत्नादिभीतिविक्लवितेव, भुवो रत्नगर्भात्वेन स्वीयरत्नलोपोऽपि संभवेत् इति भिया विक्लवेवेति यावत्, चकम्पे अचलत् इत्यर्थः।

अत्र निमित्तोपादानेऽपि हेतुत्वप्रतिपादकशब्दभावाच्छत्रुवसुधाया विह्वलितत्वं धर्मः स्वरूपेणोत्प्रेक्ष्यत इति **सर्वस्वकाराभिप्रायः**। उक्तं च तेनैव - "अत्र भूगतत्वेन भयविह्वलितत्वाख्यधर्मोत्प्रेक्षायां कम्पादिनिमित्तमुपात्तम्" इति।

**नचात्र**-भुवि विह्वलितत्वाख्यधर्म उत्प्रेक्षितुं शक्यः विह्वलिता भूरिति सामानाधिकरण्येन निर्देशात्। सामानाधिकरण्यनिर्देशो हि धर्मिणिधर्म्यन्तर-तादात्म्योत्प्रेक्षायां प्रयोजकः। अत एव 'बालेन्दुवक्राणि' इत्यादौ पलाशकुसुमेषु नखक्षततादात्म्यं संभावितम् नपुनःपलाशकुसुमेषु नखक्षतत्वं धर्म इति **सर्वस्वकारोक्तः** भयविह्वलितत्वादिधर्मोत्प्रेक्षापक्षः कथं युक्त इति वाच्यम्। विह्वलितादिशब्दानां जातिवाचकत्वाभावात् सामानाधिकरण्य निर्देशमुलंघ्य धर्मोत्प्रेक्षापरत्वकल्पने बाधकाभावात्, "बालेन्दुवक्राणि" इत्यदौ तु जातिवाचकत्वात्तथोत्प्रेक्षणस्यायुक्तत्वात्। जातिशब्देषु हि तथा व्युत्पत्तिः। अत एव **अभिनवगुप्तपादाचार्यैः**-

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः।

इतीदं पद्यं व्याख्यातुमुपक्रम्य" जलराशिः जाडयसंचयः, जलादयश्शब्दाः

**चित्रमीमांसा-**

**मैवम् !एवंहि-।**

**स्मरसि स्मर मेखलागुणैः**
**उत गोत्रस्खलितेषु बन्धनम्।**
**च्युतकेसरदूषितेक्षणानि**
**अवतंसोत्पलताडनानिच।।**

**इत्यत्र हेतूत्प्रेक्षा लक्ष्या न स्यात् स्मरणगतहेतुत्व प्रतिपादकशब्दाभावात्।**

तत्त्वालोकः-

भावप्रधानाः" इत्युक्तमिति वदद्भिः क्वचित् धर्मिवाचकानां धर्मबोधकत्वमप्युपगतमेव। एवं चात्रापि भुवि विह्वलितत्वाख्यो धर्म उत्प्रेक्ष्यत इति सामानाधिकरण्य भङ्गोऽपि न दोषायेति।

नच ग्रन्थकृतापि -"बालेन्दुवक्राणि" इत्यत्र प्रकृतानि पलाशकुसुमानि-अप्रकृतनखक्षत धर्मवक्रत्वलौहित्य संबन्धात् नखक्षतत्वेनोपकल्पितानीत्युक्तमिति तत्रापि सामानाधिकरण्यं भग्नमिति वाच्यम्।

जातिव्यक्त्यो रभेद इति **मीमांसकमतावलम्बनेन** तथोक्तमिति विभाव्यमाने दोषाऽभावत्।

एवं च प्राप्यभिषेकमित्युदाहरणएव धर्मिणि भूरूपे विह्वलित्वं धर्मः स्वरूपेणोत्प्रक्ष्यत इति **सर्वस्वकृतो** मतं निराचष्टे **मैवम् इत्यादिना ।**

एवमुक्तरीत्या स्वरूपोत्प्रेक्षा उपगन्तुं नशक्या तथोप गमे (क्वचिद्धेतूत्प्रेक्षालक्ष्येऽव्याप्तिः प्रसज्येत )कस्याश्चिद्धेतूत्प्रेक्षाया असंग्रहप्रसंगात् इत्याचष्टे **एवं हीति ।**

हे स्मर ! त्वयि मत्कृतं गोत्रस्खलितेषु मेखलागुणैः यद्बन्धनं तत्स्मरसि? उतच्युतकेसरदूषितेक्षणानि अवतंसोत्पल ताडनानि च उत स्मरसि?

**चित्रमीमांसा-**

**न चेष्टापत्तिः-**

**कृतवानसि विप्रियं न मे प्रतिकूलं नचे ते मया कृतम्।**
**किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते।**

तत्त्वालोकः

हे स्मर! उत्कण्ठापूर्वकं स्मरणशील! स्मृ आध्याने चौरादिकाद्रूपम्। गोत्रस्खलितेषु गोत्रं नाम तस्य स्खलितेषु विपर्यासेषु नाम भ्रान्तिषु वा, "नामगोत्रं कुलंगोत्रं गोत्रस्तुधरणीधरः" इति **वैजयन्ती**। त्वयि मत्कृतं यत् मेखलागुणैः रशनातन्तुभिः नतु रज्जुभिः बन्धनं प्रसितिं स्मरसि उत स्मरसि वा, च अथवा अनुभूतानि च्युतकेसरदूषितेक्षणानि च्युतकेसरैः गलितकिञ्जल्कैः दूषिते हिंसिते ईक्षणे यैस्तानि अवतंसोत्पलताडनानि नीलोत्पलाभरणक्षेपेण यो धूलिप्रक्षेपः तत्पूर्वकं यत्ताडनं तानि स्मररस्युत स्मरसि वा इत्यर्थः।

**इत्यत्रेति**। अत्र परमेश्वरदग्धं मदनदेहमवलोक्य तद्दर्शनं प्रार्थयन्त्यै रत्यै स्वमदर्शयन्तं मन्मथं प्रति तेन स्वस्यै दर्शनादाने हेतुरुत्प्रेक्ष्यते-

मया अपराधोन कृतः। कृतश्चेत् स्मृतिमियात्। त्वया मत्कृतोऽपराध एकोऽपि वा स्मर्यते यत् एतावतापि कालेन न दर्शनं दीयत इति, एवंच रतिः आत्मने मन्मथकर्तृकं दर्शनादानं मत्कृतपूर्वापराधस्मरणहेतुकं स्यात्। अन्यथा तं प्रत्येव विलपन्त्यै मह्यं कथं वा दर्शनं नदद्यात् इति स्मरकर्तृकदर्शनदानाभावं प्रति रत्या स्वकृतापराध स्मरणं हेतुत्वेनोत्प्रेक्ष्यते। परन्तु स्मरणगतहेतुताप्रतिपादकश्शब्दो नो पात्तः। अथापि हेतूत्प्रेक्षा चमत्कारजननी। सा न स्यात्। इष्यते चात्र हेतूत्प्रेक्षा।

ननु- मास्त्वत्र हेतूत्प्रेक्षा अन्या का प्यलंकृतिस्स्यात् इति इष्टापत्तिं ब्रुवाणस्य पूर्वकाव्यखण्डानुगुण्येन हेतूत्प्रेक्षापरत्व एव सामञ्जस्यादिति प्रतिपादयितुं पूर्वग्रन्थभागमुद्धरति-**नचेष्टापत्तिरित्यादिना**।

हेप्रिय! मया तव प्रतिकूलाचरणे कर्तव्ये प्रथमतस्त्वया किमपि प्रतिकूलमाचरितं भवेत् तस्मादितः पूर्वं न कदापितत्त्वयाचरितमित्याह **कृतवानसीति**। मे मम विप्रियं

**चित्रमीमांसा-**

**इत्युक्त्यनन्तरं प्रवृत्तस्यास्य श्लोकस्य, अथवा मत्पूर्वकृतापराधस्मरणेनैव दर्शनं नदीयते किमिति हेतूत्प्रेक्षापरत्व एव सामञ्जस्यात्॥**

तत्त्वालोकः

अनिष्टं त्वं न कृतवानसि यदा च त्वया ममानिष्ठं नाचरितं तदा मयापि तत्प्रतिकूलं नाचरितमिति किमुवक्तव्यमिति कैमुत्येन सिद्धमिति चशब्दः स्फोरयति इत्थमकारणमेव परस्परापकाररूप-कारणाभावेऽपि विलपन्त्यै त्वया सह आगत्येदानीं त्वामदृष्ट्वा त्वद्दर्शनाय परिदेवयित्र्यै तत्रापि न यस्यै कस्यैचित् अपितु रतये यदा कदाचिदपि अप्रियं नाचरितवती अत एव रतिरिति प्रख्यातायै त्वत्पत्न्यै, यद्वा परमां प्रीतिं प्रदर्शयितुं दर्शनं किं कुतो न दीयते इत्यर्थः "क्रियाग्रहणाच्चतुर्थीति" बोध्यम् एतेनात्र **को जानीते विधिविलसितानि इत्यादिन्यायः** स्मारितो भवति।

**इत्युक्त्यनन्तरमिति।** कृतवानसि इत्याद्युक्त्या मन्मथेन स्वस्यै दर्शनादाने मत्पूवकृतापराधसामान्यं नास्तीति प्रतिपाद्य कदाचित् कस्यचिदपराधस्य **नकश्चिन्नापराध्यति इति न्यायेन** संभवेऽपि गोत्रस्खलितेषु मेखलागुणैः बन्धनस्य, अवतंसोत्पलधूलिक्षेपस्य वा संभवः स्यादपि इत्यहेतोरपि तदपराधस्मरणस्य दर्शनादानंप्रति हेतुत्वमुत्प्रेक्ष्यतेइति हेतूत्प्रेक्षापरक्षपरत्व एव प्रकरणौचित्यं नचान्यथेति भावः।

अत एव **विमर्शिनीकृता** - "प्राप्याभिषेकम्" इत्यादावन्ये हेतूत्प्रेक्षात्वं मन्यन्ते इत्युदाहरणान्तरमुदाह्रियते इत्युक्त्वा-

नवरोषदलितघननिरवलम्बसंघटित सतटित्कटिप्रवरः।
नरहरिणो जयति कडारकेसरे कन्धराबन्धः॥

इत्युदाहरणान्तरमुपन्यस्तम्। नपुनरत्र धर्मिणि धर्मस्वरूपोत्प्रेक्षा इत्युपपादितम्॥

एवं च "प्राप्याभिषेकम्" इति पद्येऽपि राज्याभिषेकात्परं दिग्विजयार्थं प्रस्थिते सति शत्रुभुवः कुतोवा कम्पः? इति हेत्वाकांक्षायां चोरयिष्यमाणरत्नादिभीतिरेव कम्पं प्रति हेतुरिति हेतूत्प्रेक्षात्व एव सामञ्जस्यम् न पुनः स्वरूपोत्प्रेक्षात्व इत्युक्तं भवति।

**चित्रमीमांसा-**

**यदि तु हेतुत्वप्रतिपादकशब्दाभावेऽपि पूर्वापरानुगुण्येना हेतूत्प्रेक्षा भवेत् तर्हि इहापि तृतीयोत्प्रेक्षा समभिव्याहारात्तस्यां चिरेण मध्यत्यजने शब्दोपात्ते स्खलनभयस्येव आद्योत्प्रेक्षयोरपि निमित्ततया गम्यमाने चिरान्मुखकुचत्यजने मज्जनस्य लगनस्य च हेतुत्वेनोत्प्रेक्षणमित्येव युक्तम्।।**

## तत्त्वालोकः

ननु "मग्ना सुधायाम्" इत्युदाहरणतः 'स्मरसि स्मर' इति पद्ये वैलक्षण्यमस्ति, यतः कृतवानसि इत्यादिना कारणं विना दर्शनाप्रदानमनुचितमिति प्रतिपादिते पुनः स्मरसीत्यनन्तरोदाहरणस्य काप्रसक्तिरिति चेत् वस्तुतो न कोऽप्यपराधोऽस्ति अथापि रतिकृतपूर्वापराधस्मरणसंभावनया दर्शनाप्रदानमिति पूर्वापरपर्यालोचनायां हेतुत्वप्रतिपादकशब्दाभावेऽपि हेतूत्प्रेक्षणं वक्तुं शक्यम्। अत्र "मग्ना सुधायामिति" पद्ये तु तदपि नास्तीति कथं हेतूत्प्रेक्षात्वमित्याशंकायां "स्मरसी" त्यत्र यथा प्रकरणस्यानुग्राहकत्वं तद्वदत्रापि उत्प्रेक्षान्तरसमभिव्याहारः अनुग्राहक इत्यनुपात्तनिमित्ता हेतूत्प्रेक्षा न निवार्येत्याह-**यदित्विति।**

यदितु- हेतुताप्रतिपादकशब्दान्वयव्यतिरेकाभ्यां न हेतूत्प्रेक्षा तदभावनिर्णय इत्यभिप्रायकं "प्राप्याभिषेकं" इति पद्ये स्वरूपोत्प्रेक्षात्वोपपादनं अपि तु यत्र निमित्तोपादानं यत्र वा हेतुत्वप्रतिपादकपदोपादानं यत्रवा हेतुत्वकल्पकं परस्परमानुगुण्यं तादृशेषु हेतूत्प्रेक्षा भवेत् तदा, इहापि 'मग्ना सुधायाम्" इति पद्येऽपि, तृतीयोत्प्रेक्षासमभिव्याहारात् त्रयाणां पूरणीया या उत्प्रेक्षा तत्समभिव्याहारात् सजातीयोत्प्रेक्षासन्निधानात् इत्यर्थः । इह तावत् एकस्यामेव दृष्ट्यां मज्जनोत्प्रेक्षा प्रथमा, लगनोत्प्रेक्षा द्वितीया, मध्यत्यजनोत्प्रेक्षा तृतीया। तत्र तृतीयोत्प्रेक्षायां चिरेण मध्यत्यजनं प्रति स्खलनभयं निमित्तमुपात्तम्। अथच हेतुत्वप्रतिपादकतृतीया वेभक्त्युपादानं च कृतम्। अस्मिन्नर्थे एवं विग्रहः - तृतीया-सहिता उत्प्रेक्षा तृतीयोत्प्रेक्षा तस्यास्समभिव्याहारात् इति भावः । तस्यां दृष्टयां चिरेण मध्यत्यजने शब्दोपात्ते-

**चित्रमीमांसा-**

**यत्रापि हि फले फलत्वप्रतिपादकशब्दः तत्राप्यौचित्येन फलोत्प्रेक्षामवधीर्य हेतूत्प्रेक्षाङ्गीकार्या दृश्यते।**

**हृत् तस्य यन्मन्त्रयते रहस्त्वां**
**तद्व्यक्तमामन्त्रयते मुखं यत्।**
**तद्वैरिपुष्पायुधमित्र चन्द्रसख्यौ-**
**चिती सा खलु तन्मुखस्य।।**

तत्त्वालोकः-

उत्प्रेक्ष्ये इति शेषः। स्खलनभयस्येव स्खलनभयस्य यथा निमित्तत्वं तथा, आद्योत्प्रेक्षयोरपि मज्जनलगनोत्प्रेक्षयोरपि चिरान्मुख कुचत्यजने निमित्ततया गम्यमाने प्रयोजकतया प्रतीयमाने मज्जनस्य लगनस्य च हेतुत्वेन उत्प्रेक्षणम् इत्येव युक्तम् न प्रकारान्तरेण स्वरूपोत्प्रेक्षाद्यभ्युपगमो युक्त इति भावः।।

एतावता सन्दर्भेणैतदुक्तं भवति -निमित्तस्य तत्प्रतिपादकशब्दस्य उपादानमस्तु वा मावा न तत्राभिनिवेशोयुक्तः ,अपि तु औचित्यमेव तत्र प्रयोजकम् अतश्चैवमादौ अनुपानिमित्तापि हेतूत्प्रेक्षा परिगणनीयैव नपुनरसंभवोक्तिरिति।।

किंच - क्वचित्फले फलत्वप्रतिपादक शब्दोपादानं तत्र तावन्मात्रेण फलोत्प्रेक्षेति वक्तुं न शक्यम्। प्रत्युत औचित्यानुसारात् हेतूत्प्रेक्षात्वमेवाभ्युपेयम्। तथाविधोदाहरणदर्शनादिति आह- **यत्रापीति।**

यत्रापि हि यादृशोदाहरणेषु हि "हृत्तस्य यन्मन्त्रयते " इत्यादौ फले कार्ये फलत्वप्रतिपादकशब्दः कार्यताप्रत्यायकशब्दः उपात्तः सा औचिती इत्यादिःतत्रापि तादृशोदाहरणेष्वपि, औचित्येन मुखचन्द्रयोः सख्यस्य अनौपाधिकत्व प्रकाशनकृतानुरूप्येण, फलोत्प्रेक्षामवधीर्य उपेक्ष्य हेतूत्प्रेक्षा अङ्गीकार्या अवश्यमङ्गीकर्तुं योग्या इत्यर्थे कृत्याश्च (पा.सू.३.३.१७१) इति ण्यत् प्रत्ययः। दृश्यते लक्ष्ये इति शेषः तदेव लक्ष्यं प्रदर्शयति- **हृत्तस्येति।**

## तत्त्वालोकः

भैमीमनुचिन्तयतो नलस्य' दशासु कामदशासु तृतीयां संकल्पदशां कविरनुसन्धत्ते -**हृदिति।**

तस्य हृत् रहः त्वामुद्दिश्य यत् मन्त्रयते तत् मुखं व्यक्तं यदामन्त्रयते सा तद्वैरिपुष्पायुधमित्रचन्द्रसख्यौचिती खलु इति योजना।

तस्य नलस्य हृत् अन्तः करणम् रहः एकान्ते "समम्यर्थे रहोऽव्ययम्" इत्यमरः। त्वां दमयन्तीमुद्दिश्येति शेषः,यत् मन्त्रयते गुप्तं भाषते। दमयन्तीमवाप्य तां प्रत्यालिङ्गनादिकं देहीति यद्विचारं प्रस्तौति इति यावत्। तत् रहस्यभाषणं कर्म मुखं नलमुखं कर्तृ व्यक्तं बहिः यदामन्त्रयते यथाभिलषितं मन्त्रयस्व इत्यनुजानाति त्वया रहसि यदालोचितं तत् अहं मन्मित्रमित्राय कथयामीति भावः। सा नलमुखेन कृतं यत् नलहृदयकृतरहस्यमन्त्रणोद्भेदनम् अत्र सा इति स्त्रीलिङ्ग निर्देशो विधेयप्राधान्यादिति विभाव्यम्। प्रयुक्तश्च तथान्यैरपि" शैत्यं हि यत् सा प्रकृतिर्जलस्य" इति, तद्वैरिपुष्पायुधमित्रचन्द्रसख्यौचिती तस्य नलहृदयस्य योवैरी पुष्पायुधः असारायुधः अथच कामिजनपीडाकरश्च यः कामः तस्य मित्रं सुहृत् यश्चन्द्रः मदनमित्रं तेन सह यत् सख्यं मैत्री तस्य औचिती आनुरूप्यंविद्यते खलु इत्यर्थः, उचितशब्दात्कर्मणि ब्राह्मणादित्वस्य आकृतिगणत्वात् ष्यञ् "हलस्तद्धितस्य "इति (पा.सू.) यलोपः। षिदगौरादिभ्यश्च (पा.सू.) इति ङीष् गुणवचनेति (पा.सू.) सूत्रे कर्मशब्दः क्रियापरः इति **काशिकावृत्तिकारः** ।

एतेनैतदुक्तं भवति -नलस्य हृदयं भैमीविषयमनुसन्धते नलमुखं च स्वमित्रमित्राय कामाय नलहृदयं एवमेवं मन्त्रयते इति स्वगतम्लानतापाण्डुतादिद्वारा रहस्योद्भेदनं करोति इत्ययमंशः अरिमित्रमित्रस्याप्यरित्वादुचितमेवेति।

**अत्र यद्यपि**- आपाततः नलमुखं चन्द्रेण सख्यं किंप्रयोजनमभिसंधाय चकार इति आकांक्षायां हृदयकृतरहस्य प्रकाशनायेति सख्यस्य रहस्यप्रकाशनं फलमिति

**चित्रमीमांसा-**

**अत्र हि हृदयकृतरहस्यमन्त्रणोद्भेदनप्रत्यवमर्शकेन तच्छब्देन् सरव्यौचिती शब्दस्य कर्मार्थकष्यञन्तस्य सामानाधिकरण्यात् शब्दतो रहस्योद्भेदनस्य मुखगतहृदयवैरिमन्मथसुहृच्चन्द्रसरव्यकार्यत्वं प्रतीयते।**

**तथापि तत्र सरव्यस्य रहस्योद्भेदनं प्रति हेतुत्वेनैव उत्प्रेक्षा न तु रहस्योद्भेदनस्य सरव्यफलत्वेन रहस्योद्भेदनं फलमुद्दिश्य सरव्यं कृतमित्युत्प्रेक्षाया असामञ्जस्यात् ।**

**हेतुत्वमात्रेण हेतूत्प्रेक्षाया इव तदुद्देशं विना कार्यत्वमात्रेण फलोत्प्रेक्षाया अनिर्वाहात्।।**

तत्त्वालोकः

प्रतीयत इत्याशङ्कते- **अत्रहीति।**

'सा' इति तच्छब्देन रहस्योद्भेदनस्यैव प्रत्यवमर्शः तस्यैव प्राधान्यात् - **"सर्वनाम्नां उत्सर्गतः प्रधान परामर्शित्वमिति "**न्यायाच्च तेन क्रियार्थ-कष्यञन्तस्य, सामानाधिकरण्येनान्वयात् शब्दरीत्या तादृशसरव्य फलत्वंप्रतीयत इति नच वक्तुं शक्यमनौचित्यप्रसंगात्। प्रत्युत तद्विरुद्धतया हेतूत्प्रेक्षैव वाच्येति समाधत्ते **तथापीति। रहस्येति।**रहस्योद्भेदनोद्देशेन सरव्यं कृतं चेत् सोपाधिकतया अधमं स्यात्तत्स-रव्यमित्यसामञ्जस्यम्।

नच- रहस्योद्भेदनं प्रति सरव्यस्य हेतुत्वे उत्प्रेक्षिते फलतःसरव्यफलत्वं रहस्योद्भेदे स्थितमेवेति विशेषाभावात् सरव्यं प्रति रहस्योद्भेदः फलमितिफलोत्प्रेक्षैवेति उच्यताम् ,यथा घटं प्रति दण्डः कारणम् इत्युक्ते दण्डजन्यत्वं घटे प्रतीयते। तद्वत् 'घटः दण्डजन्यः इत्युक्तेऽपि तथैव बोधः इति किं वैलक्षण्यमिति चेत् तत्राह- **हेतुत्वमात्रेणेति।**

**अयं भावः**- हेतुत्वप्रतिपादकशब्दराहित्येऽपि तत्र प्रतीयमानफलबलात् हेतुता

**चित्रमीमांसा-**

**एवं यत्र हेतौ हेतुत्वप्रतिपादकः शब्दस्तत्रापि क्वचित् औचित्येन हेतूत्प्रेक्षामवधीर्य फलोत्प्रेक्षाङ्गीकार्या दृश्यते यथा-**

**स्मराशुगीभूय विदर्भसुभ्रू**
**वक्षो यदक्षोभि खलु प्रसूनैः।**
**स्रजं सृजन्त्या तदशोधि तेषु**
**यत्रैकया सूचिशिखां निखाय ।।**

तत्त्वालोकः

उत्प्रेक्षितुंशक्या यथा-''स्मरसि स्मरमेखलागुणैः'' इत्यादौ। फलोत्प्रेक्षात्वे कल्पयितव्ये तु यत् फलत्वेनोत्प्रेक्ष्यते तदुद्दिष्टं भवेत् नपुनः कार्यमात्रम् कार्यताव्यापकं फलं कदापि नभवति, अपितु कार्यताव्याप्यमेव। यथा-घटः दण्डकार्यो भवति, अथापि न सः फलमेव तदेव फलमित्युच्यते यदपेक्षया फलान्तरं न विद्यते अथ चोद्दिष्टं भवति। यथा ''चोलस्ययद्भीतिपलायितस्य ''इत्यादौ ललाटत्वग्विपाटनं विधिलिखित-दर्शनोद्देशेनैवेति तद्विपाटनस्य फलं तदेवेति फलोत्प्रेक्षता उचिता ''हृतस्य यन्मन्त्रयत'' इत्यत्र तु मुखेन सहचन्द्रः नलहृदयकृतरहस्योद्भेदनाय संख्यं कृतवान् इत्युक्ते सख्ये सोपाधिकत्व प्रसक्त्या न्यूनता प्रयज्येत। लीकेऽपि

ददाति, प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड्विधं मित्रलक्षणम्।।

इत्युक्तरीत्या परस्परं रहस्यकथनप्रश्न प्रयोजकमपि। पररहस्योद्भेदनफलकत्वं सन्मैत्रीलक्षणम्, अतश्चात्र रहस्योद्भेदनं प्रति सख्यं हेतुरास्तां नपुनः फलम्, तदुद्देशेन सख्याकरणादिति फलोत्प्रेक्षाया निर्वाहाभावादिति।

एवंक्वचिद्धेतुत्वप्रतिपादकशब्दसत्वेऽप्यौचित्यानुरोधात् हेतूत्प्रेक्षामवधीर्य फलोत्प्रेक्षाभ्युपेयेत्याह - **एवं यत्रेति**। उदाहरति-**यथेति**।

प्रसूनैः स्मराशुगीभय विदर्भसुभ्रूवक्षः अक्षोभि यत् तत् तेषु सूचिशिखां निखाय स्रजं सृजन्त्या एकया अशोधि खलु इति योजना।।

**चित्रमीमांसा-**

**अत्र निखनने पूर्वकालत्वरूपकारणत्वप्रतिपादकक्त्वा प्रत्ययसद्भावेऽपि न तद्वैरशोधनं प्रति हेतुत्वेन उत्प्रेक्ष्यं किन्तु वैरशोधनार्थं निखननमिति वैरशोधनमेव फलत्वेनोत्प्रेक्ष्यम्।।**

तत्त्वालोकः

प्रसूनैः कुसुमैः कर्तृभिः, स्मराशुगीभूय मदनसायकता मुपेत्य, विदर्भसुभ्रूवक्षः भैम्याः हृदयम्, अक्षोभि यत् तत् भैमीहृदयपीडालक्षणं वैरम्, तेषु पुष्पेषु, तैरेव पुष्पैरेव, स्रजं मालां सृजन्त्या रचयन्त्या एकया सरव्या, तन्तुषु ग्रथनार्थं मध्ये सूचिशिखां, सूच्यग्रं निखाय, आविध्य अशोधि खलु, निर्यातितं खलु।।

लोके प्रायः यादृशोऽपकारः क्रियते तादृशं प्रत्यपकारं कृत्वा वैरं निर्यातयन्ति जनाः। तद्वत् कामस्यअस्त्रतामुपगम्य कुसुमानि विरहिण्याः दमयन्त्याः हृदयक्षोभकारीण्यभवन्। एवं विधस्य कुसुमकृतापराधस्य एवं विधेनैव तन्मध्यप्रदेशनिखनेन काचित् सखी वैरं निर्यातितवती इति भावः।।

**यद्यप्यत्र-** तेषु सूचिशिखां निखाय अशोधि इति वैरशोधनस्यौत्तरकालिकत्वं निखननस्य पौर्वकालिकत्वं च-

निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम्।
असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः।।

इत्यत्र यथा मृत्योः भयं पक्षपातं च प्रति तादृशकर्णनिरीक्षणे पूर्वकालत्वरूप-कारणत्वं क्त्वा प्रत्ययेन ज्ञायते तद्वदत्रापि वैरशोधनं प्रति निखनने पूर्वकालत्व-रूपकारणत्वं क्त्वाप्रत्ययोऽवगमयतीति वैरशोधनं प्रति निखनने हेतुत्वमुत्प्रेक्ष्यत इति शक्यशङ्कम्। अथापि औचित्यात् वैरशोधनमेव निखननस्य फलमिति फलोत्प्रेक्षैव वक्तव्येत्याह-**अत्रेति**।

अत्र "स्मराशुगीभूयेति" पद्ये। **निखनन इति**। निखाय इत्यत्र खन धातोः समानकर्तृकयोः पूर्वकाले( पा.सू.३.४.२१) इत्यनेन पूर्वकाले क्त्वाप्रत्ययो विहितः सच स्वोत्तरकालिकक्रियायां कार्यतां स्वस्मिन् तत्कारणतां चावगमयति- "विपच्य

**चित्रमीमांसा-**

**सिद्धासिद्धयोरपिसिद्धस्योत्प्रेक्षणीयत्वात्। इह तदुद्देशोत्प्रेक्षणसंभवाच्च।।**

**यथावा-**

**अस्यैव सर्गाय भवत्करस्य**
**सरोजसृष्टिर्मम हस्तलेखः।**

तत्त्वालोकः-

घटो भवति'' इत्यादिवत्। अथापि औचित्यानुसारादत्र वैरशोधनमेव फलत्वेनोत्प्रेक्ष्यते नपुनर्निखनने वैरशोधनं प्रति हेतुत्वेनति भावः।।

किं तदौचित्यं यदादाय हेतुत्वेनोत्प्रेक्षा परित्यज्यत इत्याशंकायामाह- **सिद्धेति।**

सिद्धासिद्धयोरपि लोकानुभवगोचरागोचरयोर्मध्ये लोकानुभवगोचर स्यैवोत्प्रेक्षणीयत्वात्। उत्प्रेक्षितुं योग्यत्वादित्यर्थः लोकेऽपि येन केनचिद्वैरे जाते तच्छोधनाय व्यापृतिरिति वैरशोधने फलत्वमेव प्रसिद्धमिति तदेवोत्प्रेक्ष्यम्। इह निखननस्य वैरशोधनं फलमित्युत्प्रेक्षणसंभवाच्चेति संभवौचित्ये प्रदर्शिते।।

यद्वा- सिद्धासिद्धयोः प्रमाणान्तरसिद्धासिद्धयोः मध्ये प्रमाणान्तरसिद्धस्य उत्प्रेक्षणीयत्वात् इत्यर्थः।। यदि तु सिद्धासिद्धयोः सिद्धस्योत्प्रेक्षणीयत्वादित्यस्य न पूर्वोक्तोऽर्थः। अपि तु ततोऽन्य एव। तथाहि-सिद्धत्वं च क्रियान्तराकांक्षोत्थापकतावच्छेदकत्वम् साधनाकांक्षोत्थापकतावच्छेदकत्वं वा, तादृशंघञादिनिबन्धनम्। साधनंच क्रियान्तराकांक्षानुत्थापकतावच्छेदकत्वं, साधनाकांक्षानुत्थापकतावच्छेदकत्वं वा। तत्वं च पचतीत्यादि धातुरूपविबन्धनम्। उक्तं च **वैयाकरणैः-**

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धन :।। इति

इत्थं चात्र वैरशोधनस्यैव साध्यत्वं निखननस्यैव सिद्धत्वं पूर्वकालत्वं चेति वैरशोधनफलकं निखननं हेतुत्वेनोत्प्रेक्ष्यम् भवति नतु निखननस्य वैरशोधनं फल-मित्यागृह्यते तदा उदाहरणान्तरमाह- **अस्यैवेति।**

**चित्रमीमांसा-**

**इत्याह धाता हरिणेक्षणायां**

**किं हस्तलेखीकृतया तयास्याम्॥**

तत्त्वालोकः-

हे भैमि, अस्यैव भवत्करस्य सर्गाय सरोजसृष्टिः मम हस्तलेखः अभवत् इति धाता आह, इत्थं सति अस्यां हरिणेक्षणायां हस्तलेखीकृतया किम्? इति योजना।

हे भैमि, हे दमयन्ति! अस्यैव कोमलतम इति प्रत्यक्षीक्रियमाणस्यैव, भवत्करस्य भवत्याः हस्तस्य सर्गाय स्रष्टुम्, सरोजसृष्टिः तामरससृष्टिः, मम स्रष्टुः हस्तलेखः अतिरुचिर वस्तुनिर्माणाय प्रथमतः शुष्केष्टिवत् क्रियमाणः पाण्डुलेखः अभवत् इति धाता जगतः स्रष्टा आह-ब्रवीति स्म इत्यर्थः, यद्यपि "किमिच्छसीतिस्फुटमाह माधवः" इत्यादिषु न स्मशब्दोपादानम् अथापि आहेति भूते प्रयुक्तः तद्वदत्रापीति न विभाव्यम् ब्रुवः पञ्चानामादितः आहो ब्रुवः ( )इति लस्येव ब्रुवः पञ्चानां आहादेशविधानात् उक्तप्रयोगो नोपपद्यते। अतश्च स्म इत्यध्याहृत्य प्रयोगसाधुता सम्पाद्या। तथासति भूतार्थविवक्षायामपि लट् स्मे (पा.सू.३-२-११८) इत्यनुशासनेन तत्साधुता सुशका। अत एव वामनः- अनुकरोति भगवतो नारायणस्य इत्यत्रापि स्मशब्दः कविना प्रयुक्तः। लेखकैस्तु प्रमादान्न लिखित इत्याह (का.सू.५.२.४४) **केचित्तु**- आहेति तिङन्तप्रतिरूपकमव्ययमिति समादधते। अत्रैव **दीक्षितानां** तात्पर्यमिति जानीमः। यतश्च तद्विद्यैः अव्ययसंज्ञासूत्रे **मनोरमायाम्** "आहेत्युवाचेत्यर्थे तिङन्तप्रतिरूपकम्" इत्युक्तम् , इत्थं सति अस्यां हरिणेक्षणायां दमयन्त्याम्, हस्तलेखीकृतया लिखितया अथ च दमयन्त्याः करकमलयोः कमलरेखा-विन्यासेनाभ्यस्तया तया सरोजसृष्ट्या किम्? न किमपि साध्यमस्तीति भावः। एतेन भैमीकरयोः कमलादप्यतिमनोहरत्वम्, संराज्ञोत्वसूचकरेखाङ्कितत्वं च सूचितं भवति।

अत्र हस्तलेखीकृतया सरोजसृष्ट्या इति करणतृतीयाश्रुत्या विधातृकर्तृककमलसृष्टिगत वस्त्वन्तरसृष्टिप्रयोजकपाण्डुलेखत्व प्रकाशनं प्रति हस्तलेखीकृतसरोजसृष्टेः करणत्वमिति तादृशप्रकाशनहेतुत्वोत्प्रेक्षाङ्गीकारे किं

**चित्रमीमांसा-**

**अत्र हस्तलेखीकृतया सरोजसृष्ट्येति करणविभक्तिसद्भावेऽपि न सा विधातृकर्तृकसरोजसृष्टिगतहस्तलेखत्व प्रकाशनं प्रति हेतुत्वोनोत्प्रेक्ष्यते किन्तु तत्प्रकाशनार्थं सरोजसृष्टिः हस्तलेख-करणमिति तत्प्रकाशनमेव फलत्वेनोत्प्रेक्ष्यम्।।**

**किं बहुना यत्र हेतुत्वप्रतिपादकश्शब्दः तस्यैव फलत्वम् औचित्येन क्वचि दङ्गीकार्यं दृश्यते।यथा-**

तत्त्वालोकः-

वाधकमित्याक्षिप्य निरस्यति -**अत्रेति।**

अत्र "अस्यैव सर्गाय "इति पद्ये।**सरोजसृष्ट्येति** सरोजसृष्टिपरामर्शकिन तया इति करणे तृतीया श्रूयते तयेति भावः **किन्त्विति**।तत्प्रकाशनार्थं = हस्तलेखत्व-प्रकाशनार्थं , सरोजसृष्टिः हस्तलेखकरणमिति औचित्येनाभ्युपगते किमर्था सरोज सृष्टिः इति फलाकांक्षायां हस्तलेखत्वप्रकाशनमेवेति तदेवोत्प्रेक्ष्यम् । लोकेऽपि सुधाकर-चित्रकरादयः स्वीयहस्तलेखप्रकाशनोद्देशेन प्रतिमादिकं किमपि निर्माय प्रदर्शयन्ति। एवमेव यागादौ कुशलतासम्पत्तये शुष्केष्टिरपि याज्ञिकैः कार्यते तद्वदत्रापीति भावः।।

यत्र हेतुत्वप्रतिपादकशब्दसमभिव्याहारस्तत्र औचित्यानुसरणात् हेतूत्प्रेक्षामुपेक्ष्य फलोत्प्रेक्षाभ्युपेयत इत्यत्र न किमप्याश्चर्यम्, यतो यश्शब्दो यत्र हेतुतां गमयति तस्यैव फलत्वमौचित्येनाङ्गीकार्यं दृश्यते इति तदुदाहर्तुमवतरणमाह **किं बहुनेति**। तदुदाहरति **-यथेति**। इदं **काव्यानुशासने वाग्भटेन** उदाहृतम्।

युवा तन्वङ्ग्याः स्तनावालोक्य तयोरन्तरनिर्मग्नां दृष्टिम् उत्पाटयन्निव शिरःकम्पयते इति योजना।।

युवा=तरुणः तन्वङ्ग्याः तनु अङ्गं यस्याः सा तन्वङ्गी कृशाङ्गी तस्याः इत्यर्थः "स्वांगाच्चोपसर्जनात्" इति सूत्रस्थात् "अङ्ग गात्र कण्ठेभ्यो वक्तव्यम्" इति

**चित्रमीमांसा-**

**एवमनया दिशाअन्यत्रापि निमित्तानुपादानं संभवदूहनीयम्।**

**अपि च-**

**यथोपात्तनिमित्तत्वमनुपात्तनिमित्तता।**
**प्रत्येकं वर्तते तद्वत्समुच्चित्यापि दृश्यते।।**

**यथा-**

तत्त्वालोकः-

हेतूत्प्रेक्षादिकमित्यादिपदात् फलोत्प्रेक्षापरिग्रहः। एवमन्यत्राप्यनुपात्तनिमित्तेषु यथौचिति हेतुफलोत्प्रेक्षे ऊह्ये इत्याह - **एवमिति**।

इत्थं हेतुफलोत्प्रेक्षासु अनुपात्तनिमित्तकत्वं सोदाहरणं प्रदर्श्य स्वरूपोत्प्रेक्षास्वपि अविशिष्टोत्प्रेक्षायामुपात्तनिमित्तकान्यनुपात्तनिमित्त कानिचोदाहरणानि पृथक् पृथक् प्रदर्श्य विशिष्टोत्प्रेक्षायां क्वचिद्विशेष्योत्प्रेक्षायां निमित्तोपादानं विशेषणांशोत्प्रेक्षायां निमित्तस्यानुपादानमिति उपात्तनिमित्ता अनुपात्तनिमित्ताच विशिष्टोत्प्रेक्षा एका। तथा क्वचिद्विशषणोत्प्रेक्षायां निमित्तोपादानं विशेष्योत्प्रेक्षायां तु तदनुपादानं च इत्यपरा विशिष्टोत्प्रेक्षा। तथा विशेषणविशेष्योत्प्रेक्षयोः उभयोरपि निमित्तोपादानमिति इतरविशिष्टोत्प्रेक्षा इति भेदोऽप्यस्यां संभवति अथापि एतासामुत्प्रेक्षाणामसंग्रहः प्रसज्यते। नचैतदिष्यते लक्ष्येषु तथादर्शनादिति मनसि निधाय संक्षेपरुचीनां कारिकया संगृह्णाति - **अपिचेत्यादिना**।

स्वरूपोत्प्रेक्षासु "स वः पायादिन्दुः" इत्यादौ यथोपात्तनिमित्तता यथा च "वर्षातपानावरणं विहाय" इत्यत्र अनुपात्तनिमित्तता प्रत्येकं वर्तते तद्वत् "मुनिद्रुमः कोरकितः" इत्यादावपि विशिष्टोत्प्रेक्षोदाहरणेषु उपात्तानुपात्तनिमित्तसमुच्चयकत्वमपि लक्ष्येषु दृश्यते। अतश्च भवदुक्तं परिगणनं न्यूनमिति भावः।।

तत्र विशेष्योत्प्रेक्षायां उपात्तस्य निमित्तस्य विशेषणांशे अनुपात्तस्य निमित्तस्येति समुच्चितयोस्तयोरुदाहरणं प्रदर्शयति-**यथेति**।

**चित्रमीमांसा-**

**मुनिद्रुमः कोरकितोऽसितद्युतिः**
**वनेऽमुनामन्यत सिंहिकासुतः।**
**तमिस्रपक्षत्रुटिकूटभक्षितं**
**कलाकलापं किल वैधवं वमन्॥**

तत्त्वालोकः-

भैमीं सञ्जिगमिषुणा नलेन तदनुध्यानात् विरहम् असहमानेन विलासवने अगस्त्यवृक्षदर्शनाद्भीतेन अयम् अगस्त्यवृक्षः एवमुत्प्रेक्षित इत्याह- **मुनिद्रुम इति।**

अमुनावने कोरकितः असितद्युतिः मुनिद्रुमः तमिस्रपक्षत्रुटिकूटभक्षितं वैधवं कलाकलापं वमन् सिंहिकासुतः इति अमन्यतेति योजना॥

अमुना अनुत्पन्नभैमीसमागमदूयमानमानसेन नलेन, वने यथाकथंचिन्मनश्शान्तिमनुभवितुमुपयुक्ते विलासवने, कोरकितः संजातकलिकः कोरकशब्दात् तदस्य सञ्जातं तारकादिभ्य इतच् (पा.सू. ५-२-३६) इति इतच्प्रत्ययः। असितद्युतिः असिता श्यामा द्युतिः यस्य सः मुनिद्रुमः अगस्त्यवृक्षः (अरळेगिड इति कर्णाटभाषायाम्) किमित्ययमन्यत इत्यत्राह - **तमिस्रेति।** तमिस्रपक्षः कृष्णपक्षः तस्मिन् या त्रुटिः चन्द्रकालारूपलेशांशः तत्कूटेन व्याजेन भक्षितं ग्रस्तम्। यद्वा- तमिस्रपक्षस्य या त्रुटिः एकदेशः अमावास्यारूपः तस्यां यत्कूटं माया तेन भक्षितं ग्रस्तमित्यर्थः। "लेशसंशययोः त्रुटिः",

कूटोऽस्त्री पुंजमायाघेष्वद्रिशृङ्गेषु भेदयोः।
अयो घनेऽ नृते फाले दम्भे निश्चलयन्त्रके॥"

इति **वैजयन्त्याम्**॥ वैधवं इन्दुसम्बन्धिनं कलाकलापं कलासमूहं वमन् उद्वमन् स्थितः सिंहिकासुतः राहुरिति अमन्यत समभावि॥

अत्र राहुरिति अमन्यतेति मननक्रियायाः परिचायकं वमनं अतएव "लक्षणहेत्वोः (३-२-१२६) इति लक्षणे शतृप्रत्ययः। अतएवच कर्तृकर्मणोः कृतीति प्राप्ता षष्ठी" न लोकाव्ययेति निषिद्धा॥

## तत्त्वालोकः

**यद्वा-** तमिस्रं तमः तद्युक्तः पक्षः तमिस्रपक्षः पञ्चदश दिनानि इति मध्यमपदलोपी समासः। तस्मिन् त्रुटिः एकदेशः एकैका कला तस्याः कूटेन व्याजेन भक्षितं ग्रस्तमित्यर्थः। कृष्णपक्षरात्रिषु प्रतिरात्रं एकैककलाभक्षणव्याजेन क्रमशः अमावास्यां यावत् ग्रस्तं वैधवं इन्दुसम्बन्धिनं कलाकलापं षोडशकलाः ततोऽधिका वा वमन् उद्गिरन् सिंहिकासुतः राहुरित्यमन्यतेत्युत्प्रेक्षा॥

**नन्वत्र-** तमिस्रशब्दः तमोमात्रार्थक इति विवृतः। सच न युक्तः ज्योत्स्ना तमिस्रा---(पा,सू.५-२-११४) इति मत्वर्थे तन्निपातनात्। सत्यम् अथापि- "तमिस्रंतिमिरं तमः" इति, तमिस्रा तु त्रियामियम्। ध्वान्तरात्रौ तथा रात्रौ स्यादन्धतमसेऽत्वना। तमो मात्रे परेऽथास्त्री इति **अमरकारनानार्थार्णवसंक्षेपकाराभ्यामभिधानात्**॥

तमिस्रनीलाम्बरसंवृताङ्गी
  श्यामा बभौ किञ्चिदतीत्य सन्ध्याम्।
प्राचीनशैले समयान्निगूढं
  समुद्यता चन्द्रमिवाभिसर्तुम्॥

**इत्यभियुक्तप्रयोगप्रामाण्यात्** अत्रैव रात्रिवाचकश्यामपदसमभिव्याहारानुरोधेन **ग्रन्थकृतैव** तमिस्रेण तमसैव नीलाम्बरेणेतिव्याख्यानप्रामाण्यात् तथाव्याख्यानस्य उचितत्वाच्च तमिस्रशब्दः तमोमात्रवाच्यपि इति निश्चिनुमः॥

**एतेन-** तमिस्रं निमिरं तमः, इत्यमरोक्तिमुपादाय समूह समूहिनो-रभेदोपचारान्निर्वाहं कृतवन्तौ **पदमञ्जरीशेखरकारौ** हरदत्तनागेशौ लक्षणैकचक्षुष्कौ जाताविति बोध्यम्। तत्रार्थे तादृशप्रयोगस्य दर्शनात्।

**यदितु** - तमिस्रश्चासौ पक्षश्चेति कर्मधारयः क्रियेत तदा अणप्रकरणे ज्योत्स्नादिभ्यः उपसंख्यानम् इति **वार्तिकात्** अणि तामिस्र इति भाव्यम्। नपुनः तमिस्र इति तमिस्रः तमिस्रमितिवा तदा भवति यदा भवतिसंज्ञा। न चात्र तमिस्रशब्दः पक्षे रूढः तथा सति पक्षपदपौनरुक्त्यप्रसंगात्। तमिस्रशब्दस्य कथंचित्प-क्षवाचित्वाभ्युपगमे पुंवद्भावो न प्राप्नोत्यभाषित पुंस्कत्वात्। भाषितपुंस्कत्वे हि

## तत्त्वालोकः

पुंवत्कर्मधारयेति। (पा.सू.६-३-४२) पुंवद्भावो विहितः, किंच पक्षवाचित्वे तामिस्र इत्येव युक्तः "ज्योत्स्नादिभ्यः उपसंरव्यानम्" इत्यत्रत्य भाष्ये- "ज्यौत्स्नः, तामिस्रः कौण्डलः वैपादिकः" इति भाषितत्वात्। अतएव **बृहच्छब्देन्दुशेरखरे** तामिस्रः कृष्णपक्षः नरकविशेषश्च इति व्याव्यातम्।। तदातु प्रतिक्षणमुद्भूतावयव भेदविवक्षामाश्रित्य तमांसि तिष्ठन्ति अस्यामिति तमिस्रा रात्रिः इत्यर्थे ज्योत्स्ना तमिस्रेति मत्वर्थीयो रक् निपात्यते ।ततश्च तमिस्राः रात्रयोऽस्मिन् पक्षे सन्तीति विवक्षायां "अणप्रकरणे ज्योत्स्नादिभ्यः" इति वार्तिकान्मत्वर्थीयोऽण्प्रत्ययः।तथापि तामिस्रपक्षइत्येव भवितव्यम् नपुनस्तमिस्रपक्ष इति।

**नच**- मत्वर्थीयप्रत्ययान्तात् पुनरपि तस्मादेव (प्रकृतेः) मत्वर्थीयोऽण् प्रवर्तते इति वाच्यम्। असरूपप्रत्ययस्यैव निषेधात्। अतएव - अहिच्छत्रे भवः आहिच्छत्रः आहिच्छत्रे भवः आहिच्छत्रीयः इति शैषिकादणन्ताच्छैषिकश्छो भवति असरूपत्वात्। सरूपस्तु न भवति। तद्यथा-दण्डी अस्यास्तीति दण्डिकः।दण्डिकः अस्यास्तीति पुनष्ठन् न भवति। तद्वदत्रापि। उक्तं च सन्प्रकरणे महाभाष्ये-

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते।। इति।

**यदपि**-तमस्समूहः तमिस्रम्। ज्योत्स्ना तमिस्रा-इति निपातनान्मत्वर्थीयो रः इत्यादि **ज्ञानेन्द्रसरस्वतीभिः तत्त्वबोधिन्याम्** अभिहितम्। तदपि ज्योत्स्नेत्यादिना प्रवर्तमानो रः किं समूहार्थः उत तदस्यास्त्यस्मिन्नित्यर्थेवेति सन्देहग्रस्तमिति अत्रत्यतमिस्रशब्दः तमोमात्राभिधायीइत्युपगम एवोचित इति तथा व्यारव्याने च कोशाभियुक्तप्रयोगादिकं जागर्त्येव इत्यलमतिचर्चयेति दिक्।।

अत्र कोरकनिर्गमनविशिष्टे मुनिद्रुमे विषये विधुकलाकलापवमनविशिष्ट राहुरूपो विषयी स्वरूपेणोत्प्रेक्ष्यते तत्र मुनिद्रुमे विषये विशेष्ये राहुरूपविशेष्योत्प्रेक्षा एका। मुनिद्रुमविशेषणेषु कोरकेषु बिधुकलाकलापरूपविशेषणोत्प्रेक्षा अपरा। तयोर्विशेष्यो-त्प्रेक्षायां मुनिद्रुमराहूभयसाधारणम् असितद्युतित्वं निमित्तमुपात्तम्। विशेषणोत्प्रेक्षायां कोरकविधुकलासाधारणं वक्रत्व - सितत्वादिकं निमित्तं नोपात्तम् अथापि

**चित्रमीमांसा-**

**अत्र कोरकनिर्गमनविशिष्टस्य मुनिद्रुमस्य विधुकलाकलाप वमनविशिष्टराहुरूपत्वे उत्प्रेक्ष्यमाणे विशेष्योत्प्रेक्षा निमित्तमसित वर्णत्वमुपात्तम्। विशेषणोत्प्रेक्षानिमित्तं तु कोरकविधुकला साधर्म्यादिरूपं नोपात्तम्।।**

**यथा वा-**

**त्वत्प्राङ्गणे सुन्दर पाण्डयदेव**
**मतंगजाः शृङ्खलिता (भवन्ति) विभान्ति।।**
**आवासदानादरि भूपतीनाम्**
**आशान्तशैला इव सापराधाः।।**

तत्त्वालोकः

विशिष्टोत्प्रेक्षैवेति उपात्तानुपात्तोभय विधसमुचितधर्मनिमित्ता स्वरूपोत्प्रेक्षा। अत्राव्याप्तिरिति उपपादयति - **अत्रेत्यादिना**। स्पष्टोऽर्थः।

पूर्वोदाहरणे विशेष्योत्प्रेक्षानिमित्तमुपात्तम्। विशेषणोत्प्रेक्षानिमित्तन्तु नोपात्तमित्त्युक्तम्। सम्प्रति तद्वैपरीत्येन विशेषणोत्प्रेक्षानिमित्तमुपादाय विशेष्योत्प्रेक्षाया निमित्तानुपादाने सत्यपि विशिष्टोत्प्रेक्षात्वं समुचितनिमित्तत्वं चेति प्रदर्शयितुमुदाहरति - **यथावेति**।

हे सुन्दर पाण्डयदेव! त्वत्प्राङ्गणे शृङ्खलिताः मतंगजाः अरिभूपतीनाम् आवासदानात् सापराधाः आशान्तशैला इव विभान्ति इति योजना।।

सुन्दर मनोज्ञ, पाण्डयदेव पाण्डयदेशाधिपते, त्वत्प्राङ्गणे भवदीयास्थानाजिरे, शृङ्खलिताः संजातश्रृङ्खलाः निगडिता वा मतङ्गजाः गजाः, अरिभूपतीनां विपक्षपार्थिवानाम्, आवासदानात् वासस्थानप्रदानं निमित्तीकृत्य, सापराधाः कृतागसः, अतएव श्रृङ्खलिता श्रृङ्खलाकारेणपृथिवीं परितो वर्तमानाः, आशान्तशैला इव दिगन्ताद्रय इव, विभान्ति परिदृश्यन्ते, पाण्डयराजस्य आवासभूमिं परितो मतंगजावस्थित्युक्त्या महदैश्वर्यशालित्वमुपनिबद्धं भवति।।

**चित्रमीमांसा-**

**अत्र विशेषणभूतसापराधत्वोत्प्रेक्षानिमित्तं शृङ्खलितत्वमुपात्तम्। विशेष्यशैलरूपत्वोत्प्रेक्षानिमित्तमौनादिकं नोपात्तम्। यथावा-**

**अजस्रभूमीतटकुट्टनोत्थितैः**
**उपास्यमानं चरणेषु रेणुभिः।**
**रय प्रकर्षाध्ययनार्थमागतैः**
**जनस्य चेतोभिरिवाणिमाङ्कितैः॥**

**तत्त्वालोकः-**

अत्रोदाहरणे शृङ्खलितत्वविशिष्टमतंगजेषु सापराधत्वविशिष्ट शैलतादात्म्यं सम्भाव्यते अतश्च विशिष्टोत्प्रेक्षा तत्रापि विशेष्ये मतंगजे शैलरूपत्वोत्प्रेक्षायां औन्नत्यादिनिमित्तं नोपात्तम्। विशेषणभूतसापराधत्वोत्प्रेक्षायां तु शृङ्खलितत्वमुपात्तमिति विशेषणोत्प्रेक्षांशेउपात्तनिमित्ता, विशेष्योत्प्रेक्षांशे अनुपात्तनिमित्तेति समुचितनिमित्ताविशिष्टोत्प्रेक्षा। अतश्च भवदुक्तं परिगणनं न्यूनम् असंग्रहप्रसंगात्। तदेतन्मनसि निधाय आह **-अत्रेत्यादिना।**

अत्र="त्वत्प्रांगण" इत्युदाहरणे, विशेषणभूतसापराधत्वोत्प्रेक्षायां विषय-विषयिविशेषणभूतं यत्सापराधत्वं तादृशोत्प्रेक्षायां निमित्तं शृंखलितत्वमुपात्तं, लोकेऽपि अपराधिनः खलु शृंखलया निगडिता भवन्ति मतंगजेषु औन्नत्याऽचालनीयत्वादिकं निमित्तीकृत्य शैलरूपत्वमुत्प्रेक्षणीयमिति तच्च न शब्दतः उपात्तम् अपि तु उन्नेयम्॥

**यद्यपि-** मतंगजेषु शैलरूपत्वोत्प्रेक्षायां शृंखलितशब्दबोध्ययोः सञ्जातशृङ्खलत्व -शृङ्खलाकारावस्थानयोः अभेदाध्यवसायेन निमित्तस्योपादानमेव संभवति अथापि न तन्मुख्यं संभवति। अतश्च औन्नत्यादीनामनुपात्तानां निमित्तत्वमुपन्यस्तमिति बोध्यम्॥

एवं विशेषणविशेष्ययोरुत्प्रेक्षायां निमित्तस्योपादाने विशेषणविशेषणोत्प्रेक्षायां निमित्तानुपादाने चेति समुचितोत्प्रेक्षोदाहरणं प्रदर्शयति- **यथावेत्यादिना।**

**चित्रमीमांसा-**

**अत्र विशेष्यभूतचेतोरूपत्वोत्प्रेक्षायां ''अणिमांकितै''रिति निमित्तमुपात्तम् ''अध्ययनार्थमागतै''रिति तद्विशषणोत्प्रेक्षायामपि चरणोपासनारूपं निमित्तमुपात्तम्। रयप्रकर्षेत्यध्ययनविशेषणे निमित्तं चेतसां वर्णनीयादश्वात् अपकृष्टरयत्वं नोपात्तम् । एवमन्यत्रापि निमित्तोपादानानुपादानसमुच्चये उदाहर्तव्यम्।**

तत्त्वालोकः-

सः रयप्रकर्षाध्ययनार्थमागतैः अणिमाङ्कितैः जनस्य चेतोभिरिव स्थितैः अजस्रभूमीतटकुट्टनोत्थितैः रेणुभिः चरणेषूपास्यमानं सिन्धुजं हयम् आरुरोह इति योजना । सः कामपीडितः तत्प्रहाणाय बहिं : प्रस्थितो नलः रयप्रकार्षाध्ययनार्थं - रयप्रकर्षस्य वेगातिशयस्य अध्ययनार्थं शिक्षायै आगतैः आगतैरिव स्थितैः, अणिमांकितैः अणिमा अणुपरिमाणसदृशं सूक्ष्मरूपं तेन अङ्कितैः लक्षितैः,जनस्य प्रेक्षतो लोकस्य, चेतोभिरिव स्थितैरित्यर्थः मनसोऽणु परिमाणता नैयायिकसम्मता, अजस्रभूमीतटकुट्टनोत्थितैः अजस्रं निरन्तरं भूम्याः तटस्य तलस्य कुट्टनेन चूर्णनेन उत्थितैः उद्गतैः रेणुभिः धूलिभिः, चरणेषु पादेषु उपास्यमानं सेव्यमानं सिन्धुजं सिन्धुदेशजातं सप्तम्यां जनेर्डः (पा.सू.३-२-१७) इति डः । हयमश्वं आरुरोह इत्यर्थः ।।अत्र भूमिशब्दस्य इकारान्तत्वेऽपि बह्वादिभ्यश्च (पा.सू.४-१-४५) इति सूत्रपठितात् ''कृदिकारादक्तिनः'' इति **गणसूत्रतो** ङीष्।।

अत्र रयप्रकर्षाध्ययनार्थागमनविशिष्टचेतस्तादात्म्यं अजस्रभूमीतट कुट्टतोत्थितत्वविशिष्टरेणुषु उत्प्रेक्ष्यते । तत्र रेणुषु विशेष्यभूतचेतोरूपत्वोत्प्रेक्षायां अणिमांकितत्वं निमित्तमुपात्तम्। तथा तेष्वेव रेणुषु अध्ययनार्था-गमनरूपविषयिविशेषणमप्युत्प्रेक्ष्यते। तत्र चरणसेवारूपं निमित्तमुपात्तम्। चेतस्सु अपकृष्टरयत्वे सति तदतिशयाधानाय तैरेव चरणसेवा क्रियते। अतश्च चेतस्सु रयप्रकर्षरूपविशेषणमपि उत्प्रेक्ष्यं भवति। तत्रच वर्णनीयापेक्षया चेतस्सु अप्रकृष्टरयत्वं निमित्तं तच्च नोपात्तम्। इत्थंच विशिष्टोत्प्रेक्षायां उपात्तानुपात्तनिमित्त समुच्चय भेदःउत्प्रेक्षानिमित्तगणनामर्हति। साच न कृता तैरिति मत्वा आह- **अत्रेत्यादिना।**

**चित्रमीमांसा-**

**तस्मान्न्यूनः सतृणाभ्यवहारश्चायं विभागः।।**

**अतोऽत्र विषयिणो जात्यादिरूपेणाष्टधा विभागम् धर्मस्य गुणक्रियारूपेण विभागंचापहाय विभागान्तरलभ्याः यावन्तो भेदाः तावन्तएव चमत्कारिणः।**

**स्वरूप-हेतुफलोत्प्रेक्षासु तु विधान्तरेणाप्यवान्तरभेदाः सम्भवन्ति। यथा-स्वरूपोत्प्रेक्षा द्विविधा, अविशिष्टोत्प्रेक्षा, विशिष्टोत्प्रेक्षाचेति।**

तत्त्वालोकः-

इत्थंच विशिष्टोत्प्रेक्षाणामसंग्रहप्रसङ्गः अपरिहार्य इति भावः।। बहून्युदाहरणानि एवंविधानि उलभ्यन्त इत्याह- **एवमिति।**

निगमयति- **तस्मादिति।** तस्मात् उक्तरीत्या विभागोपगमे "मनसि सन्तमिव" इत्याद्यनेकलक्ष्यासंग्राहक त्वाद्धेतोः, न्यूनः। अथच विषयिणो जात्यादिरूपेणाष्टधाविभागस्य, गुणक्रियादिरूपेण च धर्मस्य यो विभागःकृतःतस्यच वस्तुतः अचमत्कारित्वेनानुदाहार्यत्वमेव अथाप्युदाहृतम्। तेनचैषामविवेकित्वं सिद्धम्। अविवेकिनो हि उपादेयानुपादेयविभागशून्या जाता इति तत्कृतविभागोऽपि सतृणाभ्यवहारतुल्य इति भावः। सतृणाभ्यवहारशब्दः अविवेके गौणतया प्रयुक्तः।

प्राचीनप्रदर्शितविभागस्य अयुक्तत्वे केषामुत्प्रेक्षाभेदानां चमत्कारिता केषां तद्विधुरता याभ्यां चोपादेयानुपादेयते ग्राह्ये इत्याशंकायामाह - **अतोऽत्रेति।**

एवंच स्वरूप-हेतु-फलभेदेन वर्तमानानां तिसृणां चमत्कारजनकत्वं नान्यासामित्युक्तं भवति। तर्हि पूर्वमुदाहरणानि तासां किमर्थं प्रदर्शितानि इति चेत् प्राचामनुरोधात्तथा प्रदर्शितानि। परन्तु प्राङ्भिः परिगणनीयाः उत्प्रेक्षाः न परिगणिताः नापि प्रदर्शिताः। तदयोग्याः परिगणिताःप्रदर्शिताश्चेति बोध्यम्।।

इत्थं **सर्वस्वकाराद्यभिमतोत्प्रेक्षाप्रविभागप्रकारं सन्दूष्य तैरनुल्लिखितान् स्व**-रूपहेतुफलोत्प्रेक्षावान्तरप्रभेदान् प्रदर्शयितुमुपक्रमते **स्वरूपेति**। तासु

**चित्रमीमांसा-**

**यत्र विषयिणो विशेषणमुपात्तमपि नोत्प्रेक्षणीयमवगम्यते तद्विषयरूपस्य तन्निमित्तरूपस्य वा विषयविशेषणस्याभावात् किन्तु तद्विशेषणं विषयिणि विधान्तरेणोपयुज्यते सा अविशिष्टोत्प्रेक्षा।।**

तत्त्वालोकः

स्वरूपोत्प्रेक्षायाः अवान्तरभेदावेव प्रदर्शयति-**यथेति**। अविशिष्टोत्प्रेक्षां लक्षयति-**यत्रेति**। यत्र यादृशोदाहरणे "रतेर्गृहीतेत्यादौ" विषयिण उपमानस्य विशेषणमुपात्तमपि नोत्प्रेक्षणीयं अवगम्यते उत्प्रेक्षार्ह इति न ज्ञायते तदेव कुत इत्याह -**तदिति**। तद्विषयरूपस्य उत्प्रेक्षाविषयिविशेषणोत्प्रेक्षाधिकरणस्य तन्निमित्तरूपस्य वा तादृशविशेषणोत्प्रेक्षायां निमित्तस्य वा विषयविशेषणस्य उपमेयविशेषणस्याभावात् वाच्यतया गम्यतया वा अनवगमादित्यर्थः। तर्हि विषयिण्यपि वा किमर्थं विशेषणोपादानं अनुपयोगादित्याशंकायामाह- **किन्तु इति**। तद्विशेषणं विषयिविशेषणं, विषयिणि विधान्तरेण यत्किञ्चित्कार्योपपादकतया उपमादिव्यावर्तकतया वा उपयुज्यते तेन अप्रयोजकोपमानविशेषणोपादाननिबन्धनस्यापुष्टार्थत्वस्य दोषस्य प्रसक्तिर्नास्तीति सूचितम्।

**किंच-** विषयिविशेषणोपादानस्य तत्तादात्म्यसंभावनाहेतुत्वमिति "बालेन्दुवक्राणि" इत्यादौ ग्रन्थकृतैव उत्प्रेक्षोपक्रमे निरूपणात् उपमानिरासकत्वाच्च तत्र अविशिष्टोत्प्रेक्षा, परन्तु विषयिविशेषणसंभावनानुयोगिनः तत्सम्भावना हेतोर्वाऽनुपादाने अप्रतीतौ वा तत्वम्।

**अयंभावः-** "ज्यानिनादमभिगृह्णती तयोः" इत्यत्र यथा कालिकाताटकयोरुपमायां निबद्धायां उपमानोपमेययोः बलाकाकपालकुण्डलयोः विशेषणयोरुपादानेऽपि न विशिष्टोपमा। अपितु अविशिष्टोपमैव उपमानांशे निबिडत्वविषेषणमधिकमुपात्तं सत् उपमाने कालिकायां बहुलक्षपाछविरित्यस्य साधारणधर्मवत्तासंपादनार्थत्वेन यथा आधिक्यदोषप्रयोजकत्वं नास्ति तद्वदत्रापि उपमानविशेषणस्य विधान्तरेणोपपादकत्वात् अविशिष्टोत्प्रेक्षेति । "उदाहरणं तु" रतेर्गृहीतानुनयेनकामम्" इति अनुपदं प्रदर्श्यते।।

**चित्रमीमांसा-**

**यत्र तु विषयिणो विशेषणमप्युत्प्रेक्षणीयमवगम्यते तद्विषयरूपस्य तन्निमित्तरूपस्य वा विषयविशेषणस्य उपादानात् सा विशिष्टोत्प्रेक्षा।।**

**तत्राद्या यथा -**

**रतेर्गृहीतानुनयेन कामं**
**प्रत्यर्पितस्वाङ्गमिवेश्वरेण।**
**काकुत्स्थमालोकयतां नृपाणां**
**मनो बभूवेन्दुमती निराशम्।।**

तत्त्वालोकः-

अविशिष्टोत्प्रेक्षास्वरूपं प्रदर्श्य विशिष्टोत्प्रेक्षां लक्षयति **यत्रत्विति।**

यत्र तु "मुनिद्रुमः कोरकितोऽसितद्युतिः" इत्यादिप्रागुदाहृते पद्ये विषयिणो विशेषणमपि विधुकलादिकमप्युत्प्रेक्षणीयमवगम्यते, तद्विषयरूपस्य कोरकादेः, तन्निमित्तरूपस्यवेति -"त्वत्प्राङ्गणे सुन्दरपाण्डचदेव" इत्यादौ मतंगजरूपे विषये विषयिविशेषणसापराधत्वोत्प्रेक्षायामपराधस्थानापन्नस्य कस्यचिदनुपादानेऽपि तादृशोत्प्रेक्षानिमित्तस्य शृंखलितत्वस्य निमित्तस्योपादानाद्विशेषणमपि धर्मरूपमुत्प्रेक्षितं भवति। इयं च रीतिः विशिष्टे धर्मिणि धर्मोत्प्रेक्षास्थले संभवति अथापि विशिष्टोत्प्रेक्षात्वमुपपाद्यते।

अयं भावः-"त्वदाननमधीराक्षम्" इत्यादौ यथा भृंगकेसरविशिष्टेन पङ्कजेन नेत्रदशनदीधितिविशिष्टस्याननस्य उपमा प्रथमं निबध्यते पश्चाच्च तद्विशेषणयोः अक्षिभृंगयोः दशनदीधितिकेसरयोश्चोपमावगम्यते तस्माच्च विशिष्टोपमात्वं तद्वदत्रापीति।।

एवं च उपमायां विशिष्टोपमादि प्रभेदवत् अस्यामपि तत्प्रभेदो वर्णनीयः नच स वर्णितः प्राचीनैरिति न्यूनतैवेति गूढाशयः।।

स्वरूपोत्प्रेक्षायामविशिष्टोत्प्रेक्षामुदाहरति- **तत्राद्येति** रतेः गृहीतानुनयेन

## तत्त्वालोकः-

ईश्वरेण प्रत्यर्पितस्वाङ्गं काममिव काकुत्स्थमालोकयतां नृपाणां मनः इन्दुमतीनिराशं बभूव इत्यन्वयः॥

रतेः प्रकरणात् कन्दर्पप्रियायाः "रतिः कन्दर्पभार्यायां सुरतोत्कण्ठयोरपि। रागेऽपि परमप्रीतौ " इति **नानार्थार्णवसंक्षेपः**। गृहीतानुनयेन स्वीकृतप्रार्थनेन गृहीतरत्यनुनयेनेत्यर्थः। अत्रानुनयस्य रतिसम्बद्धतया सापेक्षत्वेऽपि "असूर्यपश्याः राजदाराः" इतिवत् गमकत्वात्समासः। यद्यपि- गृहीतानुनयेन ईश्वरेण रतेः प्रत्यर्पितस्वाङ्गं कामंमिवेत्यादि पूर्ववदन्वयः अस्यां योजनायां गृहीतानुनयेन परिगृहीतसमाधानेन ईश्वरेण शंभुना ब्रह्मप्रार्थनागृहीतसमाधानेन निटिलाक्षेण, रतेः प्रियमरणानुमरणाध्यवसायां रतिमभिवीक्ष्य संजातदयेनेश्वरेणत्यर्थः। यद्वा-रतेः कामपत्नीमभिवीक्ष्य, गृहीतानुनयेन गृहीतचित्तसमाधानेनेत्यर्थः।

"नहि स्त्रीषु महात्मानः क्वचित्कुर्वन्ति दारुणम्"

इति**न्यायादिति** भावः। अत्र वीक्ष्येति ल्यबन्तशब्दस्य अज्ञानेऽपि "ल्यब्लोपे कर्मणीति" रतेरपादानता। श्वशुरात् जिह्रेतीतिवत्। एवंविधयोजनायां न सापेक्षत्वप्रसक्तिः अथापि **मल्लिनाथादिभिः** असमर्थसमासाश्रयणमौचित्यादिति बोध्यम्। सच गृहीतानुनयेनेति प्रत्यर्पितस्वाङ्गमिवेत्युक्तिभ्यां ग्रहणप्रत्यर्पणयोः प्रतीत्या **परिवृत्त्यलंकारः** प्रतीयते। प्रार्थनाशतेनापि दग्धं मदनदेहं प्रत्यर्पयितुं अशक्यं कां प्रार्थनां अर्पयित्वा स्वसर्वस्वभूतं प्रतिजग्राहेति न्यूनया प्रार्थनया अनितरलभ्यं तद्देहमिति लभ्यते। एवं च अजे साक्षान्मन्मथत्वताद्रूप्यसंभावनां **परिवृत्त्यलंकारः** पुष्णातीति।

प्रत्यर्पितस्वाङ्गं =न्यासरूपेणावस्थापितस्य प्रतिदानं प्रत्यर्पणं, प्रत्यर्पितः यः स्वः स्वजनः कामात्मा तस्य यदङ्गं शरीरं काममिव काकुत्स्थं अजं आलोकयतां पश्यतां, नृपाणां राज्ञां, मनः इन्दुमतीनिराशं वैदर्भीनिस्पृहं, बभूव सर्वातिशयितसौन्दर्यमजं विना अस्मान् नेयं वृणीते इति निश्चिक्युरिति भावः॥ अत्र मदनस्य ईश्वरेण प्रत्यर्पणाभिधानान्मन्मथापररूपत्वमजस्याविष्कृतं भवतीति तथाऽइतरराजसु नैराश्याभिधानात् तेषु अज एव सर्वाङ्गसुन्दर इति इतरनृपापेक्षया अजे आधिक्यं व्यज्यते इति **व्यतिरेक ध्वनिश्च**॥

**चित्रमीमांसा-**

**अत्र मदनरूपत्वोत्प्रेक्षायां मदनाकृतिशालित्वमस्ति निमित्तम्। अतस्तावदुत्प्रेक्षणीयमवगम्यते।।**

**तत्प्रत्यर्पणं रत्यनुनयप्रसन्नेन परमेश्वरेण कृतमिति विशेषणांशस्तु नोत्प्रेक्षणीयोऽ वगम्यते तदंशे विषयस्य वाच्यस्य गम्यस्यवा निमित्तस्य वाऽलाभात्।।**

**किन्तु परमेश्वरदग्धस्य मदनदेहस्य असुरदग्धस्य कचदेहस्य शुक्र इव न कश्चिदन्यः प्रत्यर्पणं कर्तुं शक्नोतीति विषयिणि प्रत्यर्पणो-पपादकतया तद्विशेषणमुपयुज्यत इत्यविशिष्टोत्प्रेक्षेयम्।।**

तत्त्वालोकः

अत्र-अजे मदनरूपत्वमात्रमुत्प्रेक्ष्यते, तत्र च मदनाकृतिशालित्वं निमित्तमवगम्यते। तदाह -**अत्रेति।**

ननु-अत्र रत्यनुनयप्रसन्नेश्वरप्रत्यर्पितमदनरूपत्वमेवोत्प्रेक्ष्यत इति विशेषणविशेष्ययोरुभयोरपि, उत्प्रेक्षाविषयित्वमस्त्विति शङ्क्यम्।

विशेष्योत्प्रेक्षायां विषयस्याजस्योपादानमस्ति। निमित्तांशे गम्यमानता च रत्यनुनयप्रसन्नपरमेश्वरकृतप्रत्यर्पणरूपविशेषणांशस्तु नोत्प्रेक्ष्यते तद्विषयस्य वाच्यस्य, गम्यस्य वा निमित्तस्य अनुपलम्भात्। तदाह**तत्प्रत्यर्पणमिति।**

एवं तर्हि विषयिणि कामे रत्यनुनयप्रसन्न परमेश्वरकृतत्वस्य प्रत्यर्पणांशे विशेषणतयोपादानं माभूत् अप्रयोजकत्वादित्याशंकायामाह - **किन्त्विति।**

तुशब्दः उक्तविशेषणवैयर्थ्यशङ्कां परिहरति- **परमेति।** न तु येनकेनचिदिति भावः **अत्रायमभिसन्धिः-**

"भस्मीभूतस्य देहस्य पुनरागमनं कुतः।"

इत्यनुभवस्य जागरुकत्वेऽपिकर्तुमकर्तुमन्यथाकर्तुमपि समर्थेन दग्धस्य भस्मीभूतस्य

**चित्रमीमांसा-**

**विशिष्टोत्प्रेक्षायां ''मुनिद्रुमः कोरकितोऽसितद्युतिः'' ''त्वत्प्राङ्गणे सुन्दर पाण्डचदेव'' इत्याद्योदाहरणे विषयोपादानात् विषयिविशेषणस्योत्प्रेक्ष्यतावगम्यते। द्वितीये निमित्तोपादानात्।**

तत्त्वालोकः-

देहस्य प्रत्यर्पण महेश्वरं विना अन्येन कथमपि न शक्यम्, यथा-मृतसंजीविनी-विद्याशिक्षणाय असुरगुरौ शिष्यभावं गतं कचमवधार्य असुराः स्वगुरवे शुक्रायैव कचभस्म सुरायां समिश्र्यप्राशयामासुः पश्चाच्च देवयान्याः प्रार्थनां परिगृह्य स्वकुक्षिंगतमेव कचं प्रत्यर्पितवान्। तादृशीयोग्यता न पुरुषान्तरे, अपितु ईश्वरे एवेति इतरवैलक्षण्यं प्रदर्शयितुं अत्रापि रत्यनुनयप्रसन्नपरमेश्वरकृतत्वं प्रत्यर्पणे विशेषितमिति प्रत्यर्पणस्य नोत्प्रेक्ष्यता अतश्चात्र **अविशिष्टोत्प्रेक्षैव** इति।।

एवं चात्र प्रत्यर्पणस्य विषयिविशेषणत्वेऽपि न संभाव्यमानता संभावनाधिकरणस्य वा वाच्यस्य वा गम्यस्य वा निमित्तस्य अनुपादानात्। यत्र च विषयोपादानं यथा- "मुनिद्रुमः कोरकितः" इत्यादौ कोरकादेरुपादानम्, यत्र च विषयानुपादानेऽपि निमित्तस्योपादानं यथा- "त्वत्प्राङ्गणे सुन्दरपाण्डचदेव". इत्यादौ सापराधत्वाद्युत्प्रेक्षायां शृङ्खलितत्वादेः तत्र **विशिष्टोत्प्रेक्षैवे**ति पर्यवस्यति।

इत्थं स्वरूपोत्प्रेक्षायां अविशिष्टोत्प्रेक्षामेकविधामेव प्रदर्श्य विशिष्टोत्प्रेक्षायां विषयनिमित्तान्यतरोपादानेऽपि द्वैविध्यं संभवतीत्यभिप्रायेण उदाहरणद्वय-मुपन्यस्तमिति स्मारयित्वा तयोराद्यां विशिष्टोत्प्रेक्षां संगमयति **विशिष्टो-त्प्रेक्षायामित्यादिना-**

विशिष्टोत्प्रेक्षायां विषयितद्विशेषणयोरुत्प्रेक्ष्यत्वाभिमतोदाहरणे इत्यर्थः यथा- "मुनिद्रुमः कोरकितोऽसितद्युतिः" इति समुच्चितनिमित्तोत्प्रेक्षोदाहरणत्वेन प्रागुदाहृत पद्ये मुनिद्रुमः यथा राहुरूपत्वेन उत्प्रेक्षितस्तथा तद्विशेषणीभूतोऽपि कोरकः विधुकलात्वेनोत्प्रेक्षितः । तदेतत्कथमवगतमिति चेत्, विषयिविशेषणस्येव विषयविशेषणस्य उपादानात्।

**चित्रमीमांसा-**

**हेतु-फलोत्प्रेक्षे तु असिद्धयोः सिद्धयोर्वा हेतुफलभावेन उत्प्रेक्षणीयतया प्रत्येकं द्विविधे।।**

**''सैषा स्थली यत्र विचिन्वता त्वाम्'', ''चोलस्य यद्भीतिपलायितस्य,'' इत्यादिषु नूपुरकण्टकिद्रुमादावसिद्धयोर्विश्लेष दुःख ललाटलिपि दर्शनादिकयोः हेतुफलभावेनोत्प्रेक्षणीयता।।**

तत्त्वालोकः-

क्वचित् विषयानुपादानेऽपि निमित्तोपादाने विशिष्टोत्प्रेक्षात्वमविशिष्टमित्यभिप्रायेणाह - **द्वितीय इति।**

अत्र शैलविशेषणसापराधत्वोत्प्रेक्षायां विषयो नोपात्तः निमित्तभूतं शृङ्खलितत्वं परमुपात्तम्। तावता तदुत्प्रेक्ष्यत एवेत्युपात्तनिमित्ता विशिष्टोत्प्रेक्षा।।

इत्थं स्वरूपोत्प्रेक्षायां विधान्तरेणावान्तरभेदान् सोदाहरणं प्रदर्श्य हेतु-फलोत्प्रेक्षयोः प्रकारान्तरेण विभागं प्रदर्शयति - **हेतुफलोत्प्रेक्षे इति।।**

हेतूत्प्रेक्षा - फलोत्प्रक्षा चेत्यर्थः। तुशब्दः स्वरूपोत्प्रेक्षाविधतो वैलक्षण्यद्योतकः। असिद्धयोः लोकानुभवासिद्धयोः सिद्धयोर्वालोकानुभवसिद्धयोर्वा, हेतुफलभावेन हेतुत्वेन फलत्वेन च उत्प्रेक्षणीयतया संभाव्यमानतया प्रत्येकम् एकैकमित्यर्थः, एवं चासिद्धा हेतूत्प्रेक्षा सिद्धा हेतूत्प्रेक्षा असिद्धा फलोत्प्रेक्षा सिद्धा फलोत्प्रेक्षा इति हेतुफलोत्प्रेक्षे चतुर्विधे।।

तासु अप्रसिद्धविषये हेतुफलोत्प्रेक्षे ''यत्रान्यधर्मसंबन्धादिति विद्यानाथाभिमतसक्षणघटकान्यत्वांशस्य यथाश्रुते अव्यापकत्वप्रतिपादनावसरे धर्मिणि धर्मोत्प्रेक्षेति प्रतिपादनावसरे तथा सर्वत्राभेदेनोत्प्रेक्षणमिति प्रतिपादनावसरे चोद्धृतोदाहरणयोरेव स्तः इति त एवोदाहरणे उद्धृत्य स्वाभिमतरीत्या समन्वयं विधत्ते- **सैषास्थलीनि।**

## तत्त्वालोकः

सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्द-विश्लेषदुःखादिव बद्धमौनम्।। इति
चोलस्य यद्भीतिपलायितस्य भालत्वचः कण्टकिनो वनान्ताः।
अद्यापि किं वानुभविष्यतीति व्यपाटयन् द्रष्टुमिवाक्षराणि।। इति।।

अनयोराद्योदाहरणे नूपुरे धर्मिणि बद्धमौनतां प्रति विश्लेषकालभवं दुःखं हेतुरिति न प्रसिद्धम्, अथापि विश्लेषदुःखे तद्धेतुत्वं कविः स्वप्रतिभाबलादुत्प्रेक्षते, पञ्चमी चात्र हेतुत्वप्रतिपादिका। हेतूभवनक्षमस्यैव हेतूत्प्रेक्षेति संभावना पंचम्यादीनामन्वयसंघटना भावादिहेतुना निरस्तैव अतश्च हेतुत्वेनाप्रसिद्धे दुःखे हेतुत्वमात्रं उत्प्रेक्ष्यते इत्यसिद्ध विषया हेतूत्प्रेक्षेति बोध्यम्।।

**एतेन**- अत्र दुःखं गुण उत्प्रेक्ष्यते इति **सर्वस्वकृता** यदुपपादितं तदपि नातीव युक्तम्। असति बाधके उत्सर्गसिद्धस्य उत्प्रेक्षायामिवशब्दान्विस्योत्प्रेक्ष्यत्वमिति न्यायविरोधात् अत्र चास्यानुपेक्ष्यत्वात्। तावतैव दुःखमपि उत्प्रेक्षितं भवत्येव विश्लेषदुःखादिव इत्यत्र, दुःखस्य ॅ हेतुत्वात् गुणत्वाच्च "विभाषा गुणेऽस्त्रियाम्" (पा.सू.२.३.२५) इति विहितपञ्चम्याः हेतुरर्थः तत्र च प्रकृत्यर्थस्य दुःखस्याभेदेनान्वय इति पक्षे विश्लेषदुःखाभिन्नहेतुप्रकारकसंभावनाविषयो नूपुर इति बोधनिर्वाहसंभवादिति भावः।

द्वितीयोदाहरणे-कण्टकिद्रुमे धर्मिणि लोकेऽप्रसिद्धस्य ललाटलिपि-दर्शनस्याफलस्य ललाटत्वग्विपाटनं प्रति फलत्वमुत्प्रेक्ष्यते कविना प्रतिभावशात्। अत्रच द्रष्टुमित्यत्र दृश्‌धातूत्तरतुमुनोऽर्थः फलम् प्राग्वत् प्रत्ययार्थे प्रकृत्यर्थस्याभेदेन अन्वयः। तथाच दर्शनाभिन्नं फलमिति फलति। एवं च ललाटाक्षरदर्श-नाभिन्नफलप्रकारकसंभावनविषयाः कण्टकिद्रुमाः इति बोधः।।

**एतेन**- अत्र फलोत्प्रेक्षेति **सर्वस्वकारोक्तिः** दर्शनमात्रोत्प्रेक्षाभिप्रायिका न युक्ता असति बाधके इवशब्दान्वितस्य उत्प्रेक्षितुमौचित्यात्। अन्यथा तुमुन्नादिनां अन्वयसंघटना भावात्। यत्र हेतुफलत्व-प्रतिपादकशब्दराहित्यं तत्सत्वेऽपि यत्रौचित्यं तत्र तत्तदुत्प्रेक्षात्वे बाधकाभावादिति भावः।।

**चित्रमीमांसा-**

**आलोहिततलावेतौ क्षितौ विक्षेपणादिव।**
**वर्णयेम कथं तन्व्याः पादौ पल्लवकोमलौ।**
**पूरं विधुर्वर्धयितुं पयोधेः**
**शङ्क्येमेणाङ्कमणिं कियन्ति।**
**पयांसि दोग्धि प्रियविप्रयोगे**
**सशोककोकीनयने कियन्ति।।**

तत्त्वालोकः-

एवम् असिद्धे हेतुफलोत्प्रेक्षे प्रदर्श्य सिद्धे हेतुफलोत्प्रेक्षे उदाहरति - **आलोहितेति।**

अनयोराद्यं सिद्धस्य हेतुत्वेनोत्प्रेक्षायामुदाहरणम्। द्वितीयं सिद्धस्य फलत्वेनोत्प्रेक्षायामुदाहरणम्। तत्राद्यपद्ये इत्थं योजना तन्व्याः पल्लवकोमलौ एतौ पादौ क्षितौ विक्षेपणादिव आलोहिततलौ कथं वर्णयेम इति।।

तन्व्याः कृशाङ्ग्याः, पल्लवकोमलौ पल्लवाविव कोमलौ किसलयवत् मुदुलौ, एतौ पादौ चरणौ, क्षितौ भुवि, विक्षेपणादिव न्यसनादिव, आलोहिततलौ तलः पादयोरधोवर्तमानस्समप्रदेशः आ समभिव्याप्य लोहितौ आलोहितौ तलौ ययोस्तौ (पादौ) कथं केन प्रकारेण वर्णयेम कवयेम इत्यर्थः।

अत्र पादयोः स्वतस्सिद्धां पादगतरक्ततां प्रति हेतुत्वाभावेऽपि विक्षेपणस्य तद्धेतुत्वमुत्प्रेक्षितम्।

**पूरमिति।** अयं विधुः पयोधेः पूरं वर्धयितुं शङ्के एणाङ्कमणिं कियन्ति पयांसि दोग्धि, तथा प्रियविप्रयोगे सति सशोककोकीनयने कियन्ति पयांसि दोग्धि इति योजना।

अयं विधुः चन्द्रः पयोधेः उदधेः पूरं प्रवाहम् वर्धयितुं शङ्के वर्धयितुमिव, एणाङ्कमणिम्-चन्द्रकान्तमणिसम्बन्धि कियन्ति पयांसि अम्बूनि दोग्धि द्रावयति, तथा प्रियविप्रयोगे- प्रियैः चक्रवाकैः विरहे पृथगवस्थाने सति सशोककोकीनयने,

**चित्रमीमांसा-**

**इत्यादिषु पादचन्द्रादौ स्वतस्सिद्धयोरेव विक्षेपवर्धनादिकयोः हेतुफलभावेनोत्प्रेक्षणीयता॥**

**प्रकारान्तरेण कतिचिदस्य भेदान् समासोक्तिप्रकरणे दर्शयिष्यामः॥**

तत्त्वालोकः-

दीनचक्रवाकनयनसम्बन्धिपयांसि दोग्धि द्रावयति पूरयति वेत्यर्थः । अत्र कोकीनयनजलस्रावणस्य प्रियविप्रयोग इत्यनेन समर्थनात् पदार्थ-हैतुकंकाव्यलिङ्गमलंकारः तेनानुप्राणितोत्प्रेक्षा।

अत्र एणाङ्कमणिं पयांसि दोग्धि सशोककोकीनयनेकियन्ति पयांसि दोग्धि इत्यनयोः चन्द्रकान्तनयनोभयनिष्ठद्रवद्रव्यविभागानुकूलो व्यापारः दुहेरर्थः तत्र चन्द्रकान्त-नयना नामपादानत्वविवक्षायां अकथितंच (पा.सू.१.४.५१) इति कर्मसंज्ञा। पयोऽत्र मुख्यंकर्म कर्तुरीप्सिततमत्वात्। चन्द्रकान्त-नयनानां पयसो निमित्ततामात्रेणोपादानं नतु वस्तुतोऽवधिभावेनेत्यपादानसंज्ञाया अप्रवृत्तेः अनेन कर्मसंज्ञा अपादानत्वविवक्षायां तु गोःपयो दोग्धि इति वत् पञ्चमी युक्तैव सम्बन्धमात्रविवक्षायां षष्ठी च साध्विति केचित्॥

अत्र चन्द्रकर्तृकसमुद्रबृंहणस्य स्वतस्सिद्धस्य फलस्य तत्कृतचन्द्र-कान्तद्रावणकोकाङ्गना बाष्पस्रावणफलत्वेनोत्प्रेक्षणं कृतम्। तदेतदाह - **इत्यादिष्विति।**

**एतेन- सर्वस्वकारादिभिः** आसिद्धयोरेव हेतुफलोत्प्रेक्षयोः "सैषा स्थली," "चोलस्य यदि"त्याद्युदाहरणं दत्तम्।नपुनः सिद्धयोरनयोरिति न्यूनतेति ध्वनितं भवति॥

इत्थं प्राचीनैरनुल्लिखितानुत्प्रेक्षाप्रभेदान् उदाहृत्य अस्यामेव प्रकारान्तराणामपि संभवं मनसि निधाय तेषां **समासोक्तिप्रकरणे** प्रासङ्गिकत्वेन प्रदर्शयितुमनाः आह- **प्रकारान्तरेणेति।**

**चित्रमीमांसा-**

**यत्तु सर्वस्वकृता वैचित्र्यान्तरमस्याः दर्शितम्। एषा क्वचिद्ध र्मविषये श्लिष्टा, क्वचिच्छलादिशब्देन सापह्नवा, क्वचित्पदार्था- न्वयवेलायां सादृश्याभिधानात् उपक्रान्तापि उपमावाक्यार्थ- तात्पर्यसामर्थ्यादभिमन्तृव्यापारोपारोह क्रमेणोत्प्रेक्षायां पर्यवस्यति इति उपमोपक्रमाचेति।**

तत्त्वालोकः

अस्याः उत्प्रेक्षाप्रकरणान्तभाग एवोपलब्धोः नपुनरान्तः। किन्तु ग्रन्थकृता सम्पूर्णोऽयं ग्रन्थो व्यरचि। अथापि नास्मत्प्राचीनैः तत्कुलीनैरपिवा अरक्षि यतश्च एतद्ग्रन्थप्रणयनानन्तरप्रणीते कुवलयानन्दीये अर्थान्तरन्यासप्रकरणे "प्रपञ्चः चित्रमीमांसायां द्रष्टव्यः" इति दर्शनात्। अतश्चैतस्या भेदाः केचन मृग्या एवेति खेदेनाभिदध्मः।।

इत्थं सिद्धासिद्धे हेतुफलोत्प्रेक्षे सोदाहरणमुपन्यस्य सम्प्रति **सर्वस्वकृता**-अस्यां प्रदर्शितं वौचित्र्यान्तरमपि न्यूनमिति प्रदर्शयितुमुपक्रमते- **यत्त्विति।**

**एषेति।** श्लेषोपश्लिष्टा, सापह्नवा, उपमोपक्रमाचेति, उत्प्रेक्षा पुनरपि त्रिविधा श्लेषापह्नवोपमाभिः संवलिताभिः वैचित्र्यादिति भावः।।

**अत्रेदमालोच्यते-** "एषाचार्थाश्रयापि धर्मविषये श्लिष्टशब्दहेतुका क्वचित् दृश्यते "इत्यत्र पाठः **विमर्शिनीकारेण** यद्यप्युद्धृतः। अथापि ततोऽर्वाचीनेन १२६५ क्रैस्ताब्दजीविना **समुद्रबन्धेन**"एषाचेत्यादिपाठः क्वचित्पठयते उदाह्रियतेच -

प्रस्थे स्थितां हिमवतोऽस्य न बाधते यां
उर्ध्वेक्षणानलभयादिव जाड्यमुद्रा।
गोष्ठीषु वस्सततसंनिहितास्तु देवी
सा शारदा नवसुभाषितकामधेनुः।।

इत्यभिधाय अस्य सर्वथा निरवद्यत्वं चिन्त्यमित्यप्युक्तम्।।

## चित्रमीमांसा-

## तत्र धर्मविषये श्लिष्टत्वं किमित्युपन्यस्तम्?

### तत्त्वालोकः

**चिन्ताबीजंचेदम्** - धर्मविषयं श्लिष्टा इत्यत्र धर्मशब्देन उत्प्रेक्षानिमित्त-रूपगुणक्रियारूपो विवक्षितः, आहोस्वित् (धर्मिभूतोवा) विषयिरूपोवा?

नाद्यः-

अनन्यसामान्यतया प्रसिद्धःत्यागीति गीतो जगतीतले यः ।

अभूदहंपूर्विकया गतानाम् अतीवभूमिःस्मरमार्गणानाम्।।

इति **विमर्शिनीकारादृतपद्ये** राज्ञि कामपारवश्यमुत्प्रेक्ष्यम्। तत्रच निमित्तं त्यागशीलत्वमिति वक्तव्यम्। तच्च न श्लिष्टपदनिबन्धनम्। नचात्र मार्गणशब्दः "मार्गणौयाचकार्थिनौ" इति कोशात् श्लिष्ट इति तेन याचकानामुस्थित्या कामबाणा यथावा अप्रार्थनयापि लभ्याः तद्वत् याचका अपि प्रार्थनामन्तरा राजानं समाश्रयन्तीति प्रतीतेः त्यागशीलत्वंनिमित्तम् भवत्विति वाच्यम्। निमित्तभूतधर्मस्य श्लिष्टपदात् अनुपस्थितेः निमित्तभूतधर्मविषये श्लिष्टशब्दहेतुकत्वं न घटते। अन्त्ये- राज्ञि कामपारवश्यमेव कामसदृशयाचकाश्रयत्वमिति श्लेषमूलकाभेदाश्रयणेन तादृशोधर्मः उत्प्रेक्ष्यत इति श्लिष्टशब्दहेतुत्वमुपपादयितुं शक्यम् । इदंच पद्यं **समुद्रबन्धेन** नैव व्याख्यातम्।

अथापि नैषा रीतिः ग्रन्थकृत्सम्मता। तत्र धर्मविषये इत्यादिना सन्दर्भेण निमित्तभूतधर्मसंबन्धितयैव विकल्पस्य वक्ष्यमाणत्वात्। इत्थं सति श्लिष्टशब्दहेतुर्यथा " अनन्यसामान्यतया प्रतीतः"- इत्यत्र धर्मविषये मार्गणशब्दःश्लिष्ट इति **सर्वस्वकारोक्तिः** चिन्त्यैव।

तथापि- ग्रन्थकाराभिमतरीत्या व्याख्यास्यामः त्रिविधासु उत्प्रेक्षासु निमित्तभूतधर्मविषये श्लिष्टत्वमात्रोपन्यासो न्यून इति प्रतिपादयितुं पृच्छति **तत्रेति**।

धर्मविषये श्लिष्टता उत्प्रेक्षानिर्वाहकत्वेन उत्प्रेक्षोपस्कारकत्वेनेति द्वेधा भवतीति।

**चित्रमीमांसा-**

**किं धर्मस्य निमित्तानुगामितयेव श्लेषेणापि निर्वाह्यत इति, किंवा धर्मांशेषु शुद्धतेव श्लेषेणालंकृताऽपि दृश्यते इति।**

**आद्ये उपमायां साधारणधर्मस्यानुगामित्वादयो यावन्तोभेदाः साधारण्यनिर्वाहकाः ते सर्वेप्युत्प्रेक्षायां धर्मस्य निमित्ततानिर्वाहकाः सम्भवन्तीति न्यूनो विभागः।**

**तथाहि- "बालेन्दुपक्राणि" इत्यादौ तावदनुगामित्वं स्पष्टम्।।**

तत्त्वालोकः-

तदेव विकल्पयति- **किंधर्मस्येति।**

धर्मस्य गुणक्रियादेः साधारणधर्मस्य निमित्तानुगामितयेव निमित्त-निर्वाहकानुगामित्वेनेव श्लेषेणापि धर्मे साधारण्यं सम्पाद्य उत्प्रेक्षा निर्वाह्यत इत्यभिप्रायेण किमुपन्यस्तमिति भावः किंवा अथवेत्यर्थः धर्मांशेषु निमित्तभूतधर्मांशेषु शुद्धतेव बिम्बप्रतिबिम्बभावाद्यकरम्बितेव, श्लेषेणश्लेषालंकारेण अलंकृततापि दृश्यते उदाहरणेष्विति शेषः। एवमभिप्रायेण वा किमुपन्यस्तमिति भावः।।

अनयोराद्ये श्लेषस्येव वस्तुप्रतिवस्तुभावादीनां च उत्प्रेक्षा-निमित्ततानिर्वाहकत्वस्य प्रागेव सोदाहरणं प्रदर्शित्वात् उक्तं परिगणन-मितरविधाऽसंग्राहकतया न्यूनमित्युपपादयति **आद्य इति।**

आद्ये धर्मस्यानुगामित्वसम्पत्त्या यथोत्प्रेक्षानिमित्तत्वं तद्वत् श्लेषेणापि साधारण्यं सम्पाद्य धर्मस्योत्प्रेक्षानिमित्तत्वं निर्वाह्यत इति पक्षे इत्यर्थः। अनुगामित्वादय इत्यादिशब्दात् बिम्बप्रतिबिम्बभाव समासभेदाश्रयणा, न्वयभेदाक्षेप, वस्तुप्रतिवस्तुभावादयः तन्निर्वाहका इति ग्राह्यम्। इत्थंच **सर्वस्वकृतकृतो** विभागः न्यून इति भावः।।

तत्र उत्प्रेक्षानिमित्तभूतधर्मे निमित्ततानिर्वाहकेषु अनुगामित्वस्योदाहरणं प्रागेव दर्शितं "बालेन्दुवक्राणि" इत्यादाविति स्मारयति- **तथाहीति।**

**चित्रमीमांसा-**

**तथा-**

**व्यराजत सखे तन्व्या वक्त्रं वलितकन्धरम्।**
**लावण्यौघजलावृत्तनालदण्डमिवाम्बुजम्।।**

तत्त्वालोकः

''बालेन्दुवक्रणी''त्यत्र पलाशकुसुमेषु नखक्षतताादात्म्ये संभाव्यमाने वक्रत्वलोहित्ययोः उपमानोपमेय गतयोः वस्तुतोऽभेदेप्येकजातीयत्वेनैक-पदबोध्यत्वेनैकरूपेणच उभयान्वयादनुगामितया साधारण्यादुत्प्रेक्षानिर्वाहकत्वं स्पष्टं ज्ञायत इति भावः।

प्रागेव बिम्बप्रतिबिम्बभावादिना धर्मे साधारण्यं सम्पाद्य उत्प्रेक्षा-निमित्ततानिर्वाहक्रमः उपपादित इति अवशिष्टेन वस्तुप्रतिवस्तुभावेन धर्मे साधारण्यं सम्पाद्य उत्प्रेक्षानिमित्तता निर्वाहकत्वप्रकारोपपादनमपि सुलभम् इत्युदाहरणं प्रदर्शयति- **तथेति।**

सखे तन्व्याः वलितकन्धरं वक्त्रं लावण्यौघजलावृत्तनालदण्डमम्बुजमिव व्यराजतेतियोजना।।

तन्व्याः कृशाङ्ग्याः नायिकायाः वलितकन्धरं आवृत्तकन्धरम् वक्त्रं मुखम् लावण्यौघजलावृत्तनालदण्डम् लावण्यं समुदायशोभा तस्य य ओघः प्रवाहः ''वेणिर्धारा प्रवाहौघौ'' इति **वैजयन्ती** । स एव जलं तेनावृत्तः वक्रः यः नालदण्डः यस्य तदमम्बुजमिव व्यराजत प्रचकाशे।।

अत्र मुखे अम्बुजतादात्म्यं संभाव्यते तत्र वस्तुतो भिन्नयोः कंधरानालदण्डयोः बिम्बप्रतिबिम्बभावेन निर्दिष्टयोः विशेषणतया वलितत्वं आवृतत्वं च एकएव धर्मः संबन्धिभेदेन द्विरुपात्तः इति वस्तुप्रतिवस्तुभावेन धर्मे साधारण्यं सम्पाद्य मुखे अम्बुजतादात्म्यनिर्वाहः इति भावः।।

## चित्रमीमांसा

**इत्यत्र वस्तुप्रतिवस्तुभावः।बिम्बप्रतिबिम्बभावादयस्तु प्रागेवोदाहृताः।।**

**द्वितीये श्लेषेण वालंकारान्तरेणाप्यलंकृतता दृश्यते इति न्यूनो विभागः। तथाहि-''अंगुलीभिरिव केशसंचयम् '' इति निमित्तांशे उपमालंकारः स्पष्टः।।**

### तत्त्वालोकः-

इह बिम्बप्रतिभावादिना साधारण्ये सति उत्प्रेक्षानिमित्ततासम्पादने उदाहरणानि न प्रदर्शितानि तेषां प्रागेव प्रदर्शितत्वादित्याह - **बिम्बेति।**

बिम्बप्रतिबिम्बभावेन साधारण्ये ''आवर्जिता किंचिदिव'' इति, समासभेदाश्रयणेन -''तारुण्यकुञ्जरारूढां'' इति, अन्वयभेदेन -''अंगुलीभिरिव केशसंचयं इति, आक्षिप्तधर्मेण- ''भूयस्तराणि'' इत्युदाहरणं । अन्यधर्म-सम्बन्धादित्यंशस्य अनुगामिधर्मातिरिक्तधर्मवत्सु उदाहरणेषु अभावादव्याप्तिमाशंक्य तत्परिहरणावसरे एवोपन्यस्तानीति। एषूदाहरणेषु अव्याप्तिप्रसक्त्या **सर्वस्वकृदुक्तो** विभागो न्यून इति भावः।।

यदि धर्मांशे चमत्कारस्य विवक्षोपारूढतया चमत्कारस्यच अलंकारेणो-पस्कृतत्व एवेति अर्थात् श्लेषेणोपस्कृतता धर्मे दृष्टेति तथोक्तमिति चेत् **सर्वस्वकृतैव** अंगांगिभावसंकरमुदाहरता ''अंगुलीभिरिव केशसंचयम्'' इति पद्ये वाक्योक्तसमासोक्तोपमयोः उत्प्रेक्षाङ्गतां ब्रुवता निमित्तांशे उपमालंकारस्योप-स्कारकत्वमुपगतमेव। एवं च धर्मविषये श्लेषहेतुकत्वोक्त्या तदितरालंकार हेतुकधर्मनिमित्तकोत्प्रेक्षाऽसंग्रहप्रसंगात् न्यूनतेति प्रतिपादयितुमाह - **द्वितीय इति।** तदुदाहृतमेव पद्यमुदाहृत्य निमित्तांशे उपमया अलंकारान्तरेण अलंकृततां प्रदर्शयति **तथाहीति।**

इदं पद्यं पूर्वमेव व्याख्यातमिति नपुनर्व्याख्यायते विशेषांशस्तु उल्लिख्यते **मङ्खुकेन अलंकारसर्वस्वे** - ''अंगुलीभिरिवे''त्युदाहृत्य अत्राङ्गुलीभिरिवेत्युपमा। सैव

**चित्रमीमांसा-**

**उदरं परिमाति मुष्टिना**
**कुतुकी कोऽपि दमस्वसुः किमु।**
**धृततच्चतुरङ्गुलीव यद्**
**वलिभिर्भाति सहेमकाञ्चिभिः।।**

तत्त्वालोकः-

सरोजलोचनमित्यस्या उपमायाः प्रसाधिका । रजनीमुखमिति श्लेषमूला अतिशयोक्तिः। एवंच वाक्योक्त समासोक्ते उपमे, श्लेषानुगृहीता अतिशयोक्तिश्च चुम्बतीवेति प्रकाशिता अङ्गम्, तद्बलेन तस्याः समुत्थानादित्युक्तम्।। एतेनेदमुक्तं भवति-उत्प्रेक्षायाः प्रकृताप्रकृतसाधारणगुणक्रियारूपनिमित्तसापेक्षत्वात् वाक्योक्तोपमायामिवकारस्य मरीचिभिरिवेत्यन्वयान्तरमुपगम्य अन्वय भेदलब्धस्यार्थद्वयस्य "मारस्य हन्तुर्मनसा वृणीते योगीव पादौ शरणं वियोगी" इति वदभेदाध्यवसायेन साधारण्यं सम्पाद्यत इति निमित्तांशे उपमा उपस्कारिका इत्यकामेनाप्युपगन्तव्यमेवेत्युदाहरणा-संग्रहसंगान्न्यूनतेति।। इदमुपलक्षणं उत्प्रेक्षाया निमित्तांशे अलंकारान्तरेणोपस्कृतता दृश्यत इति तदुदाहरणं प्रदर्शयति-**उदरं परिमातीति।** कोऽपि कुतुकी दमस्वसुः उदरं मुष्टिना परिमाति किमु? यत् तत् सहेमकाञ्चिभिः वलिभिः कृत्वा घृतत्तचतुरङ्गुलीव भाति इति योजना।।

कोऽपि स्रष्टापि "विरिञ्चिः कः चतुर्मुखः इति **वैजयन्ती।** विलक्षणवस्तुसृष्टि-विचक्षणोऽपि कुतुकी कुतूहलवान् दमस्वसुःदमयन्त्याः उदरं उदरसमीपस्थितं मध्यप्रदेशं मुष्टिना परिमाति किमु? परिच्छिनत्ति किमु? अस्या मध्यं मुष्टिमेयं भवति वा नवेति परीक्षते किमितिसंभावना, कुत एवं संभावितमित्यत्राह -**यदिति।** यस्मात् कारणात् तत् उदरं सहेमकाञ्चिभिः कनकनिर्मितरशनासहिताभिः वलिभिःकृत्वा धृततच्चतुरङ्गुलीव धृताः अवस्थापिताः यस्य कस्यापि परिच्छेत्तुः चतस्रः अंगुलयो येन तदिव भाति।। तिस्रो वलयः चतुर्थी हेमरशनाच चतस्रोऽङ्गुलयस्तस्य मुष्टेरिति यावत्। अत्र प्रधानीभूतोत्प्रेक्षा एका तदुपस्कारिका अपरा चेति उत्प्रेक्षाद्वयमस्ति,

**चित्रमीमांसा-**

**इत्यत्रोत्प्रेक्षा । अत्र दमयन्त्युदरस्य केनचित्कुतुकिना परिमीयमाणत्वोत्प्रेक्षायां काञ्चीसहितासु वलीषुतदीयाङ्गुलित्वोत्प्रेक्षा लब्धमुदरगतं तदीयांगुलिचतुष्टयधारणं निमित्तम्।।**

**अजस्रमारोहसिदूरदीर्घां**
**संकलपसोपानततिं तदीयाम्।**
**श्वासान्स वर्षत्यधिकं पुनः**
**र्यत्ध्यानादिव त्वन्मयतामवाप्य।।**

तत्त्वालोकः-

तत्राङ्गभूतोत्प्रेक्षालब्धं मध्यगतं धर्मं स्रष्टुः चतुरङ्गुलिधारणं निमित्तीकृत्य प्रधानमुत्प्रेक्ष्यते एवं च निमित्तांशे उत्प्रेक्षया अलंकृततोपपन्नेत्याह - **इत्यत्रेति।**

अत्र दमयन्त्याः काञ्चीसहितासु वलीषु विलक्षणसृष्टिचतुर कुतुकिचेतन-संबन्ध्यङ्गुलित्वोत्प्रेक्षा एका तदीयमङ्गुलिधारणं निमित्तीकृत्य । तादृशाचेतनकर्तृकोदरकर्मकपरिमीयमाणत्वोत्प्रेक्षा अपरा। एवं च उदरे परिमीयमाणत्वोत्प्रेक्षां प्रति अङ्गभूतोत्प्रेक्षालव्धतदीयाङ्गुलिचतुष्टयधारणं निमित्तमिति तदंशे उत्प्रेक्षा-लंकारालङ्कृतता दृश्यते इति भावः।

कुङ्कएवं निमित्तांशे असङ्गत्यलंकारेणालंकृततापि लक्ष्ये दृश्यत इति उदाहरति- **अजस्रमिति।** नलसम्बन्धिनीः दमयन्तीविषयिणीः दश कामदशाः वर्णयितुं मुपक्रम्य चक्षू-राग- चित्तासङ्गौ वर्णयित्वा तृतीयां संकल्पपदशामाह- **अजस्रमिति।**

हे दमयन्ति! त्वं दूरदीर्घाम् तदीयां संकल्पसोपानततिम् अजस्रं आरोहसि यत् सः पुनर्ध्यानात् त्वन्मयतामवाप्येव अधिकं श्वासान् वर्षतीति योजना।।

हेदमयन्ति! भैमि! त्वं भवती दूरदीर्घां अतिमहतीं, तदीयां नलसम्बन्धिनीं तच्छब्दस्य त्यदादीनिच (पा.सऊ. १.१.७४) इति वृद्धसंज्ञायां वृद्धाच्छः (पा.सू. ४.२.११४) इति छप्रत्ययः। संकल्पसोपानततिं मनसो विचारधारां -"दमयन्ती कथं

**चित्रमीमांसा-**

**इत्यत्रासंगतिः**

तत्त्वालोकः-

मया लभ्येत, लब्धायां अहमेवं करिष्ये सैवं करिष्यति " इत्येवंरूपविचार-धारात्मकसोपानालीमिति यावत्, अजस्रं निरन्तरम्, आरोहसि, तत्प्रत्युपायादि सर्वदा विचारयसि इत्यर्थः यत् यस्मात् स पुनः नलस्तु ध्यानात् सन्ततचिन्तनतः त्वन्मयतां त्वद्रूपतां, ताद्रूप्ये मयट् प्रयुक्तश्चान्यत्र-

"विद्यामयेषु तवविश्वसितेष्वपूर्वं
विद्याविशेषमिव शिक्षितुमन्तरात्मन्।"

इत्यत्र विद्यामयेष्विति। व्याख्यातं च सकलविद्यरूपेष्विति **वरदराजस्तवे** । अवाप्येव प्राप्येव अधिकं अत्यर्थं श्वासान् निश्वासान् वर्षति धाराकारतया सृजतीत्यर्थः॥

**इत्यत्रेति**- अत्र दमयन्त्यां सोपनारोहणं, नलेच निश्वास इति कार्यकारणयोः भिन्नभिन्नव्यक्तिनिष्ठत्वेन प्रतीतेः असांगत्यमित्य**संगतिरलंकारः**, संगतिश्च-कार्यकारणयोरेकदेशवर्तित्वम्। तद्विरुद्धतया भिन्नदेशवृत्तित्वं असंगतिः इति। अत एव नात्र विरोधाभासता, तत्र एकदेशे विरुद्धयोधर्मयोः कल्पनम्। अत्र न तथा।

ननु- कथमत्रासंगतिरलंकारः कार्यकारणयोः देशभेदेन अवस्थितावपर्यवसानात्। तथाहि- अत्र नलस्य दमयन्त्यामनुरागभूयस्तया तदलाभप्रयुक्तध्यानातिशय-महिम्ना "योगप्रभावात्प्रह्लादो जातो विष्णुमयोऽसुरः "इत्युक्तरीत्या **"यो यं ध्यायति स तन्मयो भवतीति नयेन** वा दमयन्तीरूपतापत्त्यनन्तरं अधिकश्वासवर्षणोक्त्या एकस्मिन्नेव प्रदशे सोपानारोहणस्य कारणस्य अधिकश्वासवर्षणरूपकार्यस्यच वर्तमानताप्रतीतेः कारणान्वयव्यतिरेकाननुविधानलक्षणासंगत्यलंकारस्याभावात् इति चेत्।

न । विरोधाभासालंकारवदुपपत्तेः तथाहि-विरोधाभासे हि विरोधस्य आमुखे प्रतीतिमात्रम् अविरोधेच पर्यवसानं तथापि तस्य यथालंकारता तथा असंगत्या-भासस्याप्यलंकारताभ्युपेयते विच्छित्तिविशेषसद्भावात्। एवंच विरोधाभास-वदसङ्गत्याभासोऽपि अलंकारान्तरमिति विभाव्यम्।

**चित्रमीमांसा -**

**यतोऽत्र नलस्य दमयन्तीरूपतावाप्त्युत्प्रेक्षायां दमयन्तीकर्तृकेण सोपानारोहणेन नलस्य श्वासवर्षणं निमित्तम्।**

**प्रतीपभूपैरिव किं ततो भिया।**
**विरुद्धधर्मैरपि भेत्तृतोज्झिता।**
**अमित्रजिन्मित्रजिदोजसा स यत्**
**विचारदृक् चारदृगप्यवर्तत।।**

तत्त्वालोकः

यद्वा- विरोधाभासोदाहरणे "विनापि तन्वि हारेण वक्षोजौ तव हारिणौ" इत्यत्र हारं विना हारवत्त्वमिति विरोधः आमुखे प्रतीतः। हारिणौ मनोहारिणौ इत्यर्थकरणेन परिहारः कृतः, नच तथात्र दमयन्तीताद्रूप्यकल्पनेन वास्तवस्तत्परिहारः क्रियत अपि तु तत्संभावनामात्रमिति शुद्धैवासंगतिः समाधानस्यैवामुखे प्रतीतेरिति अत एवात्रसंगत्याभास इतिनोपपादितः। किन्तु अत्रासंगतिरित्येव "इति विशेषस्तु कुवलयानन्दोन्मेषे वक्ष्यते।

उक्तोदाहरणे असंगत्यलंकारेण उत्प्रेक्षानिमित्तांशस्यालंकृततामुपपादयति- **यतोऽत्रेति।**

अत्र त्वन्मयतामवमाप्येत्यनेन नले दमयन्त्यात्मतावाप्तिःउत्प्रेक्ष्यते। सा च निमित्तमन्तरा न घटते निमित्तं च दमयन्तीकर्तृकसोपानारोहणेन नलस्य श्वासवर्षणम् तयोः वैयधिकरण्ये सति तत्तादात्मयं संभावयितुं न शक्यन् यस्सोपानमधिरोहति सएव श्वासान् वर्षतीति अनुभवः। तद्वैपरीत्येन च वर्णनं कृतम्। अत एव च विरोधस्याभासमानता। नलस्य च ध्यानमाहात्म्यात् सोपानमारोहन्त्या सह नलस्य तादात्म्यं संभाव्य तयोर्वैयधिकरण्यं परिहृतं भवतीति भावः।

यद्वा- दमयन्तीं चिन्तयतो नलस्य अधिकः श्वासःसञ्जात इति विरोधपरिहारः। नलीयस्मरदशाया एव वर्ण्यमानत्वात्।

एवं निमित्तांशे विरोधाभासेनाप्यलंकृतता दृश्यते इति तदुदाहरति- **प्रतीपभूपैरिति।**

## तत्त्वालोकः-

ततो भिया प्रतीपभूपैरिव विरुद्धधर्मैरपि भेत्तृतोज्झिता किम्? यत् सः ओजसा अमित्रजिदपि मित्रजित् तथा विचारदृगपि चारदृगवर्तत इति योजना।

विरुद्धधर्मैरपि वह्निजलयोरिव स्थितैः क्रोध-क्षमादिभिः एकत्रैकदा-वस्थितिविदूरैः अपिः असामानाधिकरण्यद्योतकः। ततः नैषधाद्राज्ञः सकाशात् भिया भीत्या तच्छब्दस्य बुद्धिस्थनैषधपरामर्शकत्वात् भीत्यर्थकधातुयोगे भीत्रार्थानां भयहेतुः (पा.सू. १.४.२५) इत्यपादानत्वात् पंचमी। प्रतीपभूपैरिव परिपन्थिपार्थिवैरिव विरुद्ध धर्मैरपि क्रोधक्षमादिभिः असमानाधिकरणैरपि गुणैः, भेत्तृता स्वाश्रयभेदकता उज्झिता किम्? परित्यक्ता किमित्युत्प्रेक्षा, नलस्य परिपन्थिनोऽपि नलाद्भीताः यथा अन्योन्यविरोधमपि अत्यजन् तथा शौर्यसौम्यताक्रोधक्षमादयो गुणाः यद्यपि वह्निजलयोरिव तेजस्तिमिरयोरिव च विरोधितया प्रसिद्धाः अथापि तपोवनेष्विव महापुरुषेषु शौर्यस्यावश्यकत्वे सौम्यता ताटस्थ्यं व्रजति, सौम्यताया आवश्यकत्वे शौर्यं ताटस्थ्यं व्रजति। एवमेव क्षमाक्रोधावपि औचित्यानुसारेण ताटस्थ्ययं भजतः इति नलस्य सुसंस्कृतता प्रकटीकृता भवति इति भावः। यत् यस्मात् नलः ओजसा अमित्रजिदपि मित्रजिन्नभवन्नपि मित्रजित् विचारदृगपि विगतचारचक्षुरपि चारदृक् चारचक्षुरिति विरोधः ओजसा अमित्रजिदपि बलेन शत्रुजिदपि तेजसा मित्रजित् सूर्यमप्यतिशेते इत्यर्थः। तथा चारचक्षुस्सन् विचारपरः अवर्तत इति विरोधपरिहारः॥

अत्र चत्वारोऽलंकाराः उपमा-उत्प्रेक्षा -विरोधाभासः अर्थान्तरन्यासश्चेति। प्रतीतभूपैरिव विरुद्धधर्मैः **इत्युपमा**। सा च विरुद्धधर्मिकस्वाश्रयभेदकत्व-त्यागोत्प्रेक्षायाः अंङ्गम् तस्यां च निमित्तं अमित्रजिन्मित्रजिदित्त्युत्तरार्धोपात्त विरोधतत्समाधानोभयात्मा **विरोधाभासः**। स च मित्रजिद्यो न भवति स कथं मित्रजिद्भवति विचारदृक् कथं चारदृग्भवतीति प्रथमं विरोधप्रतीतिः अनन्तरं च अमित्राः शत्रवः तान् जयतीति अमित्रजित् अथ च तेजसा मित्रं सूर्यं जयतीति मित्रजिदिति अर्थान्तरप्रतिपत्त्या विरोधसमाधानं चेति विरोधाभासता। विरुद्धधर्मैः भेत्तृता परित्यक्तेत्युत्प्रेक्षिते कथमिति निमित्ताकांक्षा जायते तस्येदमुत्तरम्-मित्रजित्वामित्रजित्वयोः चारदृक्त्व-विचारदृक्त्वयोः आपततो विरुद्धयोः यतोऽस्मिन्नवस्थानं दृष्टं तस्मादेव इतरेऽपि विरुद्धधर्मवद्भासमानाः क्रोधक्षमादयः

**चित्रमीमांसा-**

**अत्र हि विरुद्धधर्मगतस्य आश्रयभेदकत्वत्यागोत्प्रेक्षायां विरुद्ध तयाऽऽभासमानधर्माणां नले सहवासो निमित्तम्।**

**ध्रुवमधीतवतीयमधीरतांदयितदूतपतद्गतिवेगतः।**
**धृतिविरोधकरीं द्रव्यणुकोदरी तदुदितस्सहि यो यदनन्तरः।**

**इत्यर्थान्तरन्या सेनोपस्कृतम्।।**

तत्त्वालोकः-

परस्परं विरोधं परिजह्रुरिति। एवंच अमित्रजित्व- मित्रजित्वयोः विरोधो नास्ति तथा क्रोधक्षमाद्योरपीति आलम्बननिमित्तको हि तयोर्विरोधोऽविरोधोवेति भावः। इत्थं च विरुद्धधर्मैरिति धर्मसामान्यस्य विरोधत्यागे उपक्षिप्तेऽपि सामान्यं विशेषेण समर्थनमपेक्षत एवेति **निर्विशेषं न सामान्यमिति** न्यायेन बुद्धौ प्रतिष्ठितत्वाय अमित्रजिदित्यादिविशेषेण समर्थनं कृतमिति समर्थ्य -समर्थकयोस्सामान्यविशेष-सम्बन्धनिबन्धनोऽर्थान्तरन्यासः न पुनः काव्यलिगंमिति भ्रमितव्यम्। एवं च उपमाविरोधाभासार्थान्तरन्यासैः उपस्कृता **उत्प्रेक्षैव** चमत्कारभूमिरिति विभाव्यम्। अधिकं **कुवलयानन्दोन्मेषे** विवेचयिष्यतेऽस्माभिरिति दिक्।। एतावतेदमुक्तं भवति-अमित्रजित्व मित्रजित्वरूप विरुद्धधर्मसामानाधिकरण्यं प्रकारान्तराश्रयणेन परिहृतविरोधं विरोधाभासालंकारं निमित्तीकृत्य विरुद्धधर्मेषुस्वाश्रयभेदकत्वत्याग उत्प्रेक्ष्यत इत्यनेनैवाशयेनाह **अत्रहीति।**

अतएव. ग्रन्थकृता **कुवलयानन्दे-** अत्र विरोधसमाधानोम्त्प्रेक्षाशिरस्को विरोधाभास इति व्यारव्यातः।विरोधसमाधाननिमित्तकश्चासौ उत्प्रेक्षाच सैव शिरः प्रधानं यस्य स इति मध्यमपदलोपि कर्मधारयगर्भः बहुव्रीहिः। तेनोत्प्रेक्षायाः प्राधान्यं विरोधसमाधानात्मकस्य विरोधाभासस्य अंगता च प्रतिपादिता भवति। एतेनात्र विरोधनिरूपणावसरे **रसगंगाधरे** कुवलयानन्दोपरिजगन्नाथेन यद्दूषणमभिहितं तदपि निरस्तम्। एवमेवात्र **कुवलयानन्दचन्द्रिका-तच्चकोरकार** ादीनामपि विरोधो-द्भावनसरणिः न क्षोदक्षमेति **कुवलयानन्दोन्मेषे** विविच्य प्रतिब्रूम इत्यलम्।।

एवमुत्प्रेक्षानिमित्तांशे अर्थान्तरन्यासेनाप्यलंकृतता दृश्यत इति तामुदाहरति -
**ध्रुवमधीतवतीति।**

**चित्रमीमांसा-**

**यद्यप्यत्र दमयन्तीगतस्य चापलस्य नलदूतहंसपक्षवेगः हेतुत्वेनोत्प्रेक्ष्यते।**

तत्त्वालोकः-

द्व्यणुकोदरी इयं दयितदूतपतद्गतिवेगतः धृतिविरोधकरीं अधीरतां ध्रुवं अधीतवती हि यो यदनन्तरः सः तदुदितः खलु इति योजना।

द्व्यणुकोदरी तमुमध्या, इयं दमयन्ती दयितदूतपतद्गतिवेगतः=दयितस्य वल्लभस्य नलस्य दूतः यःपतन् विहंगमोहंसः "पक्षी पत्ररथः पत्री, पित्सन् पिपतिषन् पतन्" इति **यादवः** ।तस्य गतिः डयनं तेन यो वेगः तस्मात् हंसे गातमात्रे इति यावत्। धृतिविरोधकरीं धृतिः धैर्यं चित्तधारणासौख्यं च, "धृतिस्सौख्येऽपि धारणे इति **वैजयन्ती**। तद्विरोधः सहानवस्थानं तत करोति इति विरोधकरी विरोध हेतुः तामिति विग्रहः कृञो हेतुताच्छील्यानुलोम्येषु इति (पा.सू.३.१.१०) कर्मण्युपपदे हेतौ कृञः टप्रत्यय टित्वात् ङीप्। अत एव "शोककरी कन्या" इत्यादिप्रयोगाः हेतावुपपद्यन्ते। स्थितिविरोधकरीमिति पाठे स्थितिः व्यापारनिवृत्तिःमर्यादाच तद्विरोधकरीं तन्निरोधकरीमित्यर्थः अधीरतां कातरतां चपलतां एकत्रानवस्थानलक्षणाम् शैघ्र्यं च अधीतवती अभ्यस्तवती स्वीचकारेति ध्रुवं मन्ये हि यस्मात् हेतोः यः पदार्थः यदनन्तरः यदव्यवहितोत्तरकालिकःसः पदार्थः तदुदितः तस्मादुत्पन्न इति लोकशास्त्रमर्यादा खलु इत्यर्थः।

अत्र दमयन्त्यास्सकाशात् हंसे अपगते अस्याः अधीरता जातेति तदीयाधीरतां प्रति हंसगति वेगः कारणं किमित्युत्प्रेक्ष्यते अत्र च हंसवेगात् दमयन्त्यामधीरता कथं जाता इति विशेषांशः सम्प्रतिपन्नसामान्यावतरणसमर्थनसापेक्ष इति मत्वैव "यदुदितस्सहियो यदनन्तरः " इति समर्थको वाक्यार्थस्सामान्यरूपः उपक्षिप्त इति समर्थ्यसमर्थकयोः सामान्यविशेषभावस्य प्रतीतेरर्थान्तरन्यासः।

**नन्वत्र-** दमयन्तीगतचापलस्य नलदूतहंसपक्षवेगः हेतुत्वेनोत्प्रेक्ष्यतां तत्र च निमित्तं हंसपक्षवेगादध्ययनं फलं निमित्तमिति क्वार्थान्तरन्यासस्य उपस्कारकत्व-मित्याशंक्य समाधत्ते-**यद्यपीत्यादिना।**

**चित्रमीमांसा-**

**तथापि तत्रोत्प्रेक्षायां अध्ययनमात्रं न निमित्तं किन्त्वन्यवेगात्कथमत्र चापलमिति शंकावारणाय निबद्धेन "तदुदितस्सहि यो यदनन्तरः" इत्यर्थान्तरन्यासेन उपस्कृतम्॥**

**एवम्-**

**गौरीव पत्या सुभगा कदाचित्**
**कर्तेयमप्यर्धतनूसमस्याम् ।**
**इतीव मध्ये विदधे विधाता**
**रोमावली मेचकसूत्रमस्याः॥**

**इत्यत्र निमित्तांशे रूपकमित्याद्यूहनीयम्॥**

तत्त्वालोकः-

**अयं भावः** अत्रोक्तविधोत्प्रेक्षायामध्ययनमात्रस्य निमित्तता न सेत्स्यति अन्यवेगात्कथमन्यचापलमिति सन्देहात् तत्परिहारायोपन्यस्तः "यदनन्तरमेव यद्दृश्यते तत्तस्य कारणं" इति सामान्यांशस्योल्लेखे सति पूर्वोक्तसन्देहनिवृत्तेः तन्निमित्तता सिध्यतीति सामान्यविशेषभावापन्न समर्थ्यसमर्थकोक्तिरूपार्थान्तरन्यासस्योपस्कारकतेत्यर्थान्तरन्यासोत्प्रेक्षयोः अंगांगिभावेन संकर इति।

एवं निमित्तांशे रूपकेणाप्यलंकृतता दृश्यत इति तादृशीमुत्प्रेक्षामुदाहरति-

**एवमित्यादिना।** सुभगा इयमपि गौरीव पत्या कदाचित् अर्धतनूसमस्यां कर्ता इतीव विधाता अस्याः मध्ये रोमावलीमेचकसूत्रं विदधे। यद्वा पत्या सुभगा इयमपि गौरीव कदाचित् अर्धतनूसमस्यां कर्ता इतीव विधाता अस्या मध्ये रोमावलीमेचकसूत्रं विदधे इति योजना॥

तत्र सुभगा प्रिया सती इयमपि दमयन्ती गौरीव पार्वतीव पत्या सह स्ववल्लभेन सह कदाचित् कस्मिंश्चित् समये अर्धतनूसमस्यां तनोरर्धभागपूरणेनैकदेह संपादनक्लेशं कर्ता अनद्यतन भविष्यति लुट्। इतीव अस्मात्कारणादिव, विधाता ब्रह्मा अस्याः

## तत्त्वालोकः

दमयन्त्याः उदरमध्ये रोमावलीमेचकसूत्रं रोमराजिलक्षणं नीलसूत्रं विदधे ससर्ज। योजनान्तरेतु पत्या इति इत्थंभूतलक्षणे तृतीया पतिसम्बन्धात् खलु स्त्रीणां सौभाग्यम्। पतिसम्बन्धेन सुभगा दर्शनीया "चक्षुष्यः सुभगः कान्तोदयितोवल्लभः प्रियः इति" वैजयन्ती। विवाहानन्तरं खलु सौभाग्यवतीति व्यवहारो लोके नतु ततः प्राक्। एवं च पतिसम्बन्धस्य सौभाग्यसूचकत्वमुपपद्यते।अथ च प्रिया इयमपि दमयन्ती गौरीव गौर्यपि "प्रेम्णा शरीरार्धहरां हरस्य" इति महाकव्युक्तदिशा प्रीति सम्पादनानन्तरं ईश्वरस्य अर्धशरीरतामापेति प्रथा। सेव इयमपि प्रेम्णा कदाचित् नलस्याप्य-र्धतनूसमस्यां कुर्यात् तन्माभूत् इति मत्वा सीमाविभागं प्रदर्शयितुं लोके नीलसूत्रविधानवत् रोमावली सृष्टिव्याजेन सीमाविभाजकं नीलसूत्रं विदधे इत्यर्थः।

अत्र विधिकृतदमयन्त्युदरमध्यवर्तिरोमावलीमेचकसूत्रसृष्टौ दमयन्ती-कर्तृकार्धतनूसमस्याकरणसंभावना वस्तुतो न हेतुः अथापि तादृशसृष्टिं प्रति हेतुरित्युत्प्रेक्ष्यते कविना, हेतूत्प्रेक्षायां च फलं निमित्तम्। तादृशसंभानानिमित्तभूततदीय रोमावलीमेचकसृष्टिरूपफलांशे रोमवलीमेचकसूत्रत्वेन रूपितमिति रूपकेणोपस्कृता हेतूत्प्रेक्षा॥

**केचित्तु**- अत्र विधातृसृष्ट दमयन्तीमध्यगतसूक्ष्मरोमावलीसृष्टौ सीमानिर्णा-यकनीलसूत्रविधानमुत्प्रेक्ष्यते रोमावलीमेचकसूत्रमित्यत्रच रूपकमित्याहुः तन्न युक्तं निमित्तांशे रूपकमित्युपपादनाननुगुणत्वात्। उक्तरीत्यभ्युपगमे अर्धतनू-समस्याकरण-संभावनं निमित्तमिति वक्तव्यं तदा च न रूपकमस्ति।

**किंच**- "सैषा स्थली यत्र विचिन्वता त्वाम्" इत्यादौ इवशब्दान्वितस्य हेतोरुत्प्रेक्ष्यता बाधकाभावादुपेयते तद्वदत्रापि असति बाधके उत्प्रेक्षा-यामिवशब्दान्वितस्योत्प्रेक्षा कविसम्मता सेत्स्यति अन्यथा उद्देश्यासिद्धिः। इहापि 'कर्तेयमप्यर्धतनूसमस्याम्' इत्युक्त्वा इतीव इति हेत्वर्थकाव्ययसाहित्येन इवशब्दमाह अन्यथा एवं निरदेक्ष्यत्कविः-

गौरीव पत्या सुभगा कदाचित् कर्तेयमप्यर्धतनूसमस्याम्।
इत्थं विचिन्त्य व्यधितेव धाता रोमावलीमेचकसूत्रमस्याम्॥

**चित्रमीमांसा-**

**तस्मादुभयथापि तत्र श्लिष्टत्वमात्रकीर्तनां न्यूनमितरेषामप्युपालक्षणं द्रष्टव्यम्।।**

**यत्तु सापह्नुवत्वे-**

तत्त्वालोकः-

इति। न च तथा निर्दिष्टं कविना अतश्च रोमावलीमेचकसूत्रसृष्टौ विधातृनिष्ठदमयन्तीकर्तृकार्धतनूसमस्याकर्मकसृष्टिसंभावना हेतुरित्येव युक्तमिति सम्यगुक्तं **ग्रन्थकृतेति** विभावनीयम्।

इत्थं प्राचीनेन **सर्वस्वकृता** प्रदर्शितं वैचित्र्यान्तरं पूर्वोदाहृतोत्प्रेक्षायाः असंग्राहकत्वात् न्यूनम् । अतश्च तथा प्रदर्शनमन्योत्प्रेक्षाणामुपलक्षणं बोध्यमिति समाधानशिरस्कतया निगमयति -**तस्मादिति**।

सर्वस्वोपरि न्यूनताप्रदर्शनमपेक्ष्य उपलक्षणपरतया तन्नयनमेवोचितम्। यतश्च **सर्वस्वग्रन्थे** एव समासोक्तिनिरूपणावसरे एकदेशविवर्तिरूपकमुखेनार्थान्तरप्रतीतेः समासोक्ति रन्यथासिद्धेत्युपपाद्य-

''निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः ।
धारानिपातैस्सह किंनुवान्तश्चन्द्रोऽयमित्यार्ततरं ररासे।।''

इत्यश्लिष्टैकदेशविवर्तिरूपकोदाहरणे पयोदे आर्ततररसनोत्प्रेक्षायां पयोद एव द्रष्टृपुरुषत्वरूपणनिमित्तत्वं भजत इति **मंखुकेनैवो**पपादितत्वात्तदानुगुण्येन निमित्तभूतधर्मस्य श्लेषेण रूपकेण चालंकृतता भवतु न तत्र नियमनार्थप्रवृत्तिः, अपि तुनिमित्तं श्लेषेणालंकृता क्वचित् स्यात्, क्वचित् रूपकबीजभूतं रूपणमेव उत्प्रेक्षानिमित्तं भवेत् इति दिक्प्रदर्शनार्थमेवेति सर्वस्वकाराभिप्रायो व्यक्तो भवतीति बोध्यम्।।

यदप्युक्तं **सर्वस्वकृता**-स्वरूपोत्प्रेक्षामात्रे सापह्नवत्वमित्यभिसन्ध्ययेव ''गतसुतीरम्'' इत्युदाहृतं तदपि न्यूनं हेतु-फलोत्प्रेक्षयोरपि सापह्नवयोरुदाहरणेषुदर्शनादित्याक्षिप्य उपलक्षणपरतया समाधास्यमानं तदुदाहरणं प्रदर्शयति -**यत्तु सापह्नवत्वे इति**।

**चित्रमीमांसा-**

**गतासु तीरं तिमिघट्टनेन**
**ससंभ्रमं पौरविलासिनीषु।**
**यत्रोल्लसत्फेनततिच्छलेन**
**मुक्ताट्टहासेव विभाति शिप्रा।।**

तत्त्वालोकः

**नवसाहसाङ्कचरिते** शिप्रानदीवर्णनमनेन क्रियते। यत्र शिप्रा पौरविलासिनीषु तिमिघट्टनेन ससंभ्रमं तीरं गतासु उल्लसत्फेनततिच्छलेन मुक्ताट्टहासेव विभाति इति योजना।

यत्र मालवराजधान्यामुज्जयिन्यां विशालायामित्यर्थः "विशालोज्जयिनी समे" इत्युत्पलनाममाला। शिप्रा तन्नामिका काचन नदी। शिप्राग्रहणं शैत्यद्योतनार्थम्

अतएव

दीर्घीकुर्वन् पटुमदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः।।

इति **पूर्वमेघे** , तथा-

अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते।
शिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरंपरासु।।

इति **रघौ च महाकविः कालिदासः** शिप्रापदं प्रायुङ्क्त इयं च नदी कस्मात्प्रभूतेतिन निश्चितेति **भारतभ्रमणे साधुचरणप्रसादपण्डितः**। पौरविलासिनीषु पुरे भवाः पौर्यः विलसन्ति विहरन्ति ताच्छील्येनेति विलासिन्यः स्त्रियः तासु अत्र पौरवधूजनेषु इत्यनुपादाय विलासिनीषु इत्युक्तिः तद्देश प्रसूतानां स्त्री स्वभावः ख्यापितो भवति। उक्तं च **कल्याणमल्लविरचिते अनङ्गरङ्गे**

उपभोगकलानुरागिणी चिरसंभोगरसप्रतोषिणी।
करघातनतुष्टमानसा वनिता मालवदेशसंभवा ।।

**चित्रमीमांसा-**

**इति स्वरूपोत्प्रेक्षायामुदाहृतं तदपि हेतुफलोत्प्रेक्षयोरपि सापह्नवत्वे उपलक्षणं बोध्यम्।। तत्र सापह्नवोत्प्रेक्षायाम्**

**मुग्धः स मोहात्सुभगान्नदेहाद्ददद्भवद्भ्रूरचनाय चापम्।**
**भ्रूभङ्गजेयस्तव यन्मनोभूरनेन रूपेण यदा तदाभूत्।**

तत्त्वालोकः

इति रतिग्लानिपरिहाराय शिप्रामवगाढासु सतीषु तिमिघट्टनेन मत्स्यचलनेन हेतुना ससम्भ्रमं सभयं सत्वरंचेत्यर्थः "संभ्रमोत्यादरे भये, "आटोपावेग संरम्भ संभ्रमास्तु त्वरा त्वरी" इत्युभयत्रापि **वैजयन्ती**। तीरं तट प्रदेशं, गतासु धावत्सु, उल्लसत्फेनततिच्छलेन उल्लसतां उपरिप्रकाशतां फेनानां डिण्डीराणां या ततिः तच्छलेन तद्व्याजेन मुक्ताट्टहासेव कर्कशध्वनिसहित महाहासयुक्तेव विभाति सहृदयानां विदितं भवतीत्यर्थः।

**इतीति**। अत्र फेनततिर्विषयः अट्टहासस्वरूपंविषयी श्वैत्यादिगुणो निमित्तम्। फेनततिच्छलेनेतिछ्लशब्दप्रयोगात् फेनततित्वस्यापह्नवः तत्पूर्वकं

तत्रैवाट्टहासत्वमुत्प्रेक्ष्यते अतश्च सापह्नवा स्वरूपोत्प्रेक्षा। उक्तं च **सर्वस्वकृता**- अत्र इवशब्दमाहात्म्यात्संभावनं छलशब्दप्रयोगाच्चापह्नवो ऽवगम्यते इति इदं हेतुफलोत्प्रेक्षयोरुभयोरप्युपलक्षणमित्याह **तदपीति**।तत्र सापह्नव हेतूत्प्रेक्षामुदाहरति - **तत्रसापह्नवेति** मनोभूः यत् भवद्भ्रूरचनाय विधात्रे स्वं चापं ददत् यदा तदा अनेन रूपेण तव भ्रूभङ्गजेयः अभूत् तत् सः मोहात् मुग्धः नपुनस्सुभगात् देहात् मुग्धः इति योजना।

मनोभूः मनसिजः कामः यतयस्मात्, भवद्भ्रूचनाय भवत्याः भ्रूः दृगूर्ध्वभवा झिल्लिका तस्याः रचनाय निर्माणाय भवद्भ्रुवं निर्मातुमित्यर्थः। रचनशब्दस्य भावे इत्यधिकृत्य ल्युट्च (पा.सू.३.३.११५) इति ल्युडन्तत्वेन तुमर्थभावक्चनप्रत्ययान्तत्वात् तुमर्थाच्च भाववचनात् (पा.सू. १.३.१५) इति चतुर्थी। विधात्रे स्रष्ट्रे स्वं आत्मीयं चापं पौष्पं धनुः ददत् प्रयच्छन्, यदा तदा सर्वदा, अनेन प्रत्यक्षेण रूपेण सौन्दर्येण हेतुना

## चित्रमीमांसा

**अत्र मदनगते मुग्धशब्दवाच्यत्वे वस्तुतोऽहेतोः सौन्दर्यस्य हेतुत्वमपह्नुत्य नलभ्रूरचनाय स्वचापदानप्रयुक्तस्य मौढ्यस्य हेतुत्वमुत्प्रेक्षितम्।**

**सापह्नवफलोत्प्रेक्षा यथा-**

### तत्त्वालोकः

तव भ्रूभङ्गजेयः भ्रुवोःभङ्गेन कौटिल्यमात्रेण जेयः जेतव्यमात्रकः जयतेः अर्हा र्थे - "अर्हेकृत्यतृचश्च" (पा.सू.३.३१६९) इति कृत्यप्रत्ययः। अभूत् तत् तस्मात् स कामः मोहात् अज्ञानतः मुग्धः मूढः बालो वा मुग्धपदवाच्यः सन् "इदमपि नाम तवे त्युवाच मुग्धाम्" इति मूढबालयोः प्रयोगदर्शनात्। न पुनः सुभगात् सुन्दरात् देहात् मुग्धः मुग्धपदवाच्यःसुन्दरः अभूत् इत्यर्थः। "मुग्धाः स्वमुष्टिपरिमेयमनोज्ञमध्याः" इति **यादवाभ्युदये** काव्यरत्ने **निगमान्तमहादेशिकाः**।

यःस्वीयमायुधं स्ववैरिणे प्रयच्छति सतदा निरायुधत्वात् लीलामात्रेण जीयते यतश्च नलः सौन्दर्येण मनसिजस्य शत्रुः। इत्थं सत्यपि स्वचापं ददत् मनसिजः मूढतया मुग्धपदवाच्यः नतु सौन्दर्येणेति भावः।

अत्रोत्प्रेक्षाप्रकारमुपपादयति **-अत्रेति**। अत्र मन्मथस्य मुग्धपदवाच्यत्वे वस्तुसद्रीत्या हेतुभूते सौन्दर्ये हेतुत्वमपलप्य नलभ्रूरचनार्थनिजधनुष्प्रदानप्रयुक्तमौढ्यं हेतुत्वेनोत्प्रेक्षितम्। एवंच सापह्नवा हेतूत्प्रेक्षेति भावः॥

इत्थं सापह्नवहेतूत्प्रेक्षां उदाजहार इदं प्राचामनुरोधादुदाहृतम्। नव्यरीत्या तु पर्यस्तापह्नुतिगर्भमपि संभवतीति अतिशयोक्तिनिरूपणावसरे **कुवलयानन्दे** "जानेति रागादिदमेव बिम्बम्" इत्युदाहृतम्।

सापह्नपफलोत्प्रेक्षामुदाहरति **सापह्नवेति**। रवितप्तः सौरातपतप्तः गजः हस्ती, तद्गृह्यान् तत्पक्षीयान् ग्रहेः धातोः" पदास्वैरिबाह्यापक्ष्येषु . (पा.सू.३.१.११९) इत्यस्मात्पक्ष्येऽर्थे क्यप् निपातितः। बाधितुं पीडयितुंसरःप्रविशति न स्नातुम् इति ध्रुवं मन्ये, हि यतः गजस्नानं निष्फलम् निष्प्रयोजनम्, यतो गजः प्रथमं निमज्य पश्चात्

## चित्रमीमांसा

**रवितप्तो गजः पद्मान्**
**तद्गृह्यान् बाधितुं ध्रुवम्।**
**सरो विशति न स्नातुं**
**गजस्नानं हि निष्फलम्।।**

**अत्र गजस्य सरः प्रवेशं प्रति वस्तुतः फलस्य स्नानस्य फलत्वमपह्नुत्य पद्मबाधनमत्र फलत्वेनोत्प्रेक्षितम्।।**

### तत्त्वालोकः

स्वशिरस्येव कर्दमं वालुकांच क्षिपति तथासति तत्कायं मलिनमेव भवति। मलापकर्षणाय खलु जलावगाहनमिति भावः।

अत्र सापह्नवफलोत्प्रेक्षामुपपादयति-अत्रेति अत्र गजगतसरोवरप्रवेशस्य स्नानं फलमपह्नुत्य रविपक्षीयपद्मबाधनं फलत्वेनोत्प्रेक्षितम्। अतश्च सापह्नवा फलोत्प्रेक्षेति भावः।

**अत्र केचित्**- सन्तापकारिणो रवेः प्रतिपक्षे प्रतिकर्तुमशक्तेन गजेन तत्पक्षीयस्य पद्मस्य बाधनात्प्रत्यनीकालंकारः उक्तं च-

प्रत्यनीकमशक्तेन प्रतीकारो रिपोर्यदि।
तदीयस्य तिरस्कारः तस्यैवोत्कर्षसाधकः।।

इत्युक्ते : एवं च प्रत्यनीकालंकारेणोपस्कृतः उत्प्रेक्षालंकार इति प्रतिपादयन्ति।

तद् अपरे नक्षमन्ते-रविपक्षीय पद्मोद्धरणस्यसम्भावनामात्रविषत्वेन कवि-प्रतिभयोट्टङ्कितमात्रत्वेन अवास्तविकत्वात्। यत्र तत्पक्षापकारस्तात्त्विकः तत्रैव प्रत्यनीकमलंकारः इति न तस्यायं विषयः इति सत्यम्। अत एव। **प्रकाशकारेण-**

त्वं मनोभवविनिर्जितकामः साच सुन्दरभवत्यनुरक्ता।
पंचभिर्युगपदेव शरैरत्वां तापयत्यनुशयादिव कामः।।

इत्युदाहृतम्। अत्र च नायके मन्मथरूपजयोपन्यासात् मन्मथस्य नायकश्शत्रुरिति प्रबल इति च सिद्धम्। नायिकायाश्च नायके सौन्दर्यहेतुकानुरागवर्णनात् तत्पक्षीयत्वं

## चित्रमीमांसा

**नच स्वरूपोत्प्रेक्षायां वास्तवविषयस्वरूपा पह्नव एव विच्छिति विशेषो नतु हेतुफलोत्प्रेक्षयोः प्रसिद्धहेतुफलापह्नव इत्यस्ति।**

**प्रत्युत उदाहृतयोः हेतुफलोत्प्रेक्षयोः सिद्धहेतुफलापह्नवोऽपि सहेतुकः।**

## तत्त्वालोक-

चोक्तं भवति। जितश्च जेतारं द्वेष्टीति लोकसिद्धम्। अत एव काम एकपदे एवपञ्चभिः रपि इषुभिः नायिकां तापयतीति शत्रोः पक्षे पराक्रमः प्रकृतनायकोत्कर्ष प्रयोजक इति प्रत्यनीकत्वं युज्यते।।

''रवितमो गजः'' इत्यत्र तु शत्रौ बलवत्त्वस्य, तत्प्रतीकाराऽशक्तेश्च प्रत्यनीकशरीरप्रविष्टस्यैवावाच्यत्वात् यत्र प्रत्यनीकस्यावस्थानं तस्यैवोत्प्रेक्ष्यत्वेन चमत्कारितया बाधितुमिति तुमुन्नर्थस्यैव फलस्योत्प्रेक्ष्यत्वेन फलोत्प्रेक्षा या एव वक्तुमुचितत्वादिति ग्रन्थकृदाशयः स्यादिति प्रतिभाति विस्तरस्तु **कुवलयानन्दोन्मेषे** मयैव उपपाद्यते इति दिक्।

**ननु-** यत्र वस्तुतो विषयस्यापह्नवः तत्रैव विच्छित्तिविशेषो दृष्टः तदपह्नवश्च स्वरूपोत्प्रेक्षायामेव न पुनः हेतुफलोत्प्रेक्षयोः प्रसिद्धहेतुफलयोरपह्नवे इत्यभिप्रायेण **सर्वस्वकृता** सापह्नवे हेतुफलोत्प्रेक्षे नोदाहृते इति आशङ्क्य निराचष्टे **-नचेति।**

प्रत्युत तद्विरुद्धतया सर्वस्वकारोदाहृतपद्य एव विषयापह्नवो निर्हेतुक इति नातीव चमत्कारमावहतिअस्मदुदाहृत हेतु-फलोत्प्रेक्षोदाहरणयोः हेतुफलापह्नवोऽपि सहेतुक इति तस्मादत्यधिकं चमत्कारमावहतीति तत्परित्यागः अयुक्त एवेति सर्वस्वकृतसापह्नवस्वरूपोत्प्रेक्षोदाहरणं उपलक्षणमित्येवाभ्युपेयमिति वैलक्षण्यान्तरमपि प्रदर्शयति-**प्रत्युतेति।**

**अयंभावः सर्वस्वकारोदाहृते** ''गतासु तीरं'' इति पद्ये फेनततौ तत्वापह्नवे

**चित्रमीमांसा-**

**नतु उदाहृतविषयस्वरूपापह्नवत् निर्हेतुक इति अत्रैव चमत्कारातिशयसत्वात्। तस्मात् इमे अपि सापह्नवोत्प्रेक्षे इत्युपलक्षणतैव युक्ता।**

**अन्यदन्यत्र विचारणीयं समासोक्तिप्रकरणे विचारयिष्यते ।।**

तत्त्वालोक-

कारणं नोपन्यस्तम् अस्मदुदाहृतहेतूत्प्रेक्षायां तु मदनगतमुग्धपदवाच्यतां प्रति वस्तुवृत्या हेतौ सौन्दर्ये हेतुत्वमपह्नोतुं मोहो हेतुरित्युपन्यस्तः।तथा-"रवितप्तो गजः पद्मान्"इत्युदाहरणे गजकर्तृकसरःप्रवेशस्य वस्तुतःफलभूते स्नाने फलत्वमपह्नोतुं तदीयस्नाननैष्फल्यरूपो हेतुरुपन्यस्तइति सर्वस्वकाराभिमत सापह्नव-स्वरूपोत्प्रेक्षापेक्षया अस्मदुदाहृतसापह्नवहेतुफलोत्प्रेक्षाभ्यामेव चमत्कारातिशयः। अत एव ग्रन्थकृता-गम्योत्प्रेक्षायां द्रव्यभावस्वरूपोत्प्रेक्षायाः सहेतुकापह्नवोत्थ-सम्भावनाकमुदाहरणमुपन्यस्तम्-

परिखा वलयच्छलेन या न परेषां ग्रहणस्य गोचरः।
फणिभाषितभाष्यफक्किका विषमा कुण्डलनामवापिता ।।इति।।

अत्र कुण्डिननगर्यां कुण्डलितमहाभाष्यग्रन्थतादात्म्यमुत्प्रेक्ष्यते। तत्रापि या परिखा सा परिखा न अपि तु कुण्डलितरेखेति। तत्र च हेतुः परग्रहणागोचरत्वम् इतिदिक्।।

प्रकृतं निगमयति - तस्मादिति।

एवं यत्र द्वयोरुत्प्रेक्षासमासोक्ति प्रभृत्योरंगांगिभावः तत्र कस्य प्राधान्यं कस्याप्राधान्यमित्यादिविचारणीयं समासोक्तिनिरूपणावसरे विचारयिष्यत इत्यह-**अन्यदत्रेति** उत्प्रेक्षानिरूपणान्तभागादूर्ध्वतनभागस्य लुप्तप्रायतया विचारणीयं किमिति चिन्तनीयम्।।

यदपि अलंकारसर्वस्वकारेण- "क्वचित्पदार्थान्वयवेलायां सादृश्याभिधानात् उपक्रान्ताप्युपमा वाक्यार्थतात्पर्यसामर्थ्यादभिमन्तृव्यापारोपारोहक्रमेणोत्प्रेक्षायां

**चित्रमीमांसा-**

**यत्तु-" कस्तूरीतिलकन्ति भालफलके" इत्यादावुपाक्रान्ता उपमा औचित्यादुत्प्रेक्षायां पर्यवस्यतीति उक्तं ।**

तत्त्वालोकः

पर्यवस्यति इत्यभिधाय उदाहरण प्रदर्शनावसरे उपमोपक्रमोत्प्रेक्षा यथा - "कस्तूरीतिलकन्तीति" पद्यमुदाहृत्योपपादनावसरे "अत्र यद्यपि सर्वप्रातिपदिकेभ्यः क्विप्" इत्युपमानात् क्विबविधौ आमुखे उपमा प्रतीतिरिति तथापि उपमानस्य प्रकृते संभवौचित्यात्संभावनोत्थाने उत्प्रेक्षायां पर्यवसानं "इति प्रतिपादितम्। तदेतदनूद्य न्यूनताप्रदर्शनपूर्वकं उपलक्षणपरतया तदुक्तिर्नेतव्येति ध्वनयन् प्रस्तौति- **यत्त्वित्यादिना। कस्तूरीतिलकन्तीति।**

कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे
रोलम्बन्ति, तमालबकुलोत्तंसन्ति, मौलावपि।
याः कर्णे विकचोत्पलन्ति कुचयोरङ्केच कालागुरु-
स्थासन्ति, प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः।

याः श्रीकण्ठकण्ठत्विषः देव्याः भालफलकेकस्तूरीतिलकन्ति मुखाम्भोरुहे रोलम्बन्ति मौलौ तमालबकुलोत्तंसन्त्यपि कर्णे विकचोत्पलन्ति कुचयोः अंसेच कालागुरुस्थासन्ति ताः तव शिवं प्रथयन्तु इति योजना।। याः प्रसिद्धाः इतरविलक्षणा वा, श्रीकण्ठकण्ठत्विषः श्रीः कालकूटजनिता शोभा तद्वान् कण्ठो यस्य सः तथा कालकूट जनितमपि मालिन्यम् "**विकारोऽपि श्लाध्यो भुवनभयभङ्गव्यसनिनः**" इति न्यायेन ईश्वरस्य शोभाकरमेवेति भावः। यद्वा-" श्रीर्वेषरचनोभासम्पत्सरलशाखिषु । वाणी लक्ष्मी लवङ्गेषु विषे बिल्वेऽप्यथ त्रिषु। इति **नानार्थरत्नमालायाम्** विषेऽपि श्रीशब्दपरिगणनात् श्रीः विषं तत्कण्ठे यस्य सः श्रीकण्ठः शंकरः तस्य यः कण्ठः कन्धरा तस्य त्विषः भासः देव्याः पार्वत्याः भालफलके ललाटफलके, कस्तूरीतिलकन्ति मृगमदविशेषकवदा चरन्ति ता एव त्विषः मुखाम्भोरुहे मुखपङ्कजे रोलम्बन्ति भ्रमरा इवाचरन्ति, मौलौ किरीटे ता एवत्विषः तमालबालबकुलोत्तंसन्ति सद्यस्समुद्भूतकालस्कन्धकोरका एव शिरोभूषणवदाचरन्ति। याःत्विषः कर्णे

## तत्त्वालोकः

श्रोत्रावच्छेदेन विकचोत्पलन्ति विकसितकुवलयवदाचरन्ति, तथा कुचयोः पयोधरयोः अंसे च स्कन्धे च कालागरुपङ्कयन्ति कृष्णांगुरुचन्दनानुलेपनवदाचरन्ति, ताः श्रीकण्ठकण्ठत्विषः तव भवत. शिवं कल्याणं प्रथयन्तु विस्तारयन्तु इति यावत्।

**उपक्रान्तेति**। पदार्थान्वयेलायां उपमाभिधीयते यतश्च कस्तूरीतिलकादिशब्देभ्यः कर्तरि उपमानवाचकात् "सर्वप्रतिपादिकेभ्यः आचारे क्विब्वा वक्तव्यः" इति आचारे क्विब्विधानात् प्रकृत्यर्थः उपमानमिति अनुशिष्टं, भवति। एवं चोपमानवाचकपदोत्तरं विहितस्य क्विपो लोपेऽपि "**शिष्यमाणो लुप्यमानार्थाभिधायी**" **इति** न्यायेन इवार्थसादृश्यस्य लाभः, वस्तुतः क्विबादीनाम् उपमानोपमेये भयान्वयिसाधारणधर्मबोधकत्वेन सादृश्याक्षेपमन्तरा क्विबादिप्रकृत्यर्थस्योपमानता ऽसिध्या प्रथमं श्रीकण्ठकण्ठत्विषः कस्तूरीतिलकादेश्च उपमायाः प्रतीतिः पश्चाच्च फालफलकादिस्थानविशेषकस्तूरीतिलकादिसाम्यापेक्षया अध्यवसाय प्रधानोत्प्रेक्षायां उत्कर्षातिशयो दृश्यते। यतश्च भेदगर्भा उपमा अभेदप्रधाना उत्प्रेक्षा तयोः भेदगर्भोपमापेक्षया उत्प्रेक्षाया उत्कृष्टत्वेन उपमोपक्रान्ताप्युत्प्रेक्षायां पर्यवस्यति। अन्यथा भालफलकादिस्थान-विशेषसम्बन्धोल्लेखस्यानुपयुक्तता स्यादिति **सर्वस्वाभिसन्धिः**।

**किंच**- कस्तूरीतिलकादेः विषयिणो भालफलकादौ संभवे यथौचित्यं न तथा कण्ठत्विडादेः विषयस्येति कण्ठत्विषामेव कस्तूरीतिलकात्मना प्रतीतेरभेदप्रधान-संभावनायामेव संभवमूलकमौचित्यं **सर्वस्वकृतैवावेदितं** उपमानस्य प्रकृते सम्भवौचित्यात्सम्भावनोत्थाने उत्प्रेक्षायां पर्यवसानमिति यत्तुकाराभिसन्धिः॥

**ग्रन्थकारस्तु**- औचित्यानुसरणे क्रियमाणे द्विविधमौचित्यं परिदृश्यते तादात्म्यनिबन्धनम् तादात्म्यसंभावनानिबन्धनं चेति। अत्रच कस्तूरीतिलकन्तीत्यादौ "विवक्षातः कारकाणिभवन्ति" इतिवत् विवक्षानुसारेणोभ यत्राप्यौचित्यं दृश्यते। इत्थं सति **सर्वस्वकृता** उपाक्रान्ताप्युपमा उत्प्रेक्षायां पर्यवस्यतीत्युक्तं नपुनारूपके इति। तदकथने बीजाभावदौचित्याच्च। औचित्यं च उपमायाः भेदगर्भत्वेन तदपेक्षया अभेदप्रधानस्य रूपकस्योत्कृष्टत्वमिति तत्रैव पर्यवसानं स्यादिति। अयं च पक्षस्तेन

**चित्रमीमांसा-**

**यत्तु-" कस्तूरीतिलकन्ति भालफलके" इत्यादावुपाक्रान्ता उपमा औचित्यादुत्प्रेक्षायां पर्यवस्यतीति उक्तं।**

तत्त्वालोकः

पर्यवस्यति इत्यभिधाय उदाहरण प्रदर्शनावसरे उपमोपक्रमोत्प्रेक्षा यथा - "कस्तूरीतिलकन्तीति" पद्यमुदाहृत्योपपादनावसरे "अत्र यद्यपि सर्वप्रातिपदिकेभ्यः क्विप्" इत्युपमानात् क्विबविधौ आमुखे उपमा प्रतीतिरिरिति तथापि उपमानस्य प्रकृते संभवौचित्यात्संभावनोत्थाने उत्प्रेक्षायां पर्यवसानं "इति प्रतिपादितम्। तदेतदनूद्य न्यूनताप्रदर्शनपूर्वकं उपलक्षणपरतया तदुक्तिर्नेतव्येति ध्वनयन् प्रस्तौति- **यत्त्वित्यादिना। कस्तूरीतिलकन्तीति।**

कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे
रोलम्बन्ति, तमालबकुलोत्तंसन्ति, मौलावपि।
याः कर्णे विकचोत्पलन्ति कुचयोरङ्केच कालागुरु-
स्थासन्ति, प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः।

याः श्रीकण्ठकण्ठत्विषः देव्याः भालफलकेकस्तूरीतिलकन्ति मुखाम्भोरुहे रोलम्बन्ति मौलौ तमालबकुलोत्तंसन्त्यपि कर्णे विकचोत्पलन्ति कुचयोः अंसेच कालागुरुस्थासन्ति ताः तव शिवं प्रथयन्तु इति योजना।। याः प्रसिद्धाः इतरविलक्षणा वा, श्रीकण्ठकण्ठत्विषः श्रीः कालकूटजनिता शोभा तद्वान् कण्ठो यस्य सः तथा कालकूट जनितमपि मालिन्यम् **"विकारोऽपि श्लाध्यो भुवनभयभङ्गव्यसनिनः"** इति न्यायेन ईश्वरस्य शोभाकरमेवेति भावः। यद्वा-" श्रीर्वेषरचनोभासम्पत्सरलशाखिषु । वाणी लक्ष्मी लवङ्गेषु विषे बिल्वेऽप्यथ त्रिषु। इति **नानार्थरत्नमालायाम्** विषेऽपि श्रीशब्दपरिगणनात् श्रीः विषं तत्कण्ठे यस्य सः श्रीकण्ठः शंकरः तस्य यः कण्ठः कन्धरा तस्य त्विषः भासः देव्याः पार्वत्याः भालफलके ललाटफलके, कस्तूरीतिलकन्ति मृगमदविशेषकवदा चरन्ति ता एव त्विषः मुखाम्भोरुहे मुखपङ्कजे रोलम्बन्ति भ्रमरा इवाचरन्ति, मौलौ किरीटे ता एवत्विषः तमालबालबकुलोत्तंसन्ति सद्यस्समुद्भूतकालस्कन्धकोरका एव शिरोभूषणवदाचरन्ति। याःत्विषः कर्णे

## तत्त्वालोकः

श्रोत्रावच्छेदेन विकचोत्पलन्ति विकसितकुवलयवदाचरन्ति, तथा कुचयोः पयोधरयोः अंसे च स्कन्धे च कालागुरुपङ्कयन्ति कृष्णांगुरुचन्दनानुलेपनवदाचरन्ति, ताःश्रीकण्ठकण्ठत्विषः तव भवत शिवं कल्याणं प्रथयन्तु विस्तारयन्तु इति यावत्।

**उपक्रान्तेति**।पदार्थान्वयेलायां उपमाभिधीयते यतश्च कस्तूरीतिलकादिशब्देभ्यः कर्तरि उपमानवाचकात् "सर्वप्रतिपादिकेभ्यः आचारे क्विब्वा वक्तव्यः" इति आचारे क्विब्विधानात् प्रकृत्यर्थः उपमानमिति अनुशिष्टं, भवति। एवं चोपमानवाचकपदोत्तरं विहितस्य क्विपो लोपेऽपि" **शिष्यमाणो लुप्यमानार्थाभिधायी" इति** न्यायेन इवार्थसादृश्यस्य लाभः, वस्तुतः क्विबादीनाम् उपमानोपमेयेभयान्वयिसाधारणधर्मबोधकत्वेन सादृश्याक्षेपमन्तरा क्विबादिप्रकृत्यर्थस्योपमानताऽसिध्या प्रथमं श्रीकण्ठकण्ठत्विषः कस्तूरीतिलकादेश्च उपमायाः प्रतीतिः पश्चाच्च भालफलकादिस्थानविशेषकस्तूरीतिलकादिसाम्यापेक्षया अध्यवसाय प्रधानोत्प्रेक्षायां उत्कर्षातिशयो दृश्यते। यतश्च भेदगर्भा उपमा अभेदप्रधाना उत्प्रेक्षा तयोः भेदगर्भोपमापेक्षया उत्प्रेक्षाया उत्कृष्टत्वेन उपमोपक्रान्ताप्युत्प्रेक्षायां पर्यवस्यति। अन्यथा भालफलकादिस्थान-विशेषसम्बन्धोल्लेखस्यानुपयुक्तता स्यादिति **सर्वस्वाभिसन्धिः**।

**किंच**- कस्तूरीतिलकादेः विषयिणो भालफलकादौ संभवे यथौचित्यं न तथा कण्ठत्विडादेः विषयस्येति कण्ठत्विषामेव कस्तूरीतिलकात्मना प्रतीतेरभेदप्रधान-संभावनायामेव संभवमूलकमौचित्यं **सर्वस्वकृता**वावेदितं उपमानस्य प्रकृते सम्भवौचित्यात्सम्भावनोत्थाने उत्प्रेक्षायां पर्यवसानमिति यत्तुकाराभिसन्धिः॥

**ग्रन्थकारस्तु**- औचित्यानुसरणे क्रियमाणे द्विविधमौचित्यं परिदृश्यते तादात्म्यनिबन्धनम् तादात्म्यसंभावनानिबन्धनं चेति। अत्रच कस्तूरीतिलकन्तीत्यादौ "विवक्षातः कारकाणिभवन्ति" इतिवत् विवक्षानुसारेणोभयत्राप्यौचित्यं दृश्यते। इत्थं सति **सर्वस्वकृता** उपाक्रान्ताप्युपमा उत्प्रेक्षायां पर्यवस्यतीत्युक्तं नपुनारूपके इति। तदकथने बीजाभावदौचित्याच्च। औचित्यं च उपमायाः भेदगर्भत्वेन तदपेक्षया अभेदप्रधानस्य रूपकस्योत्कृष्टत्वमिति तत्रैव पर्यवसानं स्यादिति। अयं च पक्षस्तेन

**चित्रमीमांसा-**

**तत्र भालादिस्थानविशेष सम्बन्धस्य कस्तूरीतिलकादि-तादात्म्यमात्रे औचित्यं चेत् रूपके पर्यवसानं स्यादिति तस्य तादात्म्यसंभावनायामौचित्यमुपगम्योत्प्रेक्षायां पर्यवसानं वाच्यम्।।**

**तथाच-**

**रक्षन्तु त्वामसितजलजैरञ्जलिः पादमूले**
**मीना नाभीसरसि हृदये कौस्तुभारव्या मुरारेः।**
**हाराःकण्ठे हरिमणिमया पक्त्रपद्मे द्विरेफाः।**
**पिच्छापीडाश्चिकुरनिकरे घोषयोषित्कटाक्षाः।।**

तत्त्वालोकः-

नोपन्यस्त इति न्यूनतैवेत्यभिप्रायेणाह तत्र **भालदीति**।

यदि तु रूपके विषयिण उपरञ्जकत्वमात्रम्। उत्प्रेक्षायां तु न तथा तस्यां विषये विषयिणोऽध्यवसाय एवेति सादृश्यातिशयप्रतीतिरिति रूपकापेक्षया उत्प्रेक्षायां पर्यवसान एवौचित्यम्। अत एव च "आरोपादभेदे ऽध्यवसायः प्रकृष्यते " इति रूपकप्रकरणे उत्प्रेक्षादिकं कटाक्षीकृत्य ब्रुवतः **सर्वस्वकृतः** रीतिराद्रियते तदा रूपकापेक्षयोत्प्रेक्षायामेव पर्यवसानंवाच्यमित्याह- **तस्य तादात्म्येति**।

एवंतर्हि-न्यूनता वज्रलेपायते। यतश्च उपमोपक्रमोत्प्रेक्षावत् रूपकोपक्रमोत्प्रेक्षा निदर्शनोपक्रमोत्प्रेक्षादीनामपि प्रदर्शनीयत्वात्। तेष्वपि सर्वस्वकृदभिमत-तादृशप्रकर्षस्य दर्शनादित्यभिप्रायेण रूपकोपक्रमोत्प्रेक्षानुगुणमुदाहरणं प्रदर्शयति **रक्षन्त्विति**।

घोषयोषित्कटाक्षाः त्वां रक्षन्तु। किंरूपाः मुरारेः पादमूले असितजलजैरञ्जलिः, नाभीसरसि मीनाः, हृदये कौस्तुभारव्याः, कण्ठे हरिमणिमयाः हाराः, वक्त्रपद्मे द्विरेफाः चिकुरनिकरे पिच्छापीडाश्च, अभवन् ते घोषयोषित्कटाक्षाः त्वां रक्षन्तु इत्यनेनैकान्वयः।

घोषयोषित्कटाक्षाः व्रजयोषिदृगङ्गवीक्षणानि, त्वां भवन्तं रक्षन्तु परिपालयन्तु।

## तत्त्वालोकः-

किंरूपाः कटाक्षा इत्यत्राह मुरारेति। मुरमर्दनस्य हरेः कृष्णस्य, पादमूले चरणमूलदेशावच्छेदेनेत्यर्थः, असितजलजैः नीलकमलैः अञ्जलिः अञ्जलिसमर्प्य-माणनीलकमलरूपाणीति यावत्। तथा नाभीसरसि चतुर्मुखस्योत्पत्तिभूत्वेन मुरव्ये नाभिरूपे सरोवरे। अत्र नाभिरक्षत्रिये इति लिंगानुशासनतः स्त्रीलिङ्गः। अत एव कृदिकारादक्तिनः (ग. सू.४.१.४५) इति गणसूत्रान्ङीष्। वस्तुतस्तु "लिङ्गमशिष्यं लोकाश्रयत्वात् लिंगस्य" इति भाष्यात्

समुल्लसत्पङ्कजपत्रकोमलैः<br>
उपाहित श्रीण्युपनीविनाभिभिः ।

इति भारविप्रयोगात् पुंसि स्त्रियां च साधुः। मीनाः झषरूपेण स्थिताः कटाक्षाणां गतागतविश्रान्तिवैचित्र्येण विवर्तनरूपमीनसाधारणधर्मनिमित्तकं मीनरूपणम् अत एव कटाक्षलक्षणमेवमुक्तम्-

यद्गतारतविश्रान्तिवैचित्र्येण विवर्तनम्।<br>
तारकायाः कलाभिज्ञाः तं कटाक्षं प्रचक्षते॥

इत्यन्यत्र। एवं हृदये हृयददेशावच्छेदेन पतिताः कटाक्षाः कौस्तुभारव्याः श्यामलवर्णकौस्तुभारव्यमणिवररूपेण परिदृश्यमानाः इत्यर्थः॥

ननु- कटाक्षेषु कौस्तुभतातादात्म्यं कथं घटते। तस्य अरुणवर्णतया हरिवंशे धवलतया च नैषधे वर्णनात्।

उक्तं च

अस्यैव दैवस्य हरेस्तनान्तरे<br>
विराजते कौस्तुभरत्नदीपः॥

इति हरिवंशे दीपसाम्यादरुणवर्णत्वम्। नैषधे -

हित्वा दैत्यरिपोरुरः स्वभवनं शून्यत्वदोषस्फुटा-<br>
सीदन्मर्कटकीटकृत्रिमसितच्छत्रीभवत्कौस्तुभम्।<br>
उज्झित्वा निजसद्म पद्ममपि तद्युवक्तावनद्धीकृतं<br>
लूतातन्तुभिरन्तरद्य भुजयोः श्रीरस्य विश्राम्यति।

**चित्रमीमांसा-**

**इत्यादौ रूपकप्रतीतिस्थलेऽप्युत्प्रेक्षोपगन्तव्या।**

तत्त्वालोकः-

इति लूताच्छत्रत्वेन रूपणात् धवलवर्णत्वमिति एकस्यैव कौस्तुभस्य नाना वर्णतया वर्णनं परस्पविरुद्धमिति शङ्क्यम्। **प्रपञ्चसारे-** कौस्तुभस्यश्यामलत्वं प्रपश्चितमिति ग्रन्थकृतैवान्यत्र प्रतिपादनात् कवीनां निरङ्कुशत्वात् तत्सूक्तीनां सर्वमतसाधारण्येन प्रवृत्तत्वान्न परस्परं ग्रन्थविरोध इति बोध्यम्। एवं कण्ठे कन्धरायां हरिमणिमयाः हरयः हरितवर्णाः मणयः प्रचुरा येषु ते हरिमणिमयाः हाराः गारुत्मतकृतहाररूपा इत्यर्थः। '

'देवी गिरामपितव स्तवमातनोति'' इतिवत् अवयवशक्त्या हरिन्मणौ हरिमणिशब्दस्य प्रयोगः हरिशब्दश्च हरितवर्णयुतेऽपि ''हरिर्वर्णेऽपि कपिले त्रिषुत्वेषगुणैर्युते'' इति **नानार्थार्णवसंक्षेपे** (केशवकोशे)दर्शनात्। एवं वक्त्राग्रे मुखपङ्कजे द्विरेफाः भ्रमररूपाः भान्ति। एवं चिकुरनिकरे केशकलापे, पिच्छापीडाः शिरोऽलंकारभूतबर्हरूपाः ''बर्हावीडं नटवरवपुः कर्णयोः कर्णिकारम् ''इति स्मृतत्वात्। एषां घोषयोषित्कटाक्षा इत्यनेनैकान्वयः।

अत्र बहुषु पुस्तकेषु पिच्छचूडा इति पाठ उद्धृतः। सच न सम्यगिति भाति यतश्च पिच्छशब्दः यवाग्वादावेव स्त्रीलिङ्गः। बर्हवाचित्वे नपुंसकलिङ्ग इति ''पिच्छा '' इति स्त्रीलिङ्गनिर्देशस्यात्रानुपयोगात्।

**यद्यप्यत्र-** कटाक्षेषु असिततजलज,मीन कौस्तुभहार-द्विरेफ बर्हत्वेन रूपणमुपक्रान्तम्,अथापि कस्तूरीति लकन्तीत्यादिवत् मुरारेः पादमूल-नाभि-हृदय-कण्ठवक्त्रचिकुररूप स्थानविशेषावच्छेदरूपाधिकरणसंभवौचित्यात् कटाक्षाणां नीलकमलादिरूपणापेक्षया अध्यवसायस्यैवोत्कृष्टत्वेनोत्प्रेक्षाया एवोपगन्तव्यत्वात्। तदेतदभिप्रेत्य आह**इत्यादाविति**।।

इत्थं रूपकस्थले उत्प्रेक्षायां पर्यवसानमभ्युपेयमिति प्रतिपाद्य**सिंहावलोकनन्यायेन सर्वस्वकृता**- उदाहृते-कस्तूरीतिलकन्तीति पद्ये उपमार्थाक्षिप् उत्प्रेक्षायां पर्यवस्यति इत्युपपादितं, परन्तु, उपमादिशब्दयोगेऽपि यथा औचित्यात् उपमा उत्प्रेक्षायां पर्यवस्यति तथा अन्यत्रापि रूपकस्थले तादात्म्यसंभावनोपयुक्तविशेषणसाम्ये सति

**चित्रमीमांसा-**

**तथा-**

**पतत्रिणा तद्रुचिरेण वञ्चितं**
**श्रियः प्रयान्त्याः प्रविहाय पल्वलम्।**
**चलत्पदाम्भोरुहनूपुरोपमा**
**चुकूज कूले कलहंसमण्डली।**

तत्त्वालोकः

उत्प्रेक्षायां पर्यवसानमुपगन्तव्यम्। तादृशं चोदहरणजातं **सर्वस्वकृता** अनुदाहृतमप्युपलक्षणपरतया तदुदाहरणं नेयमिति उपमादियोगे उत्प्रेक्षोदाहरणमाह- **तथेत्यादिना।**

रुचिरेण पतत्रिणा वञ्चितं तत् पल्वलं प्रविहाय प्रयान्त्याः श्रियः चलत्पदाम्भोरुह नूपुरोपमा कलहंसमण्डली कूले चुकूजेत्यन्वयः।

रुचिरेण मनोज्ञेन, पतत्रिणा हंसेन, वञ्चितं रहितं तत् सुप्रसिद्धमतिरमणीयं चाल्पसरः प्रविहाय सर्वात्मना परित्यज्य, प्रयान्त्याः गच्छन्त्याः श्रियः सुषमाव्याजेनावस्थितायाः लक्ष्म्याः, चलत्पदाम्भोरुहनूपुरोपमा=चलती स्पन्दमाने ये पदाम्भोरुहे पदकमले तयोः सक्ते ये नूपुरे मञ्जीरे तयोः उपमा सदृशी, कलहंसमण्डली कलहंसानां राजहंसानां मण्डली अल्पमण्डलं मण्डली शिष्टं राजहंसवृन्दमित्यर्थः, "कलहंसो राजहंसे कादम्बे श्रेष्ठभूभुजि" इति **वैजयन्ती (शेषकाण्डे)**। कूले सरस्तीरे चुकूज अव्यक्तमधुरं यथा तथा शब्दापयामासेत्यर्थः।।

अन्यच्च-राजहंसविरहितं पल्वलं परित्यजन्त्याः श्रियः तात्कालिकनूपुर-रवानुकारिकलहंसमण्डलीपरिदेवनरूपेण प्रस्तुतेनार्थेन अप्रकृतनायकनिर्गमन-खिन्ननायकानिर्गमनकालिक सखीजनकृतनायिकानूपुर रवानुकारि परिदेवन समाधिः परिस्फुरति।

**यद्यपि**- राजहंसविरहित पद्मापदाम्भोजनूपुरसादृश्यं कूजनविशिष्ट कूलावस्थितकल-हंसेषु प्रतीयत इत्युपमा वक्तुं शक्या। अथापि इष्टजनविरहितपल्वल प्रस्थानकालिक-

**चित्रमीमांसा-**

**लोकाश्रयो मण्डपमादिसृष्टिः**
**ब्रह्माण्डमाभात्यनुकाष्ठमस्य।**
**स्वकान्तिरेणूत्करवान्तिमन्ति**
**घुणव्रणद्वारनिभानि भानि।।**

तत्त्वालोकः-

पद्मापदनूपुरसादृश्यप्रतीत्या कलहंसेषु तादृशनूपुरतादात्म्य सम्भावनायां कवेस्तात्पर्यमित्युपेयम्। अन्यथा निर्विशेषितेन नूपुरेणापि सादृश्यं वक्तुं शक्यं स्यात्। अतश्चात्रोत्प्रेक्षायामेव पर्यवसानं युक्तम्।

एवं सहजसुन्दर राजहंसविरहे पल्वलस्य शोभाऽप्यनीनशदिति प्रासप्रविवेकोऽपि बोध्यः।

अस्या एवोदाहरणान्तरं प्रदर्शयति -**लोकाश्रय** इति।

हेभैमि! आदिसृष्टि लोकाश्रयः ब्रह्माण्डम्, आदिसृष्टि मण्डपम् आभाति। यतः तत् लोकाश्रयः अत एव अस्य अनुकाष्टं भानि स्वकान्तिरेणूत्करवान्तिमन्ति घुणव्रणद्वारनिभानि भान्तीति योजना।

हे भैमि! दमयन्ति! आदौ सर्वेषामपि वस्तूनां सृष्टेः पूर्वं सृष्टिः निर्माणं यस्यतत् अथच लोकाश्रयः चतुर्दशभुवनानामाधारः ब्रह्माण्डम् आदिसृष्टि= आदिः पुरणा सृष्टिः यस्य सः चिरकालनिर्मितं मण्डपं जनाश्रय इव आभाति ज्ञायते। यतश्च ब्रह्माण्ड इव मण्डपोऽपि जनाश्रयः इति जनाश्रय तच्छायाश्रितत्वात् "मण्डपोऽस्त्री जनाश्रय इति अमरकारादिभिः मण्डपपर्यात्वेन ग्रहणाच्च।। अत एव अस्य ब्रह्माण्डस्य मण्डपस्य अनुकाष्ठं दिशिदिशि काष्ठासु काष्ठासु अनुकाष्ठं इति वीप्सायामव्ययीभावः।अव्ययं विभक्ति (पा.सू. २.१.६) इति सूत्रे यथार्थपदेन वीप्साया अपि ग्रहणस्य वैयाकरणसम्मतेः। उक्तंच काशिकावृत्तौ -योग्यता-वीप्सा-पदार्थानतिवृत्तिः सादृश्यं चेति यथार्थाः इति।

मण्डपपक्षे- अनुकाष्ठं मण्डपसम्बन्धीनि काष्ठानि दारूणि लक्ष्यीकृत्येत्यर्थः,

## तत्त्वालोकः-

अनु लक्षण-वीप्सेत्थंभूतभागेषु सन्निधौ।
सादृश्यायामहीनेषु पश्चादर्थसहाययोः॥

**इति अव्ययवर्गे- शिवदत्तमिश्रः॥**

"स्फुरत्यनुवनंचमरीचयः' इत्यादिप्रयोगश्च । अनुर्लक्षणे (पा.सू.१.१४.८४) इति कर्मप्रवचनोयता। तस्यां सत्यां कर्मप्रवचनीययुक्ते द्वितीया (पा.सू.२.३.८) इति द्वितीया।भानि नक्षत्राणि स्वकान्तिरेणूत्करवान्तिमन्ति स्वकान्तिरूपस्यो-त्खातरेणूत्करस्य सम्बन्धिनी वान्तिः उद्गारः तद्वन्ति, घुणव्रणद्वारनिभानि =घुणारव्य कीटनिर्मितोव्रणः घुणव्रणः तस्य द्वारं च्छिद्रं मुखं वा तन्निभानि तत्तुल्यानि भान्ति। घुणोत्कीर्णदारुरजोयुक्तानि दारुच्छिद्र मुखानीव नक्षत्राणि दृश्यन्ते इत्यर्थः॥

जनाश्रयनामा मण्डपोऽपि यदा अतिजीर्णो भवति तदा तदीयकाष्ठेषु घुणाः पतन्ति पतिताश्चघुणाः रजांस्युत्किरन्ति तदानीं च तच्छिद्रमुखानि वर्तुलानि श्वेतानिच दृश्यन्ते तानीव भान्ति इति भावः।

**यद्यपि-** अत्र पूर्वार्धे समष्टिसृष्टयनंतरसृष्टेषु प्रप्रथमं ब्रह्माण्ड सृष्टिः तादृशसृष्टिविषये ब्रह्माण्डे चिरकालनिर्मितमण्डपसादृश्यं प्रतीयते। उत्तरार्धेऽपि तदानुगुण्येन ब्रह्माण्डान्तरालवर्तिषु दशसु दिक्ष्वपि दृश्यमानेषु नक्षत्रेषु घुणोत्कोर्णरजोयुक्त दारुच्छिद्रमुखसादृश्यं प्रतीयते। अथापि सविशेषणे ब्रह्माण्डे सविशेषण-मण्डपोपमाननिबन्धनमाहात्म्यात् उत्प्रेक्षायामेव पर्यवसानं युक्तम्। अन्यथा मण्डपे लोकश्रयत्वादिसृज्यत्वविशेषणं व्यर्थं स्यात् इत्यभिप्रायः।

**नच-** निभादिशब्दयोगे उपमैव युक्तमिति वाच्यम्, निभादियोगेऽपि क्वचित्संभावनोपयुक्तविशेषणोपादाने उत्प्रेक्षाभिव्यक्तेः अभियुक्त सम्मतत्वात् । **उक्तंच कल्पतरुकारैः**

कल्पदेशीय -देश्याद्याः स्पर्धिप्रतिभटादयः
निभवद्वादयश्चापि क्वचित्संभावनापराः ॥ इति।

**यदितु-** "लोकाश्रयोमण्डपम्" इति पूर्वार्द्धे उपमानोपमेययोः समकक्षतया विशेषणोपादानात् इवशब्दाभावाच्छ शुद्धरूपकतैव युक्तेति प्रत्यवस्थीयते,

**चित्रमीमांसा-**

**अथाजिनाषाढधरः प्रगल्भवाग्**
**ज्वलन्निव ब्रह्ममयेन तेजसा।**
**विवेशकश्चिज्जटिलस्तपोवनं**
**शरीरबद्धः प्रथमाश्रमो यथा।।**

**इत्यादौ उपमा प्रतितिस्थले यथोत्प्रेक्षायां पर्यवसानम्।।**

तत्त्वालोकः-

तदोपमोपक्रमोत्प्रेक्षाया उदाहरणान्तरं प्रदर्शयति- **अथाजिनेति।**

अथाजिनाषाढधरः प्रगल्भवाक् ब्रह्ममयेन तेजसा ज्वलन्निव (स्थितः) कश्चित् जटिलः (ब्रह्मचारी) शरीरबद्धः प्रथमाश्रमो यथा तथा तपोवनं विवेश इत्यन्वयः।।

अथ तपस्विभिरप्यशक्येषु पंचाग्नितपः प्रभृतिषु व्यासक्तमनसा अवस्थाय वर्तमानायामपर्णायाम् अजिनाषाढधरः अजिनं कृष्णाजिनं, अषाढा प्रयोजनम् अस्येति आषाढो दण्डः पालाशः आषाढशब्दोऽणन्तः रूढिरूपेण दण्डे वर्तते। अथापि मण्डपादि शब्दवत् यथाकथञ्चिद्व्युत्पत्तिप्रदर्शनमात्रम्। "विशाखाऽऽ-षाढादण्मन्थदण्डयो' 'रिति (पा.सू.५.१.११०)अणनुशिष्टः। धरतीति धरः धृङः "नन्दिग्रहिपचादिभ्यः ल्युणिन्यचः" (पा.सू, ३.१.१३४) इत्यच् प्रत्ययः अजन्तस्य कृत्संज्ञकत्वात् तद्योगे कर्तृकर्मणोः कृति (पा.सू. २.३.६५) इति षष्ठी। कृद्योगा च षष्ठी समस्यत इति वार्तिकात्समासः।

**नच-** उपपदमतिङ् (पा.सू. २.२.१९) इत्यस्मादेव समासोऽस्तु कुतः कृद्योगा चेति षष्ठीसमासाश्रयणमिति वाच्यम्। तथा सति आषाढं धरतीति विगृह्य कृद्वृत्तिः वक्तव्या, तदानीं कमण्र्यण् (पा.सू. ३.२.१) इत्यणि आषाढधार इतिस्थिते उपपदमतिङ्() इति समासेन भवितव्यम् । तथा सति महीधरः गंगाधरः भूधरः इत्यादि प्रयोगा नोपपद्येरन् अतश्च कृद्योगलक्षणषष्ठ्यन्तेन समासः उपगतः।।

यद्यपि- "कुम्भकारः" इत्यादावपि कुम्भंकरोतीति विग्रहे कुम्भोपपदकात् कृञः "कर्मण्यण् (पा.सू. ३.२.१) इत्यणि कुम्भ+ कारः इतिस्थिते कर्तृकर्मणोः कृतीति

**चित्रमीमांसा-**

**एवम्- वरणः कनकस्य मानिनीं दिवमङ्कादमराद्रिरागताम्।**
**घनरत्नकवाटपक्षतिः परिरभ्यानुनयन्नुवास याम्॥**

**तत्त्वालोकः-**

(पा.सू. २.३. ६५) इति षष्ठी। अथाप्येवमादौ उपपदमतिङ् (पा.सू. २.२.१९) इति समासः। अत एव **काव्यालंकारसूत्रकारः** वामनः पञ्चमाधिकरणे शब्दशुद्धिं प्रतिपिपादयिषुः गङ्गाधरादौ उपपदादिनिरपेक्ष षष्ठीसमासमेवान्वशात् "ब्रह्मविदादयः कृदन्तवृत्या" तेन महीधरादयो व्यारव्याताः (वा.का.सू. ५.२.३६ .३७) इति।

प्रगल्भवाक्= प्रगल्भा प्रतिभान्विता वाक् वचनं यस्य सः प्रौढः "प्रगल्भः प्रतिभायुक्तः" इति **यादवप्रकाशः** । ब्रह्ममयेन तेजसा ब्रह्मवर्चसेन वेदाध्ययनजन्येन तेजसा उपलक्षितः इति यावत्। इत्थंभूतलक्षणे तृतीया, ज्वलन्निव= देदीप्यमान एवेत्यर्थः इवशब्दोऽवधारणे, स्थितः कश्चित्।जटिलः =व्रताङ्गशिखान्वितःब्रह्मचारी। "लोमादि पामादि पिच्छादिभ्यः शने लन्चः (पा.सू.५.२.१००) इति पिच्छात्वादिलच् प्रत्ययः।" व्रतिनां तु सटा जटा इत्यमरकारः। शरीरबद्धः =परिगृहीतशरीरः, प्रथमाश्रमो यथा ब्रह्मचर्याश्रमः इव, तपोवनम् तपस्साधनक्षमं वनं विवेश प्रविष्टवान् । ब्रह्मचर्याश्रमानुगुणधर्मैरुपलक्षितः कश्चित्पार्वत्यास्तपोवनं प्राविशदिति भावः।

अत्र यद्यपि वटुवेषेण समागते शूलिनि सशरीरब्रह्मचर्यसादृश्यं प्रतीयते अथापि प्रथमाश्रमे शरीरबद्ध इति विशेषणदानाधिक्यानुगुण्येन तस्मिन् प्रथमाश्रमतादात्म्यसंभावनैवाधिकचमत्कारकारीत्युत्प्रेक्षायां पर्यवसानमभ्युपेयम्। उपमायां सादृश्यमात्रं प्रतीयते उत्प्रेक्षायां तु तदभेदस्य निश्चितप्रायतेति उत्कर्षः । उक्तोदाहरणेषु यथोत्प्रेक्षायां पर्यवसानं तथान्यत्रापि संभावनोपयुक्तविशेषणोपनिबन्धे उत्प्रेक्षायामेव पर्यवसानमभ्युपगन्तव्यं न्यायसाम्यादिति मनसि निधाय तदुदाहरणं प्रदर्शयतिः **एवमित्यादिना।**

घनरत्नकवाटपक्षतिः कनकस्य वरणः अमराद्रिः मानिनीम् अत एव अङ्कादागतां यां दिवं परिरभ्य अनुनयन् उवास॥

**चित्रमीमांसा-**

**स्वधाकृतं यत्तनयैः पितृभ्यः**
**श्रद्धापवित्रं तिलमिश्रमम्भः।**
**चन्द्रं पितृस्थानतयोपतस्थे**
**तदङ्करोचिः खचिता सुधैव।।**

**इत्यादिरूपकप्रतीतिस्थलेऽपि तस्यां पर्यवसानमुपगन्तव्यम्।।**

तत्त्वालोकः-

घने निरन्तरे ये रत्नकपाटे ते एव पक्षती पक्षमूले यस्य सः घनरत्नकपाटपक्षतिः, कनकस्य सुवर्णस्य वरणः प्राकार एव अमराद्रिः सुमेरुः मानिनीम् प्रणयकुपिताम् अत एव अङ्कात् उत्सङ्गंपरित्यज्य भुवं प्राप्तां यां नगरीमेव दिवं परिरभ्य आश्लिष्य अनुनयन् प्रसादयन् उवास वसतिस्म इत्यर्थः । अङ्कादागताम् इत्यत्र प्रासादात्प्रेक्षते इतिवत् ल्यब्लोपे पञ्चमीति बोध्या।

अत्र केनापि कारणेन मानिनीं भुवमागतां दिवं अनुनीय निनीषुर्मेरुः अद्यापि अनुनेतमसमर्थः तामनुनयन् तदिच्छया कुण्डिनभुवि उवासेति भावः।

इतथं चात्र स्वर्णप्राकारस्य मेरुत्वं नगर्याः स्वर्गत्वं रत्नकपाटयोः हेमाद्रिपक्षत्वं च रूपितमाभाति तथापि उपमानयोः द्युमेर्वोः सम्भावनोपयुक्त विशेषणोपादानात् रूपकमुपक्रान्तमपि उत्प्रेक्षायां पर्यवस्यति तथाच विदर्भनगरी स्वर्गनगरीरूपेण, स्वर्णप्राकारमेव मेर्वात्मना च संभाव्यते तथा रत्नकपाटे हेमाद्रिपक्षात्मतया संभाव्येते इति उपगन्तव्यमिति भावः।

अन्यत्रापि तदाह-**स्वधाकृतमिति**। पितृभ्यः तनयैः श्रद्धापवित्रं तिलमिश्रं यदम्भः स्वधाकृतं सत् पितृस्थानतया चन्द्रमुपतस्थे तत् अङ्करोचिः खचिता सुधैवेति योजना ।पितृभ्यः इह तनुं परित्यज्य लोकान्तरं गताः पितरः उच्यन्ते तेभ्यः पितृ-पितामह- प्रपितामहानुद्दिश्येत्यर्थः, तनयैः पुत्रैः, श्रद्धापवित्रं परलोकाद्यस्तित्वनिश्चयः श्रद्धा तया पवित्रं पूतम्, अथच तिलमिश्रं चूलिकमिश्रितं यदम्भः यज्जलम् स्वधाकृतं पितृभ्यो दत्तं सत् "स्वधाकारो हि पितृणाम्" इति श्रुतेः पितृस्थानतया पितृलोकतया

**चित्रमीमांसा-**

**एवम्**

**पूर्णेन्दोः परिपोषकान्तवपुषः स्फारप्रभाभासुरं**
**नेदं मण्डलमभ्युदेति गगनाभोगाज्जिगीषोर्जगत्।**
**कामस्योच्छ्रितमातपत्रमधुना पाण्डुप्रदोषश्रिया**
**मानोनद्धजनाभिमानदलनोद्योगैकहेवाकिनः ।**
**इत्यपह्नुत्युदाहरणेऽपि द्रष्टव्यम्।।**

तत्त्वालोकः-

''कर्मणा पितृलोकः चन्द्रो वै पितृलोकः, येवैकेचास्मात्प्रयन्ति चन्द्रमसमेव ते सर्वेगच्छन्ति'' इति श्रुत्यनुसारात् चन्द्रमुपतस्थे समगमत्, उपात्तिष्ठतेः संगतिकरणे तङ् ''उपाद्देवपूजासंगतिकरणमित्रीकरणपथिष्विति वाच्यम्'' इत्यात्मनेपद वचनात्। संगतिकरणं चोपश्लेषमात्रम्। गंगा यमुनामुपतिष्ठते इत्यादिवत् । तत् तिलमिश्रं जलमेव अङ्कस्य कलंकस्य यद्रोचिः कान्तिः तया खचिता मिश्रिता सुधैव अमृतमेवेत्यर्थः।

**यद्यप्यत्र-** कृष्णतिला एव कलंकः तत्संलग्नं जलमेव पीयूषं नत्वन्यः कलंकः नचान्यत्पीयूषमिति तिलजलयोः कलङ्कपीयूषतया रूपितमवगम्यते। तथापि उपमानांशे विशेषणोपादानानुरोधेनोत्प्रेक्षायामेव पर्यवसानं युक्तम् तदेतदुक्तं इत्यादीत्यादिना।

इत्थं रूपकोपमक्रमोत्प्रेक्षाया बहून्युदाहरणानि प्रदर्श्य अपह्नुतिस्थलेऽपि उपक्रमेऽ पह्नुतिप्रतीतावपि पर्यवसाने उत्प्रेक्षैवोपगन्तव्या उक्तन्यायानुसारात्। सर्वस्वकृतातु अपह्नुत्तावेवपर्यवसानं सूचितं न पुनरुत्प्रेक्षाया निमित्तमिति न्यूनता चेत्यभिप्रायेणोदाहरति - **एवमिति**। उदाहरति- **पूर्णेन्दोरिति**।

इदं गगनाभोगात् जगत् जिगीषोः परिपोषकान्तवपुषः पूर्णोन्दोः स्फारप्रभाभासुरं मण्डलं अधुना नोदेति किन्तु पाण्डुप्रदोषश्रिया मानोन्नद्धजनाभिमानदलनोद्योगैक

## तत्त्वालोकः-

हेवाकिनः कामस्य उच्छ्रितमातपत्रम् उदेति इति योजना।

इदं पुरः प्रदृश्यमानं गगनाभोगात् आकाशपरिपूर्त्या जगत्प्रपञ्चम् जिगीषोः जेतुमिच्छोः परिपोषकान्तवपुषः परिपोषेण परिपुष्ट्या कान्तं मनोहरं वपुः स्वरूपं यस्य तस्य पूर्णेन्दोः पूर्णचन्द्रस्य स्फारप्रभाभासुरम् स्फारया अत्याधिकया प्रभया शोभया भासुरम् उल्लासि मण्डलं बिम्बं अधुना नोदेति, किन्तु पाण्डुप्रदोषश्रिया पाण्डुवर्ण-रजनीमुखकान्त्या, मानोन्नद्धजनाभिमानदलनोद्योगैक हेवाकिनः = मानेन प्रणयकोपेन उन्नद्धः उन्नतः योऽयं जनः कामिजनः तस्य योऽयमभिमानः अहंभावः तद्दलने तद्भङ्गे य उद्योगः यत्नशीलता, तत्र एकः अद्वितीयः अन्यादृशः हेवाकः आटोपः अस्यास्तीति हेवाकी तस्य, कामस्य स्मरस्य उच्छ्रितं तुङ्गं आतपत्रं छत्रमुदेति।

**अत्र यद्यपि**- आपाततः चन्द्रमण्डले तत्वं निषिध्य तत्सधर्मणः कामातपत्रस्यारोपः क्रियते इति विषयस्य अपह्नवे विषय्यारोपप्रतीतौ अपह्नुतिः इति **सर्वस्वकृदुक्त** लक्षणानुसारेण अपह्नुतिरवगम्यते। तथापि इदं इन्दुमण्डलं न अपितु कामस्यातपत्रमित्येतावतापि अपह्नुतिसिद्धौ मारे मानोनद्धजनाभिमान दलनोद्योगैकहेवाकित्वविशेषणसाफल्यायेन्दुमण्डले कामातपत्रतादात्म्य संभावनायामेव पर्यवसानं युक्तमिति उत्प्रेक्षैव उचितेति भावः।

**अत्रेदं चिन्त्यते**- ननु उल्लेखान्ते **-केचित्तु** इत्यादिना **सर्वस्वकारपक्षे** आहुरित्यस्वरसो ग्रन्थकृतैव उदितः अत एवच "कस्तूरीतिलकन्ति" इत्युदाहरणे तन्मते उत्प्रेक्षासंकीर्ण इत्युक्तम्। तर्हि एवमादौ उत्प्रेक्षात्वमिष्टं नवा? इष्टं चेदाहुरित्यस्वरसोद्भावनं कुतः कृतम् नचेत्स्वेनैवान्यत्र-

सौवर्णसालवलयान् समनुप्रविश्य कोशानिव त्रिदशनायक कोऽपि धन्यः।
आनन्द वल्युदित दिव्यफलानुरूपं रूपंत्वदीयमवलोकयतेऽभिरूपम्॥

इत्यत्र भगवद्विग्रहे आनन्दवल्युदितं यदानन्दपरिपूर्णं परं ब्रह्म प्रतिपादितं तत्साम्य-मुपक्रान्तमपि तदपेक्षया(भेदघटितोपमापेक्षया) अभेदप्रधान-रूपकस्योत्कृष्टत्वेन रूपके पर्यवसितं भवति। नचोपमोपक्रमादग्रेऽप्युपमयैव भाव्यमिति नियमोऽस्ति "इत्यभिहितं कथं संगच्छताम्।

**चित्रमीमांसा-**

**अधिकं निदर्शनालंकारप्रकरणे चिन्तयिष्यंते।।**

## तत्त्वालोकः

**इति चेदुच्यते-** संभवापेक्षया औचित्यानुसरणस्य चमत्कारितया तत्परिग्रहो युक्तः इत्यभिसन्धिनेति भाव्यम्। अत एव कस्तूरीतिलकन्ति " इत्युदाहरणे आहुरित्यस्वरसंसूचनंकृतमुल्लेखान्ते, अत्र तु औचित्यमात्रं परिगृह्यतद्विवक्षाविवक्षाभ्यां उपमाद्युपक्रमोत्प्रेक्षातदभावौ प्रतिपादिताविति भाव्यम्। अत एव च -"सौवर्णेति" पद्ये उपमाया उपक्रमेऽपि रूपके पर्यवसानमौचित्यादुपगतमिति बोध्यम्।

इदमुपलक्षणं निदर्शनोपक्रमोत्प्रेक्षाया इत्यभिप्रायेण आह - **अधिकमिति।**

**यद्यपि-** अतिशयोक्त्यादिः समग्रोभागः इदानीं नोपलभ्यते एतावता साग्रा चित्रमीमांसा न ग्रथितेति विभाव्यम्। चित्रमीमांसां विलिरव्य अनन्तरं कृते कुवलयानन्दारव्यसन्दर्भे अर्थान्तरन्यासं व्यारव्यास्यता ग्रन्थकृता "काव्यलिङ्गार्थान्तरन्यासयोः सामान्यविशेषभावानालिङ्गितत्वालिङ्गितत्वाभ्यां विशेषः। समर्थ्यसमर्थक भावस्तुल्यः इति प्रतिपाद्यापि प्रपश्चश्चित्रमीमांसायां द्रष्टव्य "इत्यभिहितः। तेन च चित्रमीमांसां समग्रां विलिख्यैव कुवलयानन्दो लिखित इति भाति। अतश्च उत्प्रेक्षान्ते "अप्यर्धचित्रमीमांसेति" पद्यं क्वचित्पुस्तके परिदृश्यते तदसंगतमिति विभाव्यम्।।

निदर्शनोपक्रमोत्प्रेक्षोदाहरणं यथा-

उल्लासयत्युदरबन्धनिबद्धदिव्य शोणाश्मरश्मिकलिकावलिरच्युतैषा।
आगाम्यनेक शतकल्पविधातृगर्भ नाभ्युद्गताम्बुरुहकुड्मलपङ्क्ति शोभाम्।।

इति । अत्र भगवतः उदरबन्धनिबद्धपद्मरागमणिप्रसृतकिरणावलिः आगाम्यनेककल्पस्रक्ष्यमाणविधातृगणसमुत्पत्ति हेतुभूतकमल कुड्मलश्रेणीशोभामुत्पादयतीत्यभिधानतः "पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनामिति "स्वोक्तलक्षणरीत्या-अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः" इति प्रकाशकाराभिहितलक्षणरीत्या वा तादृशपद्मरागप्रसृतमणिकिरणावलिः तादृशकमलकुड्मलश्रेणिशोभासदृशीति

**चित्रमीमांसा-**

**ननु गम्योत्प्रेक्षायाः अलंकारतया परिगणनमयुक्तम् तस्या अलंकारध्वनित्वात्। उच्यते विषयविषयिनिमित्तेषूपात्तेषु केवलमिवादिवाचकाप्रयोगमात्रेण यत्रोत्प्रेक्षावगम्यते सात्यन्तं स्फुटत्वाद्वाच्यायमानत्वादलंकारतामेवासादयति। यथोदाहृतं प्राक्।**

तत्त्वालोकः

यद्यप्यापाततः उपमा प्रतीयते। अथाप्यत्र वर्णितकुड्मलपङ्क्ति रूपस्योपमानस्य लोकसिद्धत्वाभावात् कविना सम्भाव्यमानत्वाच्चोत्प्रेक्षायां पर्यवसानमिति निदर्शनोपक्रमोत्प्रेक्षेति ग्रन्थकृदाशयः॥

**ननु- सर्वस्वकारादिभिः-** उत्प्रेक्षा द्विधा विभक्ता। वाच्या प्रतीयमाना चेति। नच स विभाग उपपद्यते प्रतीयमानायास्तस्या ध्वनिकक्ष्याप्रविष्टत्वेन वाच्योत्प्रेक्षावर्गे परिगणयितुमयुक्तत्वात्। इत्थं सति अत्रापि ग्रन्थे पूर्वं "नभसि महसाम्" इत्यादि च यदुदाहृतं तदयुक्तमेवेति आशङ्कते **नन्वित्यादिना।**

**समाधत्ते उच्यत इति। अयंभावः-** उत्प्रेक्षायास्तावत्परिनिष्पयत्तिः चतुर्भिः भवति तेच विषयःविषयी तद्धर्मः संभावनावाचकश्चेति तेषु विषयविषयि-चमत्कारिधर्माणामुपादाने सति संभावनाप्रतिपादकशब्दराहित्यमात्रं तत्र **प्रतीयमानोत्प्रेक्षा।** उत्प्रेक्षांशमात्रस्य अर्थशक्तिलभ्यत्वादिति। उदाहरणंतु गम्योत्प्रेक्षानिरूपणप्रसङ्ग एवोपन्यस्तमित्याह **यथोदाहृतमिति।** तद्यथा

नभसि महतां ध्वांक्षध्वान्तप्रमापणपत्रिणां
इह विहरणैः श्यैनम्पातां रवेखलोकयन्
शशविशसनत्रासादाशामगाच्चरमां शशी
तदधिगमनात्तारापारावतै रुदडीयत॥

इत्यत्र सूर्यस्य विषयस्य मृगयाविहार क्रियाया विषयिणःतदीयकिरणप्रसरणस्य निमित्तस्य चोपादानमस्ति। किन्तु संभावनाप्रतिपादकशब्दमात्रं नोपात्तम्। तादृशविहरणक्रियोत्प्रेक्षायां च प्रकरणादिपर्यालोचनावश्यकतापि नैवेति

**चित्रमीमांसा-**

**यत्र चोत्प्रेक्षणीयस्य विषयिणोऽप्यनुपादानं, निबद्धेन वस्तुना अलंकारेण वा गम्या उत्प्रेक्षा गूढा तत्रैव उत्प्रेक्षाध्वनिः यथा-**

**वीररुद्रभटान् दृष्ट्वा जयलक्ष्म्या वृतान् रणे।**
**कर्षन्त्यरिवधूकेशान् कानने कण्टकिद्रुमाः।।**

**अत्र वस्तुना कचग्रहणरूपेण जयश्रीसमालिङ्गित भटदर्शनोद्दीपितमन्मथा इवेति उत्प्रेक्षा ध्वन्यते।।**

तत्त्वालोकः

वाच्यायमानत्वादलंकारतैव युक्ता नपुनर्ध्वन्यमानता। तर्हि कुत्र पुनरुत्प्रेक्षाध्वनित्वमित्याशङ्कायामाह **-यत्रेति**। यादृशोदाहरणे संभाव्यमानस्य विषयिणः अनुपादानमपीति अपेः भिन्नक्रमतया योजना कार्या। एवं च क्वचित्संभावना वाचकयोर्मध्ये नियमेन वाचकानुपादाने सति वस्त्वलंकारान्यतरेणोत्प्रेक्षाया गम्यत्वे, तयोरुभयोरनुपादाने सति वस्त्वलंकारान्यतरेणोत्प्रेक्षाया गम्यत्वे वा उत्पेक्षाध्वनित्वमिति भावः। विषयि-वाचकयोरनुपादाने सति वस्तुना उत्प्रेक्षाध्वनिमुदाहरति **-वीररुद्रेति**। रणे जयलक्ष्म्यावृतान् वीररुद्रभटान् दृष्ट्वा कानने कण्टकिद्रुमाः अरिवधूकेशान् कर्षन्ति इति पदयोजना। रणे=युद्धे जयलक्ष्म्यावृतान् जयश्रियालिङ्गितान् वीररुद्रभटान् प्रतापरुद्र योद्धृन् दृष्ट्वा दर्शनानन्तरम् कानने अरण्ये निर्जनप्रदेशे कण्टकिद्रुमाः कण्टकिनोवृक्षाः अरिवधूकेशान् शत्रुरमणीकेशपाशान् कर्षन्ति आकर्षन्ति इत्यर्थः।

यदा प्रतापरुद्रभटाः शत्रुसामन्तान् जगृहुः तदा अशरणाः तत्स्त्रियः अरण्ये पलाय्य गताः तदा मध्ये एकपद्याः पार्श्वरूढकण्टकि द्रुमकण्टकाक्षिप्तकचतया आत्मानं ततो विमोचयितुमक्षमाः अभवन्निति पर्यवसिते व्यञ्जनया लभ्यमुत्प्रेक्षांशमाह - **अत्र वस्तुनेति**।

**अयं भावः**- यथाश्रुतवाक्यार्थबोधे पर्यवसिते राजभटकर्तृकजयलक्ष्मी-

## तत्त्वालोकः-

समालिङ्गनदर्शनोत्तरकालिककचाकर्षणरूपेण वस्तुना जयलक्ष्म्यालिङ्गित-पुरुषदर्शनोद्दीपितमन्मथा इव अरिबधूकेशानाकर्षन्ति इति प्रतीत्या तादृशमन्मथत्वं सम्भाव्यते। अत्र च कण्टकिद्रुमा इति पुल्लिङ्गेन पुंसः, अरिवधू इत्यनेन स्त्रीलिङ्गेन परनायिकायाः प्रतीतिश्च, तया च परनायिकासक्त रत्यभिव्यक्तेः शृङ्गाराभासश्च। एवं चात्र उत्प्रेक्षाध्वनित्वम्। क्वचित् वाचकमनुपादाय विषयिणः उपादानेऽप्युत्प्रेक्षा ध्वन्यते। यथा वा

चन्दनासक्त भुजगनिश्वासानिलमूर्छितः।
मूर्छयत्येष पथिकान् मधौ मलयमारुतः । इति।

अत्र वसन्ते मलयसमीरणस्य पथिकमूर्छादायित्वं वस्तुतो मदनकदनविधायित्वेनैव संभवदपि चन्दनतरुसंलग्नविषधरनिश्वासवर्धितत्वेन संभाव्यते। इवादिशब्दश्च उत्प्रेक्षावाचको नोक्त इत्यखिलवाक्यार्थेनाभिव्यङ्ग्या उत्प्रेक्षा।

**नच-** "चन्दनासक्तेति" पद्ये मलयमारुते विषये यदुत्प्रेक्ष्यं मूर्छितत्वं तदुपात्तमिति उत्प्रेक्षायाः वाच्यायमानतैवेति कथं तद्ध्वत्वमिति वाच्यम्।

वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश।
त्वयि मे गात्रसंस्पर्शः चन्द्रे दृष्टिसमागमः॥

इत्यत्र उपमेयभूते चन्द्रे सीतामुख सादृश्यं भासते। अत्र विषयस्यो पादाने ऽ पि ध्वनित्वम्॥ तच्च तत्र यथाश्रुतवाक्यार्थावगमे जाते पश्चात् वक्तृप्रस्तावादिवैशिष्ट्यात् वस्तुना उपमा ध्वन्यते। तथा अत्रापि चन्दनासक्त भुजगविषवातेन बृंहितः मलयमारुतः पथिकान् मूर्छयति इति यथाश्रुतवाक्यार्थबोधे पर्यवसिते "मधौ" इति कालवैशिष्ट्यात् पथिकपदार्थैकदेशमार्गरूपदेशवैशिष्ट्याच्च यत् वासन्तिकमारुतनिष्ठं मन्मथो-न्माददायित्वेन पथिकमूर्छाकारित्वं यत् तत् चन्दनासक्त भुजगविश्वा-सानिलमूर्छितत्वेनोत्प्रेक्षितं सत् साक्षादनुक्तमपि वाक्यार्थ सामर्थ्यादनुरणनरूपा लक्ष्यते॥

**यद्वा-** यत्र उत्प्रेक्षणीयस्य विषयिणोऽप्युपादानं इत्यत्र अपेः भिन्नक्रमतया नान्वयः अपितु निर्दिष्टरीत्यैव अन्वयस्तदा -विषयिवाचकयोरनुपादाने सति वस्तुना

## तत्त्वालोकः-

अलंकारेण वा यत्र उत्प्रेक्षाप्रतीतिः तत्र ध्वनित्वम्।

सत्यम् । तथा सति "चन्दनासक्तभुजगेति" पद्ये विषयिणः उपादानमस्त्येवेति उत्प्रेक्षाध्वनित्वं **ध्वनिकाराभिमतं** न सिद्ध्येत्। उक्तं च **ध्वनिकृता**- "चन्दनासक्त मारुतः॥" अत्र हि मधौ मलयमारुतस्य पथिकमूमर्छाकारित्वं मन्मथोन्माददायित्वेनैव। तत्तु चन्दनासक्तभुजगनिश्वासानिलमूर्छितत्वेनोत्प्रेक्षितमित्युत्प्रेक्षा साक्षादनुक्तापि वाक्यार्थसामर्थ्यादनुरणनरूपा लक्ष्यते इति नच वाच्यम्। अत एव **मम्मटभट्टेन** उत्प्रेक्षाध्वनिमुदाहरता

केसेसु बलामोडि अ तहतेण रणम्मि जअसिरी गहिआ।
जह कन्दराहि विहुरा, तस्स दिढं कण्ठ अम्मि संठविआ।
केशेषु बलात्कृत्य तथा तेन रणे जयश्री गृहीता।
यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः॥

इति पद्यं परिगृहीतं नपुन"श्चन्दनासक्तेति" । अत्रच वाक्यार्थबोधे पर्यवसिते कविप्रौढोक्तिसिद्धेनजयश्रीरूपनायिकाकेशग्रहणादिरूपवस्तुना जयश्रीकेशग्रहा-वलोकनोद्दीपितमदनाक्रान्तमनस इव कन्दराः शत्रूणां कण्ठालिङ्गनं कुर्वन्तीवे-त्युत्प्रेक्षाध्वनिरर्थशक्त्युद्भवानुरणनरूपः। न चात्र विषयी उपात्तः। अत एवच **ग्रन्थकृता कुवलयानन्दे**-

त्वत्कीतिर्भ्रमणश्रान्ता विवेश स्वर्गनिम्नगाम्।"

इति प्रतीयमानोत्प्रेक्षाया उदाहरणं दत्तम्। तत्र च श्रान्तेति विषयी उपात्तः। अथचात्र श्रान्तेवेत्युत्प्रेक्षा प्रतीतिमन्तरेण (वाक्यार्थानिर्वाहात्)वाक्यार्थापरिपोषात् प्रतीयमानायास्तस्याः वाच्यार्थोपस्कारकत्वेन गुणीभावात्। अतश्च प्रतीयमानो-त्प्रेक्षायाः न ध्वनावन्तर्भावः॥

**एतेन इदमुक्तं भवति**- यत्र वाक्यार्थबोधे अपर्यवसिते प्रतीयमानोत्प्रेक्षया तन्निर्वाहः तत्र गम्योत्प्रेक्षात्वम्। यत्र च पर्यवसिते वाक्यार्थबोधे शब्दशक्त्यर्थ-शक्त्योरेकतरेण उत्प्रेक्षायाः वस्तुना अलंकारेण वा अभिव्यक्तिः तत्रोत्प्रेक्षा ध्वनित्वमिति॥ अत एव-

## तत्त्वालोकः

इत्युभयत्र **वैजयन्ती**। पृथुम्=महतीम् =वोतोगुणवचनात् (पा.सू.४.१.४४) इति ङीषो वैकल्पिकत्वात् ङीषोऽप्रवृत्तिः। नचात्र कथं पृथुशब्दस्य गुणवाचित्वं तस्य वेलाविशेषणत्वेन गुणिवाचित्वादिति शंक्यम्।

सूत्रकृता "वोतो गुणात्" इत्यसूत्रयित्वा गुणवचनादिति निर्देशात् गुणोपसर्जनगुणवाचकानाम् इह ग्रहणमिति ध्वननात्। किंच केवलगुणवाचिनां स्त्रियामसंभवात्॥

अतएव न विशेषणमात्रम् "आखुः द्रव्यं इत्यत्रातिव्याप्तेः, नापि नैयायिकाभिमतो गुणः मृद्वी बुद्धिः" इत्यादावव्याप्तेः। किन्तु-**आकडारसूत्रभाष्ये** समस्त-कृदन्त-तद्धितान्त-सर्वनाम- जातिसंख्या-संज्ञातिरिक्तशब्दमात्रस्य अत्र शास्त्रे गुणवचनशब्दावगम्यत्वोक्तेः तदनुरोधेनापि गुणोपसर्जन गुणिवाचकानां ग्रहणस्य युक्तत्वात्। वेलाम् दूतकृत्यसमयरूपां मर्यादाम्, यद्वा वेलां दूतकृत्यसमयरूपं कूलं "वेलाब्धिजलवर्धने" "काले सीम्नि च" "कूलेऽस्य वेला मर्यादा" इति **वैजयन्ती**। अतिक्रम्य अत्याधाय अतिसंधायवा "अत्याधानमतिक्रमः" इति **वैजयन्ती**। नलस्य नैषधस्य राज्ञः रागाम्बुनिधौ अनुरागसिन्धौ विवृद्धे वृद्धिं गते सति, दृष्टिः अर्थान्नलाश्रिता ,तुङ्गौ उन्नतौ कुचौ स्तनौ आश्रयति स्म॥

नलः इन्द्रादिदेववर्गैः दमयन्तीं परिणाययितुं दूत्यमङ्गीकृत्यापि तद्वदनेन्दुनिरीक्षणमात्रेणैव क्षुभितः अनुरागविवशः तस्याः पीनपयोधरौ अवलोकितुम् उपचक्रमे इति भावः।

चन्द्रस्य प्रकाशलक्षणेनामृतरसेन गुर्वीमपि मर्यादामतिक्रम्य अम्बुनिधौ प्रौढिंगते सति निमज्जन भयादन्यापि काचित् उन्नतं स्थानमाश्रयति। तद्वत् अत्रापि दृष्टिः नलीयरागम्बुनिधौ मज्जनभयादिव कुचावुन्नतावाश्रयतिः स्मेति उत्प्रेक्ष्यते॥

अत्र भैमीमुखे इन्दुत्वम् आलोके पीयूषरसत्वं रागे अम्बुनिधित्वम् च शब्दतो रूपितम्। तेनच दूत्यसमये बेलाशब्दः समुद्रतीररूपत्वं गमयति इति एकदेशविवर्तित्वम्। एवं च क्वचन स्थाने व्यवस्थितायाः दृष्टेः उन्नतपदाश्रयणं (आप्लवन) मज्जनभीति मन्तरान चमत्करीति दृष्टेः तादृशतुङ्गकुचाश्रयणं प्रति

**चित्रमीमांसा-**

**अत्र एकदेशविवर्तिरूपके मज्जनभयादिवेत्युत्प्रेक्षा अवगम्यते। एवमन्यत्राप्युदाहार्यम्।।**

**इति श्रीमद्वैतविद्याचार्यश्रीमद्भरद्वाजकुल**

**जलधिकौस्तुभश्रीरङ्गराजाध्वरीन्द्रवर-**

**सूनोरप्पय्यदीक्षितस्य कृतौ**

**चित्रमामांसायामुत्प्रेक्षा**

**।।प्रकरणं समाप्तम्।।**

तत्त्वालोकः-

मज्जनभयं हेतुरुत्प्रेक्ष्यत इत्येकदेशविवर्तिरूपकालंकारेण हेतूत्प्रेक्षा ध्वन्यते इति भावः। तदाह- **अत्रेति**। रूपकालंकारेणोत्प्रेक्षाध्वननस्योदाहरणं यत्प्रदर्शितं तदुपलक्षणमलंकारान्तरेणाप्युत्प्रेक्षाध्वन्यते इत्युक्त्वा प्रकरणमुपसंहरति - **एवमिति**।।

**अन्यत्रापीति** । तद्यथा-

गाढकान्तदशनक्षतव्यथा संकटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयत् निर्दशन् युधि रुषा निजाधरम्।।

यो युधि रुषा निजाधरं दशन्, अरिवधूजनस्य ओष्ठविद्रुमदलानि गाढकान्तदशनक्षत-व्यथासंकटात् अमोचयत् स जयतीति योजना।। स्पष्टोऽर्थः। अत्र असंगत्यलंकारेणोत्प्रेक्षाध्वन्यते । तथाहि-"विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः। इति ग्रन्थकृदभिमतमसंगत्तिलक्षणम्। प्रकृते च राज्ञः अधरनिर्दशनरूपकारणस्य अरिवधूजनदयितदन्तक्षतव्यथामोचनरूपकार्यस्य च विभिन्नव्यक्तिसम्बद्धत्वं कथ्यते तन्न संगतं भवति केनचित् स्वाधरे निर्दश्यमाने तस्मादन्येषां दन्तक्षतपरिहरणं विरुध्यते। निजाधरनिर्दशनरूपायाः क्रियायाः अरिवधूजनोष्ठव्यथा-परिहरणरूप-क्रियायाश्च मिथोविरोधात्। मिथोविरोधमूलाह्यत्रासंगतिः तया ममक्षत्या

## तत्त्वालोकः

अन्यक्षतिर्निवर्तनमिति राज्ञि बुद्धेरुत्प्रेक्षणात् उत्प्रेक्षा असंगतिमूला।।

यद्वा- "विरुद्धात्कार्यसम्पत्तिर्दृष्टा काचिद्विभावना।"

इत्युक्तरीत्या क्षतव्यथा-जनकात्स्वाधरनिर्दशनात् क्षतव्यथाभावरूपकार्यसम्पत्तेः विभावनाविशेषः तस्माद्वा इयमुत्प्रेक्षा ध्वन्यते।

यद्वा- "आलिङ्गन्ति समं देवज्यां शराश्च पराश्वते।" इत्यत्र यथाकार्य कारणयोः पौर्वापर्यविपर्ययस्य सहभाववर्णनमस्त्येव अत्रापि अधरदशननिर्दशनरूप-कारण सहभावेन अरिवधूनामधरदशनस्य तदीयदशनक्षतव्यथासंकटात् मोचनरूपकार्यस्य वर्णनात्-

"अक्रमातिशयोक्तिस्स्यात्सहत्वे हेतुकार्ययोः।"

इत्युक्तलक्षणेनातिशयोक्तिविशेषेण वा मम क्षत्याप्यन्यक्षतिः निवर्ततामिति तद्बुद्धिः उत्प्रेक्ष्यत इत्युत्प्रेक्षाध्वनिः । अत्रच कार्यकारणयोः सहभावः निर्दशन् इति शता निर्दशनमोचनयोः एककालिकतामुद्घाटयति।

यद्वा- "सत्वन्यो युगपद्या गुणक्रिया " इति प्रकाशकारोक्त समुच्चयप्रभेदेनवा पूर्वोक्तोत्प्रेक्षायाः ध्वननम्। अधरदशनरदक्षतमोचनयोः निर्दशन् इति समकालिकत्व-प्रतिपादनात्।

नन्वत्र- मम क्षत्याप्यन्यस्य क्षतिर्निवर्ततामित्यस्य उत्प्रेक्ष्यत्वं कथम्? "यत्रान्यधर्मसम्बन्धादिति" वदतामनुरोधेन उपमेयस्योपमानतया असंभावनात् इति चेन्न,

अन्यथैव स्थितावृत्तिश्चेतनस्येतरस्य वा।
अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्बुधाः।।

इति काव्यादर्शकृतोत्प्रेक्षालक्षणयोगादुत्प्रेक्षात्वमविरुद्धम्। अत एवअस्मिन्नुदाहरणे काव्यप्रकाशकारेण उत्प्रेक्षाध्वनिरभिहिता। यदि तु यत्रान्यधर्मेत्यादिलक्षणानुसरणं क्रियते तदा अन्यदुदाहार्यम्। तद्यथा-

## तत्त्वालोकः

सखि विरचय्य मानस्य मम धैर्येणावकाशम्।
प्रियदर्शनमहविह्वलक्षणे सहसेति तेनापसृतम्।।

इत्यत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन मानपलायनरूपवस्तुना प्रियानुनयात्मकं कारणं विनापि नायिकायाः मानापनयनरूपकार्योत्पत्तिप्रतीतेर्विभावनालंकारस्तेनच प्रियसौभाग्यबलं धैर्येणापि न सोढुं शक्यमित्युत्प्रेक्षा ध्वन्यत इत्यलंकारेणोत्प्रेक्षा-ध्वनिरत्रेति शम्।।

सर्वलंकारतिलकात्मतया भाति यानिशम्।
सोत्प्रेक्षा हरति स्वान्तमचिरोढास्मितं यथा।।

इति श्रीमदत्रिकुलतिलकश्रीराममिश्रवंश्येन शोभाञ्जनग्रामा (नुग्गेहल्य)
भिजनेन सोमयाजियाण्डान्.जनार्दनाचार्यविदुषस्तनूजेन सीताम्बा
गर्भसम्भवेन,श्रीमन्महीशूरपुरीमध्यविद्योतमान श्रीमन्महाराज
संस्कृतमहापाठशालायां सरस्वतीप्रासादारव्यायांम् **अलंकार**
**शास्त्र प्राध्यापकेन न्यायालङ्कारव्याकरणविदुषा**
**पण्डितरत्नादि** बिरुदभाजा, आस्थानविदुषा **सो. रामस्वामि**
**ऐय्यङ्गार्यशर्मणा विरचिते चित्रमीमांसा**
**व्यारव्याने तत्वालोकारव्ये**
**उत्प्रेक्षालंकारप्रकरणं समाप्तम्।।**

।।शुभं भूयात्।।

# चित्रमीमांसा - तत्वालोकयोः उद्धृत ग्रन्थनांनामानि

# चित्रमीमांसातत्वालोकयोः ' ' उद्धृतानां ग्रन्थकाराणां सूची ''

# चित्रमीमांसा - तत्त्वालोकयोः श्लोक प्रमाणादि सूची

चित्रमीमांसायाः सतत्वालोकायाः मुद्रणाय अत्यौदार्येण द्रव्यसाहाय्यं कृतवतां नामानि -

1. श्रीमन्तः श्रीमद्रामचन्द्रापुर मठाधीश्वराष्ठा श्रीमज्जगद्गुरु शङ्कराचार्य श्रीमद्राघवेन्द्र भारती भगवत्पादाः गिरिनगरम्. बेङ्गलूरु. 5000/-
2. श्रीमान् कस्तूरिरङ्गन्. ए.पि.एस्. बेङ्गलूरु ।
3. श्रीमान् वै. वि. वेङ्कटवरदाचार्य. चामराजनगरम्। 10000/-
4. श्रीमान् वै.वि. पट्टाभिरामन्, इलवाल, मैसूरु। 500/-
5. श्रीमान् एन्. आर्. श्रीनिवासराघवन्. बनशङ्करी. बेङ्गलूरु। 5000/-
6. श्रीमान् विद्वान् एन्. आर्. मुरलीधर. मैसूरु। 10000/-
7 श्रीमती. वरदवल्ली पार्थसारथिश्च. श्रीपुरं, बेङ्गलूरु। 5000/-
8. श्रीमती एच्. एस्. राधा श्रीकान्तश्च श्रीपुरं बेङ्गलूर। 5000/-
9. श्रीमती अमृतवल्ली. श्रीपुरं. बेङ्गलूरु। 2500/-
10. श्रीमती डा।। वनिता रामस्वामीच मल्लेश्वरम्. बेङ्गलूरु। 500/-
11. कु विदुषी एन्. आर्. वसन्ता. मैसूरु। 5000/-
12. श्रीमती श्रीदेवी. बदरीच श्रीपुरम्. बेङ्गलूरु। 5000/-
13. श्रीमती श्रीदेवी. श्रीरामश्च. मल्लेश्वरम्. बेङ्गलूरु। 1000/-
14. श्रीमान् एच्. एन्.वरदराजय्यङ्गार्यः, हिन्दुपुरम्। 5000/-
15. श्रीमान् साहुकार सम्पत्तैय्यङ्गायः इलवाल. मैसूरु। 500/-

एषां अत्यन्तकृतज्ञतां निवेदयिता
सो.रामस्वामि ऐय्यङ्गार्यः । मैसूरु
पण्डितरत्नं. विद्वान्.
२९०. सरस्वती सदनम्
सीताविलासाग्रहारः मैसूरु
कर्णाटक राज्यं - भारतम्.

We humbly express our sincere and humble gratitude to all the persons who have contributed graciously for the printing and publishing of

**'The thva loka - Vyakhyasahitha Chitra Meemamsaa II and III part.**

1. Sree Sree Srimath Ramachandra pura matthadieshvara. Sree mad: Jagadguru Sankaracharya Sreemad Raghavendra Bharathi Bhagavath paadha, Girinagara, Bangalore. 5000/-

2. Sreeman Kasturi Rangan I PS. Bangalore

3. Sreeman Y.V. Venkata Varadha charya, Chamarajanagar 10000/-

4. Sreeman Y.V. Pattabi Raman, Yellawalla, Mysore 500/-

5. Sreeman N.R. Sreenivasa Raghavan. Banasankari, Bangalore 5000/-

6. Sreeman vidwan N.R. Muralidhara. Mysore 10000/-

7. Sreemathi Varadavalli, Parathasarathy Sreepuram, Bangalore. 5000/-

8. Sreemathi & Sree. H.S. Radha Srikantha Sreepuram, Bangalore 5000/-

9. Sreemathi Amirthavalli Sreepuram. Bangalore. 2500/-

10. Sreemathi & Sree Dr.Vanitha Ramaswamy. Malleswaram, Bangalore 500/-

11. Sreemathi N.R. Vasantha, Mysore 5000/-

12. Sreemathi & Sree Sridevi Sridevi Bhadari, Sreepuram Bangalore 5000/-

13. Sreemathi & Sree Sridevi Sriram, Malleswaram, Bangalore 10000/-

14. Sreeman H.N.Varadha Raja Iyangar, Hindupuram. 5000/-

15. Sreeman Sahukar Sampath Iyengar Yellawalla, Mysore 500/-

Rajya Prashasti Vijeta Panditharathnam
Vidwan S.Ramaswamy Iyengar. Mysore.



॥श्रीः॥

## पण्डितरत्नं. सो. रामस्वामि ऐय्यङ्गार्यः

चित्रमीमांसाव्याख्यायाः तत्त्वालोकाख्यायाः कर्तारः सो. रामस्वामि ऐय्यङ्गार्य महोदयाः कर्णाटकेषु विद्यामाने हासनमण्डले चेन्नरायपत्तनसमीपस्थनुग्गेहळ्ळिनामक ग्रामे (शोभाञ्जने) विद्याविनयादिभिः सदा सदाचरणैः प्रथितयशस्के सुप्रतिष्ठिते सोमयाजियाण्डान् नामके कुले विद्वान् सो.जनार्दनाचार्य-श्रीमती सीतम्मा नामकयोः दम्पत्योः ज्येष्ठपुत्रत्वेन क्रि.श.२०.०८.१९२५ दिनाङ्के जनिमलभन्त बाल्यविद्याभ्यासः स्वपितुः स्वपितृव्येभ्य आस्थानविद्वद्वयः सो.नरसिह्माचार्य स्वामिभ्यश्च सम्यक् कृतः।

तदनन्तरं महीशूरपुर्यां सुप्रसिद्धसर्वकारीय महाराजसंस्कृतकलाशालायां क्रि.श.१९४९ तमेवर्षे न्यायशास्त्रे, १९५२ तमेवर्षे अलङ्कारशास्त्रे, १९५३ तमेवर्षे व्याकरणशास्त्रेच विशेषपारितोषिकपुरस्सरं विद्वत्पदवीः लब्ध्वा तस्यामेव कलाशालायां ई.१९५१ तः २४ वर्षाणि अलङ्कारशास्त्र-विभागेसहप्राध्यापकाः भूत्वा १९७६ तमेवर्षेप्राध्यापकपदवीम् अलमकार्षुः। एभिः छात्रोपयोगीनि बालबोधिनी वाक्यरचनेत्यादीन्यनेकानि पुस्तकानि विलिखितानि। १९६७ तमेवर्षे एव विलिखिता चित्रमीमांसायाः व्याख्या तत्वालोकाख्या पञ्चविंशतिवर्षयावत् अज्ञातवासं कृत्वा १९८८-८९ तमेवर्षे केन्द्रसर्वकार साहाय्येनच अस्याः प्रथमोभागः प्राकाश्यं नीतः। इदानीमस्याः व्याख्यायाः द्वितीय-तृतीयभागौ भगवदनुग्रहेण इतरेषां च आस्तिकसज्जनानां सहकारेण प्राकाश्यं नीतौ।

एतेमहाभागाः विद्यासागराः अपि विनयविभूषिताः। सरलाः अपि विरलाः, एते स्वकीयया अध्ययन-अध्यापनशैल्या शिष्यचित्तापहारकाः सन्ति। एतेषां पाण्डित्यनिकषोपलोऽयं तत्वालोकः इत्यत्र न काचन संशीतिः। अयमंशः व्याख्यापठनवेलायां स्फुटीभविष्यति। एतद्व्याख्यावत् ग्रन्थानामितरेषामपि व्याख्याः एतैरेव महाभागैः विरच्य प्रकाशिताः भवन्तु॥